# श्रीमन्महाभारतम्

चतुर्धरवंशावतंसश्रीमन्नीलकण्ठविरचितभारतभावदीपाख्यटीकया समेतम् ।

# Shriman MAHĀBHĀRATAM

## Part II

3. VANA PARVA

4. VIRĀTPARVA

WITH

Bharata Bhawadeepa By Nīalkaṇṭha.




NAG PUBLISHERS

11A/U.A. (POST OFFICE BUILDING) JAWAHAR NAGAR, DELHI-7.

This publication has been brought out with the financial assistance from the Govt. of India, Ministry of Human Resource Development.

[ If any defect is found in this book please return per V.P.P. for postage expences for exchange of free of cost ].



(i) 11A/U.A. (POST OFFICE BUILDING), JAWAHAR NAGAR, DELHI-110 007

(ii) 8A/U.A.-3, JAWAHAR NAGAR, DELHI-110 007

(iii) JALALPUR MAFI (CHUNAR-MIRZAPUR) U.P.

ISBN-81-7081-184-8

I S B N : 81-7081-182-1 (7 Vols Set)

REPRINT
1988

PRICE Rs. 7 Vols. Set

PRINTED IN INDIA

*Published by : NAG SHARAN SINGH FOR NAG PUBLISHERS 11A/U.A., Jawahar Nagar, Delhi-110 007 and Printed at New Gian Offset Printers 495. D.D.A. Complex, Shahzada Bagh Extn., Daya Basti, Delhi.*

# श्रीमन्महाभारतम्

## द्वितीय खण्ड

३. वनपर्व

४. विराटपर्व

चतुर्धरवंशावतंसश्रीमन्नीलकण्ठविरचितभारतभावदीपाख्यटीकया समेतम् ।




नाग प्रकाशक

११ ए/यू. ए., जवाहर नगर, दिल्ली-७

# वनपर्व ।

## --३--

## विषयानुक्रमणिका ।



अध्यायः विषयः पृष्ठम् ।

## (४) कैरातपर्व



## (५) इन्द्रलोकाभिगमनपर्व

## ( ६ ) नलोपाख्यानपर्व

(८) जटासुरवधपर्व



(९) यक्षयुद्धपर्व

## (१९) मार्कण्डेय-समास्यापर्व

दर्शपौर्णमासौ विधाय शेषमः
तिथिभ्यो दत्वा स्वयं भुञ्जानः का
लमतिवाहयामास—मुद्गलचित्त-
परीक्षणाय दुर्वाससा षट्कृत्वो
याचनेऽप्यविकृतमनसा तेन तदा
तदाऽन्नदानेन तत्तोषणम्—तन्म-
हिम्ना सविमानेन देवदूतेन स-
शरीरस्यैव मुद्गलस्य स्वर्गं प्र-
त्याह्वानम्—मुद्गलेन तं प्रति
स्वर्गस्वरूपनिरूपणप्रार्थना— २१२

२६१ देवदूतात्स्वर्गसुखस्यास्थिरतां प
रिजानता मुद्गलेन स्वर्गानभि-
रोचनपूर्वकं देवदूतस्य स्वर्गं प्र-
ति प्रेषणम्—व्यासेन युधिष्ठि-
रं प्रति मुद्गलोपाख्यानकथनपूर्वकं
स्वाश्रमं प्रति गमनम्— २१३

## (१७) द्रौपदीहरणपर्व

२६२ कदाचन शिष्यायुतसहितेन दु-
र्वाससा दुर्योधनगृहं प्रति गमन-
म्—दुर्योधनेन स्वपरिचर्यासन्तुष्टं
तं प्रति ब्राह्मणादीनां द्रौपद्याश्च
भोजनावसाने भोजनाय पाण्ड-
वान्प्रति गमनप्रार्थना—दुर्वास-
सस्तस्मै तद्वरदानपूर्वकं पा-
ण्डवान्प्रति प्रस्थानम्— २१४

२६३ दुर्वाससा दुर्योधनप्रार्थनास-
फलीकरणे द्रौपदीभोजनानन्तर-
मागत्य पाण्डवान्प्रत्यन्नयाच-
नम्—ततो युधिष्ठिरानुमत्या
शिष्यायुतेन सह दुर्वाससः स्ना
नाय नदीं प्रति गमनम्—अत्रा-
न्तरे द्रौपदीप्रार्थनया श्रीकृष्णे-
न समीपागमनम्—द्रौपद्या
निवेदितदुर्वासोवृत्तान्तेन कृ-
ष्णेन स्वीयक्षुन्निवृत्तये द्रौपदीं
प्रत्यन्नयाचनम्—तयाऽन्नस्य शे-
षाभावे निवेदितेऽन्नस्थालीमाना-
य्य तत्कण्ठलग्नशाकपुलाकभक्ष-
णेन सशिष्यस्य दुर्वाससस्तृप्ति-
जननम्—ततो भोजनाय कृ-
ष्णनिदेशात्सहदेवेनाह्वाने 'वयं
सर्वे तृप्ताः' इति शिष्यैर्निवेदि-
तेऽम्बरीषोदन्तं स्मृत्वा शिष्यैः
सह लज्जितस्य दुर्वाससः पला-
यनम्—दुर्वासश्छलाद्भीतान्
पाण्डवान् पूर्ववृत्तकथनपूर्वक-
माश्वास्य श्रीकृष्णस्य स्वस्थान-
गमनम्— २१५

२६४ एकदा पञ्चस्वपि पाण्डवेषु मृग-
यार्थं गतेषु सपरिजनेन सैन्धवेन
मार्गवशात्तदाश्रमगमनम्—तत्र
विजने द्रौपदीदर्शनक्षुभितहृदा
जयद्रथेन तत्सन्निधिं प्रति को-
टिकास्याख्यस्य स्वानुचरस्य
प्रेषणम्— २१६

२६५ जयद्रथप्रेरणया द्रौपदीमेत्य को-
टिकास्येन तत्पितृभर्तृकुलादि-
प्रश्नः— २१६

२६६ कोटिकास्यं प्रति द्रौपद्या स्ववृत्त-
कथनम्— २१६

२६७ जयद्रथं प्रति कोटिकास्येन द्रौ-
पदीवाक्ये कथिते स्वयमेव
द्रौपदीमेत्य पाण्डवानां कुशल-
पृच्छा—द्रौपद्याऽपि कुशलप्रश्न-
पूर्वकं पाण्डवकुशलं कथयि-
त्वा जयद्रथातिथ्यकरणम्—द्रौ-
पदीं कामयमानं प्रलोभनवा-
क्यानि वदन्तं जयद्रथं प्रति
मैवं, लज्जस्व, इत्यादि द्रौपदी-
वाक्यम्— २१६

२६८ द्रौपद्या स्वाभिलाषिणो जयद्रथ-
स्य भर्त्सनम्—उभयोरुत्तरप्रत्यु-
त्तरामनन्तरं बलाद्द्रौपदीं हृत्वा
गच्छन्तं जयद्रथं प्रति दुर्भाष-
णपूर्वकं धौम्यनुगमनम्— २१७

२६९ मृगयातः परावृत्तानां मध्ये-
मार्गं दुश्चिह्नदर्शनेन खिद्यमाना-
नां पाण्डवानामाश्रमाभिगम-
नम्—आश्रममागत्य धात्रेयि-
कां रुदतीं दृष्टवत्सु पाण्डवेष्वि-
न्द्रसेनेन पृष्टया धात्रेयिकया द्रौ-
पदीवृत्तान्तकथनम्—तच्छ्रुत्वा

## (१८) जयद्रथविमोक्षणपर्व



## (१९) रामोपाख्यानपर्व

(२०) पतिव्रतामाहात्म्यपर्व

## (२१) कुण्डलाहरणपर्व

॥ समाप्तेयं वनपर्वानुक्रमणिका ॥

शुभं भवतु

ॐ



॥ श्रीगणेशाय नमः ॥ यंदेवोमुनिनिचयश्चुधाश्चुधावान् यत्तृप्त्यामुनिनिवहोऽपितृप्तिमाप ॥ तस्यैवंनिजजगदंतरात्मभावं व्याकर्तुःपदमुपयामगोपसूनोः ॥ १ ॥ यज्जिज्ञासालभ्यतेयज्ञमुख्यैर्यत्रैकाग्र्यंप्रार्थ्यतेसंयमाद्यैः ॥ तंसेवेऽहंसद्गुरुं लक्ष्मणार्यंब्रह्मब्रह्मज्ञानिवंशावतंसम् ॥ २ ॥ प्रणम्यनारायणतीर्थवर्यान्धीरेशमिश्रांश्चहमीरपुर्याः ॥ कुर्मोगुरूणांहृदयानुरूपमारण्यकेपर्वणिभावदीपम् ॥ ३ ॥ तत्र पूर्वस्मिन्पर्वणिद्रौपदीत्राणेनभक्तेर्माहात्म्यंदर्शितं । साचप्रतिज्ञापालनसत्समागमतीर्थाटनस्वधर्माचरणादिनालभ्यतइतितत्तदाख्यायिकामुखेनेहप्रतिपाद्य द्रौपदीदत्तशाकलेशाशनेनकृष्णेतृप्तेसतिदौर्वाससोपाख्यानेनभगवतोजगदंतरात्मत्वंदर्शितं धर्मयुधिष्ठिरसंवादेनभगवत्तत्त्वमधिगमोपायसहितंचसंक्षेपेणोक्तं एवंद्यूतजिताःपार्थाइत्यादिना मंत्रायसमुपाविशन्निसंतेनग्रंथेन । तत्रप्रथमेऽध्यायेसदसत्संगयोर्गुणदोषौ । द्वितीयेशौनकयुधिष्ठिरसंवादेन काम्यधर्मनिंदायोगप्रशंसाचदर्शिता । एवमिति । पार्थाइतिच्छत्रिन्यायेनमाद्रीसुतयोरप्युपलक्षणं । दुरात्मभिर्दुष्टचित्तैः सहामात्यैःकर्णादिभिः निकृत्याछलेन १ पूर्वःपितापरीक्षित्

॥ श्रीवेदव्यासायनमः ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ जनमेजयउवाच ॥ एवंद्यूतजिताःपार्थाःकोपिताश्चदुरात्मभिः ॥ धार्त्तराष्ट्रैःसहामात्यैर्निकृत्याद्विजसत्तम १ श्राविताःपरुषावाचःसृजद्भिर्वैरमुत्तमम् ॥ किमकुर्वतकौरव्याममपूर्वपितामहाः २ कथंचैश्वर्यविभ्रष्टाःसहसादुःखमेयुषः ॥ वनेविजह्रिरेपार्थाःशक्रप्रतिमतेजसः ३ केवैतानन्ववर्त्तंतप्राप्तान्व्यसनमुत्तमम् ॥ किमाचाराःकिमाहाराःक्कचवासोमहात्मनाम् ४ कथंचद्वादशसमावनेतेषांमहामुने ॥ व्यतीयुर्ब्राह्मणश्रेष्ठशूराणामरिघातिनाम् ५ कथंचराजपुत्रीसाप्रवरासर्वयोषिताम् ॥ पतिव्रतामहाभागासततंसत्यवादिनी ६ वनवासमदुःखार्हादारुणंप्रत्यपद्यत ॥ एतदाचक्ष्वमेसर्वविस्तरेणतपोधन ७ श्रोतुमिच्छामिचरितंभूरिद्रविणतेजसाम् ॥ कथ्यमानंत्वयाविप्रपरंकौतूहलंहिमे ८ ॥ वैशंपायनउवाच ॥ एवंद्यूतजिताःपार्थाःकोपिताश्चदुरात्मभिः ॥ धार्त्तराष्ट्रैःसहामात्यैर्निर्ययुर्गजसाह्वयात् ९ वर्द्धमानपुरद्वारादभिनिष्क्रम्यपांडवाः ॥ उदङ्मुखाःशस्त्रभृतःप्रययुःसहकृष्णया १० इंद्रसेनादयश्चैवभृत्याःपरिचतुर्दश ॥ रथैरनुययुःशीघ्रैःस्त्रियआदायसर्वशः ११ गतानेतान्विदित्वातुपौराःशोकाभिपीडिताः ॥ गर्हयंतोऽसकृद्भीष्मविदुरद्रोणगौतमान् ॥ ऊचुर्विगतसंत्रासाःसमागम्यपरस्परम् १२ ॥ पौराऊचुः ॥ नेदमस्तिकुलंसर्वनवयंनचनोगृहाः १३ यत्रदुर्योधनःपापःसौबलेयेनपालितः ॥ कर्णदुःशासनाभ्यांचराज्यमेतच्चिकीर्षति १४ नतत्कुलंनचाचारोनधर्मोऽर्थःकुतःसुखम् ॥ यत्रपापसहायोऽयंपापोराज्यंचिकीर्षति १५ दुर्योधनोगुरुद्वेषीत्यक्ताचारसुहृज्जनः ॥ अर्थलुब्धोऽभिमानीचनीचःप्रकृतिनिर्घृणः १६ नेयमस्तिमहीकृत्स्नायत्रदुर्योधनोनृपः ॥ साधुगच्छामहेसर्वेयत्रगच्छंतिपांडवाः १७ सानुक्रोशामहात्मानोविजितेंद्रियशत्रवः ॥ ह्रीमंतःकीर्तिमंतश्चधर्माचारपरायणाः १८

तस्यपितामहाः २ एयुषःप्राप्तवंतः ३ उत्तमंतीव्रम् ४ । ५ । ६ । ७ द्रविणंपराक्रमस्तेजोदेहकांतिश्च तेउभेपुष्कलेयेषांतेभूरिद्रविणतेजसः 'द्रविणंचपराक्रमे' इतिविश्वः ८ गजसाह्वयात्हस्तिनापुरात् ९ वर्द्धमानपुरंनाम ग्रामविशेषस्तदभिमुखंद्वारंतस्मात् । वृधुर्हिंसायांवर्द्धमानाहिंसकास्तेषांपुरं । कुत्सितमार्गेणनिःसारिताइत्यन्ये १० परिचतुर्दशअधिकचतुर्दशाः पंचदशेत्यर्थः । संख्ययाव्ययासन्नेतिसमासः समासांतविधेरनित्यत्वाद्बहुव्रीहौ संख्येयेइतिप्राप्तस्यडच्प्रत्ययस्याभावः ११ । १२ । १३ । १४ । १५ प्रकृतिनिर्घृणःस्वभावनिर्दयः १६ । १७ सानुक्रोशाःसदयामहात्मानउदारचित्ताः । विजिताःइंद्रियाणिचशत्रवश्चयैस्तेविजितेंद्रियशत्रवः । ह्रीरकार्यान्निवर्तिकाचित्तवृत्तिः धर्मोयमनियमादिस्तस्य आचरणमाचारोधर्माचारः १८

कौंतेयत्वंमाद्रेयत्वंचच्छत्रिन्यायेनअन्त्येकंपंचस्वपिपर्याप्तं माद्रीतिह्रस्वत्वमार्षम १९ । २० । २१ भक्तानाश्रयणापरान् । अनुरक्तान्प्रीतमनः । सुहृदोविनानाप्युपकारमनपेक्ष्योपकारकान् । प्रियान्प्रीतिविषयान् । हितेरतानभ्युदयसाधनपरान् हितेरतानित्यलुक्समासः प्रियाश्चतेहितेरताश्चेतिविग्रहः नाविनश्येमविनाशंनप्रार्थयामहे । प्रार्थनायांलिङ् नेतिवितर्के । विनश्येमेतितर्कयामहइतिप्राञ्चः २२ २३ आपःअपः २४ । २५ । २६ अवदातानिशुद्धानि विद्यावैदिकीनतुकौलिक्यादिः । कर्मवेदार्थानुष्ठानं । योनिःपूर्वप्रज्ञा श्येनयागादेर्हिंसासाधनस्यवेदार्थत्वेपिनावदातत्वमस्त्यतो जन्मांतरीयसंस्कारोपि शुद्धएवापेक्षितः । 'तंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच' इतिश्रुतेरत्रयोनिशब्देनमुख्यंप्रवृत्तिकारणंपूर्वप्रज्ञैवग्राह्यं । अन्येतुयोनिशब्देनापितृमातृशुद्धिमाहुः । समास्यासंगतिः । संपूर्वस्यासगतावित्यस्यरूपं । अपिशब्दाच्छास्त्रमपिसम्यक्ज्ञानहेतुतयागुरु सत्संगस्तुततोऽपिगरीयान् । नगाथागाथिनंशास्तीतिकेवलशास्त्रस्यप्रागेवाकिंचित्करत्वोक्तेः २७ निरारंभाः अग्निहोत्राद्यकुर्वाणाअपि हिशब्दः एतद्धस्मवैतद्विद्वांसः पूर्वे

॥ वैशंपायनउवाच ॥ ॥ एवमुक्ताऽनुजग्मुस्तेपांडवांस्तान्समेत्यच ॥ ऊचुःप्रांजलयःसर्वेकौंतेयान्माद्रिनंदनान् १९ क्वगमिष्यथभद्रंवस्त्यक्त्वाऽस्मान्दुःखभागिनः ॥ वयमप्यनुयास्यामोयत्रयूयंगमिष्यथ २० अधर्मेणजितान्श्रुत्वायुष्मांस्त्यक्तघृणैःपरैः ॥ उद्विग्नाःस्मोभृशंसर्वेनास्मान्हातुमिहार्हथ २१ भक्तानुरक्तान्सुहृदःसदाप्रियहितेरतान् ॥ कुराजाधिष्ठितेराज्येनविनश्येमसर्वशः २२ श्रूयतांचाभिधास्यामोगुणदोषान्नरर्षभाः ॥ शुभाशुभाधिवासेनसंसर्गःकुरुतेयथा २३ वस्त्रमापस्तिलान्भूमिंगंधोवासयतेयथा ॥ पुष्पाणामधिवासेनतथासंसर्गजागुणाः २४ मोहजालस्ययोनिर्हिमूढैरेवसमागमः ॥ अहन्यहनिधर्मस्ययोनिःसाधुसमागमः २५ तस्मात्प्राज्ञैश्चवृद्धैश्चसुस्वभावैस्तपस्विभिः ॥ सद्भिश्चसहसंसर्गःकार्यःशमपरायणैः २६ येषांत्रीण्यवदातानिविद्यायोनिश्चकर्मच ॥ तान्सेवेत्तैःसमास्याहिशास्त्रेभ्योऽपिगरीयसी २७ निरारंभाह्यपिवयंपुण्यशीलेषुसाधुषु ॥ पुण्यमेवाप्नुयामेहपापंपापोपसेवनात् २८ असतांदर्शनात्स्पर्शात्संजल्पाच्चसहासनात् ॥ धर्माचाराःप्रहीयंतेसिद्ध्यंतिचनमानवाः २९ बुद्धिश्चहीयतेपुंसांनीचैःसहसमागमात् ॥ मध्यमैर्मध्यतांयातिश्रेष्ठतांयातिचोत्तमैः ३० अनीचैर्नाप्यविषयैर्नाधर्मिष्ठैर्विशेषतः ॥ येगुणाःकीर्तितालोकेधर्मकामार्थसंभवाः ॥ लोकाचारेषुसंभूतावेदोक्ताःशिष्टसंमताः ३१ तेयुष्मासुसमस्ताश्चव्यस्ताश्चैवेहसद्गुणाः ॥ इच्छामोगुणवन्मध्येवस्तुंश्रेयोऽभिकांक्षिणः ३२ ॥ युधिष्ठिरउवाच ॥ धन्यावयंयदस्माकंस्नेहकारुण्ययंत्रिताः ॥ असतोऽपिगुणानाहुर्ब्राह्मणप्रमुखाःप्रजाः ३३ तदहंभ्रातृसहितःसर्वान्विज्ञापयामिवः ॥ नान्यथातद्धिकर्तव्यमस्मत्स्नेहानुकंपया ३४ भीष्मःपितामहोराजाविदुरोजननीचमे ॥ सुहृज्जनश्चप्रायोमेनगरेनागसाव्हये ३५ तेत्वस्मद्धितकामार्थंपालनीयाःप्रयत्नतः ॥ युष्माभिःसहिताःसर्वेशोकसंतापविव्हलाः ३६

ऽग्निहोत्रं नजुहवांचक्रिरे'इति श्रौतींप्रसिद्धिंद्योतयति । तत्संगाल्लब्धात्मविद्यानांकिमग्निहोत्रादिनेतिभावः २८ नसिद्ध्यंति सिद्धिश्चित्तशुद्धिस्तांनप्राप्नुवंति धर्माचारहीनत्वात् २९ । ३० अविषयैः अगोचरैरपरिचितैरित्यर्थः धर्मकामार्थसंभवाः धर्मादीनांसंभवउत्पत्तिर्येभ्यस्ते शिष्टानांवेदप्रामाण्यवादिनांसंमताः ३१ समस्ताःएकीभूताः व्यस्ताःपृथक्पृथग्भूताः । श्रेयःस्वर्गादपिप्रशस्ततरमात्मसुखम् ३२ एवंपौरवचनैः सत्संगगुणा असत्संगदोषाश्चउपादानाय हानायचउक्ताः । धन्याइत्यादिना । शत्रोरपिसुखंदेयमितिदर्शयति पौरनिवर्तनप्रसंगेन ३३ स्नेहोवात्सल्यंतत्सहिताअनुकंपादयास्नेहानुकंपातया ३४ । ३५ शोकसंतापविव्हलाः शोकःइष्टवियोगजंदुःखंतेनसंतापः देहेन्द्रियादेरवसादस्तेनविव्हलाःव्याकुलाः ३६

आगमनेत्यविभक्तिकं अस्माभिःसहआगमनेशापिताः ममशपथंकारिताइत्यर्थः ३७ । ३८ । ३९ समागम्यसंपृच्छय ४० निवृत्तेषुतुपौरेष्वित्यादिना भिक्षापानभृतराष्ट्रजानित्यंतेनग्रंथेन धर्मात्मानमनिच्छंतमपि बलात्संतोऽनुगृह्णंतीत्युच्यते ४१ ऊषुःवासंचक्रुः ४२ उदकेनैवनत्वन्नेन ऊषुर्निन्युः ४३ साग्नयःदारैःसहिताः अनग्नयस्तदन्येस्नातकब्रह्मचार्यादयः ४४ प्रादुष्कृताःप्रकटीकृताःअग्नयोयैस्ते । रम्यत्वं तापविरहात्संध्यारागादिशोभातश्च । दारुणोरक्षःपिशाचादिसंचारकालत्वात् । ब्रह्मघोषपुरस्कारः उच्चैःश्रुत्युपन्यासपूर्वकः संजल्पःपरस्परसंवादः ४५ आश्वासयंतः वनवासस्यापिश्रेयस्करत्वोपपादनेनेतिशेषः ४६ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेप्रथमोऽध्यायः ॥ १ ॥ ॥ प्रभातायामरुणोदयेनउद्दीपितायां रजन्याश्चरमभागेइतियावत्

निवर्ततागताद्दूरंसमागमनशापिताः ॥ स्वजनेन्यासभूतेमेकार्यास्नेहान्वितामतिः ३७ एतद्धिममकार्याणांपरमंहृदिसंस्थितम् ॥ कृतातेनतुतुष्टिर्मेसत्कारश्चभविष्यति ३८ ॥ वैशंपायनउवाच ॥ तथाऽनुमंत्रितास्तेनधर्मराजेनताःप्रजाः ॥ चक्रुरार्तस्वरंघोरंहाराजन्नितिसंहताः ३९ गुणान्पार्थस्यसंस्मृत्यदुःखार्ताःपरमातुराः ॥ अकामाःसंन्यवर्तंतसमागम्याथपांडवान् ४० निवृत्तेषुतुपौरेषुरथानास्थायपांडवाः ॥ आजग्मुर्जान्हवीतीरेप्रमाणाख्यंमहावटम् ४१ तेतंदिवसशेषेणवटंगत्वातुपांडवाः ॥ ऊषुस्तांरजनींवीराःसंस्पृश्यसलिलंशुचि ४२ उदकेनैवतांरात्रिमूषुस्तेदुःखकर्शिताः ॥ अनुजग्मुश्चतत्रैतान्स्नेहात्केचिद्द्विजातयः ४३ साग्नयोऽनग्नयश्चैवसशिष्यगणबांधवाः ॥ सतैःपरिवृतोराजाशुशुभेब्रह्मवादिभिः ४४ तेषांप्रादुष्कृताग्नीनांमुहुर्तेरम्यदारुणे ॥ ब्रह्मघोषपुरस्कारःसंजल्पःसमजायत ४५ राजानंतुकुरुश्रेष्ठंतेहंसामधुरस्वराः ॥ आश्वासयंतोविप्राग्र्याःक्षपांसर्वांव्यनोदयन् ४६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअरण्यपर्वणिपौरप्रत्यागमनेप्रथमोऽध्यायः ॥ १ ॥ वैशंपायनउवाच ॥ प्रभातायांतुशर्वर्यांतेषामक्लिष्टकर्मणाम् ॥ वनंयियासतांविप्रास्तस्थुर्भिक्षाभुजोऽग्रतः १ तानुवाचततोराजाकुंतीपुत्रोयुधिष्ठिरः ॥ वयंहिहृतसर्वस्वाहृतराज्याहृतश्रियः २ फलमूलामिषाहारावनंगच्छामदुःखिताः ॥ वनंचदोषबहुलंबहुव्यालसरीसृपम् ३ ॥ परिक्लेशश्चवोमन्येध्रुवंतत्रभविष्यति ॥ ब्राह्मणानांपरिक्लेशोदैवतान्यपिसादयेत् ॥ किंपुनर्मामितोविप्रानिवर्तध्वंयथेष्टतः ४ ॥ ब्राह्मणाऊचुः ॥ गतिर्याभवतांराजंस्तांवयंगंतुमुद्यताः ॥ नार्हस्यस्मान्परित्यक्तुंभक्तान्सद्धर्मदर्शिनः ५ अनुकंपांहिभक्तेषुदेवताह्यपिकुर्वते ॥ विशेषतोब्राह्मणेषुसदाचारावलंबिषु ६ ॥ युधिष्ठिरउवाच ॥ ममापिपरमाभक्तिर्ब्राह्मणेषुसदाद्विजाः ॥ सहायविपरिभ्रंशस्त्वयंसादयतीवमाम् ७ आहरेयुरिमेयेऽपिफलमूलमृगांस्तथा ॥ तइमेशोकजैर्दुःखैर्भ्रातरोमेविमोहिताः ८ द्रौपद्याविप्रकर्षेणराज्यापहरणेनच ॥ दुःखार्दितानिमान्क्लेशैर्नाहंयोक्तुमिहोत्सहे ९ ॥ ब्राह्मणाऊचुः ॥ अस्मत्पोषणजाचिंतामाभूत्तेहृदिपार्थिव ॥ स्वयमाहृत्यचान्नानित्वाऽनुयास्यामहेवयम् १० अनुध्यानेनजप्येनविधास्यामःशिवंतव ॥ कथाभिश्चाभिरम्याभिःसहरंस्यामहेवयम् ११

यियासतांयातुंगंतुमिच्छतां भिक्षाभुजःब्राह्मणाः १ धनंराज्यंतदुभयकृताश्रीः ब्राह्मणतर्पणादिरूपाशोभाचास्माकंनष्टेत्याह वयंहीति २ व्यालाःश्वापदाःवृकव्याघ्रादयः 'व्यालोभुजंगमेक्रूरेश्वापदेदुष्टदंतिनि' इतिविश्वः ३ । ४ भक्ताअपिमूढाश्चेत्स्युः किंतर्हितैरित्यतआहुः सद्धर्मदर्शिनइति । सतोब्रह्मणोयेधर्माः सत्यकामत्वसत्यसंकल्पत्वादयस्तदनुभाविनः ५ । ६ । ७ । ८ । ९ । १० अनुध्यानेनइष्टचिंतनेन जप्येनस्वस्त्ययनेनेत्यदृष्टद्वाराउपकारमुक्त्वा दृष्टद्वारापितमाहुः कथाभिरिति ११

प्रत्यादेशंधिक्कारम १२ । १३ एवंब्राह्मणभरणसामर्थ्याभावात्खिन्नंराजानंप्रति शोकमोहनिवर्तकंवचनंशौनकआहेत्याह इत्युक्त्वेति । अध्यात्मं आत्मानंशारीरमधिकृत्यप्रवृत्तंशास्त्रमध्यात्मं वेदांतस्तत्र रतः १४ योगश्चित्तवृत्तिनिरोधः सांख्यंप्रकृतिपुरुषविवेकस्तयोर्निष्णातः १५ शोकेस्थीयतेऽनेनेतिव्युत्पत्त्यास्थानशब्दोहेतुवचनः शोकोमनस्तापःभयंमरणात्त्रासः तयोर्हेतवइष्टवियोगानिष्टसंयोगादयस्तेषांसहस्रादीनि १६ ननुधर्मसामर्थ्याभावादेवममशोकभयेनतुराज्यच्युतंवनवासकृते इत्याशंक्याह नहीति । प्रवृत्तिरूपोयज्ञदानादिधर्मोज्ञानविरोधी । ज्ञानेहि 'यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकं पश्येत्' इतिद्वैतोपमर्दः श्रूयते । कर्माणितु द्वैतोपजीवनान्यतस्तयोर्विरोधःप्रसिद्धइतिहिशब्दोद्योतयाति पशुबीजवधादिसाध्यत्वाद्दोषबहुलश्चातएवश्रेयोघातीमोक्षविरोधी तत्रनसज्जंते नात्यंतमभिनिवेशिनोभवंति १७ एवंकर्मनिष्ठांनिंदित्वा योगनिष्ठांग्राहयतिअष्टांगामिति । 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावंगानि'इति योगसूत्रोक्तानि संकल्पसंबाधादीनिवा वक्ष्यमाणान्यष्टावंगानियस्याःसाबुद्धिस्तत्त्वमस्यादिवाक्यजाप्रज्ञा यांसर्वंकृत्स्नमश्रेयोमूलाज्ञानंतदभिघातिनीं श्रुतिस्मृतिभ्यांसमायुक्तांसम्यक्दृढीकृतां । सात्वव्यवस्थिताऽस्मत्सन्निधानादितिभावः १८ अर्थकृच्छ्रे

॥ युधिष्ठिरउवाच ॥ एवमेतन्नसंदेहोरमेऽहंसततंद्विजैः ॥ न्यूनभावात्तुपश्यामिप्रत्यादेशमिवात्मनः १२ कथंद्रक्ष्यामिवःसर्वान्स्वयमाहृत्यभोजिनः ॥ मद्भक्त्याक्लिश्यतोऽनर्हान्धिक्पापान्धृतराष्ट्रजान् १३ ॥ वैशंपायनउवाच ॥ इत्युक्त्वासन्नृपःशोचन्निषसादमहीतले ॥ तमध्यात्मरतोविद्वान्शौनकोनामवैद्विजः १४ योगेसांख्येचकुशलोराजानमिदमब्रवीत् १५ शोकस्थानसहस्राणिभयस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् १६ नहिज्ञानविरुद्धेषुबहुदोषेषुकर्मसु ॥ श्रेयोघातिषुसज्जंतेबुद्धिमंतोभवद्विधाः १७ अष्टांगांबुद्धिमाहुर्यांसर्वश्रेयोभिघातिनीम् ॥ श्रुतिस्मृतिसमायुक्तांराजन्सात्वय्यवस्थिता १८ अर्थकृच्छ्रेषुदुर्गेषुव्यापत्सुस्वजनस्यच ॥ शारीरमानसैर्दुःखैर्नसीदंतिभवद्विधाः १९ श्रूयतांचाभिधास्यामिजनकेनयथापुरा ॥ आत्मव्यवस्थानकरागीताःश्लोकामहात्मना २० मनोदेहसमुत्थाभ्यांदुःखाभ्यामर्दितंजगत् ॥ तयोर्व्याससमासाभ्यांशमोपायमिमंशृणु २१ व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ॥ दुःखंचतुर्भिःशारीरंकारणैःसंप्रवर्तते २२ तदात्वप्रतिकाराच्चसततंचाविचिंतनात् ॥ आधिव्याधिप्रशमनंक्रियायोगद्वयेनतु २३ मतिमंतोह्यतोवैद्याःशमंप्रागेवकुर्वते ॥ मानसस्यप्रियाख्यानैःसंभोगोपनयैर्नृणाम् २४ मानसेनहिदुःखेनशरीरमुपतप्यते ॥ अयःपिंडेनतप्तेनकुंभसंस्थमिवोदकम् २५ मानसंशमयेत्तस्माज्ज्ञानेनाग्निमिवांबुना ॥ प्रशांतेमानसेह्यस्यशारीरमुपशाम्यति २६

षुधननाशेषु अशनवसनाद्यभावात् । दुर्गेषुदुस्तरेषुशारीरदुःखेषु । विपरीतास्वापत्सुस्त्रीकर्षणादिषु । मनोदुःखेषुचोपस्थितेषु तैःसंतोनावसीदंति । शारीरंदुःखंतितिक्षया मानसंविवेकेनच नाशयितुंसमर्था इत्यर्थः १९ आत्मव्यवस्थानकराः मनःस्थैर्यहेतवः २० व्याससमासाभ्यांविस्तरसंक्षेपाभ्यां २१ व्याधिःप्रसिद्धः अनिष्टंकंटकादिः श्रमोव्यायामः इष्टमन्नादि २२ प्रतिकारादौपधोपानत्स्वाध्यायादिभिरुपशमनात् आधिव्याधिप्रशमनमविचिंतनाच्च क्वचिद्विषयेऽत्यंतनिमग्नचित्तस्यनमनोव्यथाव्याधिप्रभवावेदनाचभवतीतिप्रसिद्धं इदमेवक्रियायोगद्वयम् २३ मतीति । अतोवक्ष्यमाणाद्धेतोः वैद्याः विद्यावंतः प्रागेव मानसस्यशमंकुर्वते प्रियाख्यानैरनुकूलवचनैः बहुलाभदर्शनैर्धनहान्यादिजं संभोगोपनयैः स्त्र्यादिसमर्पणैःकामादिजम् २४ मानसस्यप्राक्प्रशमने हेतुमाह मानसेनहीति २५ । २६

स्नेहोरागःसज्जतेप्रवर्तते प्रवृत्त्याचदुःखयोगमुपैति २७ आयासःक्लेशः स्नेहात्रागात् २८ भावःभावनासंकल्पसंज्ञा अनुरागःपश्चाद्भाविनीप्रीतिः । अयंभावः दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनंतरापायादपवर्गः दोषनिमित्तंरूपादयोविषयाःसंकल्पकृताइतिन्यायसूत्राभ्यामज्ञानात्संकल्पस्ततोविषयस्ततस्तत्रप्रीतिस्ततस्तल्लाभायप्रवृत्तिस्ततोजन्मततःसुखदुःखे ततोरागद्वेषवासना ततःपुनः संकल्पइतिक्रमः । तत्रमूलभूतोरागःस्नेहशब्देनोक्तः सभावस्यहेतुः । ततोविषयसिद्ध्युत्तरंजायमानोरागोऽनुराग इति । तत्रभावानुरागयोर्मध्ये पूर्वोभावोऽत्यंतमश्रेयस्करः तस्मात्संकल्पत्यागएव मुख्यंसाधनं तथाच वक्ष्यति । 'यत्किंचिदपि संकल्प्य नरोदुःखे निमज्जति ॥ नकिंचिदपि संकल्प्य सुखमक्षय्यमश्नुते' इति २९ कोटरेति । रागएवदोषः ३० विप्रयोगे विषयेणसहावियोगस्त्यागोन किंतु सत्यपिसमागमेयोविषयदोषदर्शीसएवत्यागी सएवचविरागंभजते निर्वैरश्चद्वेषाभावान्निरवग्रहःप्रतिबंधशून्यः ३१ मित्राणि धनानिचप्राप्य तेषुस्नेहंनलिप्सेतनकामयेत् । मित्रेभ्यइत्यादिके ल्यब्लोपे पंचम्यौ । किंचस्वशरीराल्लिंगाख्यात्समुत्थमुत्पन्नमपिस्नेहं ज्ञानेन भोग्यानामवस्तुत्वानित्यत्वज्ञानेननाशयेत् ३२ ज्ञानान्वितेषु नित्यानित्यविवेकवत्सु । युक्तेषु नित्यवस्तुप्राप्तये उद्युक्तेषु

मनसोदुःखमूलंतुस्नेहइत्युपलभ्यते ॥ स्नेहात्तुसज्जतेजंतुर्दुःखयोगमुपैतिच २७ स्नेहमूलानिदुःखानिस्नेहजानिभयानिच ॥ शोकहर्षौतथाऽऽयासःसर्वंस्नेहात्प्रवर्तते ॥ २८ स्नेहाद्भावोऽनुरागश्चप्रजज्ञेविषयेतथा ॥ अश्रेयस्कावुभावेतौपूर्वस्तत्रगुरुःस्मृतः २९ कोटराग्निर्यथाऽशेषंसमूलंपादपंदहेत् ॥ धर्मार्थौतुतथाल्पोऽपिरागदोषोविनाशयेत् ३० विप्रयोगेनतुत्यागीदोषदर्शीसमागमे ॥ विरागंभजतेजंतुर्निर्वैरोनिरवग्रहः ३१ तस्मात्स्नेहंनलिप्सेतमित्रेभ्योधनसंचयात् ॥ स्वशरीरसमुत्थंचज्ञानेनविनिवर्तयेत् ३२ ज्ञानान्वितेषुयुक्तेषुशास्त्रज्ञेषुकृतात्मसु ॥ नतेषुसज्जतेस्नेहःपद्मपत्रेष्विवोदकम् ३३ रागाभिभूतःपुरुषःकामेनपरिकृष्यते ॥ इच्छासंजायतेतस्यततस्तृष्णाविवर्धते ३४ तृष्णाहिसर्वपापिष्ठानित्योद्वेगकरीस्मृता ॥ अधर्मबहुलाचैवघोरापापानुबंधिनी ३५ यादुस्त्यजादुर्मतिभिर्यानजीर्यतिजीर्यतः ॥ योऽसौप्राणांतिकोरोगस्तांतृष्णांत्यजतःसुखम् ३६ अनाद्यंतातुसातृष्णाअंतर्देहगतानृणाम् ॥ विनाशयतिभूतानिअयोनिजइवानलः ३७ यथैधःस्वसमुत्थेनवह्निनानाशमृच्छति ॥ तथाऽकृतात्मालोभेनसहजेनविनश्यति ३८ राजतःसलिलादग्नेश्चोरतःस्वजनादपि ॥ भयमर्थवतांनित्यंमृत्योःप्राणभृतामिव ३९ तथाह्यामिषमाकाशेपक्षिभिःश्वापदैर्भुवि ॥ भक्ष्यतेसलिलेमत्स्यैस्तथासर्वत्रवित्तवान् ४० अर्थएवहिकेषांचिदनर्थंभजतेनृणाम् ॥ अर्थश्रेयसिचासक्तोनश्रेयोविंदतेनरः ४१ तस्मादर्थागमाःसर्वेमनोमोहविवर्द्धनाः ॥ कार्पण्यंदर्पमानौचभयमुद्वेगएवच ४२ अर्थजानिविदुःप्राज्ञादुःखान्येतानिदेहिनाम् ॥ अर्थस्योत्पादनेचैवपालनेचतथाक्षये ४३

ततएवशास्त्रज्ञेषु कृतात्मसु ध्याने संस्कृतंचित्तेषु । तेषुप्रसिद्धेषुस्नेहोरागो नसज्जते नसंगंप्राप्नोति ३३ रागोरम्यवस्तुदर्शनेचित्तस्योत्फुल्लता । कामस्तल्लिप्सा । इच्छालब्धेतस्मिन्रुच्यतिशयात्पुनस्तदभिलाषः । पुनःपुनस्तल्लाभेऽप्यतृप्तिस्तृष्णा ३४ । ३५ जीर्यतः जरामृत्युग्रस्तस्य ३६ अनाद्यंता तन्मूलवासनानामनादित्वात् अंतर्देहः बाह्यतरोदेहोऽन्नमयः बाह्यो लिंगशरीरं अंतर्देहो मनस्तद्गता अयस्तप्तायःपिंडं निजःस्वरूपस्थः अनलोवन्हिः । अयोनिजमिवानलमितिपाठेतुनास्तिअलंपर्याप्तिर्यस्यतत् इंधनसहस्रैरतृप्तंतेजोऽग्न्याख्यमितिविशेष्यमध्याहृत्ययोज्यम् ३७ अकृतात्माअनिर्जितचेताः ३८ । ३९ । ४० केषांचिन्मूढानांधीमतामप्यर्थो नात्यंतिकश्रेयस्करइत्याह अर्थश्रेयसिअर्थसाध्येश्रेयसिज्योतिष्टोमादौ ४१ कार्पण्यमर्थव्ययोपस्थितौदैन्यं । दर्पःपरपरिभवेच्छा । मानोऽहमेवश्रेष्ठइतिमतिः । भयंस्वोच्छेदशंका । उद्वेगःशंकाकृतंचित्तस्यानवस्थितत्वम् ४२ । ४३

सहंतिसहंते ४४ अर्थादुःखंप्रयच्छंति यदिपरित्यक्तुमिष्यंते तस्मान्नाशमर्थार्जनादिजंदुःखंनचिंतयेत् ४५ पिपासायास्तृष्णायाः ४६ नगृद्ध्येतइच्छांनकुर्यात् तत्रयौवनादौ ४७ संचयान्अर्थान् तज्जान् अर्थत्यागजान् अनीहार्थोयदृच्छालब्धोऽर्थः ४८ नस्पर्शनमस्पर्शनं सुप्सुपेतिनशब्देननैकधेत्यादिवत्समासः ४९ एवंसर्वेष्वर्थवद्यौवनादिषु अर्थतःधनात् ५० अर्थोपभोगःविषयोपभोगः अर्थेप्सुताधनेप्सुता। 'अर्थःप्रकारेविषये वित्तकारणवस्तुषु' इतिविश्वः। आत्मोपभोगेतिपाठोनिर्मूलः ५१ । ५२ भूतानामिति। देवपितृमनुष्याणामुपलक्षणंदृश्यते पंचमहायज्ञेषु। अपचमानेभ्यः 'यतिश्चब्रह्मचारीच पक्वा

सहंतिचमहद्दुःखंघ्नंतिचैवार्थकारणात् ॥ अर्थादुःखंपरित्यक्तुंपालिताश्चैवशत्रवः ४४ दुःखेनचाधिगम्यंतेतस्मान्नाशंनचिंतयेत् ॥ असंतोषपरामूढाःसंतोषंयांतिपंडिताः ४५ अंतोनास्तिपिपासायाःसंतोषःपरमंसुखम् ॥ तस्मात्संतोषमेवेहपरंपश्यंतिपंडिताः ४६ अनित्यंयौवनंरूपंजीवितंरत्नसंचयः ॥ ऐश्वर्यंप्रियसंवासोगृद्ध्येत्तत्रनपंडितः ४७ त्यजेतसंचयांस्तस्मात्तज्जान्क्लेशान्सहेतच ॥ नहिसंचयवान्कश्चिद्दृश्यतेनिरुपद्रवः ॥ अतश्चधार्मिकैःपुंभिरनीहार्थःप्रशस्यते ४८ धर्मार्थंयस्यवित्तेहावरंतस्यनिरीहता ॥ प्रक्षालनाद्धिपंकस्यश्रेयोनस्पर्शनंनृणाम् ४९ युधिष्ठिरैवंसर्वेषुनस्पृहांकुर्तुमर्हसि ॥ धर्मेणयदितेकार्यंविमुक्तेच्छोभवार्थतः ५० ॥ युधिष्ठिरउवाच ॥ नार्थोपभोगलिप्सार्थमियमर्थेप्सुताभम ॥ भरणार्थंतुविप्राणांब्रह्मन्कांक्षेनलोभतः ५१ कथंह्यस्मद्विधोब्रह्मन्वर्त्तमानोगृहाश्रमे ॥ भरणंपालनंचापिनकुर्यादनुयायिनाम् ५२ संविभागोहिभूतानांसर्वेषामेवदृश्यते ॥ तथैवापचमानेभ्यःप्रदेयंगृहमेधिना ५३ तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता ॥ सतामेतानिगेहेषुनोच्छिद्यंतेकदाचन ५४ देयमार्तस्यशयनंस्थितश्रांतस्यचासनम् ॥ तृषितस्यचपानीयंक्षुधितस्यचभोजनम् ५५ चक्षुर्दद्यान्मनोदद्याद्वाचंदद्यात्सुभाषिताम् ॥ उत्थायचासनंदद्यादेषधर्मःसनातनः ॥ प्रत्युत्थायाभिगमनंकुर्यान्न्यायेनचार्चनम् ५६ अग्निहोत्रमनड्वांश्चज्ञातयोऽतिथिबांधवाः ॥ पुत्रादाराश्चभृत्याश्चनिर्दहेयुरपूजिताः ५७ आत्मार्थंपाचयेन्नान्नंनवृथाघातयेत्पशून् ॥ नचतत्स्वयमश्नीयाद्विधिवद्यन्ननिर्वपेत् ५८ श्वभ्यश्चश्वपचेभ्यश्चवयोभ्यश्चावपेद्भुवि ॥ वैश्वदेवंहिनामैतत्सायंप्रातश्चदीयते ५९ विघसाशीभवेत्तस्मान्नित्यंचामृतभोजनः ॥ विघसोभुक्तशेषंतुयज्ञशेषंतथाऽमृतम् ६० चक्षुर्दद्यान्मनोदद्याद्वाचंदद्याच्चसूनृताम् ॥ अनुव्रजेदुपासीतसयज्ञःपंचदक्षिणः ६१ योदद्यादपरिक्लिष्टमन्नमध्वनिवर्तते ॥ श्रांतायादृष्टपूर्वायतस्यपुण्यफलंमहत् ६२ एवंयोवर्त्ततेवृत्तिंवर्तमानोगृहाश्रमे ॥ तस्यधर्मंपरंप्राहुःकथंवाविप्रमन्यसे ६३ ॥ शौनकउवाच ॥ अहोबतमहत्कष्टंविपरीतमिदंजगत् ॥ येनापत्रपतेसाधुरसाधुस्तेनतुष्यति ६४

न्नस्वामिनावुभौ' इति स्मृतेर्यत्यादिभ्यः ५३ तृणान्यासनार्थानि ५४ स्थितश्रांतस्य स्थितःऊर्ध्वंस्थितस्ततमाहितस्यश्रांतस्यचासनंतृणमयंदद्यादतिथयेइतिशेषः ५५ न्यायेनवर्णाश्रमानुरूप्येण ५६ ५७ वृथा श्राद्धयज्ञादिनिमित्तंविना। 'देवान्पितॄन्समभ्यर्च्य खादन्मांसंनदोषभाक्' इति स्मृतेः । यदन्नंनानिर्वपेन्नदद्यात् देवपितृभूतमनुष्येभ्य इतिशेषः ५८ विश्वंसर्वजातीयंप्राणिजातं देवोदेवता यस्यसस्तद्वैश्वदेवं स्वार्थेतद्धितः वैश्वदेवंनामकर्म ५९ । ६० । ६१ अपरिक्लिष्टंकार्पण्यंविना अध्वनिवर्त्ततेमार्गस्थाय ६२ धर्मपरं गार्हस्थ्यात्परोधर्मोनास्तीतिभावः ६३ अपत्रपते निर्लज्जइत्यपवादंलभते ६४

अप्राज्ञइतिच्छेदः प्रकर्षेणअज्ञःप्राज्ञइतिवा शिश्नोदरकृतेइति दिव्यांगनाभोगलिप्सया दिव्यरूपादिभोगलिप्सयाच विघसंदेवताद्युपयुक्तशेषं कामुकोबहुकरोति मोहआत्माऽज्ञानंरागस्तज्जेप्रपंचेप्रीतिः वशंइच्छाऐश्वर्यंवा तैः आक्रांतः 'वशमिच्छाप्रभुत्वयोः' इतिविश्वः । इंद्रियार्थाःशब्दादयस्तेषां वशआयत्ततातदनुगस्तदर्थी ६५ हारिभिःहरणशीलैः एवंवर्णाश्रमाभिमानपूर्वकं यज्ञादीननुतिष्ठतामात्मस्वरूपाज्ञानात्तत्कर्मफलतयोपस्थितेषु विषयेषु रागवतामिंद्रियैर्विषयान्प्रतिहृतानां तत्रनिमग्नचित्तानां परमार्थस्यात्यंतास्फुरणलक्षणं विमूढसंज्ञत्वंभवतीत्युक्तं ६६ तदुपपादयति। षडिति दीपप्रभावत्तैजसंमनो नेत्रादिद्वारा तत्तद्विषयंप्रतिगत्वा तदावरकमज्ञानमभिभाव्यतंविषयंप्रकाशयतियदा तदैषांविषयविदांमनस्तत्तद्विषयहानोपादानोपेक्षालोचनाख्यमननात्मकमंतःकरणंप्रादुर्भवतिविशेषेणपीनंभवति तत्रपूर्वसंकल्पजं यथापूर्वसंस्कारं हीनेऽप्युपादेयबुद्धिरुत्तमेहानबुद्धिर्विपरीतावाबुद्धिर्भवति सोऽयंमनःप्रादुर्भावः ६७ तस्मिंश्चजातेकिंस्यात्तदाह मनोयस्येति यस्यपुंसोमनः इंद्रियस्यैंद्रियाणांविषयान्शब्दादीन्सेवितुंयाति उच्छलति तस्यतद्विषयभोगार्थमौत्सुक्यं विलंबासहत्वंभवति चततः प्रवृत्तिर्जायते ६८ प्रवृत्तश्च लोभाग्नौमोहाग्नौपतति । यतःकामेनविषयबाणैर्निहतः अतिरागान्मुह्यतीत्यर्थः ६९ महामोहेअंधेतमसि ७० अविद्याआत्माज्ञानं ततःपरमानंदतिरोधानात्क्षुद्रानंदप्राप्तयेकर्म ततस्तत्फलभोगेष्वतृप्तिस्तृष्णा ७१ । ७२ अबुधानांगृहस्थानांविघसाशनमेवपरमोधर्मइतिमन्वानानांगतिः कर्मनिष्ठा

शिश्नोदरकृतेऽप्राज्ञःकरोतिविघसंबहु ॥ मोहरागवशाक्रांतइंद्रियार्थवशानुगः ६५ ह्रियतेबुध्यमानोऽपिनरोहारिभिरिंद्रियैः ॥ विमूढसंज्ञोदुष्टाश्वैरुद्भ्रांतैरिवसारथिः ६६ षडिंद्रियाणिविषयंसमागच्छंतिवैयदा ॥ तदाप्रादुर्भवत्येषांपूर्वसंकल्पजंमनः ६७ मनोयस्येंद्रियस्येहविषयान्यातिसेवितुम् ॥ तस्यौत्सुक्यंसंभवति प्रवृत्तिश्चोपजायते ६८ ततःसंकल्पबीजेनकामेनविषयेषुभिः ॥ विद्धःपततिलोभाग्नौज्योतिर्लोभात्पतंगवत् ६९ ततोविहारैराहारैर्मोहितश्चयथेप्सया ॥ महामोहेसुखेमग्नोनात्मानमवबुध्यते ७० एवंपततिसंसारेतासुतास्विहयोनिषु ॥ अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथचक्रवत् ७१ ब्रह्मादिषुतृणांतेषुभूतेषुपरिवर्तते ॥ जलेभुवितथाऽऽकाशेजायमानःपुनःपुनः ७२ अबुधानांगतिस्त्वेषाबुधानामपिमेशृणु ॥ येधर्मेश्रेयसिरताविमोक्षरतयोजनाः ७३ तदिदंवेदवचनंकुरुकर्मत्यजेतिच ॥ तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत् ७४ इज्याध्ययनदानानितपःसत्यंक्षमादमः ॥ अलोभइतिमार्गोऽयंधर्मस्याष्टविधःस्मृतः ७५ अत्रपूर्वश्चतुर्वर्गःपितृयाणपथेस्थितः ॥ कर्तव्यमितियत्कार्यंनाभिमानात्समाचरेत् ७६ उत्तरोदेवयानस्तुसद्भिराचरितःसदा ॥ अष्टांगेनैवमार्गेणविशुद्धात्मासमाचरेत् ७७

फलमुक्तं बुधानांतेभ्योऽन्येषांसंन्यासिनामपिगतिंमेमत्तःशृणु धर्मेश्रेयसिप्रवृत्तिधर्मोऽपिप्रशस्यः निवृत्तिधर्मःप्रशस्यतरस्तस्मिन्रताः अतएवविमोक्षरतयः ७३ तदिदमिति । 'कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः' इति । 'त्यजतैवहितज्ज्ञेयंत्यक्तुःप्रत्यक्परंपदं' इतिचद्विविधाअपिश्रुतयःसंति तत्रयेऽभिमानात्कर्मकुर्वंतेतेपूर्वोक्तरीत्यांऽधंतमोविशंति येचशुद्धाःसंन्यासिनस्तेकृतकृत्याएवभवंति तत्रतुमध्यमस्यगतिरियमित्याह तस्मादिति।तथाचवक्ष्यति । 'एतान्यपितुकर्माणिसंगंत्यक्त्वाफलानिच ॥ कर्तव्यानीतिमेपार्थ निश्चितंमतमुत्तमं' इति ७४ । ७५ पितृयाणपथे धूमादिमार्गे आवृत्तिफले। कर्तव्यमवश्यानुष्ठेयं नित्याग्निहोत्रसंध्योपासनादि । अभिमानात्संगात् ७६ उत्तरश्चतुर्वर्गः सत्यंदमःक्षमाअलोभश्च देवयानोऽर्चिरादिमार्गोऽनावृत्तिफलः अष्टांगेन वक्ष्यमाणसंकल्पसंबंधाद्यंगाष्टकवतामार्गेणप्रकारेण यत्कर्तव्यं तदाचरेदितिपूर्वेणसंबंधः। शुद्धात्मा शुद्धचित्तः ७७

संकल्पोमानसंकर्म तस्यसंबंधोनिरोधस्तेन अंतरिंद्रियनिग्रहाख्यः शमउक्तः । इंद्रियनिग्रहोदमः । व्रतविशेषः अहिंसादीनिव्रतानितेषांविशेषःसार्वभौमत्वं सर्वदेशेकालेषुचसर्वप्रकारेणाहिंसात्यागइत्यर्थः ७८ आहारोहितमितमेध्याशनं तस्ययोगात्कर्मणांविधिवत्त्यागः ततश्चित्तनिरोधनात् ७९ । ८० । ८१ । ८२ कर्ममयी यज्ञयुद्धादिकर्मरूपसाधनप्रधानासिद्धिः पितृमातृमयी 'द्यौःपितापृथिवीमाता' इतिश्रुतेः परलोकेहलोकफलप्रधाना सात्वयाप्राप्तैव चकारएवशब्दार्थः तपसादेवताध्यानजपादिनायासिद्धिस्तां ८३ अनुग्रहात्तपसइतिशेषः ८४ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेद्वितीयोऽध्यायः ॥ २ ॥ ॥ शौनकेनेति १ । २ । ३ धर्मेणयोगमयेननतुकर्मणा ४ सूर्याराधनंविवक्षुःसूर्यस्यसार्वात्म्यंतावदाहमरोचनार्थं । सविताप्रसविता उत्पादकःपरमात्मेत्यर्थः ५ तेजोरसान्जलानि उद्धृत्यादायमहींनिविशते

सम्यक्संकल्पसंबंधात्सम्यक्चेंद्रियनिग्रहात् ॥ सम्यग्व्रतविशेषाच्चसम्यक्चगुरुसेवनात् ७८ सम्यगाहारयोगाच्चसम्यक्चाध्ययनागमात् ॥ सम्यक्कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात् ७९ एवंकर्माणिकुर्वंतिसंसारविजिगीषवः ॥ रागद्वेषविनिर्मुक्ताऐश्वर्यंदेवतागताः ८० रुद्राःसाध्यास्तथाऽऽदित्यावसवोऽथ तथाऽश्विनौ ॥ योगैश्वर्येणसंयुक्ताधारयंतिप्रजाइमाः ८१ तथात्वमपिकौंतेयशममास्थायपुष्कलम् ॥ तपसासिद्धिमन्विच्छयोगसिद्धिंचभारत ८२ पितृमातृमयीसिद्धिःप्राप्ताकर्ममयीचते ॥ तपसासिद्धिमन्विच्छद्विजानांभरणायवै ८३ सिद्धाहियद्यदिच्छंतिकुर्वंतेतदनुग्रहात् ॥ तस्मात्तपःसमास्थायकुरुष्वात्ममनोरथम् ८४ ॥ ॥ इ०महाभा०आरण्यकेप०अ०प०पांडवानांप्रव्रजनेद्वितीयोऽध्यायः २ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ शौनकेनैव मुक्तस्तुकुंतीपुत्रोयुधिष्ठिरः ॥ पुरोहितमुपागम्यभ्रातृमध्येऽब्रवीदिदम् १ प्रस्थितंमाऽनुयांतीमेब्राह्मणावेदपारगाः ॥ नचास्मिपोषणेशक्तोबहुदुःखसमन्वितः २ परित्यक्तुंनशक्तोऽस्मिदानशक्तिश्चनास्तिमे ॥ कथमत्रमयाकार्यंतद्ब्रूहिभगवन्मम ३ ॥ वैशंपायनउवाच ॥ मुहूर्तमिवसध्यात्वाधर्मेणान्विष्यतांगतिम् ॥ युधिष्ठिरमुवाचेदंधौम्योधर्मभृतांवरः ४ ॥ धौम्यउवाच ॥ पुरासृष्टानिभूतानिपीड्यंतेक्षुधयाभृशम् ॥ ततोऽनुकंपयातेषांसवितास्वपितायथा ५ गत्वोत्तरायणंतेजोरसानुद्धृत्यरश्मिभिः ॥ दक्षिणायनमावृत्तोमहींनिविशतेरविः ६ क्षेत्रभूतेततस्तस्मिन्नोषधीरोषधीपतिः ॥ दिवस्तेजःसमुद्धृत्यजनयामासवारिणा ७ निषिक्तश्चंद्रतेजोभिःस्वयोनौनिर्गतेरविः ॥ ओषध्यःषड्रसामेध्यास्तदन्नंप्राणिनांभुवि ८ एवंभानुमयंह्यन्नंभूतानांप्राणधारणम् ॥ पितैषसर्वभूतानांतस्मात्तंशरणंव्रज ९ राजानोहिमहात्मानोयोनिकर्मविशोधिताः ॥ उद्धरंतिप्रजाःसर्वास्तपआस्थायपुष्कलम् १० भीमेनकार्तवीर्येणवैन्येननहुषेणच ॥ तपोयोगसमाधिस्थैरुद्धृताह्यापदःप्रजाः ११ तथात्वमपिधर्मात्मन्कर्मणाचविशोधितः ॥ तपआस्थायधर्मेणद्विजातीन्भरभारत १२

स्वोष्मणामहींवासयति ६ ओषधीपतिश्चंद्रः दिवस्तेजः अंतरिक्षगतंमेघाकारेणपरिणतंतेजःउद्धृत्य मेघानुद्भाव्येत्यर्थः । जनयामास तदुत्थेनवारिणाओषधीः ७ स्वयोनौबीजेनिर्गते अंकुरादिरूपेणनिष्पन्नेसति रविरेवओषधीरूपोभवति तदन्नंताभ्यओषधीभ्योऽन्नंअदनीयंधान्यंतच्च पुनर्जलोष्मयोगादंकुरादिक्रमेणधान्ययोनिरिति रविरेवान्नमन्नयोनित्वात् । अन्येतु । यदादर्शे चंद्रेस्वयोनौसूर्यएकतांगच्छति तदाचंद्रतेजोभिरमृतमयैर्निषिक्तोभवति ततश्चंद्ररूपेणबहिर्निर्गत्य औषधीराप्याययति तेनान्नंभवतीत्याहुः ८ । ९ । १० तपोयोगोव्रतस्वीकारस्तत्पूर्वकः समाधिर्ध्यानंतत्स्थैस्तन्निष्ठैः ११ धर्मेणध्यानेन १२

१३ । १४ । १५ सूर्योर्यमेति । अत्रसूर्योपाधिकंब्रह्मसर्वकर्तृत्वसर्वज्ञत्वंसर्वात्मत्वादिभिर्धर्मैःस्तूयते तद्यथा सूर्यः सूतेआलोकमितिसूर्यः १ अर्यमागतिमत्वात् २ भगःसर्वैश्वर्यसंपन्नत्वात् ३ त्वष्टाविश्वशिल्पकरत्वात् ४ पूषापोषकः ५ अर्कःअर्चनीयः ६ सविताजगत्प्रसवनात् ७ रविःवेदत्रयीशब्दमयः ८ गभस्तिमान्सहस्राकिरणः ९ अजोऽनादिः १० कालः मुहूर्तादिःतत्प्रवर्त्तकत्वात् ११ मृत्युःप्राणहर्ता १२ धाताजगत्कर्ता १३ प्रभाकरःदीप्तिकरः १४ । १६ पृथिवीत्यादिनामभिःसार्वात्म्यस्यैवप्रपंचः । परायणंमूलकारणं २० । १७ । २८ शुचिरग्निः २९ शौरिःकृष्णः ३० १८ । ४० तेजसांपतिःसूर्यः ४१ धर्मध्वजोधर्मप्रधानः ४२ । ४३ वेदांगःवेदशरीरःत्रयीमयत्वात् ४४ । ४५ । १९ । ४८ कलिः सर्वमलाश्रयइत्येकंनाम ४९ । २० अश्वत्थःसंसारवृक्षःसएवसंवत्सरकरः नतुषष्ठःपदार्थःकालोनामकश्चिदस्ति कालोपाधिभूतंद्रव्यमेवस्वस्यअतीतानागतादिव्यवहारहेतुर्भवतीतिभावः ५६ कालचक्रःकालप्रवर्त्तकोयोविभावसुःसइत्येकंनाम ५७ पुरुषः पूर्षुकर्मेन्द्रियपंचकज्ञानेंद्रियपंचकमनआदिचतुष्टयप्राणादिपंचकभूतपंचककामकर्माविद्याख्यासुवसतीतिपुरुषःजीवरूपः ५८ सएवशाश्वतःआद्यंतशून्यः ५९ योगीकर्मज्ञानाधिकारी ६० व्यक्ताव्यक्तःकार्यकारणात्मा ६१ सनातनोनिरुपाधिः ६२ । २१ । ६५ तमोनुदःअज्ञानहंतामोक्षदइत्यर्थः ६६ अंशःअंशयतिविभाजयतिकर्मफलानीत्यंशः ६९ । ७० जीवनःजलवज्जीवनहेतुः ७१ । ७२ । २२ संवर्तकःप्रलयकालिकोवह्निरित्येकं ७७ । २३ सर्वेषांधातूनांत्वगादीनांदेहगतानां निषेचितासेचकआप्यायकः ८८ । २४ । मनोरूपीसुपर्णइत्येकं ८९ भूतादिरहंकारः ९० आदिदेवोऽदितेःसुतःइत्येकंनाम विष्णुरित्यर्थः ९५ । २५ पितामातापितामहः द्यावापृथिव्योःपिताहिरण्यगर्भस्तस्यापिपितेत्यर्थः ९८ स्वर्गद्वारंब्रह्मलोकप्राप्तिद्वारं 'सूर्यद्वारेणतेविरजाःप्रयांति'इतिश्रुतेस्तदेवप्रजाद्वारं 'अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः'इति क्रमेणइहपरलोकप्रापकइत्यर्थः ९९ मोक्षद्वारंक्रममुक्तिस्थानभूतंत्रिविष्टपंस्वर्गभूमिरित्येकं १०० । २६ मैत्रेयः मित्रेषुसर्वभूताभयप्रदेषुसाधुर्मैत्रेयः १०७ करुणान्वितइति पतितव्रात्यादीनामपित्रातेत्यर्थः १०८ । २७

॥ जनमेजयउवाच ॥ कथंकुरूणामृषभःसतुराजायुधिष्ठिरः ॥ विप्रार्थमाराधितवान्सूर्यमद्भुतदर्शनम् १३ ॥ वैशंपायनउवाच ॥ शृणुष्वावहितो राजन्शुचिर्भूत्वासमाहितः ॥ क्षणंचकुरुराजेंद्रसंप्रवक्ष्याम्यशेषतः १४ धौम्येनतुयथापूर्वंपार्थायसुमहात्मने ॥ नामाष्टशतमाख्यातंतच्छृणुष्वमहामते १५ ॥ धौम्यउवाच ॥ सूर्योऽर्यमाभगस्त्वष्टापूषार्कःसवितारविः ॥ गभस्तिमानजःकालोमृत्युर्धाताप्रभाकरः १६ पृथिव्यापश्चतेजश्चखंवायुश्चपरायणम् ॥ सोमोबृहस्पतिःशुक्रोबुधोंऽगारकएवच १७ इंद्रोविवस्वान्दीप्तांशुःशुचिःशौरिःशनैश्चरः ॥ ब्रह्माविष्णुश्चरुद्रश्चस्कंदोवैवरुणोयमः १८ वैद्युतोजाठरश्चाग्निरैंधनस्तेजसांपतिः ॥ धर्मध्वजोवेदकर्त्तावेदांगोवेदवाहनः १९ कृतंत्रेताद्वापरश्चकलिःसर्वमलाश्रयः ॥ कलाकाष्ठामुहूर्त्ताश्चक्षपायामस्तथाक्षणः २० संवत्सरकरोऽश्वत्थःकालचक्रोविभावसुः ॥ पुरुषःशाश्वतोयोगीव्यक्ताव्यक्तःसनातनः २१ कालाध्यक्षःप्रजाध्यक्षोविश्वकर्मातमोनुदः ॥ वरुणःसागरोंऽशश्चजीमूतोजीवनोऽरिहा २२ भूताश्रयोभूतपतिःसर्वलोकनमस्कृतः ॥ स्रष्टासंवर्त्तकोवह्निःसर्वस्यादिरलोलुपः २३ अनंतःकपिलोभानुःकामदःसर्वतोमुखः ॥ जयोविशालोवरदःसर्वधातुनिषेचिता २४ मनःसुपर्णोभूतादिःशीघ्रगःप्राणधारकः ॥ धन्वंतरिर्धूमकेतुरादिदेवोऽदितेःसुतः २५ द्वादशात्माऽरविंदाक्षःपितामातापितामहः ॥ स्वर्गद्वारंप्रजाद्वारंमोक्षद्वारंत्रिविष्टपम् २६ देहकर्त्ताप्रशांतात्माविश्वात्माविश्वतोमुखः ॥ चराचरात्मासूक्ष्मात्मामैत्रेयःकरुणान्वितः २७

२८ । २९ । ३० शुचिश्चासौसुमनाश्चेतिकर्मधारयः शोकएवदवाग्निर्यस्मिन् तस्मात्सागरात्सागरवदपारात्संसारात् ३१ विप्रत्यागसमाधिस्थःविप्रेभ्यस्त्यागः सज्यमानमन्नंतदर्थंसमाधिस्थःनियमस्थः यूपदार्वादिवत्प्रकृतिविकाराभावेपिचतुर्थीसमासः अश्वघासादिवत्षष्ठीसमासोवा । संयतात्मानियमितचित्तः ३२ तपःसूर्याष्टशतनामजपाख्यम् ३३ योगंचित्तैकाग्र्यं आस्थायकृत्वा ३४ प्राणानामासमंतात्यमनंनिग्रहस्तेनप्राणायामेन आरब्धवान् ततःजपानंतरम् ३५ चक्षुःचक्षुरादिप्रवर्तकत्वात् बाह्यरूपेणचचक्षुरनुग्राहकत्वात् अतएवसर्वदेहिनामात्मायोनिःउत्पत्तिलयस्थानं भूतानांवियदादीनाम् आचारः आसमंताच्चारयतीत्याचारोंऽतर्यामी ३६ सांख्यानांज्ञाननिष्ठानांयोगिनांचित्तनिरोधकानामनावृतार्गलद्वारंत्वं आवृणोतीत्यावृतंकपाटंकर्तरिक्तः अर्गलाकपाटविष्टंभकंतिर्यक्काष्ठं तदुभयरहितंमुक्तिद्वारंत्वं मुमुक्षतांगतिश्चत्वमेव

एतद्वैकीर्त्तनीयस्यसूर्यस्यामिततेजसः ॥ नामाष्टशतकंचेदंप्रोक्तमेतत्स्वयंभुवा २८ सुरगणपितृयक्षसेवितंह्यसुरनिशाचरसिद्धवंदितम् ॥ वरकनकहुताशनप्रभंप्रणिपतितोऽस्मिहितायभास्करम् २९ सूर्योदयेयःसुसमाहितःपठेत्सपुत्रदारान्धनरत्नसंचयान् ॥ लभेतजातिस्मरतांनरःसदाधृतिंचमेधांचसविंदतेपुमान् ३० इमंस्तवंदेववरस्ययोनरःप्रकीर्तयेच्छुचिसुमनाःसमाहितः ॥ विमुच्यतेशोकदवाग्निसागराल्लभेतकामान्मनसायथेप्सितान् ३१ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुधौम्येनतत्कालसदृशंवचः ॥ विप्रत्यागसमाधिस्थःसंयतात्मादृढव्रतः ३२ धर्मराजोविशुद्धात्मातपआतिष्ठदुत्तमम् ॥ पुष्पोपहारैर्बलिभिरर्चयित्वा दिवाकरम् ३३ सोऽवगाह्यजलंराजादेवस्याभिमुखोऽभवत् ॥ योगमास्थायधर्मात्मावायुभक्षोजितेंद्रियः ३४ गांगेयंवार्युपस्पृश्यप्राणायामेनतस्थिवान् ॥ शुचिःप्रयतवाग्भूत्वास्तोत्रमारब्धवांस्ततः ३५ ॥ युधिष्ठिरउवाच ॥ त्वंभानोजगतश्चक्षुस्त्वमात्मासर्वदेहिनाम् ॥ त्वंयोनिःसर्वभूतानांत्वमाचारःक्रियावताम् ३६ त्वंगतिःसर्वसांख्यानांयोगिनांत्वंपरायणम् ॥ अनावृतार्गलद्वारंत्वंगतिस्त्वंमुमुक्षताम् ३७ त्वयासंधार्यतेलोकस्त्वयालोकःप्रकाश्यते ॥ त्वयापवित्रीक्रियतेनिर्व्याजंपाल्यतेत्वया ३८ त्वामुपस्थायकालेतुब्राह्मणावेदपारगाः ॥ स्वशाखाविहितैर्मंत्रैरर्चंत्यृषिगणार्चित ३९ तवदिव्यंरथंयांतमनुयांतिवरार्थिनः ॥ सिद्धचारणगंधर्वायक्षगुह्यकपन्नगाः ४० त्रयस्त्रिंशच्चवैदेवास्तथावैमानिकागणाः ॥ सोपेंद्राःसमहेंद्राश्चत्वामिष्ट्वासिद्धिमागताः ४१ उपयांत्यर्चयित्वातुत्वांवैप्राप्तमनोरथाः ॥ दिव्यमंदारमालाभिस्तूर्णंविद्याधरोत्तमाः ४२ गुह्याःपितृगणाःसप्तयेदिव्यायेचमानुषाः ॥ तेपूजयित्वात्वामेवगच्छंत्याशुप्रधानताम् ४३ वसवोमरुतोरुद्रायेचसाध्यामरीचिपाः ॥ वालखिल्यादयःसिद्धाःश्रेष्ठत्वंप्राणिनांगताः ४४ सब्रह्मकेषुलोकेषुसप्तस्वप्यखिलेषुच ॥ नतद्भूतमहंमन्येयदर्कादतिरिच्यते ४५ संतिचान्यानिसत्वानिवीर्यवंतिमहांतिच ॥ नतुतेषांतथादीप्तिःप्रभावोवायथातव ४६ ज्योतींषित्वयिसर्वाणित्वंसर्वज्योतिषांपतिः ॥ त्वयिसत्त्यंचसत्त्वंचसर्वेभावाश्चसात्त्विकाः ४७

प्राप्यंपदमपित्वमेवेत्यर्थः ३७ निर्व्याजंराजवत्प्रत्युपकाराशारूपंमिषंविनाकेवलंकृपयैवेत्यर्थः ३८ । ३९ । ४० त्रयस्त्रिंशत 'अष्टौवसवएकादशरुद्राद्वादशादित्याःप्रजापतिश्चवषट्कारश्च' इतिश्रुतिप्रसिद्धाःगणास्तदन्यानिविश्वेदेवादीनिसमुदायदैवतानि सिद्धिंज्ञानम् ४१ उपयांतित्वामवे त्वांअर्चयित्वातुप्राप्तमनोरथाभवंति ४२ सप्तार्यमाग्निष्वात्तादयः प्रधानतांजगत्कारणताम् ४३ । ४४ अस्यसार्वात्म्यमाह सब्रह्मकेष्विति । नमन्येनास्तीतिमन्येसर्वस्यैकात्म्यात् ४५ । ४६ सत्त्यं सत्पृथिव्यप्तेजांसि त्यत् वाय्वाकाशौ तदात्मकंसत्त्यं सत्त्वंबुद्धिसत्त्वंसात्त्विकाभावाः धर्मोज्ञानंविरागऐश्वर्यमित्याद्याः ४७

सुनाभंसुदर्शनम् ४८ । ४९ । ५० प्रावाराःवस्त्रविशेषाः ५१ त्रयोदशद्वीपवर्तीसुदर्शनाधर्वास्तरद्वीपयोगात् गोभिःरश्मिभिः ५२ । ५३ । ५४ । ५५ अमानवस्येतिच्छेदः अमानवोऽर्चिरादिमार्गेणमतस्यब्र ह्मलोकप्रापकःपुरुषः ५६ । ५७ त्वद्दीधितयस्त्वत्किरणाः सैरावताःमेघस्योपरियोमेघःसऐरावतस्तत्संहिताः आभूतंयावच्चतुर्विधभूतग्रामंतस्यसंप्लवःजलेनाभिप्लावनम् ५८ द्वादशधा । ' अरुणोमाघमासेतुसू र्योवैफाल्गुनेतथा ' इत्यादिस्मृत्युक्तारुणादिरूपेण ५९ । ६० हंतियच्छतिविश्वंसंहरतीतिवाहंसः वृषाकपिःहरोहरिर्वा ६१ गवांरश्मीनाम् ६२ सप्तसप्तिःसप्ताश्वः धामकेशीज्योतिर्मयकिरणवान् आशुगामीस्व

त्वत्तेजसाकृतंचक्रंसुनाभंविश्वकर्मणा ॥ देवारीणांमदोयेननाशितःशार्ङ्गधन्वना ४८ त्वमादायांशुभिस्तेजोनिदाघेसर्वदेहिनाम् ॥ सर्वौषधिरसानांचपुनर्वर्षा सुमुंचसि ४९ तपंत्यन्येदहंत्यन्येगर्जंत्यन्येतथाघनाः ॥ विद्योतंतेप्रवर्षंतितवप्राद्वृषिरश्मयः ५० नतथासुखयत्यग्निर्नप्रावारानकंबलाः ॥ शीतवातार्दितं लोकंयथातवमरीचयः ५१ त्रयोदशद्वीपवर्तीगोभिर्भासयसेमहीम् ॥ त्रयाणामपिलोकानांहितायैकःप्रवर्तसे ५२ तवयद्युदयोनस्यादंधंजगदिदंभवेत् ॥ नच धर्मार्थकामेषुप्रवर्त्तेरन्मनीषिणः ५३ आधानपशुबंधेष्टिमंत्रयज्ञतपःक्रियाः ॥ त्वत्प्रसादादवाप्यंतेब्रह्मक्षत्रविशांगणैः ५४ यदहर्ब्रह्मणःप्रोक्तंसहस्रयुगसंमितम् ॥ तस्यत्वमादिरंतश्चकालज्ञैःपरिकीर्त्तितः ५५ मनूनांमनुपुत्राणांजगतोऽमानवस्यच ॥ मन्वंतराणांसर्वेषामीश्वराणांत्वमीश्वरः ५६ संहारकालेसंप्राप्तेतवक्रोध विनिःसृतः ॥ संवर्त्तकाग्निस्त्रैलोक्यंभस्मीकृत्यावतिष्ठते ५७ त्वद्दीधितिसमुत्पन्नानानावर्णामहाघनाः ॥ सैरावताःसाशनयःकुर्वंत्याभूतसंप्लवम् ५८ कृत्वाद्वाद शधाऽऽत्मानंद्वादशादित्यतांगतः ॥ संहृत्यैकार्णवंसर्वंत्वंशोषयसिरश्मिभिः ५९ त्वामिंद्रमाहुस्त्वंरुद्रस्त्वंविष्णुस्त्वंप्रजापतिः ॥ त्वमग्निस्त्वंमनःसूक्ष्मंप्रभुस्त्वं ब्रह्मशाश्वतम् ६० त्वंहंसःसविताभानुरंशुमालीवृषाकपिः ॥ विवस्वान्मिहिरःपूषामित्रोधर्मस्तथैवच ६१ सहस्ररश्मिरादित्यस्तपनस्त्वंगवांपतिः ॥ मार्तं डोऽर्कोरविःसूर्यःशरण्योदिनकृत्तथा ६२ दिवाकरःसप्तसप्तिर्धामकेशीविरोचनः ॥ आशुगामीतमोघ्नश्चहरिताश्वश्चकीर्त्यसे ६३ सप्तम्यामथवाषष्ठ्यांभक्त्यापूजां करोतियः ॥ अनिर्विण्णोऽनहंकारीतंलक्ष्मीर्भजतेनरम् ६४ नतेषामापदःसंतिनाधयोव्याधयस्तथा ॥ येतवानन्यमनसाकुर्वंत्यर्चनवंदनम् ६५ सर्वरोगैर्विर हिताःसर्वपापविवर्जिताः ॥ त्वद्भावभक्ताःसुखिनोभवंतिचिरजीविनः ६६ त्वंममापन्नकामस्यसर्वातिथ्यंचिकीर्षतः ॥ अन्नमन्नपतेदातुमभितःश्रद्धयार्हसि ६७ येचतेऽनुचराःसर्वेपादोपांतंसमाश्रिताः ॥ माठरारुणदंडाद्यास्तांस्तान्वंदेऽशनिक्षुभान् ६८ क्षुभयासहितामैत्रीयाश्चान्याभूतमातरः ॥ ताश्चसर्वानमस्यामि पांतुमांशरणागतम् ६९ ॥ वैशंपायनउवाच ॥ एवंस्तुतोमहाराजभास्करोलोकभावनः ॥ ततोदिवाकरःप्रीतोदर्शयामासपांडवम् ॥ दीप्यमानःस्ववपुषाज्वल न्निवहुताशनः ७०

न्नाशावहइतिपाठेदिव्यव्यवहारनिर्वाहकः आशायाःप्रसिद्धायाइष्टार्थसमर्पणेनपूरकोवा ६३ अनिर्विण्णःपूजनेआसक्तः ६४ । ६५ त्वद्भावभक्ताःसूर्यएवसर्वत्रास्तीतिभावोभावना तत्रभक्ताआदृताः ६६ श्रद्धया आतिथ्यंचिकीर्षतइतिसंबंधः ६७ अशनिक्षुभान् विद्युदशन्यादिप्रवर्त्तकान् ६८ क्षुभामैत्र्यौनिग्रहानुग्रहकर्त्र्यौदेवते भूतमातरः गौरीपद्मादयः ब्राह्मीमाहेश्वर्यादयश्च ६९ । ७०

७१ गृण्हीष्वगृहाण पिठरंपरिवेषणपात्रं ताम्रंताम्रमयं वत्स्यंतिवृत्तिंजनजीविकारूपांकरिष्यति पात्रेणपात्रप्रसूतेनान्नेन ७२ यावद्वत्स्यंतितावदन्नाद्यमोदनादिकमक्षय्यंभविष्यतीतिसंबंधः चतुर्विधंलेह्यंचो
ष्यंभक्ष्यंपेयंच ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० महानसेपाकशालायां साधयामासकारयामासअन्नमितिशेषः ८१ संस्कृतंपक्वम् ८२ । ८३ पार्षती पृषतःद्रुपदपितुःगोत्रापत्यम् ८४ याज्ञि
यार्थाःयज्ञार्हाणिवस्तूनि आज्यपशुपुरोडाशीयादीनि प्रवर्ततेनिःसरंति । विधिमंत्रप्रमाणतः विधिर्वसंतेवसंतेज्योतिषायजेतेत्यादिरज्ञातज्ञापनरूपः । मंत्रःअनुष्ठेयार्थस्मारकइषेत्वेत्यादिः तावेवप्रमाणे ताभ्या

॥ विवस्वानुवाच ॥ यत्तेऽभिलषितंकिंचित्तत्त्वंसर्वमवाप्स्यसि ॥ अहमन्नंप्रदास्यामिसप्तपंचचतेसमाः ७१ गृह्णीष्वपिठरंताम्रंमयादत्तंनराधिप ॥ यावद्वत्स्यं
तिपांचालीपात्रेणानेनसुव्रत ७२ फलमूलामिषंशाकंसंस्कृतंयन्महानसे ॥ चतुर्विधंतदन्नाद्यमक्षय्यंतेभविष्यति ७३ इतश्चतुर्दशेवर्षेभूयोराज्यमवाप्स्यसि ॥
वैशंपायनउवाच ॥ एवमुक्त्वातुभगवांस्तत्रैवांतरधीयत ७४ इमंस्तवंप्रयतमनाःसमाधिनापठेदिहान्योऽपिवरंसमर्थयन् ॥ तत्तस्यदद्याच्चरविर्मनीषितंतदाप्नुया
द्यद्यपितत्सुदुर्लभम् ७५ यश्चेदंधारयेन्नित्यंशृणुयाद्वाऽप्यभीक्ष्णशः ॥ पुत्रार्थीलभतेपुत्रंधनार्थीलभतेधनम् ॥ विद्यार्थीलभतेविद्यांपुरुषोऽप्यथवास्त्रियः ७६ उभेसंध्ये
पठेन्नित्यंनारीवापुरुषोयदि ॥ आपदंप्राप्यमुच्येतबद्धोमुच्येतबंधनात् ७७ एतद्ब्रह्माददौपूर्वंशक्रायसुमहात्मने ॥ शक्राच्चनारदःप्राप्तोधौम्यस्तुतदनंतरम् ॥ धौम्याद्यु
धिष्ठिरःप्राप्यसर्वान्कामानवाप्तवान् ७८ संग्रामेचजयेन्नित्यंविपुलंचाप्नुयाद्वसु ॥ मुच्यतेसर्वपापेभ्यःसूर्यलोकंसगच्छति ७९ ॥ वैशंपायनउवाच ॥ लब्ध्वावरं
तुकौंतेयोजलादुत्तीर्यधर्मवित् ॥ जग्राहपादौधौम्यस्यभ्रातॄंश्चपरिषस्वजे ८० द्रौपद्यासहसंगम्यवंद्यमानस्तयाप्रभुः ॥ महानसेतदानींतुसाधयामासपांडवः ८१
संस्कृतंप्रसवंयातिस्वल्पमन्नंचतुर्विधम् ॥ अक्षय्यंवर्धतेचान्नंतेनभोजयतेद्विजान् ८२ भुक्तवत्सुचविप्रेषुभोजयित्वाऽनुजानपि ॥ शेषंविघससंज्ञंतुपश्चाद्भुंक्तेयु
धिष्ठिरः ८३ युधिष्ठिरंभोजयित्वाशेषमश्नातिपार्षती ॥ द्रौपद्यांभुज्यमानायांतदन्नंक्षयमेतिच ॥ एवंदिवाकरात्प्राप्यदिवाकरसमप्रभः ८४ कामान्मनोभिलषितान्
ब्राह्मणेभ्योऽददात्प्रभुः ॥ पुरोहितपुरोगाश्चतिथिनक्षत्रपर्वसु ॥ यज्ञियार्थाःप्रवर्तंतेविधिमंत्रप्रमाणतः ८५ ततःकृतस्वस्त्ययनाधौम्येनसहपांडवाः ॥ द्विजसंघैः
परिवृताःप्रययुःकाम्यकंवनम् ८६ इत्यारण्यकेप० अरण्यपर्वणिकाम्यकवनप्रवेशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ वैशंपायनउवाच ॥ वनंप्रविष्टेष्वथपांडवेषुप्रज्ञाचक्षु
स्तप्यमानोंऽबिकेयः ॥ धर्मात्मानंविदुरमगाधबुद्धिंसुखासीनोवाक्यमुवाचराजा १ ॥ धृतराष्ट्रउवाच ॥ प्रज्ञाचतेभार्गवस्येवशुद्धाधर्मंचत्वंपरमंवेत्थसूक्ष्मम् ॥
समश्चत्वंसंमतःकौरवाणांपथ्यंचैषांममचैवब्रवीहि २

मित्यर्थः ८५ । ८६ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीये भारतभावदीपेकाम्यकप्रवेशे तृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ननुएवंकर्मजासिद्ध्यपेक्षयायोगजासिद्धेःप्राबल्यंचेत् किमितिसर्वेऽपितांना
द्रियंतइत्याशंक्य मूढाःदृष्टद्वारकफलेष्वर्थेषुहितोपदेष्टारंद्विषंति किमुतादृष्टद्वारकेष्वित्याह वनंप्रविष्टेष्वित्यध्यायेन । आंबिकेयइतिपूर्वरूपमार्षम् १ सूक्ष्मोधर्मोज्ञानंतद्वत्त्वादेव त्वं कौरवाणां पांडवधार्तराष्ट्रा
णांसमः पक्षपातशून्यः एषांपांडवानां ममचसपुत्रस्येतिशेषः २

एवंगते एवंपांडवप्रव्राजनाद्युक्तरूपेसंकटेगतेप्राप्तेसति । उद्धरेयुःउन्मूलयेयुः ३ । ४ सइति । यउक्तविधःसएवधर्मोयुधिष्ठिररूपोविप्रलब्धःवंचितः अक्षवत्यांद्यूतक्रीडायां सत्यासंधाप्रतिज्ञायस्यतं ५ दुष्प्रणी
तस्यदुरात्मभिःकृतस्य शेषस्य पांडवमानहानिलक्षणस्यवधस्य उपायंदोषप्रशांतिप्रकारं ६ अभिमृष्टंदत्तं स्वकेनधनेनेतिशेषः ७ एवंकृतेसति त्वांधर्मोनस्यादितिनैव किंतुस्यादेव स्यादित्यव्ययंसञ्ज्ञे
दित्यर्थे ८ एवंकृत्वा शेषंनष्टावशिष्टंभाग्यं ९ । १० । ११ चकर्थकृतवान् इदंच वक्ष्यमाणंच कर्त्ताकरिष्यसि १२ एकराज्यंयदिअनुमंता तर्हितापोनभविता नचेत् यदिवानुमंता तर्हिसुतंनिगृ

एवंगतेविदुरयदद्यकार्यंपौराश्चेमेकथमस्मान्भजेरन् ॥ तेचाप्यस्मान्नोद्धरेयुःसमूलांस्तत्त्वंब्रूयाःसाधुकार्याणिवेत्सि ३ ॥ विदुरउवाच ॥ त्रिवर्गोऽयंधर्ममूलो
नरेंद्रराज्यंचेदंधर्ममूलंवदंति ॥ धर्मेराजन्वर्तमानःस्वशक्त्यापुत्रान्सर्वान्पाहिपांडोःसुतांश्च ४ सवैधर्मोविप्रलब्धःसभायांपापात्मभिःसौबलेयप्रधानैः ॥ आ
हूयकुंतीसुतमक्षवत्यांपराजैषीत्सत्यसंधंसुतस्ते ५ एतस्यतेदुष्प्रणीतस्यराजञ्छेषस्याहंपरिपश्याम्युपायम् ॥ यथापुत्रस्तवकौरव्यपापान्मुक्तोलोकेप्रति
तिष्ठेतसाधु ६ तद्वैसर्वंपांडुपुत्रालभंतांयत्तद्राजन्नभिसृष्टंत्वयासीत् ॥ एषधर्मःपरमोयत्स्वकेनराजातुष्येन्नपरस्वेषुगृद्ध्येत् ७ यशोननश्येज्ज्ञातिभेदश्चनस्या
द्धर्मोनस्यान्नैवचैवंकृतेत्वाम् ॥ एतत्कार्यंतवसर्वप्रधानंतेषांतुष्टिःशकुनेश्चावमानः ८ एवंशेषंयदिपुत्रेषुतेस्यादेतद्राजंस्त्वरमाणःकुरुष्व ॥ तथैतदेवंनकरोषिरा
जन्ध्रुवंकुरूणांभविताविनाशः ९ नहिक्रुद्धोभीमसेनोऽर्जुनोवाशेषंकुर्याच्छात्रवाणामनीके ॥ येषांयोद्धासव्यसाचीकृतास्त्रोधनुर्येषांगांडिवंलोकसारम् १० येषां
भीमोबाहुशालीचयोद्धातेषांलोकेकिंनुनप्राप्यमस्ति ॥ उक्तंपूर्वंजातमात्रेसुतेतेमयायत्तेहितमासीत्तदानीम् ११ पुत्रंत्यजेममहितंकुलस्यहितंपरंनचतत्त्वंचकर्थ ॥
इदंचराजन्हितमुक्तंनचेत्त्वमेवंकर्त्तापरितप्ताऽसिपश्चात् १२ यद्येतदेवमनुमंतासुतस्तेसंप्रीयमाणःपांडवैरेकराज्यम् ॥ तापोनतेभविताप्रीतियोगान्नचेन्निगृण्हीष्वसु
तंसुखाय १३ दुर्योधनंत्वहितंवैनिगृह्यपांडोःपुत्रंप्रकुरुष्वाधिपत्ये ॥ अजातशत्रुर्हिविमुक्तरागोधर्मेणेमांपृथिवींशास्तुराजन् १४ ततोराजन्पार्थिवाःसर्वएववैश्या
इवास्मानुपतिष्ठंतुसद्यः ॥ दुर्योधनःशकुनिःसूतपुत्रःप्रीत्याराजन्पांडुपुत्रान्भजंतु १५ दुःशासनोयाचतुभीमसेनंसभामध्येद्रुपदस्यात्मजांच ॥ युधिष्ठिरंत्वंपरिसां
त्वयस्वराज्येचैनंस्थापयस्वाभिपूज्य १६ त्वयापृष्टःकिमहमन्यद्वदेयमेतत्कृत्वाकृतकृत्योसिराजन् १७ ॥ धृतराष्ट्रउवाच ॥ एतद्वाक्यंविदुरयत्तेसभायामिहप्रो
क्तंपांडवान्प्राप्यमांच ॥ हितंतेषामहितंमामकानामेतत्सर्वंममनावैतिचेतः १८ इदंत्विदानींगतएवनिश्चितंतेषामर्थेपांडवानांयदात्थ ॥ तेनाद्यमन्येनासिहितोम
मेतिकथंहिपुत्रंपांडवार्थेत्यजेयम् १९

ण्हीष्व १३ पक्षांतरमाह दुर्योधनमिति १४ । १५ याचतु मदपराधंक्षमस्वेतिप्रार्थयतु १६ । १७ नावैति नांगीकरोति १८ तत्रहेतुमाह इदमिति । तथादुर्योधनबंधनं युधिष्ठि
रायराज्यप्रदानमित्येवंप्रकारकंसुखोपायंयदात्थ तदिदंकृतएवंनिश्चितं नकुतश्चित् । गतइतिपाठे पांडवानामर्थे गतःप्राप्तइत्यर्थः । लब्धपदाःपांडवाः मदीयान्नर्हिंस्युरित्यत्र
नियामकंनास्तीतिभावः १९

२० जिह्मंकुटिलं २१ नेदमस्तीदंकुलं २२ ॥ ॥ इत्यारण्यकेप० नैलकंठीयेभारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥ हितोपदेशेऽपिदुष्टाःकुप्यंतीत्युक्त्वा संतस्तत्रैवतुष्यंतीत्याह पांडवाइत्य ध्यायेन १ । २ मरुधन्वसु मरुषुनिर्जलदेशेषु धन्वसुजांगलदेशेषु । 'धन्वाजांगलदेशेस्यात्' इतिविश्वः ३ । ४ । ५ । ६ आराद्दूरतः ७ । ८ आद्रवआगच्छ अपयातुंनिवर्तितुं संशयिते पणी

असंशयंतेऽपिममैवपुत्रादुर्योधनस्तुममदेहात्प्रसूतः ॥ स्वंवैदेहंपरहेतोस्त्यजेतिकोनुब्रूयात्समतामन्ववेक्ष्य २० समांजिह्मंविदुरसर्वंब्रवीषिमानंचतेऽहमधिकंधा रयामि ॥ यथेच्छकंगच्छवातिष्ठवात्वंसुसांत्व्यमानाऽप्यसतीस्त्रीजहाति २१ ॥ वैशंपायनउवाच ॥ एतावदुक्त्वाधृतराष्ट्रोऽन्वपद्यदंतर्वेश्मसहसोत्थायराजन् ॥ नेदमस्तीत्यथविदुरोभाषमाणःसंप्राद्रवद्यत्रपार्थाबभूवुः २२ ॥ इत्यारण्यकेप० अ० प० विदुरवाक्यप्रत्याख्यानेचतुर्थोऽध्यायः ॥ ॥ ४ ॥ वैशंपायनउवाच ॥ पांडवास्तुवनेवासमुद्दिश्यभरतर्षभाः ॥ प्रययुर्जाह्नवीकूलात्कुरुक्षेत्रंसहानुगाः १ सरस्वतीदृषद्वत्यौयमुनांचनिषेव्यते ॥ ययुर्वनेनैववनंसततंपश्चिमांदिशम् २ ततःसरस्वतीकूलेसमेषुमरुधन्वसु ॥ काम्यकंनामददृशुर्वनंमुनिजनप्रियम् ३ तत्रतेन्यवसन्वीरावनेबहुमृगद्विजे ॥ अन्वास्यमानामुनिभिःसांत्व्यमानाश्चभारत ४ विदुरस्त्वथपांडूनांसदादर्शनलालसः ॥ जगामैकरथेनैवकाम्यकंवनमृद्धिमत् ५ ततोगत्वाविदुरःकाम्यकंतच्छीघ्रैरश्वैर्वाहिनास्यंदनेन ॥ ददर्शासीनंधर्मात्मानं विविक्तेसार्द्धंद्रौपद्याभ्रातृभिर्ब्राह्मणैश्च ६ ततोऽपश्यद्विदुरंतूर्णमारादभ्यायांतंसत्यसंधःसराजा ॥ अथाब्रवीद्भ्रातरंभीमसेनंकिंनुक्षत्तावक्ष्यतिनःसमेत्य ७ कच्चि न्नायंवचनात्सौबलस्यसमाह्वातादेवनायोपयातः ॥ कच्चित्क्षुद्रःशकुनिर्नायुधानिजेष्यत्यस्मान्पुनरेवाक्षवत्याम् ८ समाहूतःकेनचिदाद्रवेतिनाहंशक्तोभीमसे नापयातुम् ॥ गांडीवेचसंशयितेकथंनुराज्यप्राप्तिःसंशयिताभवेन्नः ९ ॥ वैशंपायनउवाच ॥ ततउत्थायविदुरंपांडवेयाःप्रत्यगृण्हन्नृपतेसर्वएव ॥ तैःसत्कृतःसच तानाजमीढोयथोचितंपांडुपुत्रान्समेयात १० समाश्वस्तंविदुरंतेनरर्षभास्ततोऽपृच्छन्नागमनायहेतुम् ॥ सचापितेभ्योविस्तरतःशशंसयथावृत्तोधृतराष्ट्रोऽऽ म्बिकेयः ११ ॥ विदुरउवाच ॥ अवोचन्मांधृतराष्ट्रोऽनुगुप्तमजातशत्रोपरिगृह्याभिपूज्य ॥ एवंगतेसमतामभ्युपेत्यपथ्यंतेषांममचैवब्रवीहि १२ मयाप्युक्तं यत्क्षमंकौरवाणांहितंपथ्यंधृतराष्ट्रस्यचैव ॥ तद्वैतस्मैनरुचामभ्युपैतिततश्चाहंक्षममन्यन्नमन्ये १३ परंश्रेयःपांडवेयामयोक्तंनमेतच्चश्रुतवानांबिकेयः ॥ यथाऽऽ तुरस्येवहिपथ्यमन्नंनरोचतेस्मास्यतदुच्यमानम् १४ नश्रेयसेनीयतेऽजातशत्रोस्त्रीश्रोत्रियस्येवगृहेप्रदुष्टा ॥ ध्रुवंनरोचेद्भरतर्षभस्यपतिःकुमार्याइवषष्टिवर्षः १५ ध्रुवंविनाशोनृपकौरवाणांनवैश्रेयोधृतराष्ट्रःपरैति ॥ यथाचपर्णेपुष्करस्यावसिक्तंजलंनतिष्ठेत्पथ्यमुक्तंतथाऽस्मिन् १६

कृतेमाति कथंनःराज्यप्राप्तिर्यतःसंशयिता गांडीवनाशादित्यर्थः ९ । १० यथावृत्तःयादृशाचारः ११ अनुगुप्तमनुरक्षितारं हितोपदेशेनेतिशेषः कर्त्रीरिक्तः अब्रवीदीत्यवोचदितिसंबंधः १२ रुचांप्रीतिं अ न्यतसाम्नोऽन्यद्वैरं १३ । १४ । १५ परैतिपरामृशति पुष्करस्यकमलस्य १६

श्रद्धाइष्टोऽयमितिधीः १७ धार्यतांनविस्मर्त्तव्यं १८ उपासतेउपास्ते प्रतीक्षते तृणैःस्तोकमग्निमिवात्मानंसहायसंपत्त्यासंवर्धयन् एकएवशत्रूणांकार्त्स्न्येनोच्छेदात् १९ सहायार्जनोपायमाह यस्येति । अविभक्तं साधारणं वसुवित्तं २० विप्रलापंविगतःप्रलापोऽनर्थकंवचोयस्मात्तत्तथा पूज्यःस्तव्यः वनवासांतेबहुनाधनेनबहून्सहायान्प्राप्य त्वमेवशत्रूच्छेदंकृत्वा राज्यंप्राप्स्यसीत्यर्थः २१ । २२ ॥ ॥ इत्यारण्यकेप०नै० भा०पंचमोऽध्यायः ॥ ५ ॥ ॥ गतेइति । महाप्राज्ञः विदुरोपदेशेस्थितानांजयोभविष्यतीतिजानन् १ संधिविग्रहकारितं संधिविग्रहादिनीतिज्ञत्वकृतं भविष्यतिआगामिनिकाले २ विदुरस्मारमोहितः स्मरः

ततःक्रुद्धोधृतराष्ट्रोऽब्रवीन्मांयस्मिन्श्रद्धाभारततत्रयाहि ॥ नाहंभूयःकामयेत्वांसहायंमहीमिमांपालयितुंपुरंवा १७ सोऽहंत्यक्तोधृतराष्ट्रेणराज्ञाप्रशासितुंत्वामुपयातोनरेंद्र ॥ तद्वैसर्वयन्मयोक्तंसभायांतद्धार्यतांयत्प्रवक्ष्यामिभूयः १८ क्लेशैस्तीव्रैर्युज्यमानःसपत्नैःक्षमांकुर्वन्कालमुपासतेयः ॥ संवर्धयन्स्तोकमिवाग्निमात्मवान्सवैभुंक्तेपृथिवीमेकएव १९ यस्याविभक्तंवसुराजन्सहायैस्तस्यदुःखेऽप्यंशभाजःसहायाः ॥ सहायानामेषसंग्रहणेऽभ्युपायःसहायाप्तौपृथिवीप्राप्तिमाहुः २० सत्यंश्रेष्ठंपांडवविप्रलापंतुल्यंचान्नंसहभोज्यंसहायैः ॥ आत्माचैषामग्रतोनस्मपूज्यएवंवृत्तिर्वर्द्धतेभूमिपालः २१ ॥ युधिष्ठिरउवाच ॥ एवंकरिष्यामियथाब्रवीषिपरांबुद्धिमुपगम्याप्रमत्तः ॥ यच्चाप्यन्यद्देशकालोपपन्नंतद्वैवाच्यंतत्करिष्यामिकृत्स्नम् २२ ॥ ॥ इ०म०भा०आरण्यकेप०अरण्यप०विदुरनिर्वासेपंचमोऽध्यायः ५ ॥

॥ वैशंपायनउवाच ॥ गतेतुविदुरेराजन्नाश्रमंपांडवान्प्रति ॥ धृतराष्ट्रोमहाप्राज्ञःपर्यतप्यतभारत १ विदुरस्यप्रभावंचसंधिविग्रहकारितम् ॥ विवृद्धिंचपरांमत्वापांडवानांभविष्यति २ ससभाद्वारमागम्यविदुरस्मारमोहितः ॥ समक्षंपार्थिवेंद्राणांपपाताविष्टचेतनः ३ सतुलब्ध्वापुनःसंज्ञांसमुत्थायमहीतलात् ॥ समीपोपस्थितंराजासंजयंवाक्यमब्रवीत् ४ भ्राताममसुहृच्चैवसाक्षाद्धर्मइवापरः ॥ तस्यस्मृत्याऽद्यसुभृशंहृदयंदीर्यतीवमे ५ तमानयस्वधर्मज्ञंममभ्रातरमाशुवै ॥ इतिब्रुवन्सनृपतिःकृपणंपर्यदेवयत् ६ पश्चात्तापाभिसंतप्तोविदुरस्मारमोहितः ॥ भ्रातृस्नेहादिदंराजासंजयंवाक्यमब्रवीत् ७ गच्छसंजयजानीहिभ्रातरंविदुरंमम ॥ यदिजीवतिरोषेणमयापापेननिर्धुतः ८ नहितेनममभ्रात्रासुसूक्ष्ममपिकिंचन ॥ व्यलीकंकृतपूर्वंवैप्राज्ञेनामितबुद्धिना ९ सव्यलीकंपरंप्राप्तोमत्तःपरमबुद्धिमान् ॥ त्यक्ष्यामिजीवितंप्राज्ञतंगच्छानयसंजय १० तस्यतद्वचनंश्रुत्वाराज्ञस्तमनुमान्यच ॥ संजयोबाढमित्युक्त्वाप्राद्रवत्काम्यकंप्रति ११ सोऽचिरेणसमासाद्यतद्वनंयत्रपांडवाः ॥ रौरवाजिनसंवीतंददर्शाथयुधिष्ठिरम् १२ विदुरेणसहासीनंब्राह्मणैश्चसहस्रशः ॥ भ्रातृभिश्चाभिसंगुप्तंदेवैरिवपुरंदरम् १३ युधिष्ठिरमुपागम्यपूजयामाससंजयः ॥ भीमार्जुनयमांश्चापितद्युक्तंप्रतिपेदिरे १४

कामस्तस्मात्केनचित्प्रतिबद्धादुत्पन्नोद्वेषःस्मारइत्युच्यते विदुरद्वेषेण ममनाशोभविष्यतीतिचिंतयामोहंप्राप्तइत्यर्थः स्नेहेत्यपपाठः ३ । ४ द्वेषमेवस्नेहरूपेणनाटयितुंसभाद्वारेराज्ञांसमक्षंपतित्वोत्थायआह भ्रातेत्यादि ५ । ६ । ७ निर्धुतोनिःसारितः ८ व्यलीकमप्रियं ९ । १० मानितःसम्मितरान्मानयित्वेत्यनुमान्येत्यस्यार्थः ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ धृतराष्ट्रःप्रतापवानितिपाठेमोहेनप्रकृष्टंतापंप्राप्तइत्यर्थः १९ प्रजागरेआधिभयायामुन्निद्रतायां विचित्रंविगतदिव्यवस्तुकं अपेतलक्ष्मीकमित्यर्थः २० । २१ । २२ भवंतीति । दीनत्वात पांडवेषुममपक्षपातोनतुत्वत्पुत्रद्वेषादितिभावः २३ । २४ । २५ ॥ ॥ इत्यारण्यकेप० नै० भार० षष्ठोऽध्यायः ॥ ६ ॥ श्रुत्वाचेति १ अबुद्धिरज्ञानंतज्जंतमोरागद्वेषात्मकंमोहं २ सुहृत्शुभचिंतकःहितेरतःशु भकर्त्ता ३ । ४ वारणोवानवग्रहइतिपाठे वाशब्दइवार्थेनवगृहीतोगजइवेत्यर्थः निरंबुर्निरवग्रहइतिपाठे निरवग्रहःप्रतिबंधाभावेऽपिनिरंबुर्निराहारोभूत्वाशोषंगमिष्यामीत्यर्थः । 'प्रतिबंधेऽप्यवग्रहः' इति विश्वः ।

राज्ञापृष्टःसकुशलंसुखासीनश्चसंजयः ॥ शशंसागमनेहेतुमिदंचैवाब्रवीद्वचः १५ ॥ ॥ संजयउवाच ॥ ॥ राजास्मरतितेक्षत्तर्धृतराष्ट्रोंऽबिकासुतः ॥ तंपश्यगत्वात्वंक्षिप्रंसंजीवयचपार्थिवम् १६ सोऽनुमान्यनरश्रेष्ठान्पांडवान्कुरुनंदनान् ॥ नियोगाद्राजसिंहस्यगंतुमर्हसिसत्तम १७ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुविदुरोधीमान्स्वजनवल्लभः ॥ युधिष्ठिरस्यानुमतेपुनरायाद्गजाह्वयम् १८ तमब्रवीन्महातेजाधृतराष्ट्रोंऽबिकासुतः ॥ दिष्ट्याप्राप्तोऽसिधर्मज्ञदिष्ट्यास्मरसिमेऽनघ १९ अद्यचाहंदिवारात्रौत्वत्कृतेभरतर्षभ ॥ प्रजागरेप्रपश्यामिविचित्रंदेहमात्मनः २० सोंऽकमानीयविदुरंमूर्द्धन्याघ्रायचैवह ॥ क्षम्यतामितिचोवाचयदुक्तोऽसिमयानघ २१ ॥ विदुरउवाच ॥ क्षांतमेवमयाराजन्गुरुर्मेपरमोभवान् ॥ एषोऽहमागतःशीघ्रंत्वद्दर्शनपरायणः २२ भवंतिहिनरव्याघ्रपुरुषाधर्मचेतसः ॥ दीनाभिपातिनोराजन्नात्रकार्याविचारणा २३ पांडोःसुतायादृशामेतादृशास्तवभारत ॥ दीनाइतीवमेबुद्धिरभिपन्नाऽद्यतान्प्रति २४ ॥ वैशंपायनउवाच ॥ अन्योन्यमनुनीयैवंभ्रातरौद्वौमहाद्युती ॥ विदुरोधृतराष्ट्रश्चलेभातेपरमांमुदम् २५ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअरण्यपर्वणिविदुरप्रत्यागमनेषष्ठोऽध्यायः ६ ॥ ॥ वैशंपायनउवाच ॥ श्रुत्वाचविदुरंप्राप्तंराज्ञाचपरिसांत्वितम् ॥ धृतराष्ट्रात्मजोराजापर्यतप्यतदुर्मतिः १ ससौबलेयमानाय्यकर्णदुःशासनौतथा ॥ अब्रवीद्वचनंराजाप्रविश्याबुद्धिजंतमः २ एषप्रत्यागतोमंत्रीधृतराष्ट्रस्यधीमतः ॥ विदुरःपांडुपुत्राणांसुहृद्विद्वान्हितेरतः ३ यावदस्यपुनर्बुद्धिंविदुरोनापकर्षति ॥ पांडवानयनेतावन्मंत्रयध्वंहितंमम ४ अथपश्याम्यहंपार्थान्प्राप्तानिहकथंचन ॥ पुनःशोषंगमिष्यामिनिरंबुर्निरवग्रहः ५ विषमुद्बंधनंचैवशस्त्रमग्निप्रवेशनम् ॥ करिष्येनहितानृद्धान्पुनर्द्रष्टुमिहोत्सहे ६ ॥ शकुनिरुवाच ॥ किंबालिशमतिंराजन्नास्थितोऽसिविशांपते ॥ गतास्तेसमयंकृत्वानैतदेवंभविष्यति ७ सत्यवाक्येस्थिताःसर्वेपांडवाभरतर्षभ ॥ पितुस्तेवचनंतातनग्रहीष्यंतिकर्हिचित् ८ अथवातेग्रहीष्यंतिपुनरेष्यंतिवापुरम् ॥ निरस्यसमयंसर्वेपणोऽस्माकंभविष्यति ९ सर्वेभवामोमध्यस्थाराज्ञश्छंदानुवर्तिनः ॥ छिद्रंबहुप्रपश्यंतःपांडवानांसुसंवृताः १०

निरयुरितिनिरासुरितिचपाठौचिंत्यौ ५ मरणार्थंविषादिकंकरिष्येस्वीकरिष्येऋद्धान्ऋद्धिमतः ६ । ७ । ८ पणःकार्याकार्यविवेकलक्षणोव्यवहारः अस्माकमितिपांडवानपिगृहीत्वोक्तं ९ छिद्रंसमयातिक्रमदोषं बहुबहुलंप्रपश्यंतोऽन्येपिसुसंवृताःपांडवेभ्योऽधर्मवर्ज्जयोभीताःसंतोनिलीयस्थास्यंतीत्यर्थः १०

११ । १२ । १३ नातिहृष्टमनाःपांडवानांनिंदायांसत्यामपिआगमनासहिष्णुत्वात्कर्णेनस्वपराक्रमयोग्यस्यवचनस्यानुक्तेश्च १४ उपलभ्यदुर्योधनाशयमितिशेषः १५ उद्यम्योत्क्षिप्यआत्मानंदेहम् १६ वयं किंकराःपाणयइवकिंकरपाणयः पश्यंतश्चारचक्षुषेतिवत् । किंकुर्मइतिकृत्वाकृतांजलिपाणयइतिप्राञ्चः । प्रियंचिकीर्षामो नतुशक्नुमःप्रियेस्थातुमितिसंबंधः धृतराष्ट्रेणनिरुद्धत्वात् १७ दंशिताःसन्नद्धाः १८ । १९ परिद्यूनाःखिन्नाःवर्जितविजिगीषावा शक्याजेतुमितिशेषः २० । २१ । २२ । २३ । २४ ॥ ॥ इतिआरण्यकेपर्वणिनैलकंठीयेभारतभावदीपेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥

॥ दुःशासनउवाच ॥ एवमेतन्महाप्राज्ञयथावदसिमातुल ॥ नित्यंहिमेकथयतस्तवबुद्धिर्विरोचते ११ ॥ कर्णउवाच ॥ काममीशामहेसर्वेदुर्योधनतवेप्सितम् ॥ ऐकमत्यंहिनोराजन्सर्वेषामेवलक्षये १२ नागमिष्यंतितेधीराअकृत्वाकालसंविदम् ॥ आगमिष्यंतिचेन्मोहात्पुनर्द्यूतेनतान्जय १३ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुकर्णेनराजादुर्योधनस्तदा ॥ नातिहृष्टमनाःक्षिप्रमभवत्सपराङ्मुखः १४ उपलभ्यततःकर्णोविवृत्यनयनेशुभे ॥ रोषाद्दुःशासनंचैवसौबलंचतमेवच १५ उवाचपरमक्रुद्धउद्यम्यात्मानमात्मना ॥ अथोमममतंयत्तुतन्निबोधतभूमिपाः १६ प्रियंसर्वेकरिष्यामोराज्ञःकिंकरपाणयः ॥ नचास्यशक्नुमःस्थातुंप्रियेसर्वेह्यतंद्रिताः १७ वयंतुशस्त्राण्यादायरथानास्थायदंशिताः ॥ गच्छामःसहिताहंतुंपांडवान्वनगोचरान् १८ तेषुसर्वेषुशांतेषुगतेष्वविदितांगतिम् ॥ निर्विवादाभविष्यंतिधार्तराष्ट्रास्तथावयम् १९ यावदेवपरिद्यूनायावच्छोकपरायणाः ॥ यावन्मित्रविहीनाश्चतावच्छक्यामतंमम २० तस्यतद्वचनंश्रुत्वापूजयंतःपुनःपुनः ॥ बाढमित्येवतेसर्वेप्रत्यूचुःसूतजंतदा २१ एवमुक्त्वासुसंरब्धारथैःसर्वेपृथक्पृथक् ॥ निर्ययुःपांडवान्हंतुंसहिताःकृतनिश्चयाः २२ तान्प्रस्थितान्परिज्ञायकृष्णद्वैपायनःप्रभुः ॥ आजगामविशुद्धात्मादृष्ट्वादिव्येनचक्षुषा २३ प्रतिषिद्ध्याथतान्सर्वान्भगवाँल्लोकपूजितः ॥ प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्यसत्वरम् २४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअरण्यप०व्यासागमनेसप्तमोऽध्यायः ॥ ७ ॥ व्यासउवाच ॥ धृतराष्ट्रमहाप्राज्ञनिबोधवचनंमम ॥ वक्ष्यामित्वांकौरवाणांसर्वेषांहितमुत्तमम् १ नमेप्रियंमहाबाहोयद्गताःपांडवावनम् ॥ निकृत्यानिकृताश्चैवदुर्योधनपुरोगमैः २ तेस्मरंतःपरिक्लेशान्वर्षेपूर्णेत्रयोदशे ॥ विमोक्ष्यंतिविषंक्रुद्धाःकौरवेयेषुभारत ३ तदयंकिंनुपापात्मातवपुत्रःसुमंदधीः ॥ पांडवान्नित्यसंक्रुद्धोराज्यहेतोर्जिघांसति ४ वार्यतांसाध्वयंमूढःशमंगच्छतुतेसुतः ॥ वनस्थांस्तानयंहंतुमिच्छन्प्राणान्विमोक्ष्यति ५ यथाहिविदुरःप्राज्ञोयथाभीष्मोयथावयम् ॥ यथाकृपश्चद्रोणश्चतथासाधुर्भवानपि ६ विग्रहोहिमहाप्राज्ञस्वजनेनविगर्हितः ॥ अधर्म्यमयशस्यंचमाराजन्प्रतिपद्यताम् ७ समीक्षायादृशीह्यस्यपांडवान्प्रतिभारत ॥ उपेक्ष्यमाणासाराजन्महांतमनयंस्पृशेत् ८ अथवाऽयंसुमंदात्मावनंगच्छतुतेसुतः ॥ पांडवैःसहितोराजन्नेकएवासहायवान् ९ ततःसंसर्गजःस्नेहःपुत्रस्यतवपांडवैः ॥ यदिस्यात्कृतकार्योऽद्यभवेस्त्वंमनुजेश्वर १०

धृतेति १ निकृताःनिर्जिताः २ विषमिवविषंशस्त्रम् ३ । ४ । ५ भवानपिअस्तीतिशेषः ६ स्वजनेनसार्द्धंविग्रहंमाप्रतिपद्यतांभवान्मागादित्यर्थः ७ समीक्षाविचारपूर्विकाबुद्धिः ८ अथवेति । भीष्मादिवद्वनेसहवासात्तवपुत्रस्ययुधिष्ठिरेणस्नेहश्चेत्त्वंकृतकृत्योभविष्यसीत्यर्थः ९ । १०

एतदपिदुर्घटमित्याह अथवेति । नमृतस्यापिसर्पतीतिपाठेसहजोदोषोजन्मांतरेऽप्यनुवर्त्ततइत्यर्थः ११ अत्रगत क्षमंउचितंतत्पुराकार्यमन्यथावोयुष्माकमर्थःप्रयोजनमभिवर्द्धतेनश्यति । निवर्त्ततइतिपाठेऽपिसएवार्थः । अतिवर्त्ततेइतिपाठे वोयुष्मानर्थोऽतिक्रामतिअतीत्यगच्छतीत्यर्थः १२ ॥ ॥ इतिआरण्यके०नै०भा०अष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ भगवन्निति १ । २ । ३ परंशत्रुंशोकहेतुत्वात्परंश्रेष्ठंप्रीतिहेतुत्वात ' नकुपुत्रात्परःशत्रुर्नसत्पुत्रात्परःसखा 'इत्युक्तेः ४ सुरभ्यादेवधेन्वाअन्यैरभवस्त्रादिभिर्हेतुभिःपरंश्रेष्ठंस्थानंनविद्यतेअपितुपुत्रादेव। तथाचश्रुतिः'अन्नंहप्राणंशरणंहवासोरूपंहिरण्यंपशवोविवाहाः ।

अथवाजायमानस्ययच्छीलमनुजायते ॥ श्रूयतेतन्महाराजनामृतस्यापसर्पति ११ कथंवामन्यतेभीष्मोद्रोणोऽथविदुरोऽपिवा ॥ भवान्वाऽत्रक्षमंकार्यंपुरावोऽर्थोऽभिवर्धते १२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअरण्यपर्वणिव्यासवाक्येऽष्टमोऽध्यायः ८ ॥ ॥ धृतराष्ट्रउवाच ॥ भगवन्नाहमप्येतद्रोचयेद्यूतसंभवम् ॥ मन्येतद्विधिनाऽऽकृष्यकारितोऽस्मीतिवैमुने १ नैतद्रोचयतेभीष्मोनद्रोणोविदुरोनच ॥ गांधारीनेच्छतिद्यूतंतत्रमोहात्प्रवर्तितम् २ परित्यक्तुं नशक्नोमिदुर्योधनमचेतनम् ॥ पुत्रस्नेहेनभगवन्जानन्नपिप्रियव्रत ३ ॥ व्यासउवाच ॥ वैचित्रवीर्यनृपतेसत्यमाहयथाभवान् ॥ दृढंविद्मःपरंपुत्रंपरंपुत्रान्नविद्यते ४ इंद्रोऽप्यश्रुनिपातेनसुरभ्याप्रतिबोधितः ॥ अन्यैःसमृद्धैरप्यर्थैर्नसुतान्मन्यतेपरम् ५ अत्रतेवर्तयिष्यामिमहदाख्यानमुत्तमम् ॥ सुरभ्याश्चैवसंवादमिंद्रस्यचविशांपते ६ त्रिविष्टपगताराजन्सुरभीप्रारुदत्किल ॥ गवांमातापुरातातताामिंद्रोऽन्वकृपायत ७ ॥ इंद्रउवाच ॥ किमिदंरोदिषिशुभेकच्चित्क्षेमंदिवौकसाम् ॥ मनुष्येष्वथनागेषुनैतदल्पंभविष्यति ८ ॥ सुरभिरुवाच ॥ विनिपातोनतेकश्चिद्दृश्यतेत्रिदशाधिप ॥ अहंतुपुत्रंशोचामितेनरोदिमिकौशिक ९ पश्यैनंकर्षकंक्षुद्रंदुर्बलंममपुत्रकम् ॥ प्रतोदेनाभिनिघ्नंतंलांगलेनचपीडितम् १० निषीदमानंसोत्कंठंवध्यमानंसुराधिप ॥ कृपाविष्टाऽस्मिदेवेंद्रमनश्चोद्विजतेमम ॥ एकस्तत्रबलोपेतोधुरमुद्वहतेऽधिकाम् ११ अपरोऽप्यबलप्राणःकृशोधमनिसंततः ॥ कृच्छ्राद्वुद्वहतेभारंतंवैशोचामिवासव १२ वध्यमानःप्रतोदेनतुद्यमानःपुनःपुनः ॥ नैवशक्नोतितंभारमुद्वोढुंपश्यवासव १३ ततोऽहंतस्यशोकार्ताविरौमिभृशदुःखिता ॥ अश्रूण्यावर्त्तयंतीचनेत्राभ्यांकरुणायती १४ ॥ शक्रउवाच ॥ तवपुत्रसहस्रेषुपीड्यमानेषुशोभने ॥ किंकृपायितमत्यत्रपुत्रएकत्रहन्यति १५ सुरभिरुवाच ॥ यदिपुत्रसहस्राणिसर्वत्रसमतैवमे ॥ दीनस्यतुसतःशक्रपुत्रस्याभ्यधिकाकृपा १६ ॥ ॥ व्यासउवाच ॥ ॥ तदिंद्रःसुरभीवाक्यंनिशम्यभृशविस्मितः ॥ जीवितेनापिकौरव्यमेनेऽभ्यधिकमात्मजम् १७ प्रववर्षचतत्रैवसहसातोयमुल्बणम् ॥ कर्षकस्याचरन्विघ्नंभगवान्पाकशासनः १८

सखाहजायाकृपणंहदुहिताज्योतिर्हपुत्रःपरमेव्योमन् ' इति ५ अत्रपुत्रस्यशोकहेतुत्वेर्थे ६ अन्वकृपायतानुकंपितवान् ७ । ८ कौशिकहेइंद्र ९ प्रतोदेनतीक्ष्णाग्रलोहवतादंडेन १० धुरंभारम् ११ धमनिसंततःशिराभिर्व्याप्तःनिर्मांसइत्यर्थः १२ वधोदंडाघातेन तोदःप्रतोदेन १३ । १४ कृपायितवतीकृपांकृतवती । पाठांतरेकृपायितंकृपैवहन्यतिहन्यमाने । पुत्रएकोहिहन्यतेइतिपाठेबहुषुपुत्रेषुहिमसिद्धं एकःकश्चिद्धन्यतएवेत्यर्थः १५ । १६ । १७ उल्बणमुत्कटम् १८

१९ । २० मंदास्त्वत्पुत्रवत्कपटानभिज्ञाः २१ । २२ । २३ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेनवमोऽध्यायः ॥ ९ ॥ ॥ ॥ एवमिति । विनाशकालेसाधूनपिमूढाअवजानंती त्यध्यायतात्पर्यम् १ । २ । ३ अन्विष्यअवेक्ष्यभ्रातॄन्पंचेतिशेषः ४ अनुशास्ताअनुशासिष्यति ५ अक्रियायामकरणे कार्यस्यावश्यकर्त्तव्यस्य ६ । ७ क्रियाभिःसत्कारैः ८ । ९ । १० यदृच्छयादैवात् ११

तद्यथासुरभिःप्राहसमवेतास्तुतेतथा ॥ सुतेषुराजन्सर्वेषुहीनेष्वभ्यधिकाकृपा १९ यादृशोमेसुतःपांडुस्तादृशोमेऽसिपुत्रक ॥ विदुरश्चमहाप्राज्ञःस्नेहादेत द्ब्रवीम्यहम् २० चिरायतवपुत्राणांशतमेकश्चभारत ॥ पांडोःपंचैवलक्ष्यंतेतेऽपिमंदाःसुदुःखिताः २१ कथंजीवेयुरत्यंतंकथंवर्धेयुरित्यपि ॥ इतिदीनेषुपार्थे षुमनोमेपरितप्यते २२ यदिपार्थिवकौरव्यान्जीवमानानिहेच्छसि ॥ दुर्योधनस्तवसुतःशमंगच्छतुपांडवैः २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणि अरण्यपर्वणिसुरभ्युपाख्यानेनवमोऽध्यायः ९ ॥ ॥ धृतराष्ट्रउवाच ॥ एवमेतन्महाप्राज्ञयथावदसिनोमुने ॥ अहंचैवविजानामिसर्वेचेमेनराधिपाः १ भवांश्चमन्यतेसाधुयत्कुरूणांमहोदयम् ॥ तदेवविदुरोऽप्याहभीष्मोद्रोणश्चमांमुने २ यदित्वहमनुग्राह्यःकौरव्येषुदयायदि ॥ अन्वशाधिदुरात्मानंपुत्रंदुर्योध नंमम ३ ॥ व्यासउवाच ॥ अयमायातिवैराजन्मैत्रेयोभगवानृषिः ॥ अन्विष्यपांडवान्भ्रातॄनिहैत्यस्मद्दिदृक्षया ४ एषदुर्योधनंपुत्रंतवराजन्महानृषिः ॥ अनुशास्तायथान्यायंशमायास्यकुलस्यच ५ ब्रूयाद्यदेषकौरव्यतत्कार्यमविशंकया ॥ अक्रियायांतुकार्यस्यपुत्रंतेशप्स्यतेरुषा ६ ॥ वैशंपायनउवाच ॥ ए वमुक्त्वाययौव्यासोमैत्रेयःप्रत्यदृश्यत ॥ पूजयाप्रतिजग्राहसपुत्रस्तंनराधिपः ७ अर्घ्याद्याभिःक्रियाभिर्वैविश्रांतंमुनिसत्तमम् ॥ प्रश्रयेणाब्रवीद्राजाधृतराष्ट्रोंऽ बिकासुतः ८ सुखेनागमनंकच्चिद्भगवन्कुरुजांगलान् ॥ कच्चित्कुशलिनोवीराभ्रातरःपंचपांडवाः ९ समयेस्थातुमिच्छंतिकच्चिच्चभरतर्षभाः ॥ कच्चित्कुरूणां सौभ्रात्रमव्युच्छिन्नंभविष्यति १० ॥ मैत्रेयउवाच ॥ तीर्थयात्रामनुक्रामन्प्राप्तोस्मिकुरुजांगलान् ॥ यदृच्छयाधर्मराजंदृष्टवान्काम्यकेवने ११ तंजटाजिनसं वीतंतपोवननिवासिनम् ॥ समाजग्मुर्महात्मानंद्रष्टुंमुनिगणाःप्रभो १२ तत्राश्रौषंमहाराजपुत्राणांतवविभ्रमम् ॥ अनयंद्यूतरूपेणमहाभयमुपस्थितम् १३ ततोऽहंत्वामनुप्राप्तःकौरवाणामवेक्षया ॥ सदाह्यभ्यधिकःस्नेहःप्रीतिश्चत्वयिमेप्रभो १४ नैतदौपयिकंराजंस्त्वयिभीष्मेचजीवति ॥ यदन्योन्येनतेपुत्राविरो ध्यंतेकथंचन १५ मेढीभूतःस्वयंराजन्निग्रहेप्रग्रहेभवान् ॥ किमर्थमनयंघोरमुत्पद्यंतमुपेक्षसे १६ दस्यूनामिवयद्वृत्तंसभायांकुरुनंदन ॥ तेननभ्राजसेराजंस्ता पसानांसमागमे १७ ॥ वैशंपायनउवाच ॥ ततोव्यावृत्यराजानंदुर्योधनममर्षणम् ॥ उवाचश्लक्ष्णयावाचामैत्रेयोभगवानृषिः १८ ॥ मैत्रेयउवाच ॥ दुर्यो धनमहाबाहोनिबोधवदतांवर ॥ वचनंमेमहाभागब्रुवतोयद्धितंतव १९ माद्रुहःपांडवान्राजन्कुरुष्वप्रियमात्मनः ॥ पांडवानांकुरूणांचलोकस्यचनरर्षभ २०



१२ विभ्रमंयूतानर्थेऽप्यर्थबुद्धिम् १३ । १४ औपयिकंयोग्यम् १५ मेढीभूतः खलदामस्तंभीभूतः प्रग्रहेअनुग्रहे १६ । १७ व्यावृत्याभिमुखीभूयेसर्थः १८ । १९ । २०

विक्रांतयोधिनःविक्रांताश्चयुद्धशीलाश्च वज्रसंहननाःवज्रकायाअतएवदृढाः २१ । २२ प्रद्रवतांगच्छताम् २३ समरेजेतुमितिपाठेक्षमइत्यध्याहारः २४ पशुमारेणपशुमारणप्रकारेण २५ । २६ । २७ मन्युवशं क्रोधवशं मेतिनिषेधार्थोनिपातोनतुमाङ् २८ । २९ । ३० । ३१ प्रणुदितःप्रेरितः । प्रचुदितइतिपाठेऽपिसएवार्थः ३२ । ३३ । ३४ । ३५ । ३६ विलक्षयन्भीमस्यबलंविशेषेणअयमस्मज्जय्योनवेति राक्षस

तेहिसर्वेनरव्याघ्राःशूराविक्रांतयोधिनः ॥ सर्वेनागायुतप्राणावज्रसंहननादृढाः २१ सत्यव्रतधराःसर्वेसर्वेपुरुषमानिनः ॥ हंतारोदेवशत्रूणांरक्षसांकामरूपिणाम् २२ हिडिंबबकमुख्यानांकिर्मीरस्यचरक्षसः ॥ इतःप्रद्रवतांरात्रौयःसतेषांमहात्मनाम् २३ आवृत्यमार्गंरौद्रात्मातस्थौगिरिरिवाचलः ॥ तंभीमःसमरश्लाघी बलेनबलिनांवरः २४ जघानपशुमारेणव्याघ्रःक्षुद्रमृगंयथा ॥ पश्यदिग्विजयेराजन्यथाभीमेनपातितः २५ जरासंधोमहेष्वासोनागायुतबलोयुधि ॥ संबंधीवासुदेवश्चश्यालाःसर्वेचपार्षताः २६ कस्तान्युधिसमासीतजरामरणवान्नरः ॥ तस्यतेशमएवास्तुपांडवैर्भरतर्षभ २७ कुरुमेवचनंराजन्मामन्युवशमन्वगाः ॥ ॥ वैशंपायनउवाच ॥ ॥ एवंतुब्रुवतस्तस्यमैत्रेयस्यविशांपते २८ ऊरुंगजकराकारंकरेणाभिजघानसः ॥ दुर्योधनःस्मितंकृत्वाचरणेनोल्लिखन्महीम् २९ नाकिंचिदुक्त्वादुर्मेधास्तस्थौकिंचिदवाङ्मुखः ॥ तमशुश्रूषमाणंतुविलिखंतंवसुंधराम् ३० दृष्ट्वादुर्योधनंराजन्मैत्रेयंकोपआविशत् ॥ सकोपवशमापन्नो मैत्रेयोमुनिसत्तमः ३१ विधिनासंप्रणुदितःशापायास्यमनोदधे ॥ ततःसवार्युपस्पृश्यकोपसंरक्तलोचनः ॥ मैत्रेयोधार्तराष्ट्रंतमशपद्दुष्टचेतसम् ३२ यस्मात्त्वं मामनादृत्यनेमांवाचंचिकीर्षसि ॥ तस्मादस्याभिमानस्यसद्यःफलमवाप्नुहि ३३ त्वदभिद्रोहसंयुक्तंयुद्धमुत्पत्स्यतेमहत् ॥ तत्रभीमोगदाघातैस्तवोरुंभेत्स्यते बली ३४ इत्येवमुक्तेवचनेधृतराष्ट्रोमहीपतिः ॥ प्रसादयामासमुनिंनैतदेवंभवेदिति ३५ ॥ ॥ मैत्रेयउवाच ॥ ॥ शमंयास्यतिचेत्पुत्रस्तवराजन्यदातदा ॥ शापोनभवितातातविपरीतेभविष्यति ३६ ॥ ॥ वैशंपायनउवाच ॥ ॥ विलक्षयंस्तुराजेंद्रोदुर्योधनपितातदा ॥ मैत्रेयंप्राहकिर्मीरःकथंभीमेनपातितः ३७ ॥ मैत्रेयउवाच ॥ ॥ नाहंवक्ष्यामितेभूयोनतेशुश्रूषतेसुतः ॥ एषतेविदुरःसर्वमाख्यास्यतिगतेमयि ३८ इत्येवमुक्त्वामैत्रेयःप्रातिष्ठतयथागतम् ॥ किर्मीरवधसंविग्नोबहिर्दुर्योधनोययौ ३९ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअरण्यपर्वणिमैत्रेयशापेदशमोऽध्यायः ॥ १० ॥ ॥ समाप्तंचारण्यपर्व ॥ अथकिर्मीरवधपर्व ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ किर्मीरस्यवधंक्षत्तःश्रोतुमिच्छामिकथ्यतां ॥ रक्षसाभीमसेनस्यकथमासीत्समागमः १ ॥ विदुरउवाच ॥ ॥ शृणुभीमस्यकर्मेदमतिमानुषकर्मणः ॥ श्रुतपूर्वंमयातेषांकथांतेषुपुनःपुनः २ इतःप्रयाताराजेंद्रपांडवाद्यूतनिर्जिताः ॥ जग्मुस्त्रिभिरहोरात्रैःकाम्यकंनामतद्वनम् ३

बलद्वारालक्षयन् हेतौशतृप्रत्ययः । विलक्षणइतिपाठेदुर्योधनस्यदुराग्रहेणशापभयाद्विच्छायः । वलक्षस्तत्रेतिपाठे'वलक्षोधवलोऽर्जुनः'इति कोशात्सएवार्थः ३७ । ३८ किर्मीरवधसंविग्नःकिर्मीरस्यवधोयस्मात्तस्माद्भीमसेनात्संविग्नः शत्रुयशोदुःखश्रवणमित्यर्थः ३९ ॥ ॥ इतिआरण्यकेप०नै०भार०दशमोऽध्यायः ॥ १० ॥ ॥ ॥ किर्मीरस्येति १ । २ । ३

आभीलेभयंकरे । स्वाभीलेइत्यपिपाठः । ' आभीलंभीषणेकृच्छ्रे'इतिविश्वः । अर्द्धसमयेऽर्द्धज्ञानेगतेसतिलोकेतंद्रावतिसतीत्यर्थः । 'समयःशपथाचारकालेसिद्धांतसंविदोः' इतिविश्वः । संप्राप्तेइत्यपपाठः ४ । ५ । ६ । ७ स्पष्टेति । अक्षिबलाकयोःकेशार्करश्म्योर्दंततडितोश्चोपमोपमेयभावः । तडिद्वक्रमित्यपपाठः ८ 'महानादःकुंजरेस्याद्वार्षिकाब्देभयानके' इति विश्वः ९ संपेतुःएकीबभूवुः १० । ११ । १२

रात्रौनिशीथेत्वाभीलेगतेऽर्धसमयेनृप ॥ प्रचारेपुरुषादानांरक्षसांघोरकर्मणाम् ४ तद्वनंतापसानित्यंगोपाश्चवनचारिणः ॥ दूरात्परिहरंतिस्मपुरुषादभयात्किल ५ तेषांप्रविशतांतत्रमार्गमावृत्यभारत ॥ दीप्ताक्षंभीषणंरक्षःसोल्मुकंप्रत्यपद्यत ६ बाहूमहांतौकृत्वाचतथास्यंचभयानकं ॥ स्थितमावृत्यपंथानंयेनयांतिकुरूद्वहाः ७ स्पष्टाष्टदंष्ट्रंताम्राक्षंप्रदीप्तोर्ध्वशिरोरुहम् ॥ सार्करश्मितडिच्चक्रंसबलाकमिवांबुदम् ८ सृजंतंराक्षसींमायांमहानादनिनादितम् ॥ मुंचंतंविपुलान्नादान्सतोयमिव तोयदम् ९ तस्यनादेनसंत्रस्ताःपक्षिणःसर्वतोदिशम् ॥ विमुक्तनादाःसंपेतुःस्थलजाजलजैःसह १० संप्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम् ॥ तद्वनंतस्यनादेनसंप्र स्थितमिवाभवत् ११ तस्योरुवाताभिहतास्ताम्रपल्लवबाहवः ॥ विदूरजाताश्चलताःसमाश्लिष्यंतिपादपान् १२ तस्मिन्क्षणेऽथप्रववौमारुतोभृशदारुणः ॥ रजसा संवृतंतेनननष्टज्योतिरभून्नभः १३ पंचानांपांडुपुत्राणामविज्ञातोमहारिपुः ॥ पंचानामिंद्रियार्थानांशोकावेशइवातुलः १४ सदृष्ट्वापांडवान्दूरात्कृष्णाजिनसमावृतान् ॥ आवृणोत्तद्वनद्वारंमैनाकइवपर्वतः १५ तंसमासाद्यवित्रस्ताकृष्णाकमललोचना ॥ अदृष्टपूर्वसंत्रासान्न्यमीलयतलोचने १६ दुःशासनकरोत्सृष्टविप्रकीर्णशिरो रुहा ॥ पंचपर्वतमध्यस्थानदीवाकुलतांगता १७ मोमुह्यमानांतांतत्रजगृहुःपंचपांडवाः ॥ इंद्रियाणिप्रसक्तानिविषयेषुयथारतिम् १८ अथतांराक्षसींमायामुत्थितां घोरदर्शनाम् ॥ रक्षोघ्नैर्विविधैर्मंत्रैर्धौम्यःसम्यक्प्रयोजितैः १९ पश्यतांपांडुपुत्राणांनाशयामासवीर्यवान् ॥ सनष्टमायोऽतिबलःक्रोधविस्फारितेक्षणः २० कामम् र्तिधरःक्रूरःकालकल्पोऽव्यदृश्यत ॥ तमुवाचततोराजादीर्घप्रज्ञोयुधिष्ठिरः २१ कोभवान्कस्यवाकिंतेक्रियतांकार्यमुच्यताम् ॥ प्रत्युवाचाथतद्रक्षोधर्मराजंयुधिष्ठिरम् २२ अहंबकस्यवैभ्राताकिर्मीरइतिविश्रुतः ॥ वनेऽस्मिन्काम्यकेशून्येनिवसामिगतज्वरः २३ युधिनिर्जित्यपुरुषानाहारंनित्यमाचरन् ॥ केयूयमभिसंप्राप्ताभ क्ष्यभूताममांतिकम् ॥ युधिनिर्जित्यवःसर्वान्भक्षयिष्येगतज्वरः २४ ॥ ॥ वैशंपायनउवाच ॥ युधिष्ठिरस्तुतच्छ्रुत्वावचस्तस्यदुरात्मनः ॥ आचचक्षेततःसर्वं गोत्रनामादिभारत २५ ॥ युधिष्ठिरउवाच ॥ पांडवोधर्मराजोऽहंयदितेश्रोत्रमागतः ॥ सहितोभ्रातृभिःसर्वैर्भीमसेनार्जुनादिभिः २६ हृतराज्योवनेवासंवस्तुंकृतमति स्ततः ॥ वनमभ्यागतोघोरमिदंतवपरिग्रहम् २७ ॥ विदुरउवाच ॥ किर्मीरस्त्वब्रवीदेनंदिष्ट्यादेवैरिदंमम ॥ उपपादितमद्येहचिरकालान्मनोगतम् २८ भीमसेन वधार्थंहिनित्यमभ्युद्यतायुधः ॥ चरामिपृथिवींकृत्स्नांनैनंचासादयाम्यहम् २९

१३ पंचानांशब्दादीनामिंद्रियार्थानामिंद्रियैरर्थ्यमानानांकृते शोकावेशःशोकागमः १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३०वैत्रकीयवनेएकचक्रायाम् ३१ मह्यंमम ३२।३३ । ३४लब्धास्मिलप्स्यामि ३५ । ३६ महासुरंवातापिं ३७ । ३८ आरुज्यभंक्त्वा दशव्यामं व्यामोविस्तारितयोःकरयोस्तिर्यगंतरं उद्विद्धमुत्पाटितम् ३९ वज्रेणनिष्पेषश्चूर्णीभावोयस्यपर्वतस्यतद्वत्गौरवंगुरुत्वंयस्यतत्तथा ४० । ४१ कक्ष्यामुत्पीड्यपरिधानवस्त्रंदृढीकृत्य ४२ । ४३ । ४४ उदस्तमुत्क्षिप्तं अलातमुल्मुकं ४५ रक्षःराक्षसं आव्रजत्आगच्छत्

सोऽयमासादितोदिष्ट्याभ्रातृहाकांक्षितश्चिरम् ॥ अनेनहिममभ्राताबकोविनिहतःप्रियः ३० वैत्रकीयवनेराजन्ब्राह्मणच्छद्मरूपिणा ॥ विद्याबलमुपाश्रित्यनह्य स्त्यस्यौरसंबलम् ३१ हिडिंबश्चसखामह्यंदयितोवनगोचरः ॥ हतोदुरात्मनाऽनेनस्वसाचास्यहृतापुरा ३२ सोऽयमभ्यागतोमूढोममेदंगहनंवनम् ॥ प्रचारसमये स्माकमर्द्धरात्रेस्थितेसमे ३३ अद्यास्ययातयिष्यामितद्वैरंचिरसंभृतम् ॥ तर्पयिष्यामिचबकंरुधिरेणास्यभूरिणा ३४ अद्याहमनृणोभूत्वाभ्रातुःसख्युस्तथैवच ॥ शांतिंलब्धाऽस्मिपरमांहत्वाराक्षसकंटकम् ३५ यदितेनपुरामुक्तोभीमसेनोबकेनवै ॥ अद्यैनंभक्षयिष्यामिपश्यतस्तेयुधिष्ठिर ३६ एनंहिविपुलप्राणमद्यहत्वावृकोदरम् ॥ संभक्ष्यजरयिष्यामियथाऽगस्त्योमहासुरम् ३७ एवमुक्तस्तुधर्मात्मासत्यसंधोयुधिष्ठिरः ॥ नैतदस्तीतिसक्रोधोभर्त्सयामासराक्षसम् ३८ ततोभीमोमहाबाहुरारुज्यतरसाद्रुमम् ॥ दशव्याममथोद्विद्धंनिष्पत्रमकरोत्तदा ३९ चकारसज्यंगांडीवंवज्रनिष्पेषगौरवम् ॥ निमेषांतरमात्रेणतथैवविजयोऽर्जुनः ४० निवार्यभीमो जिष्णुंतंतद्रक्षोमेघनिःस्वनम् ॥ अभिद्रुत्याब्रवीद्वाक्यंतिष्ठतिष्ठेतिभारत ४१ इत्युक्त्वैनमतिक्रुद्धःकक्ष्यामुत्पीड्यपांडवः ॥ निष्पिष्यपाणिनापाणिंसंदष्टौष्ठ पुटोबली ४२ तमभ्यधावद्वेगेनभीमोवृक्षायुधस्तदा ॥ यमदंडप्रतीकाशंततस्तंतस्यमूर्धनि ४३ पातयामासवेगेनकुलिशंमघवानिव ॥ असंभ्रांतंतुतद्रक्षः समरेप्रत्यदृश्यत ४४ चिक्षेपचोल्मुकंदीप्तमशनिंज्वलितामिव ॥ तदुदस्तमलातंतुभीमःप्रहरतांवरः ४५ पदासव्येनचिक्षेपतद्रक्षःपुनराव्रजत् ॥ किर्मीरश्चा पिसहसावृक्षमुत्पाट्यपांडवम् ४६ दंडपाणिरिवक्रुद्धःसमरेप्रत्यधावत ॥ तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ४७ वालिसुग्रीवयोर्भ्रात्रोर्यथास्त्रीकांक्षिणोःपुरा ॥ शीर्षयोःपतितावृक्षाबिभिदुर्नैकधातयोः ४८ यथैवोत्पलमालानिमत्तयोर्द्विपयोस्तथा ॥ मुंजवज्जर्जरीभूताबहवस्तत्रपादपाः ४९ चीराणीवव्युदस्तानिरेजुस्तत्र महावने ॥ तद्वृक्षयुद्धमभवन्मुहूर्तंभरतर्षभ ॥ राक्षसानांचमुख्यस्यनराणामुत्तमस्यच ५० ततःशिलांसमुत्क्षिप्यभीमस्ययुधितिष्ठतः ॥ प्राहिणोद्राक्षसःक्रुद्धो भीमश्चनचचालह ५१ तंशिलाताडनजडंपर्यधावतराक्षसः ॥ बाहुविक्षिप्तकिरणःस्वर्भानुरिवभास्करम् ५२ तावन्योन्यंसमाश्लिष्यप्रकर्षंतौपरस्परम् ॥ उ भावपिचकाशेतेप्रवृद्धौवृषभाविव ५३ तयोरासीत्सुतुमुलःसंप्रहारःसुदारुणः ॥ नखदंष्ट्रायुधवतोर्व्याघ्रयोरिवदृप्तयोः ५४ दुर्योधननिकाराच्चबाहुवीर्याच्चदर्पितः ॥ कृष्णानयनदृष्टश्चव्यवर्द्धतवृकोदरः ५५

४६ । ४७ स्त्रीतारा ४८ उत्पलमालानिपद्मक्षेत्राणि । 'मालंक्षेत्रेजनेमाले' इति विश्वः । पद्मसमूहइत्यर्थः ४९ चीराणिवृक्षवल्कलानि ५० । ५१ । ५२ । ५३ । ५४ निकारात्परिभवात् कृष्णानयनदृष्टंयेन सतथा द्रौपद्याकर्षणेनकुपितइत्यर्थः ५५

प्रभिन्नकरटामुखंप्रभिन्नेव्यक्तीभूतेकरटयोर्गंडयोर्मुखेमदनिर्गममार्गौयस्यतम् ५६ । ५७ । ५८ । ५९ व्यस्पंदतकिंचिच्चलनंकृतवान् ६० योक्त्रयामासबबंधरशनयापशुमिव ६१ । ६२ पशुमारंपशुमिवमाराथि त्वा । कषादित्वादनुप्रयोगः'समूलघातंन्यवधीदरींश्च'इतिवत् ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपे

अभिपद्यचबाहुभ्यांप्रत्यगृह्णादमर्षितः ॥ मातंगमिवमातंगःप्रभिन्नकरटामुखम् ५६ सचाप्येनंततोरक्षःप्रतिजग्राहवीर्यवान् ॥ तमाक्षिपद्भीमसेनोबलेन बलिनांवरः ५७ तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ॥ शब्दःसमभवद्घोरोवेणुस्फोटसमोयुधि ५८ अथैनमाक्षिप्यबलाद्गृह्यमध्येवृकोदरः ॥ धूनयामास वेगेनवायुश्चंडइवद्रुमम् ५९ सभीमेनपरामृष्टोदुर्बलोबलिनारणे ॥ व्यस्पंदतयथाप्राणंविचकर्षचपांडवम् ६० ततएनंपरिश्रांतमुपलक्ष्यवृकोदरः ॥ योक्त्र यामासबाहुभ्यांपशुंरशनयायथा ६१ विनदंतंमहानादंभिन्नभेरीस्वनंबली ॥ भ्रामयामाससुचिरंविस्फुरंतमचेतसम् ६२ तंविषीदंतमाज्ञायराक्षसंपांडुनंद नः ॥ प्रगृह्यतरसादोर्भ्यांपशुमारममारयत् ६३ आक्रम्यचकटोद्देशेजानुनाराक्षसाधमम् ॥ पीडयामासपाणिभ्यांतस्यकंठंवृकोदरः ६४ अथजर्जरसर्वांगं व्याविद्धनयनांबरम् ॥ भूतलेभ्रामयामासवाक्यंचेदमुवाचह ६५ हिडिंबबकयोःपापनत्वमश्रुप्रमार्जनम् ॥ करिष्यसिगतश्चापियमस्यसदनंप्रति ६६ इत्येव मुक्त्वापुरुषप्रवीरस्तंराक्षसंक्रोधपरीतचेताः ॥ विस्रस्तवस्त्राभरणंस्फुरंतमुद्भ्रांतचित्तंव्यसुमुत्ससर्ज ६७ तस्मिन्हतेतोयदतुल्यरूपेकृष्णांपुरस्कृत्यनरेंद्रपुत्राः ॥ भीमंप्रशस्याथगुणैरनेकैर्हृष्टास्ततोद्वैतवनायजग्मुः ६८ ॥ विदुरउवाच ॥ एवंविनिहतःसंख्येकिर्मीरोमनुजाधिप ॥ भीमेनवचनात्तस्यधर्मराजस्यकौरव ६९ ततो निष्कंटकंकृत्वावनंतदपराजितः ॥ द्रौपद्यासहधर्मज्ञोवसतिंतामुवासह ७० समाश्वास्यचतेसर्वेद्रौपदींभरतर्षभाः ॥ प्रहृष्टमनसःप्रीत्याप्रशशंसुर्वृकोदरम् ७१ भीम बाहुबलोत्पिष्टेविनष्टेराक्षसेततः ॥ विविशुस्तेवनंवीराःक्षेमंनिहतकंटकम् ७२ समयागच्छतामार्गेविनिकीर्णोभयावहः ॥ वनेमहतिदुष्टात्मादृष्टोभीमबलाद्धतः ७३ तत्राश्रौषमहंचैतत्कर्मभीमस्यभारत ॥ ब्राह्मणानांकथयतांयेतत्रासन्समागताः ७४ ॥ वैशंपायनउवाच ॥ एवंविनिहतंसंख्येकिर्मीरंरक्षसांवरम् ॥ श्रुत्वाध्यानपरोरा जानिशश्वासार्त्तवत्तदा ७५ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिकिर्मीरवधपर्वणिविदुरवाक्येएकादशोऽध्यायः ॥ ११ ॥ ॥ समाप्तंचकिर्मीरवधपर्व ॥ ॥ अथार्जुनाभिगमनपर्व ॥ ॥ वैशंपायनउवाच ॥ भोजाःप्रव्रजितान्श्रुत्वावृष्णयश्चांधकैःसह ॥ पांडवान्दुःखसंतप्तान्समाजग्मुर्महावने १ पांचालस्यच दायादोधृष्टकेतुश्चचेदिपः ॥ केकयाश्चमहावीर्याभ्रातरोलोकविश्रुताः २ वनेद्रष्टुंययुःपार्थान्क्रोधामर्षसमन्विताः ॥ गर्हयंतोधार्त्तराष्ट्रान्किंकुर्मइतिचाब्रुवन् ३ वा सुदेवंपुरस्कृत्यसर्वेतेक्षत्रियर्षभाः ॥ परिवार्योपविविशुर्धर्मराजंयुधिष्ठिरम् ॥ अभिवाद्यकुरुश्रेष्ठंविषण्णःकेशवोऽब्रवीत् ४

कादशोऽध्यायः ॥ ११ ॥ ॥ ॥ एवमधर्मरुचीनांदुर्योधनादीनांव्यासादिभिराप्तैरुपदेशेकृतेऽपि मैत्रेयशापेऽपि किर्मीरवधेनमहाभयेऽपिप्रत्युपस्थितेसतिनधर्मेरुचिरुत्पद्यतइत्युक्तम् । संप्रतिधर्मरुची नांपांडवानामुपरि परमेश्वरस्येतरेषांचानुग्रहं पांडवानांकृष्णतत्त्वविज्ञानंचवर्णयति भोजाःप्रव्रजितानित्यादिनाऽध्यायेन १ । २ । ३ । ४

दुःशासनश्चतुर्थोयेषाम् ५ तस्यदुर्योधनस्यपदानुगाःसहायाः ६ निकृत्याछलेनोपचरन्वर्त्तमानः ७ अभिषंगेणदुःखेनपराभवेनवा ८ । ९ पुरुषस्यपुरिशरीरेशयानस्याप्रमेयस्याहंकारादिवत्प्रमातुमयोग्यस्य त्रिषयित्वात् अतएवसत्वस्यकालत्रयेऽपिबाधशून्यस्य विषयस्यहिबाधःस्वप्नादौदृष्टः । अमिततेजसस्त्रिविधपरिच्छेदशून्यचिन्मात्रस्य प्रजापतिपतेःसूत्रविराजोरपिस्वामिनः । विष्णोर्व्यापकस्य लोकनाथस्यांतर्यामिणः । एवंतत्पदार्थमुक्त्वात्वंपदार्थमाहधीमतइति बुद्ध्युपाधेःअनयोःसामानाधिकरण्यादभेदः अस्यैवसूत्रभूतस्यश्लोकस्यविवरणमुत्तरोग्रंथः १० तत्रतपस्विनांक्षमैवोचितेतिदर्शयितुंभगवतःक्रोधोपपशमनायतदीयंजन्मांतरीयंतपएवतावदुदाहरतिदशेत्यादिना यत्रसायंकालस्तत्रैवगृहंयस्यसयत्रसायंगृहइत्येकंपदम् ११ । १२ । १३ अवकृष्टोत्तरासंगस्त्यक्तोत्तरीयवस्त्रः १४ । १५ तपसःप्रयोजनमाहलोकेति १६ ‘क्षेत्रज्ञःसर्वभूतानामादिरंतश्चकेशव’इत्यस्यार्थः क्षेत्रं । ‘महाभूतान्यहंकारोबुद्धिरव्यक्तमेवच ॥ इंद्रियाणिदशैकंचपंचचेंद्रियगोचराः । इच्छाद्वेषःसुखंदुःखंसंघातश्चेतनाधृतिः’ । एतत्क्षेत्र

वासुदेवउवाच ॥ दुर्योधनस्यकर्णस्यशकुनेश्चदुरात्मनः ॥ दुःशासनचतुर्थानांभूमिःपास्यतिशोणितम् ५ एतान्निहत्यसमरेयेचतस्यपदानुगाः ॥ तांश्चसर्वान्विनिर्जित्यसहितान्सनराधिपान् ६ ततःसर्वेऽभिषिंचामोधर्मराजंयुधिष्ठिरम् ॥ निकृत्योपचरन्वध्यएषधर्मःसनातनः ७ ॥ वैशंपायनउवाच ॥ पार्थानामभिषंगेणतथाक्रुद्धंजनार्दनम् । अर्जुनःशमयामासदिधक्षंतमिवप्रजाः ८ संक्रुद्धंकेशवंदृष्ट्वापूर्वदेहेषुफाल्गुनः ॥ कीर्त्तयामासकर्माणिसत्यकीर्तेर्महात्मनः ९ पुरुषस्याप्रमेयस्यसत्यस्यामिततेजसः ॥ प्रजापतिपतेर्विष्णोर्लोकनाथस्यधीमतः १० ॥ अर्जुनउवाच ॥ दशवर्षसहस्राणियत्रसायंगृहोमुनिः ॥ व्यचरस्त्वंपुराकृष्णपर्वतेगंधमादने ॥ ११ दशवर्षसहस्राणिदशवर्षशतानिच ॥ पुष्करेष्ववसःकृष्णत्वमपोभक्षयन्पुरा १२ ऊर्ध्वबाहुर्विशालायांबदर्यांमधुसूदन ॥ अतिष्ठएकपादेनवायुभक्षःशतंसमाः ॥ १३ अवकृष्टोत्तरासंगःकृशोधमनिसंततः ॥ आसीःकृष्णसरस्वत्यांसत्रेद्वादशवार्षिके १४ प्रभासमप्यथासाद्यतीर्थंपुण्यजनोचितम् ॥ तथाकृष्णमहातेजादिव्यंवर्षसहस्रकम् १५ अतिष्ठस्त्वमथैकेनपादेननियमस्थितः ॥ लोकप्रवृत्तिहेतोस्त्वमितिव्यासोममाब्रवीत् १६ क्षेत्रज्ञःसर्वभूतानामादिरंतश्चकेशव ॥ निधानंतपसांकृष्णयज्ञस्त्वंचसनातनः १७ निहत्यनरकंभौममाहृत्यमणिकुंडले ॥ प्रथमोत्पादितंकृष्णमेध्यमश्वमवासृजः १८ कृत्वातत्कर्मलोकानामृषभःसर्वलोकजित् ॥ अवधीस्त्वंरणेसर्वान्समेतान्दैत्यदानवान् १९ ततःसर्वेश्वरत्वंचसंप्रदायशचीपतेः ॥ मानुषेषुमहाबाहोप्रादुर्भूतोऽसिकेशव २० सत्वंनारायणोभूत्वाहरिरासीःपरंतप ॥ ब्रह्मासोमश्चसूर्यश्चधर्मोधातायमोऽनलः २१ वायुर्वैश्रवणोरुद्रःकालःखंपृथिवीदिशः ॥ अजश्चराचरगुरुःस्रष्टात्वंपुरुषोत्तम २२

मितिभगवताव्याख्यातं कोशपंचकात्मकंतज्ज्ञस्तत्प्रकाशकोंऽतरात्मेत्यर्थः । सर्वभूतानांसर्वेषांवियदादीनां जरायुजादीनां जरायुजादीनांचजीवानामादिःपरमकारणं । अंतोलयस्थानं रजतस्येवशुक्तिः । अवांतरकारणानामविद्याकामकर्मादीनां क्षेत्रमध्येअव्यक्तेच्छादिपदैरुपात्तत्वात् । एतेनप्रपंचस्यमिथ्यात्वाज्जीवपरयोरैक्याच्चाद्वैतं कृष्णतत्त्वमुक्तम् १७ भौमंभूमिपुत्रं प्रथमोत्पादितंसर्वभूतानांप्रथमेनाहंकारेणोत्पादितंभूतादिरहंकारइतिप्रसिद्धं मेध्यंयज्ञियम् १८ तत्कर्मअश्वोत्सर्गाख्यम् १९ । २० सत्वंक्षेत्रज्ञः शुद्धचिन्मात्रोभूस्थानीयःसन्नारायणोनरेणपरमात्मनासृष्टंनारंस्थूलसूक्ष्मकारणरूपमुपाधित्रयंतदेवायनंवासस्थानंयस्यसतथा । वृक्षाकुरबीजस्थानीयविराट्सूत्रांतर्यामिरूपोभूत्वा हरिः परिणतबीजसहस्रगर्भफलस्थानीयःसांबमूर्त्तिरासीः । ईषत्पक्वफलोपमाश्चब्रह्मादयस्त्वमेव २१ हेपुरुषोत्तम उक्तेभ्योबीजादिस्थानीयेभ्यउत्तमभूस्थानीयनिर्विशेषचिन्मात्ररूपअजोविष्णुःचराचरगुरूरुद्रः स्रष्टादक्षप्रजापत्यादिः २२

परायणंसर्वोत्कृष्टंप्राप्यदेवश्रेष्ठः क्रतुभिरयजइत्यन्वयः अधृष्यइतिपाठेत्वंयजइत्यध्याहारः २३ । २४ । २५ । २६ संप्राप्यसम्यग्व्याप्य आदित्यस्यंदनेसूर्यदेहे भास्करंमंडलाभिमानिनंजीवम् २७ । २८ सादिताश्छिन्नामौरवाआंत्रतंतिमयाः । मुरवेष्टनेअस्मादौणादिकेउक्प्रत्ययेतद्धितः मौर्वीशब्दोऽप्यतएवमध्यमस्वरलोपेनानिष्पन्नः २९ जारूथ्यांनगर्याम् ३० अवाप्सीरवाप्तवानसि भोज्यांभोजवंशजाम् ३१ सौभंखेचरंपुरम् ३२ । ३३ । ३४ नृशंस्यंनिर्दयत्वम् । दीर्घपाठेत्वाङ्पूर्वोऽयंशब्दोज्ञेयः ३५ आसीनंचैत्यमध्येत्वां चैत्यमायतनं आध्यात्मिकंहृदयपुंडरीकं बाह्यंदेवालयादि चित्तमध्यस्थमित्यपिपा

परायणंदेवमूर्धाक्रतुभिर्मधुसूदन ॥ अयजोभूरितेजावैकृष्णचैत्ररथेवने २३ शतंशतसहस्राणिसुवर्णस्यजनार्दन ॥ एकैकस्मिंस्तदायज्ञेपरिपूर्णानिभागशः २४ अदितेरपिपुत्रत्वमेत्ययादवनंदनः ॥ त्वंविष्णुरितिविख्यातइंद्रादवरजोविभुः २५ शिशुर्भूत्वादिवंखंचपृथिवींचपरंतप ॥ त्रिभिर्विक्रमणैःकृष्णक्रांतवानसितेजसा २६ संप्राप्यदिवमाकाशमादित्यस्यंदनेस्थितः ॥ अत्यरोचश्चभूतात्मन्भास्करंस्वेनतेजसा २७ प्रादुर्भावसहस्रेषुतेषुतेषुत्वयाविभो ॥ अधर्मरुचयःकृष्णनिहताःशतशोऽसुराः २८ सादितामौरवाःपाशानिसुंदनरकौहतौ ॥ कृतःक्षेमःपुनःपंथाःपुरंप्राग्ज्योतिषंप्रति २९ जारूथ्यामाहुतिःक्राथःशिशुपालोजनैःसह ॥ जरासंधश्चशैब्यश्चशतधन्वाचनिर्जितः ३० तथापर्जन्यघोषेणरथेनादित्यवर्चसा ॥ अवाप्सीर्महिषींभोज्यांरणेनिर्जित्यरुक्मिणम् ३१ इंद्रद्युम्नोहतःकोपाद्यवनश्चकसेरुमान् ॥ हतःसौभपतिःशाल्वस्त्वयासौभंचपातितम् ३२ एवमेतेयुधिहताभूयश्चान्यान्शृणुष्वह ॥ इरावत्यांहतोभोजःकार्तवीर्यसमोयुधि ३३ गोपतिस्तालकेतुश्चत्वयाविनिहतावुभौ ॥ तांचभोगवतींपुण्यामृषिकांतांजनार्दन ३४ द्वारकामात्मसात्कृत्वासमुद्रंगमयिष्यसि ॥ नक्रोधोनचमात्सर्यंनानृतंमधुसूदन ॥ त्वयितिष्ठतिदाशार्हनन‍ृशंस्यंकुतोऽनृजु ३५ आसीनंचैत्यमध्येत्वांदीप्यमानंस्वतेजसा ॥ आगम्यऋषयःसर्वेऽयाचंताभयमच्युत ३६ युगांतेसर्वभूतानिसंक्षिप्यमधुसूदन ॥ आत्मनैवात्मसात्कृत्वाजगदासीःपरंतप ३७ युगादौतववार्ष्णेयनाभिपद्मादजायत ॥ ब्रह्माचराचरगुरुर्यस्येदंसकलंजगत् ३८ तंहंतुमुद्यतौघोरौदानवौमधुकैटभौ ॥ तयोर्व्यतिक्रमंदृष्ट्वाक्रुद्धस्यभवतोहरेः ३९ ललाटाज्जातवान्शंभुःशूलपाणिस्त्रिलोचनः ॥ इत्थंतावपिदेवेशौत्वच्छरीरसमुद्भवौ ४० त्वन्नियोगकरावेताविति मेनारदोऽब्रवीत् ॥ तथानारायणपुराक्रतुभिर्भूरिदक्षिणैः ४१ इष्टवांस्त्वंमहासत्रंकृष्णचैत्ररथेवने ॥ नैवंपरेनापरेवाकरिष्यंतिकृतानिवा ४२ यानिकर्माणिदेवत्वंबालएवमहाबलः ॥ कृतवान्पुंडरीकाक्षबलदेवसहायवान् ॥ कैलासभवनेचापिब्राह्मणैर्न्यवसःसह ४३ ॥ वैशंपायनउवाच ॥ एवमुक्त्वामहात्मानमात्माकृष्णस्यपांडवः ॥ तूष्णीमासीत्ततःपार्थमित्युवाचजनार्दनः ४४ ममैवत्वंतवैवाहंयेमदीयास्तवैवते ॥ यस्त्वांद्वेष्टिसमांद्वेष्टियस्त्वामनुसमामनु ४५

ठः नित्यमध्यस्थमितिपाठेऽपिमध्यंहृदयाब्जमेव ३६ आत्मनैवनिमित्तांतरंविनाआत्मसादात्ममात्रम् ३७ युगादौतववार्ष्णेयेत्यादिसार्द्धश्लोकत्रयंक्वचिन्नदृष्टं यस्यकृतिरिदंसकलं असौदेवोऽपित्वन्नियोगकरइतिविपरिणामेनयोज्यम् ३८ । ३९ । ४० । ४१ । ४२ कर्माणिपूतनावधादीनि ४३ एवंतत्पदार्थस्वरूपंप्रपंच्य तस्यत्वंपदार्थाभेदमाह एवमिति ४४ ममैवत्वंब्रह्मणएवस्वरूपंजीवः तवैवाहं जीवस्यैवशुद्धंरूपंब्रह्म नततोऽन्यत् येमदीयास्तवैवते ब्रह्मगताऔपाधिकाःसर्वेश्वरत्वादयस्तेऽपिजीवस्यैवतस्माद्योजीवंद्वेष्टि सब्रह्मद्वेष्टियोजीवंयातिसब्रह्मयाति । अद्रोहीसन्सर्वभूतेषुभगवद्भावंपश्येदित्यर्थः ४५

४६ ननुमित्रयोर्मयात्मात्वंतवात्माहमित्यभेदोपचारोदृष्टोनतत्त्वभेदइत्याशंक्याहानन्यइति । मित्रयोर्ह्यन्यत्वंप्रत्यक्षदृष्टंतदिहनिरस्यतेअपूर्वार्थज्ञापकत्वाद्वाक्यस्य अनन्यत्वमप्यौपचारिकमास्त्वित्याशंक्याह नावयोरिति अंतरंभेदः वेदितुंविचारयितुं जीवेशयोर्भेदोदुर्निरूपइत्यर्थः तथाहि किंदेहभेदादात्मभेदउतात्मभेदात् नाद्यः कायव्यूहकृतयोगिन्यव्याप्तेः नांत्यः उपाधिपरामर्शंविनाभेदस्याविभाव्यमानत्वात् मुक्तात्मानौजीवेशौवानस्वभावभिन्नौ उक्तहेतोःघटमठाकाशवदिति ४७ समावायेसमूहे संरब्धेषुकुपितेषु ४८ । ४९ एवंविधस्यात्मतत्त्वस्याधिगमायध्यानस्तवनसेवादिनाकृष्णएवशरणीकरणीयइत्याहद्रौपदीवाक्येन पूर्वेइत्यादिना पूर्वेसृष्टेःप्राक्कालेत्वामेकमाहुः'सदेवसोम्येदमग्रआसीत्' इत्याद्याःश्रुतयः । प्रजाभिसर्गेचप्रजापतिंत्वामाहुः' सर्वस्यवशीसर्वस्येशानः' इत्याद्याःश्रुतयः । ईशत्वमपिनराजवत् किंतूपादानत्वेनेत्याह स्रष्टारमिति ५० विष्णुःविशतीतिविष्णुः' अंतःप्रविष्टःशास्ताजनानाम्' इतिश्रुतेः । कारयिताक्रियाकर्त्ताकर्मचत्वमेवासीतिपादचतुष्टयार्थः ५१ क्षमादुःखसहता सत्त्यं सत्पृथिव्यप्तेजांसि त्यत् वाय्वाकाशौ तदात्मकंतस्माच्चसंभूतोयज्ञोऽपित्वमसि ५२ भूतभावनवियदादिस्रष्टः भूतेशभूतनियंतः । 'यआकाशमंतरोयमयती' इत्यादिश्रुतेराकाशादेरपिनियम्यत्वादस्मदादिवच्चेतनत्वंद्रष्टव्यं तत्रचेतनानु

नरस्त्वमसिदुर्द्धर्षहरिर्नारायणोह्यहम् ॥ कालेलोकमिमंप्राप्तौनरनारायणावृषी ४६ अनन्यःपार्थमत्तस्त्वंत्वत्तश्चाहंतथैवच ॥ नावयोरंतरंशक्यंवेदितुंभरतर्षभ ४७ ॥ वैशंपायनउवाच ॥ एवमुक्तेतुवचनेकेशवेनमहात्मना ॥ तस्मिन्वीरसमावायेसंरब्धेष्वथराजसु ४८ धृष्टद्युम्नमुखैर्वीरैर्भ्रातृभिःपरिवारिता ॥ पांचालीपुंडरीकाक्षमासीनंभ्रातृभिःसह ॥ अभिगम्याब्रवीत्क्रुद्धाशरण्यंशरणैषिणी ४९ ॥ ॥ द्रौपद्युवाच ॥ ॥ पूर्वेप्रजाभिसर्गेत्वामाहुरेकंप्रजापतिम् ॥ स्रष्टारंसर्वलोकानामसितोदेवलोऽब्रवीत् ५० विष्णुस्त्वमसिदुर्द्धर्षत्वंयज्ञोमधुसूदन ॥ यष्टात्वमसियष्टव्योजामदग्न्योयथाब्रवीत् ५१ ऋषयस्त्वांक्षमामाहुःसत्त्यंचपुरुषोत्तम ॥ सत्त्याद्यज्ञोऽसिसंभूतःकश्यपस्त्वांयथाब्रवीत् ५२ साध्यानामपिदेवानांशिवानामीश्वरेश्वर ॥ भूतभावनभूतेशयथात्वांनारदोऽब्रवीत् ५३ ब्रह्मशंकरशक्राद्यैर्देववृंदैः पुनःपुनः ॥ क्रीडसेत्वंनरव्याघ्रबालःक्रीडनकैरिव ५४ द्यौश्चतेशिरसाव्याप्तापद्भ्यांचपृथिवीप्रभो ॥ जठरंतेइमेलोकाःपुरुषोऽसिसनातनः ५५ विद्यातपोभितप्तानांतपसाभावितात्मनाम् ॥ आत्मदर्शनतृप्तानामृषीणामसिसत्तमः ५६ राजर्षीणांपुण्यकृतामाहवेष्वनिवर्त्तिनाम् ॥ सर्वधर्मोपपन्नानांत्वंगतिःपुरुषर्षभ ॥ त्वंप्रभुस्त्वंविभुश्चत्वंभूतात्मात्वंविचेष्टसे ५७ लोकपालाश्चलोकाश्चनक्षत्राणिदिशोदश ॥ नभश्चंद्रश्चसूर्यश्चत्वयिसर्वंप्रतिष्ठितम् ५८ मर्त्यताचैवभूतानाममरत्वंदिवौकसाम् ॥ त्वयिसर्वंमहाबाहोलोककार्यंप्रतिष्ठितम् ५९

पलंभस्त्वरणिस्थाग्नेरिवानभिव्यक्तत्वान्नत्वभावादितिभावः ५३ ब्रह्मादिनियंतृत्वंवैश्वरूप्यंचाहद्वाभ्यां ब्रह्मेति ५४ । ५५ विद्यावेदाधिगमोब्रह्मचारिधर्मः तपस्तदर्थानुष्ठानंगृहस्थधर्मः तपसाकृच्छ्रचांद्रायणादिनावानप्रस्थधर्मेणचभावितात्मनांशोधितचित्तानामतएवात्मदर्शनतृप्तानांयतीनांसत्तमःसत्यतमः सत्यंस्वप्नेंद्रजालादिप्रातिभासिकं सत्यतरोव्यवहारः सत्यतमंब्रह्म इतरयोर्बाधावधिभूतत्वात् ५६ सर्वेधर्माः पापपुण्यादयस्तैरुपपन्नानामपित्वमेवगतिः दीनदयालुत्वात्पापिष्ठानामप्युद्धर्त्तेतिभावः प्रभुर्नियंता विभुर्व्यापकः भूतात्माजीवः बुद्ध्याद्याकारपरिणतानिभूतान्येवात्मत्वेनमन्यमानः । 'अस्तिखल्वन्योऽपरोभूतात्मायोऽयंसितासितैःकर्मफलैरभिभूयमानःसदसद्योनिमापद्यते' इति मैत्रायणीयेभूतात्मपदस्यजीवेरूढिदर्शनात् विचेष्टसेकर्माणिकुरुषे ५७ त्वयिसर्वंप्रतिष्ठितंलोकपालादिपदस्यत्वमेवप्रापकइत्यर्थः ५८ अस्यैवव्याख्या मर्त्यताचेति । मर्त्यतासंसारः भूतानांसाधारणजीवानां अमृतत्वंमुक्तिः दिवौकसांदिव्यदृष्टिमतांसात्विकानाम् ५९

एवंस्वर्गापवर्गार्थिभिःकृष्णएवशरणीकरणीयइतिकृष्णस्तुतिप्रसंगादुक्तं संप्रतिदृष्टफलार्थमपिसएवानुसर्त्तव्यइत्याह सातेऽहंदुःखमाख्यास्येइत्यादिना। अत्रात्मानिकृष्णस्यकरुणोत्पादनार्थंदुःखनिवेदनंतत्प्रसंगेनम हामहिम्नामपिसंसारिणांदुर्गतिःप्रपंचितावैराग्योत्पादनाय प्रणयाद्विश्रंभात् आख्यानेहेतुमाह ईशस्त्वमिति ६० । ६१ स्त्रीधर्मिणीरजस्वला ६२ । ६३ ईषुःऐच्छन् ६४ स्नुषावधूः ६५ धर्मपत्नीयज्ञसंयोगिनीं ६६ विप्रकृतांदुःखंप्रापितां मर्षयेतांक्षमेतां ६७ । ६८ । ६९ जायात्उत्पद्येत ७० नान्वपद्यंतनानुगृहीतवंतः ७१ । ७२ । ७३ । ७४ धार्त्तराष्ट्राणामपराधं दुर्बलीयसांदुर्बलतराणां ७५ । ७६

सातेऽहंदुःखमाख्यास्येप्रणयान्मधुसूदन ॥ ईशस्त्वंसर्वभूतानांयेदिव्यायेचमानुषाः ६० कथंनुभार्यापार्थानांतवकृष्णसखीविभो ॥ धृष्टद्युम्नस्यभगिनीसभांकृष्येतमादृशी ६१ स्त्रीधर्मिणीवेपमानाशोणितेनसमुक्षिता ॥ एकवस्त्राविकृष्टाऽस्मिदुःखिताकुरुसंसदि ६२ राज्ञांमध्येसभायांतुरजसाऽतिपरिप्लुता ॥ दृष्ट्वाचमांधार्त्तराष्ट्राःप्राहसन्पापचेतसः ६३ दासीभावेनमांभोक्तुमीषुस्तेमधुसूदन ॥ जीवत्सुपांडुपुत्रेषुपंचालेषुचवृष्णिषु ६४ नन्वहंकृष्णभीष्मस्यधृतराष्ट्रस्यचोभयोः ॥ स्नुषाभवामिधर्मेणसाहंदासीकृताबलात् ६५ गर्हयेपांडवांस्त्वेवयुधिश्रेष्ठान्महाबलान् ॥ यत्क्लिश्यमानांप्रेक्षंतेधर्मपत्नींयशस्विनीम् ६६ धिग्बलंभीमसेनस्यधिक्पार्थस्यचगांडिवम् ॥ यौमांविप्रकृतांक्षुद्रैर्मर्षयेतांजनार्दन ६७ शाश्वतोऽयंधर्मपथःसद्भिराचरितःसदा ॥ यद्भार्यांपरिरक्षंतिभर्तारोऽल्पबलाअपि ६८ भार्यायांरक्ष्यमाणायांप्रजाभवतिरक्षिता ॥ प्रजायांरक्ष्यमाणायामात्माभवतिरक्षितः ६९ आत्माहिजायतेतस्यांतस्माज्जायाभवत्युत ॥ भर्त्ताचभार्ययारक्ष्यःकथंजायान्ममोदरं ७० नन्विमेशरणंप्राप्तंनत्यजंतिकदाचन ॥ तेमांशरणमापन्नांनान्वपद्यंतपांडवाः ७१ पंचभिःपतिभिर्जाताःकुमारामेमहौजसः ॥ एतेषामप्यवेक्षार्थंत्रातव्याऽस्मिजनार्दन ७२ प्रतिविंध्योयुधिष्ठिरात्सुतसोमोवृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिश्चशतानीकस्तुनाकुलिः ७३ कनिष्ठाच्छ्रुतकर्माचसर्वेसत्यपराक्रमाः ॥ प्रद्युम्नोयादृशःकृष्णतादृशास्तेमहारथाः ७४ नन्विमेधनुषिश्रेष्ठाअजेयायुधिशात्रवैः ॥ किमर्थंधार्त्तराष्ट्राणांसहंतेदुर्बलीयसाम् ७५ अधर्मेणहृतंराज्यंसर्वेदासाःकृतास्तथा ॥ सभायांपरिकृष्टाऽहमेकवस्त्रारजस्वला ७६ नाधिज्यमपियच्छक्यंकर्तुमन्येनगांडिवम् ॥ अन्यत्रार्जुनभीमाभ्यांत्वयावामधुसूदन ७७ धिग्बलंभीमसेनस्यधिक्पार्थस्यचपौरुषम् ॥ यत्रदुर्योधनःकृष्णमुहूर्त्तमपिजीवति ७८ यएतानाक्षिपद्राष्ट्रात्सहमात्राऽविहिंसकान् ॥ अधीयानान्पुराबालान्व्रतस्थान्मधुसूदन ७९ भोजनेभीमसेनस्यपापःप्राक्षेपयद्विषम् ॥ कालकूटंनवंतीक्ष्णंसंभृतंलोमहर्षणम् ८० तज्जीर्णमविकारेणसहान्नेनजनार्दन ॥ सशेषत्वान्महाबाहोभीमस्यपुरुषोत्तम ८१ प्रमाणकोट्यांविश्वस्तंतथासुप्तंवृकोदरम् ॥ बद्ध्वैनंकृष्णगंगायांप्रक्षिप्यपुरमाव्रजत् ८२ यदाविबुद्धःकौंतेयस्तदासंछिद्यबंधनम् ॥ उदतिष्ठन्महाबाहुर्भीमसेनोमहाबलः ८३ आशीविषैःकृष्णसर्पैर्भीमसेनमदंशयत् ॥ सर्वेष्वेवांगदेशेषुनममारचशत्रुहा ८४

अधिज्यमारोपितगुणं ७७ । ७८ आक्षेपतदूरेकृतवान् अविहिंसकानदुःखदान् ७९ संभृतंसहितं संभूतमितिपाठेबहुलं ८० सशेषत्वात् आयुषःशेषः ८१ प्रमाणकोट्यां प्रमाणाख्योगंगातीरस्थोवटविशेषस्तत्प्रदेशे ८२ । ८३ । ८४

अपोथयत्प्रहृतवान् अपहस्तेनहस्तपृष्ठेन ८५ उपाधाक्षीतदाहार्थंउपहृतवान् आर्याश्वश्रूः ८६ । ८७ । ८८ । ८९ वैनतेयः विनतापुत्रः ९० । ९१ । ९२ । ९३ । ९४ । ९५

प्रतिबुद्धस्तुकौंतेयःसर्वान्सर्पानपोथयत् ॥ सारथिंचास्यदयितमपहस्तेनजघ्निवान् ८५ पुनःसुप्तानुपाधाक्षीद्बालकान्वारणावते ॥ शयानानार्ययासार्द्धंकोनुतल्कर्तुमर्हति ८६ यत्रार्यारुदतीभीतापांडवानिदमब्रवीत् ॥ महद्व्यसनमापन्नाशिखिनापरिवारिता ८७ हाहताऽस्मिकुतोन्वद्यभवेच्छांतिरिहानलात् ॥ अनाथाविनशिष्यामिबालकैःपुत्रकैःसह ८८ तत्रभीमोमहाबाहुर्वायुवेगपराक्रमः ॥ आर्यामाश्वासयामासभ्रातृंश्चापिवृकोदरः ८९ वैनतेयोयथापक्षीगरुत्मान्पततांवरः ॥ तथैवाभिपतिष्यामिभयंवोनेहविद्यते ९० आर्यामंकेनवामेनराजानंदक्षिणेनच ॥ अंसयोश्चयमौकृत्वापृष्ठेबीभत्सुमेवच ९१ सहसोत्पत्त्यवेगेनसर्वानादायवीर्यवान् ॥ भ्रातृनार्यांचबलवान्मोक्षयामासपावकात् ९२ तेरात्रौप्रस्थिताःसर्वेसहमात्रायशस्विनः ॥ अभ्यगच्छन्महारण्येहिडिंबवनमंतिकात् ९३ श्रांताःप्रसुप्तास्तत्रेमेमात्रासहसुदुःखिताः ॥ सुप्तांश्चैनानभ्यगच्छद्धिडिंबानामराक्षसी ९४ सादृष्ट्वापांडवांस्तत्रसुप्तान्मात्रासहक्षितौ ॥ हृच्छयेनाभिभूतात्माभीमसेनमकामयत् ९५ भीमस्यपादौकृत्वातुस्वउत्संगेततोऽबला ॥ पर्यमर्दतसंहृष्टाकल्याणीमृदुपाणिना ९६ तामबुद्ध्यदमेयात्माबलवान्सत्यविक्रमः ॥ पर्यपृच्छततांभीमःकिमिहेच्छस्यनिंदिते ९७ एवमुक्तातुभीमेनराक्षसीकामरूपिणी ॥ भीमसेनंमहात्मानमाहचैवमनिंदिता ९८ पलायध्वमितःक्षिप्रंममभ्रातैषवीर्यवान् ॥ आगमिष्यतिवोहंतुंतस्माद्गच्छतमाचिरम् ९९ अथभीमोऽभ्युवाचैनांसाभिमानमिदंवचः ॥ नोद्विजेयमहंतस्मान्निहनिष्येऽहमागतम् १० तयोःश्रुत्वातुसंजल्पमागच्छद्राक्षसाधमः ॥ भीमरूपोमहानादान्विसृजन्भीमदर्शनः १ ॥ राक्षसउवाच ॥ केनसार्धंकथयसिआनयैनंममांतिकम् ॥ हिंडिंबेभक्षयिष्यामोनचिरंकर्तुमर्हसि २ साकृपासंगृहीतेनहृदयेनमनस्विनी ॥ नैनमैच्छत्तदाऽऽख्यातुमनुक्रोशादनिंदिता ३ सनादान्विनदन्घोरान्राक्षसःपुरुषादकः ॥ अभ्यद्रवतवेगेनभीमसेनंतदाकिल ४ तमभिद्रुत्यसंक्रुद्धोवेगेनमहताबली ॥ अगृह्णात्पाणिनापाणिंभीमसेनस्यराक्षसः ५ इंद्राशनिसमस्पर्शंवज्रसंहननंदृढम् ॥ संहत्यभीमसेनायव्याक्षिपत्सहसाकरम् ६ गृहीतंपाणिनापाणिंभीमसेनस्यरक्षसा ॥ नामृष्यतमहाबाहुस्तत्राक्रुद्ध्यद्वृकोदरः ७ तदाऽऽसीत्तुमुलंयुद्धंभीमसेनहिडिंबयोः ॥ सर्वास्त्रविदुषोर्घोरंवृत्रवासवयोरिव ८ विक्रीड्यसुचिरंभीमोराक्षसेनसहानघ ॥ निजघानमहावीर्यस्तंतदानिर्बलंबली ९ हत्वाहिडिंबंभीमोऽथप्रस्थितोभ्रातृभिःसह ॥ हिडिंबामग्रतःकृत्वायस्यांजातोघटोत्कचः १०० ततःसंप्राद्रवन्सर्वेसहमात्रापरंतपाः ॥ एकचक्रामभिमुखाःसंवृताब्राह्मणव्रजैः ११ प्रस्थानेव्यासएषांचमंत्रीप्रियहितेरतः ॥ ततोऽगच्छन्नेकचक्रांपांडवाःसंशितव्रताः १२ तत्राप्यासादयामासुर्बकंनाममहाबलम् ॥ पुरुषादंप्रतिभयंहिडिंबेनैवसंमितम् १३ तंचापिविनिहत्योग्रंभीमःप्रहरतांवरः ॥ सहितोभ्रातृभिःसर्वैर्द्रुपदस्यपुरंययौ ११४

९६ । ९७ । ९८ । ९९ । १०० । १०१ । १०२ । कृपासंगृहीतेनस्नेहवशेन १०३ । १०४ । १०५ संहत्यमुष्टीकृत्य १०६ । १०७ । १०८ । १०९ । ११० । ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ । १९ दिव्येनअमानुषेणअग्निकुंडोद्भवत्वात् १२० । २१ । २२ सुजातौर्मलघ्नौ २३ । २४ । २५ विशोकवद्विशोकाइव २६ संबंधात् पितृष्वस्रीयभार्यात्वाद गौरवादग्निकुंडोद्भवत्वात् सख्या त्वभक्तिमत्वात् प्रभुत्वेनसामर्थ्ययुक्तत्वेनत्वदीयेन २७ । २८ । २९ । १३० द्रौपदीवाक्यंच श्रुत्वाऽर्जुनआबभाषेइतिव्यवहितेनसंबंधः ३१ अत्रहे

लब्धाऽहमपितत्रैववसता सव्यसाचिना ॥ यथात्वयाजिताकृष्णरुक्मिणीभीष्मकात्मजा १५ एवंसुयुद्धेपार्थेनजिताऽहंमधुसूदन ॥ स्वयंवरेमहत्कर्मकृत्वानसुकरंपरैः १६ एवंक्लेशैःसुबहुभिःक्लिश्यमानासुदुःखिता ॥ निवसाम्यार्ययाहीनाकृष्णधौम्यपुरःसरा १७ तइमेसिंहविक्रांतावीर्येणाभ्यधिकाःपरैः ॥ निहीनैःपरिक्लिश्यंतींसमुपेक्षंतिमांकथम् १८ एतादृशानिदुःखानिसहंतीदुर्बलीयसाम् ॥ दीर्घकालंप्रदीप्ताऽस्मिपापानांपापकर्मणाम् १९ कुलेमहतिजाताऽस्मिदिव्येनविधिनाकिल ॥ पांडवानांप्रियाभार्यास्नुषापांडोर्महात्मनः १२० कचग्रहमनुप्राप्तासाऽस्मिकृष्णवरासती ॥ पंचानांपांडुपुत्राणांप्रेक्षतांमधुसूदन २१ इत्युक्त्वाप्रारुदत्कृष्णामुखंप्रच्छाद्यपाणिना ॥ पद्मकोशप्रकाशेनमृदुनामृदुभाषिणी २२ स्तनावपतितौपीनौसुजातौशुभलक्षणौ ॥ अभ्यवर्षतपांचालीदुःखजैरश्रुबिंदुभिः २३ चक्षुषीपरिमार्जंती निःश्वसंतीपुनःपुनः ॥ बाष्पपूर्णेनकंठेनक्रुद्धावचनमब्रवीत् २४ नैवमेपतयःसंतिनपुत्रानचबांधवाः ॥ नभ्रातरोनचपितानैवत्वंमधुसूदन २५ येमांविप्रकृतांक्षुद्रैरुपेक्षध्वंविशोकवत् ॥ नचमेशाम्यतेदुःखंकर्णोयत्प्राहसत्तदा २६ चतुर्भिःकारणैःकृष्णत्वयारक्ष्याऽस्मिनित्यशः ॥ संबंधाद्गौरवात्सख्यात्प्रभुत्वेनैवकेशव २७ ॥ वैशंपायनउवाच ॥ अथतामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे ॥ वासुदेवउवाच ॥ रोदिष्यंतिस्त्रियोह्येवंयेषांक्रुद्धाऽसिभाविनि ॥ बीभत्सुशरसंछन्नाञ्शोणितौघपरिप्लुतान् २८ निहतान्वल्लभान्वीक्ष्यशयानान्वसुधातले ॥ यत्समर्थंपांडवानांतत्करिष्यामिमाशुचः २९ सत्यंतेप्रतिजानामिराज्ञांराज्ञीभविष्यसि ॥ पतेद्द्यौर्हिमवान्शीर्येत्पृथिवीशकलीभवेत् १३० शुष्येत्तोयनिधिःकृष्णेनमेमोघंवचोभवेत् ॥ तच्छ्रुत्वाद्रौपदीवाक्यंप्रतिवाक्यमथाच्युतात् १३१ साचीकृतमवेक्षत्सापांचालीमध्यमंपतिम् ॥ आबभाषेमहाराजद्रौपदीमर्जुनस्तदा ३२ मारोदीःशुभताम्राक्षियदाहमधुसूदनः ॥ तथातद्भवितादेविनान्यथावरवर्णिनि ३३ ॥ धृष्टद्युम्नउवाच ॥ अहंद्रोणंहनिष्यामिशिखंडीतुपितामहम् ॥ दुर्योधनंभीमसेनःकर्णंहंताधनंजयः ३४ रामकृष्णौव्यपाश्रित्यअजेयाःस्मरणेस्वसः ॥ अपिवृत्रहणायुद्धेकिंपुनर्धृतराष्ट्रजैः ३५ ॥ वैशंपायनउवाच ॥ इत्युक्तेऽभिमुखावीरावासुदेवमुपास्थिताः ॥ तेषांमध्येमहाबाहुःकेशवोवाक्यमब्रवीत् १३६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिद्रौपद्याश्वासनेद्वादशोऽध्यायः ॥ १२ ॥

दुःखतःपांचालीसाचीकृतंवक्रीभूतंयथास्यात्तथामध्यमंपार्तिमेवावैक्षदितियतइत्यध्याहृत्ययोज्यं ३२ । ३३ । ३४ स्वसःहेभगिनि ३५ । १३६ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेद्रौपदीसांत्वनेद्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ ॥

निरूपितास्साधनाब्रह्मविद्या संप्रतिभगवत्स्मरणमेवतत्सान्निध्यहेतुः सान्निध्यंचसर्वापत्तरणकृदितिभंग्यंतरेणप्रतिपाद्यते नैतदित्यादिनाऽध्यायेन । यदहंद्वारकायांनवद्वारवत्यांदेहनगर्यांतवमांचिंतयतःसन्निहितः स्यांतर्हि एतत् कृच्छ्रंवनवाससंकटं भवान्नानुप्राप्तःस्यात् यथाद्रौपदीकृच्छ्रकालेमांस्मृतवती वस्त्रराशिप्रदानेनमयासभायांकृच्छ्रान्मोचिता तथात्वमप्यक्षपातनकाले मां यदिस्मरेस्तर्हिनैतत्कृच्छ्रंप्राप्नुयाः प्रत्युततत्रैवजयःस्यादितिभावः १ अनाहूतोऽपि स्वक्षेमार्थमप्रार्थितोऽपिवारयेयं द्यूतमंतर्यामित्वेन कथापक्षेत्वृजुरेवार्थः २ बहिर्यामित्वेनापिद्यूतवारणोपायमाह भीष्मेतिद्वाभ्याम् ३ राजेंद्रधृतराष्ट्र तवपुत्राणांद्यूतेनालमितिवैचित्रवीर्यादीन्प्रतित्वन्निमित्तं हेप्रभोयुधिष्ठिर अहंतत्रद्यूतेदोषानचक्षं व्यक्तंकथितवान्स्यामितिसंबंधः ४ वीरसेनसुतःनलः यैःअक्षैरितिशेषः ५ सातत्यमविच्छेदंप्रसंगस्यद्यूतक्रीडायाः हीयमानोऽ

वासुदेवउवाच ॥ नैतत्कृच्छ्रमनुप्राप्तोभवान्स्याद्वसुधाधिप ॥ यद्यहंद्वारकायांस्यांराजन्सन्निहितःपुरा १ आगच्छेयमहंद्यूतमनाहूतोपिकौरवैः ॥ आंबिकेयेनदुर्द्धर्षराज्ञादुर्योधनेनच ॥ वारयेयमहंद्यूतंबहून्दोषान्प्रदर्शयन् २ भीष्मद्रोणौसमानाय्यकृपंबाल्हीकमेवच ॥ वैचित्रवीर्यंराजानमलंद्यूतेनकौरव ३ पुत्राणांतवराजेंद्रत्वन्निमित्तमितिप्रभो ॥ तत्राचक्षमहंदोषान्यैर्भवान्व्यतिरोपितः ४ वीरसेनसुतोयैस्तुराज्यात्प्रभ्रंशितःपुरा ॥ अतर्कितविनाशश्चदेवनेनविशांपते ५ सातत्यंचप्रसंगस्यवर्णयेयंयथातथम् ६ स्त्रियोऽक्षामृगयापानमेतत्कामसमुत्थितम् ॥ दुःखंचतुष्टयंप्रोक्तंयैर्नरोभ्रश्यतेश्रियः ७ तत्रसर्वत्रवक्तव्यंमन्यंतेशास्त्रकोविदाः ॥ विशेषतश्चवक्तव्यंद्यूतेपश्यंतितद्विदः ८ एकाहाद्द्रव्यनाशोऽत्रध्रुवंव्यसनमेवच ॥ अभुक्तनाशश्चार्थानांवाक्पारुष्यंचकेवलम् ९ एतच्चान्यच्चकौरव्यप्रसंगिकटुकोदयम् ॥ द्यूतेब्रूयांमहाबाहोसमासाद्यांबिकासुतम् १० एवमुक्तोयदिमयागृह्णीयाद्वचनंमम ॥ अनामयंस्याद्धर्मश्चकुरूणांकुरुवर्द्धन ११ नचेत्सममराजेंद्रगृह्णीयान्मधुरंवचः ॥ पथ्यंचभरतश्रेष्ठनिगृह्णीयांबलेनतम् १२ अथैनमपनीतेनसुहृदोनामदुर्हृदः ॥ सभासदोऽनुवर्तेरंस्तांश्चहन्यांदुरोदरान् १३ असान्निध्यंतुकौरव्यममानर्तेष्वभूत्तदा ॥ येनेदंव्यसनंप्राप्ताभवंतोद्यूतकारितम् १४ सोऽहमेत्यकुरुश्रेष्ठद्वारकांपांडुनंदन ॥ अश्रौषंत्वांव्यसनिनंयुयुधानाद्यथातथम् १५ श्रुत्वैवचाहंराजेंद्रपरमोद्विग्नमानसः ॥ तूर्णमभ्यागतोऽस्मित्वांद्रष्टुकामोविशांपते १६ अहोकृच्छ्रमनुप्राप्ताःसर्वेस्मभरतर्षभ ॥ सोऽहंत्वांव्यसनेमग्नंपश्यामिसहसोदरैः १७ ॥ ॥ इ०म०भा०आ०प०अर्जुनाभिगमनप०वासुदेववाक्येत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ युधिष्ठिरउवाच ॥ असान्निध्यंकथंकृष्णतवासीद्वृष्णिनंदन ॥ क्वचासीद्विप्रवासस्तेकिंचाकार्षीःप्रवासतः १

पि जयाशयापुनःपुनर्दीव्यत्स्वैसर्गः ६ कामःरागः ७ वक्तव्यमधिगंतव्यंज्ञातव्यंगसर्थस्यवजेरिदंरूपं वचेरेववार्थांतरम् ८ तदेवाहएकाहादिति । व्यसनंराज्यभ्रंशादि अर्थानांधर्मार्थकामानांपुमर्थानाम् ९ । १० ११ । १२ अपनीतेनान्याये न दुरोदरान्द्यूतकारान् १३ आनर्त्तेष्वासमंतान्नर्त्तयंति तेषुधीविलासेषु पक्षेदेशविशेषेषु १४ कथांतरमवतारयितुंकथापक्षमेवानुसरति सोऽहमित्यादिना एत्यागत्य युयुधानात्सात्यकेः १५ । १६ । १७ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ असान्निध्यमिति । अत्रसंक्षेपविस्ताराभ्यांसौभवधउपाख्यायते तस्यतात्पर्यं संसारसागरमध्येद्वारकाख्येस्थूलसूक्ष्मदेहद्वयरूपेक्षेत्रे विस्मरणरूपाद्भगवदसंनिधानात् कामगमंमनोरथाख्यंसौभमारुह्यागतेनशाल्वाख्येनमहामोहेनशोकास्त्रैरुपद्रुतेसति प्रद्युम्नादिस्वरूपायज्ञादयोधर्मास्तंवारयितुमक्षमाअभूवन्–

ततोऽहं चित्तद्वारकामेस चिदात्मानंमामधिक्षिपंतंशाल्वमोहमहंब्रह्मविद्यास्त्रेणहतवान् तत्पुरंचमनोरथसौभंपातितवानिति । एवमेवयुद्धादिरूपकेणसर्वत्राख्यायिकातात्पर्यमुन्नेयं तथाचश्रुतिः 'द्वयाह प्राजापत्यादेवाश्चासुराश्च' इत्यादिनादेवासुरशब्दैः शमकामादीन्विवक्षित्वातद्युद्धरूपकेणाध्यात्मिकमर्थंनिरूपयतितद्वदिहापिज्ञेयं श्रुत्यनुसारित्वाद्भारतस्मृतेः १ । २ । ३ सरोषवशं रोषेणसहितंसामर्थ्यं । 'वशमिच्छाप्रभुत्वयोः' इतिविश्वः । दुरात्मवान्दुष्टचित्तः यद्वादुःस्थितःरोषवत्त्वात् आत्मवान्युद्धादौधृतिमान्सामर्थ्यवत्त्वात् दुःस्थितश्चासावात्मवांश्चेतिसमासः ४ इहस्थे

॥ कृष्णउवाच ॥ शाल्वस्यनगरंसौभंगतोऽहंभरतर्षभ ॥ निहंतुंकौरवश्रेष्ठतत्रमेशृणुकारणम् २ महातेजामहाबाहुर्यःसराजामहायशाः ॥ दमघोषात्मजोवीरःशिशुपालोमयाहतः ३ यज्ञेतेभरतश्रेष्ठराजसूयेऽर्हणांप्रति ॥ सरोषवशमापन्नोनामृष्यतदुरात्मवान् ४ श्रुत्वातंनिहतंशाल्वस्तीव्ररोषसमन्वितः ॥ उपायाद्द्वारकांशून्यामिहस्थेमयिभारत ५ सतत्रयोधितोराजन्कुमारैर्वृष्णिपुंगवैः ॥ आगतःकामगंसौभमाहत्यैवंनृशंसवत् ६ ततोवृष्णिप्रवीरांस्तान्बालान्हत्वाबहूंस्तदा ॥ पुरोद्यानानिसर्वाणिभेदयामासदुर्मतिः ७ उक्तवांश्चमहाबाहोक्वासौवृष्णिकुलाधमः ॥ वासुदेवःसमंदात्मावसुदेवसुतोगतः ८ तस्ययुद्धार्थिनोदर्पंयुद्धेनाशयिताऽस्म्यहम् ॥ आनर्त्ताःसत्यमाख्याततत्रगंताऽस्मियत्रसः ९ तंहत्वाविनिवर्तिष्येकंसकेशिनिषूदनम् ॥ अहत्वाननिवर्तिष्येसत्येनायुधमालभे १० क्वासौक्वासावितिपुनस्तत्रतत्रप्रधावति ॥ मयाकिलरणेयोद्धुंकांक्षमाणःससौभराट् ११ अद्यतंपापकर्माणंक्षुद्रंविश्वासघातिनम् ॥ शिशुपालवधामर्षाद्गमयिष्येयमक्षयम् १२ ममपापस्वभावेनभ्रातायेननिपातितः ॥ शिशुपालोमहीपालस्तंवधिष्येमहीपते १३ भ्राताबालश्चराजाचनचसंग्राममूर्धनि ॥ प्रमत्तश्चहतोवीरस्तंहनिष्येजनार्दनम् १४ एवमादिमहाराजविलप्यदिवमास्थितः ॥ कामगेनससौभेनक्षिप्त्वामांकुरुनंदन १५ तमश्रौषमहंगत्वायथावृत्तःसदुर्मतिः ॥ मयिकौरव्यदुष्टात्मामार्तिकावतकोनृपः १६ ततोऽहमपिकौरव्यरोषव्याकुलमानसः ॥ निश्चित्यमनसाराजन्वधायास्यमनोदधे १७ आनर्त्तेषुविमर्दंचक्षेपंचात्मनिकौरव ॥ प्रवृद्धमवलेपंचतस्यदुष्कृतकर्मणः १८ ततःसौभवधायाहंप्रतस्थेपृथिवीपते ॥ समयासागरावर्त्तेदृष्टआसीत्परीप्सता १९ ततःप्रध्माप्यजलजंपांचजन्यमहंनृप ॥ आहूयशाल्वंसमरेयुद्धायसमवस्थितः २० तन्मुहूर्त्तमभूद्युद्धंतत्रमेदानवैःसह ॥ वशीभूताश्चमेसर्वेभूतलेचनिपातिताः २१ एतत्कार्यंमहाबाहोयेनाहंनागमंतदा ॥ श्रुत्वैवहास्तिनपुरंद्यूतंचाविनयोत्थितम् ॥ द्रुतमागतवान्युष्मान्द्रष्टुकामःसुदुःखितान् २२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणि सौभवधोपाख्यानेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥

त्वत्समीपस्थे ५ सौभंसुष्ठुभांतितेसुभाःकांचनादयोधातवस्तज्जम् ६ । ७ । ८ आनर्त्ताःभोआनर्त्तदेश्याः आख्यातकथयत ९ । १० । ११ । १२ । १३ । १४ क्षिप्त्वाकुत्सयित्वा १५ मार्तिकावतकः एतन्नामकदेशवासी १६ । १७ अवलेपंगर्वंज्ञात्वेतिशेषः १८ सागरस्यआसमंताद्वर्त्तोवर्त्तनंयस्मिन् सागरद्वीपेइत्यर्थः १९ जलजंशंखं २० । २१ द्यूतंश्रुत्वैवहास्तिनपुरमागतवान् २२ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥

अर्थाधीनौधर्मकामावर्थस्तुस्वराज्यरक्षापरराज्यावमर्दाभ्यांराज्ञाप्राप्यतइतितावेवशाल्वप्रसंगात्सम्यक्श्रोतुकामःपृच्छति वासुदेवेति । कथ्यतःकथयतः कंड्वादियगंतात्शत्रंतस्यरूपम् १ श्रुतश्रवाशिशुपालमातातज्जंश्रौतश्रवं उपायात्उपागतः २ अरुंधत्सेनया वैहायसंखेचरं व्यूह्य स्वरक्षापरोपमर्दयोग्यरचनाविशेषेणस्थापयित्वाऽधिष्ठितःसम्यक्स्थितः ३ अभितःपरितउपरितश्चायुधानांसरणंनिःसरणमभिसारस्तेनसर्वेणाच्छिद्रेण । सर्वाभ्योदिग्भ्योयुगपदविरलायुधसमूहागमेनेत्यर्थः ४ पताकाध्वजांचलः । तोरणानिबहिर्द्वाराणि चक्राणि योधगणाः हुडास्तदाश्रयस्थानानिभाषायां 'बुरुज' संज्ञानि अन्येतुविण्मूत्रोत्सर्जनशृंगाणिहुडाइत्याहुः उदाहरंतिच । 'कल्प्यंतेहुडशृंगाणिरथस्योपरिसूरिभिः ॥ विण्मूत्रस्पर्शशुद्ध्यर्थंकरादिस्पर्शउद्यते' इति । यंत्राण्याग्नेयौषधबलेनदृषत्पिंडोत्क्षेपणानि महांति 'कमान' संज्ञानि । क्षुद्राणिसीसगुलिकोत्क्षेपणानि 'बंदूख' संज्ञानि । खनकाःसुरंगद्वारागुप्तमार्गकर्तारः ५ उपशल्यालोहमुखाःकीलास्तद्युक्ताःप्रतोल्योरथ्यामार्गायस्यांसा । अट्टालकाउपरिगृहाः । गोपुराणिपुरद्वाराणि साट्टानिअट्टेनान्नेनसहितानिअट्टालकादीनियस्यांसा । साट्टेतिविशेषणंउपशल्यस्यग्रामांतस्यरथ्यायाश्चावृत्त्यासंबध्यते । चक्रग्रहणीसैन्यनिग्राहिका 'मोर्चा' इति म्लेच्छप्रसिद्धा । सोल्कालातावपोथिका

॥ युधिष्ठिरउवाच ॥ वासुदेवमहाबाहोविस्तरेणमहामते ॥ सौभस्यवधमाचक्ष्वनहितृप्यामिकथ्यतः १ ॥ वासुदेवउवाच ॥ हतंश्रुत्वामहाबाहोमयाश्रौतश्रवंनृप ॥ उपायाद्भरतश्रेष्ठशाल्वोद्वारवतींपुरीम् २ अरुंधत्तांसुदुष्टात्मासर्वतःपांडुनंदन ॥ शाल्वोवैहायसंचापितत्पुरंव्यूह्यधिष्ठितः ३ तत्रस्थोऽथमहीपालोयोधयामासतांपुरीम् ॥ अभिसारेणसर्वेणतत्रयुद्धमवर्त्तत ४ पुरीसमंताद्विहितासपताकासतोरणा ॥ सचक्रासहुडाचैवसयंत्रखनकातथा ५ सोपशल्यप्रतोलीकासाट्टाट्टालकगोपुरा ॥ सचक्रग्रहणीचैवसोल्कालातावपोथिका ६ सोष्ट्रिकाभरतश्रेष्ठसभेरीपणवानका ॥ सतोमरांकुशाराजन्सशतघ्नीकलांगला ७ सभुशुंड्यश्मगुडकासायुधासपरश्वधा ॥ लोहचर्मवतीचापिसाग्निःसगुडशृंगिका ८ शास्त्रदृष्टेनविधिनासुयुक्ताभरतर्षभ ॥ रथैरनेकैर्विविधैर्गदसांबोद्धवादिभिः ९ पुरुषैःकुरुशार्दूलसमर्थैःप्रतिवारणे ॥ अतिख्यातकुलैर्वीरैर्दृष्टवीर्यैश्चसंयुगे १० मध्यमेनचगुल्मेनरक्षिभिःसासुरक्षिता ॥ उत्क्षिप्तगुल्मैश्चतथाहयैश्चसपताकिभिः ११ आघोषितंचनगरेनपातव्यासुरेतिवै ॥ प्रमादंपरिरक्षद्भिरुग्रसेनोद्धवादिभिः १२ प्रमत्तेष्वभिघातंहिकुर्याच्छाल्वोनराधिपः ॥ इतिकृत्वाऽप्रमत्तास्तेसर्वेवृष्ण्यंधकाःस्थिताः १३ आनर्ताश्चतथासर्वेनटानर्त्तकगायनाः ॥ बहिर्निर्वासिताःक्षिप्रंरक्षद्भिर्वित्तसंचयम् १४ संक्रमाभेदिताःसर्वेनावश्चप्रतिषेधिताः ॥ परिखाश्चापिकौरव्यकीलैःसुनिचिताःकृताः १५

सोल्कमलातंज्वालासहितमुल्मुकंयस्यांसासोल्कालाता अवबद्धाःपोथिकायंत्रबद्धाःकाष्ठपाषाणादयोरिपूणामुपरिपातनाययस्यामितिप्राञ्चः । उल्केवोल्काप्राणहरत्वाद्यंत्रोत्क्षिप्तोगोलः । अलातंसकाष्ठदंडंलोहमयमाग्नेयंप्रहरणं 'बाण' इतिभाषायांप्रसिद्धं । तयोरप्रत्याख्येयगत्योरपिपोथिकाःपातयित्र्योमंत्रमय्यःशक्तयःकर्णायेंद्रदत्तशक्तिसदृशास्तद्युक्ताःसोल्कालातावपोथिकाः ६ उष्ट्रिकामृच्चर्ममयानिभांडानि । सर्ष्टिकेतिपाठेऋष्टयआयुधविशेषाः ७ अश्मगुडकावर्तुलीकृताःपाषाणाःलोहमयानिचर्माणिकमठपृष्ठाकाराणि प्रहारवारकाणि साग्निःआग्नेयौषधसहिता गुडागोलकाःशृंगिकास्तदुत्क्षेपकयंत्राणि । शत्रूणामुपरिपातनायतप्तोगुडोद्रवीभूतोयत्रशिखरेस्थाप्यतेतत्सहितेसन्ये ८ । ९ । १० मध्यमोगुल्मःयत्रस्थितेनयोधसंघेनचतुर्दिगवस्थितारिपवोद्रष्टुंबाणादिनाप्रहर्तुंचशक्यतेतादृशमुच्चस्थानं । उत्क्षिप्तगुल्मैःपरकीयगुल्मोच्चाटनकरैः ११ । १२ अप्रमत्ताइतिच्छेदः १३ । १४ संक्रमानदीसेतवः कीलैःशूलैः सुनिचिताःव्याप्ताः १५

उदपानाःकूपाः । 'अंबरीषोभवेद्भ्राष्ट्रः' इति विश्वः । गुप्ताग्निरित्यन्ये । विषमालोहकंटकाद्याकीर्णा १६ । १७ । १८ । १९ अनुरथ्यासुप्रतिरथ्यं २० वेतनंधनं भक्तंनित्यभोजनं कृतोपधानंकृतविशेषं २१ कुप्यंस्वर्णरूप्येतरद्धनंताम्रादि ग्रहोरणोद्यमस्तमनुलक्षीकृत्यभृतोऽनुग्रहभृतस्तत्कालस्वीकृतोनकश्चित् किंतुचिरसंभृताएव कृपाभृतोनकिंतुशौर्यभृतएवेतिवा २२ भूरिदक्षिणाबहवोदाक्षिण्ययुक्तायस्यां आहुकेनउग्रसेनेन २३ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेपंचदशोऽध्यायः ॥ १५ ॥ ॥ तामिति १ समेदेशे चतुरंगंचत्वारिरथनागाश्वपादातान्यंगानियस्य २ । ३ पंथानःपुरेधान्याद्यागमन

उदपानाःकुरुश्रेष्ठतथैवाप्यंबरीषकाः ॥ समंतात्क्रोशमात्रंचकारिताविषमाचभूः १६ प्रकृत्याविषमंदुर्गंप्रकृत्याचसुरक्षितम् ॥ प्रकृत्याचायुधोपेतंविशेषेणत दाऽनघ १७ सुरक्षितंसुगुप्तंचसर्वायुधसमन्वितम् ॥ तत्पुरंभरतश्रेष्ठयथेंद्रभवनंतथा १८ नचामुद्रोऽभिनिर्यातिनचामुद्रःप्रवेश्यते ॥ वृष्ण्यंधकपुरेराजंस्तदासौभसमा गमे १९ अनुरथ्यासुसर्वासुचत्वरेषुचकौरव ॥ बलंबभूवराजेंद्रप्रभूतगजवाजिमत् २० दत्तवेतनभक्तंचदत्तायुधपरिच्छदम् ॥ कृतोपधानंचतदाबलमासीन्महाभुज २१ नकुप्यवेतनीकश्चिन्नचातिक्रांतवेतनी ॥ नानुग्रहभृतःकश्चिन्नचादृष्टपराक्रमः २२ एवंसुविहिताराजन्द्वारकाभूरिदक्षिणा ॥ आहुकेनसुगुप्ताचराज्ञाराजीवलोचन २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिसौभवधोपाख्यानेपंचदशोऽध्यायः १५ ॥ ॥ वासुदेवउवाच ॥ तांतूपयातोराजेंद्रशाल्वःसौ भपतिस्तदा ॥ प्रभूतनरनागेनबलेनोपविवेशह १ समेनिविष्टासासेनाप्रभूतसलिलाशये ॥ चतुरंगबलोपेताशाल्वराजाभिपालिता २ वर्जयित्वाश्मशानानिदेवता यतनानिच ॥ वल्मीकांश्चैत्यवृक्षांश्चतन्निविष्टमभूद्बलम् ३ अनीकानांविभागेनपंथानःसंवृताभवन् ॥ प्रवणायचनैवासन्शाल्वस्यशिबिरेनृप ४ सर्वायुधसमोपेतंसर्वश स्त्रविशारदम् ॥ रथनागाश्वकलिलंपदातिध्वजसंकुलम् ५ तुष्टपुष्टबलोपेतंवीरलक्षणलक्षितम् ॥ विचित्रध्वजसन्नाहंविचित्ररथकार्मुकम् ६ सन्निवेश्यचकौरव्यद्वार कायांनरर्षभ ॥ अभिसारयामासतदावेगेनपतगेंद्रवत् ७ तदापतंतंसंदृश्यबलंशाल्वपतेस्तदा ॥ निर्याययोधयामासुःकुमारावृष्णिनंदनाः ८ असहंतोऽभियानंतच्छा ल्वराजस्यकौरव ॥ चारुदेष्णश्चसांबश्चप्रद्युम्नश्चमहारथः ९ तेरथैर्दंशिताःसर्वेविचित्राभरणध्वजाः ॥ संसक्ताःशाल्वराजस्यबहुभिर्योधपुंगवैः १० गृहीत्वाकार्मुकंसां बःशाल्वस्यसचिवंरणे ॥ योधयामाससंहृष्टःक्षेमवृद्धिंचमूपतिम् ११ तस्यबाणमयंवर्षंजांबवत्याःसुतोमहत् ॥ मुमोचभरतश्रेष्ठयथावर्षंसहस्रदृक् १२ तद्बाणवर्षंतुमुलं विषेहेसचमूपतिः ॥ क्षेमवृद्धिर्महाराजहिमवानिवनिश्चलः १३ ततःसांबायराजेंद्रक्षेमवृद्धिरपिस्वयम् ॥ मुमोचमायाविहितंशरजालंमहत्तरम् १४ ततोमायामयं जालंमाययैवविदीर्यसः ॥ सांबःशरसहस्रेणरथमस्याभ्यवर्षत १५

मार्गाः प्रवणायगूढभावेननिम्नगमनाय ४ कलिलंसंकटं ५ । ६ अभिसारयामासनगरसमीपंगमयामास सैन्यं पतगेंद्रवत् सौभंचोपरितःअभिसारयामास ७ आपतंतमापतत् निर्यायनिर्गत्य पुराद्बहिः ८ । ९ दंशिताःसंनद्धाः १० । ११ । १२ । १३ । १४ । १५

अपायात्पलायितः जवनैःशीघ्रगैः १६ । १७ अभिपन्नःआभिमुख्येनासादितः १८ व्याविद्धय[illegible]मयित्वा १९ रुग्णःक्षुण्णश्चगजादिपदाघातैः २० । २१ । २२ । २३ । २४ । २५ । २६ सौभेन खचरेणपुरेण २७ । २८ निर्यायनिर्गत्य अवस्थाप्यआश्वास्य आनर्त्तानांद्वारकावासिनां २९ । ३० धनुर्भुजविनिर्मुक्तैःधनुषःभुजेनकौटिल्येनअसाकर्षणजेननिर्मुक्तैः । भुजकौटिल्येतुदादिः ३१ नश्यति

ततःसविद्धःसांबेनक्षेमवृद्धिश्चमूपतिः ॥ अपायाज्जवनैरश्वैःसांबबाणप्रपीडितः १६ तस्मिन्विप्रद्रुतेक्रूरेशाल्वस्याथचमूपतौ ॥ वेगवान्नामदैतेयःसुतंमेऽभ्यद्रवद्बली १७ अभिपन्नस्तुराजेंद्रसांबोवृष्णिकुलोद्वहः ॥ वेगंवेगवतोराजंस्तस्थौवीरोविधारयन् १८ सवेगवतिकौंतेयसांबोवेगवतींगदाम् ॥ चिक्षेपतरसावीरोव्याविद्धयसत्यविक्रमः १९ तयात्वभिहतोराजन्वेगवान्न्यपतद्भुवि ॥ वातरुग्णइवक्षुण्णोजीर्णमूलोवनस्पतिः २० तस्मिन्विनिहतेवीरेगदानुन्नेमहासुरे ॥ प्रविश्यमहतींसेनांयोधयामासमेसुतः २१ चारुदेष्णेनसंसक्तोविविंध्योनामदानवः ॥ महारथःसमाज्ञातोमहाराजमहाधनुः २२ ततःसुतुमुलंयुद्धंचारुदेष्णविविंध्ययोः ॥ वृत्रवासवयोराजन्यथापूर्वंतथाऽभवत् २३ अन्योन्यस्याभिसंक्रुद्धावन्योन्यंजघ्नतुःशरैः ॥ विनदंतौमहारावान्सिंहाविवमहाबलौ २४ रौक्मिणेयस्ततोबाणमग्न्यर्कोपमवर्चसम् ॥ अभिमंत्र्यमहास्त्रेणसंदधेशत्रुनाशनम् २५ सविविंध्यायसक्रोधःसमाहूयमहारथः ॥ चिक्षेपमेसुतोराजन्सगतासुरथापतत् २६ विविंध्यंनिहतंदृष्ट्वातांचविक्षोभितांचमूम् ॥ कामगेनससौभेनशाल्वःपुनरुपागमत् २७ ततोव्याकुलितंसर्वंद्वारकावासितद्बलम् ॥ दृष्ट्वाशाल्वंमहाबाहोसौभस्थंनृपतेतदा २८ ततोनिर्यायकौरव्यअवस्थाप्यचतद्बलम् ॥ आनर्त्तानांमहाराजप्रद्युम्नोवाक्यमब्रवीत् २९ सर्वेभवंतस्तिष्ठंतुसर्वेपश्यंतुमांयुधि ॥ निवारयंतंसंग्रामेबलात्सौभंसराजकम् ३० अहंसौभपतेःसेनामायसैर्भुजगैरिव ॥ धनुर्भुजविनिर्मुक्तैर्नाशयाम्यद्ययादवाः ३१ आश्वसध्वंनभीःकार्यासौभराडद्यनश्यति ॥ मयाऽभिपन्नोदुष्टात्मासससौभोविनशिष्यति ३२ एवंब्रुवतिसंहृष्टेप्रद्युम्नेपांडुनंदन ॥ धिष्ठितंतद्बलंवीरयुयुधेचयथासुखम् ३३ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिसौभवधोपाख्यानेषोडशोऽध्यायः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ वासुदेवउवाच ॥ एवमुक्त्वारौक्मिणेयोयादवान्भरतर्षभ ॥ दंशितैर्हरिभिर्युक्तंरथमास्थायकांचनम् १ उच्छ्रित्यमकरंकेतुंव्यात्ताननमिवांतकम् ॥ उत्पतद्भिरिवाकाशंतैर्हयैरन्वयात्परान् २ विक्षिपन्नादयंश्चापिधनुःश्रेष्ठंमहाबलैः ॥ तूणखड्गधरःशूरोबद्धगोधांगुलित्रवान् ३ सविद्युच्छुरितंचापंविहरन्वैतलात्तलम् ॥ मोहयामासदैतेयान्सर्वान्सौभनिवासिनः ४ तस्यविक्षिपतश्चापंसंदधानस्यचासकृत् ॥ नांतरंददृशेकश्चिन्निघ्नतःशात्रवान्रणे ५

आशुमरिष्यति । वर्त्तमानसामीप्येवर्त्तमानवद्वेतिलट् ३२ धिष्ठितमधिष्ठितं । धिषावचनप्रागल्भ्येनस्थितमितिवा ३३ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेषोडशोऽध्यायः ॥ १६ ॥ ॥ एवमुक्त्वेति । हरिभिरश्वैः १ अन्वयादुपगतः २ विक्षिपन् परान्धिकुर्वन् महाबलैर्हयैः ३ समानंविद्युच्छुरितेनविद्युत्कंपनेनेतिसविद्युच्छुरितं तलात्तलंसव्यापसव्यहस्ततलपरिवर्त्तेन ४ विक्षिपतःकर्षतः ५

विकल्पतेभिद्यते ६ जलेचरोभीनःतिमिर्मीनःवाहमुख्येरथश्रेष्ठे ७ । ८ । ९ । १० । ११ सानुकर्षःरथाधस्थकाष्ठमनुकर्षः सरथःतूणवान् १२ । १३ । १४ । १५ आपततेतिविसर्गलोपआर्षः १६ । १७

मुखस्यवर्णोनविकल्पतेऽस्यचेलुश्चगात्राणिनरा पितस्य ॥ सिंहोन्नतंचाप्यभिगर्जतोऽस्यशुश्रावलोकोऽद्भुतवीर्यमग्र्यम् ६ जलेचरःकांचनयष्टिसंस्थोव्यात्ताननः सर्वतिमिप्रमाथी ॥ वित्रासयन्राजतिवाहमुख्येशाल्वस्यसेनाप्रमुखेध्वजाग्र्यः ७ ततस्तूर्णंविनिष्पत्यप्रद्युम्नःशत्रुकर्षणः ॥ शाल्वमेवाभिदुद्रावविधित्सुःकलहंनृप ८ अभियानंतुवीरेणप्रद्युम्नेनमहारणे ॥ नामर्षयतसंक्रुद्धःशाल्वःकुरुकुलोद्वह ९ सरोषमदमत्तोवैकामगादवरुह्यच ॥ प्रद्युम्नंयोधयामासशाल्वःपरपुरंजयः १० तयोःसुतुमुलंयुद्धंशाल्ववृष्णिप्रवीरयोः ॥ समेतादद्दशुर्लोकाबलिवासवयोरिव ११ तस्यमायामयोवीररथोहेमपरिष्कृतः ॥ सपताकःसध्वजश्चसानुकर्षःसतूणवान् १२ सतंरथवरंश्रीमान्समारुह्यकिलप्रभो ॥ मुमोचबाणान्कौरव्यप्रद्युम्नायमहाबलः १३ ततोबाणमयंवर्षंव्यसृजत्तरसारणे ॥ प्रद्युम्नोभुजवेगेनशाल्वंसंमोहयन्निव १४ सतैरभिहतःसंख्येनामर्षयतसौभराट् ॥ शरान्दीप्ताग्निसंकाशान्मुमोचतनयेमम १५ तानापततबाणौघान्सचिच्छेदमहाबलः ॥ ततश्चान्यान्शरान्दीप्तान्प्रचिक्षेपसुतेमम १६ सशाल्वबाणैराजेंद्रविद्धोरुक्मिणिनंदनः ॥ मुमोचबाणंत्वरितोमर्मभेदिनमाहवे १७ तस्यवर्मविभिद्याशुसबाणोमत्सुतेरितः ॥ विव्याधहृदयंपत्री समुन्मोहपपातच १८ तस्मिन्निपतितेवीरेशाल्वराजेविचेतसि ॥ संप्राद्रवन्दानवेंद्रादारयंतोवसुंधराम् १९ हाहाकृतमभूत्सैन्यंशाल्वस्यपृथिवीपते ॥ नष्टसंज्ञेनिपतितेतदासौभपतौनृपे २० ततउत्थायकौरव्यप्रतिलभ्यचचेतनाम् ॥ मुमोचबाणान्सहसाप्रद्युम्नायमहाबलः २१ तैःसविद्धोमहाबाहुःप्रद्युम्नःसमरेस्थितः ॥ शत्रुदेशेभृशंवीरोव्यवासीदद्रथेतदा २२ तंसविद्ध्वामहाराजशाल्वोरुक्मिणिनंदनम् ॥ ननादसिंहनादंवैनादेनापूरयन्महीम् २३ ततोमोहंसमापन्नेतनयेममभारत ॥ मुमोचबाणांस्त्वरितःपुनरन्यान्दुरासदान् २४ सतैरभिहतोबाणैर्बहुभिस्तेनमोहितः ॥ निश्चेष्टःकौरवश्रेष्ठप्रद्युम्नोऽभूद्रणाजिरे २५ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिसौभवधोपाख्यानेसप्तदशोऽध्यायः ॥ १७ ॥ वासुदेवउवाच ॥ शाल्वबाणार्दितेतस्मिन्प्रद्युम्नेबलिनांवरे ॥ वृष्णयोभग्नसंकल्पाविव्यथुःपृतनागताः १ हाहाकृतमभूत्सर्वंवृष्ण्यंधकबलंततः ॥ प्रद्युम्नेमोहितेराजन्परेचमुदिताभृशम् २ तंतथामोहितंदृष्ट्वासारथिर्जवनैर्हयैः ॥ रणादपाहरत्तूर्णंशिक्षितोदारुकिस्तदा ३ नातिदूरापयातेतुरथेरथवरप्रणुत् ॥ धनुर्गृहीत्वायंतारंलब्धसंज्ञोऽब्रवीदिदम् ४ सौतेकिंतेव्यवसितंकस्माद्यासिपराङ्मुखः ॥ नैषवृष्णिप्रवीराणामाहवेधर्मउच्यते ५

१८ । १९ । २० । २१ जत्रुदेशेकंठमूलेव्यवासीदद्रिशेषेणावसादंप्राप्तः २२ । २३ । २४ । २५ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीये भारतभावदीपेसप्तदशोऽध्यायः ॥ १७ ॥ ॥
॥ ॥ ॥ शाल्वेति १ । २ । ३ । ४ । ५

॥ १८ ॥ अ॰ ॥ १८ ॥

कच्चित्सौतेनतेमोहः शाल्वंदृष्ट्वामहाहवे ॥ विषादोवारणंदृष्ट्वाब्रूहिमेत्वंयथातथम् ६ ॥ सौतिरुवाच ॥ जनार्दनेनमेमोहोनापिमांभयमाविशत् ॥ अतिभारंतुते मन्येशाल्वंकेशवनंदन ७ सोपयामिशनैर्वीरबलवानेषपापकृत् ॥ मोहितश्चरणेशूरोरक्ष्यःसारथिनारथी ८ आयुष्मंस्त्वंमयानित्यंरक्षितव्यस्त्वयाऽप्यहम् ॥ रक्षितव्योरथीनित्यमितिकृत्वाऽपयाम्यहम् ९ एकश्चासिमहाबाहोबहवश्चापिदानवाः ॥ नसमंरौक्मिणेयाहंरणेमत्वाऽपयामिवै १० एवंब्रुवतिसूतेतुतदामकरकेतुमान् ॥ उवाचसूतंकौरव्यनिवर्त्तयरथंपुनः ११ दारुकात्मजमैवंत्वंपुनःकार्षीःकथंचन ॥ व्यपयानंरणात्सौतेजीवतोममकर्हिचित् १२ नसवृष्णिकुलेजातोयोवैत्यजतिसंगरम् ॥ योवानिपतितंहंतितवास्मीतिचवादिनम् १३ तथास्त्रियंचयोहंतिबालंवृद्धंतथैवच ॥ विरथंविप्रकीर्णंचभग्नशस्त्रायुधंतथा १४ त्वंचसूतकुलेजातोविनीतःसूतकर्मणि ॥ धर्मज्ञश्चासिवृष्णीनामाहवेष्वपिदारुके १५ सजानंश्चरितंकृत्स्नंवृष्णीनांपृतनामुखे ॥ अपयानंपुनःसौतेमैवंकार्षीःकथंचन १६ अपयातंहतंपृष्ठेभ्रांतंरणपलायितम् ॥ गदाग्रजोदुराधर्षःकिंमांवक्ष्यतिमाधवः १७ केशवस्याग्रजोवाऽपिनीलवासामदोत्कटः ॥ किंवक्ष्यतिमहाबाहुर्बलदेवःसमागतः १८ किंवक्ष्यतिशिनेर्नप्तानरसिंहोमहाधनुः ॥ अपयातंरणात्सूतसांबश्चसमितिंजयः १९ चारुदेष्णश्चदुर्धर्षस्तथैवगदसारणौ ॥ अक्रूरश्चमहाबाहुःकिंमांवक्ष्यतिसारथे २० शूरंसंभावितंशांतंनित्यंपुरुषमानिनम् ॥ स्त्रियश्चवृष्णिवीराणांकिंमांवक्ष्यंतिसंहताः २१ प्रद्युम्नोऽयमुपायातिभीतस्त्यक्त्वामहाहवम् ॥ धिगेनमितिवक्ष्यंतिनतुवक्ष्यंतिसाध्विति २२ धिग्वाचापरिहासोऽपिममवामद्विधस्यवा ॥ मृत्युनाऽभ्यधिकःसौतेसत्वंमाव्यपयाःपुनः २३ भारंहिमयिसंन्यस्य यातोमधुनिहाहरिः ॥ यज्ञंभारतसिंहस्यनहिशक्योऽद्यमर्षितुम् २४ कृतवर्मामयावीरोनिर्यास्यन्नेववारितः ॥ शाल्वंनिवारयिष्येऽहंतिष्ठत्वमितिसूतज २५ सचरांभावयन्मांवैनिवृत्तोहृदिकात्मजः ॥ तंसमेत्यरणंत्यक्त्वाकिंवक्ष्यामिमहारथम् २६ उपयांतंदुराधर्षंशंखचक्रगदाधरम् ॥ पुरुषंपुंडरीकाक्षंकिंवक्ष्यामिमहाभुजम् २७ सात्यकिंबलदेवंचयेचान्येंऽधकवृष्णयः ॥ मयास्पर्धंतिसततंकिंनुवक्ष्यामितानहम् २८ त्यक्त्वारणमिमंसौतेपृष्ठतोऽभ्याहतःशरैः ॥ त्वयाऽपनीतोविवशोनजीवेयंकथंचन २९ सनिवर्त्तरथेनाशुपुनर्दारुकनंदन ॥ नचैतदेवंकर्त्तव्यमथापत्सुकथंचन ३० नजीवितमहंसौतेबहुमन्येकथंचन ॥ अपयातोरणाद्भीतःपृष्ठतोऽभ्याहतःशरैः ३१ कदापिसूतपुत्रत्वंजानीषेमांभयार्दितम् ॥ अपयातंरणंहित्वायथाकापुरुषंतथा ३२ नयुक्तंभवतात्यक्तुंसंग्रामंदारुकात्मज ॥ मयियुद्धार्थिनिभृशंसत्वंयाहियतोरणम् ३३ ॥ ॥ इ॰म॰भा॰आ॰प॰अ॰प॰सौभवधोपाख्यानेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥

इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एवमुक्तइति १ । २ । ३ । ४ । ५ । ६ । ७ यमकानिसदृशानिइतराणिविसदृशानि ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

॥ वासुदेवउवाच ॥ एवमुक्तस्तुकौंतेयसूतपुत्रस्ततोऽब्रवीत् ॥ प्रद्युम्नंबलिनांश्रेष्ठंमधुरंश्लक्ष्णमंजसा १ नमेभयंरौक्मिणेयसंग्रामेयच्छतोहयान् ॥ युद्धज्ञोऽस्मिच
वृष्णीनांनात्रकिंचिदतोऽन्यथा २ आयुष्मन्नुपदेशस्तुसारथ्येवर्ततांस्मृतः ॥ सर्वार्थेषुरथीरक्ष्यस्त्वंचापिभृशपीडितः ३ त्वंहिशाल्वप्रयुक्तेनशरेणाभिहतोभृशम् ॥
कश्मलाभिहतोवीरततोऽहमपयातवान् ४ सत्वंसात्वतमुख्याद्यलब्धसंज्ञोयदृच्छया ॥ पश्यमेहयसंयानेशिक्षांकेशवनंदन ५ दारुकेणाहमुत्पन्नोयथावच्चैवशिक्षितः ॥
वीतभीःप्रविशाम्येतांशाल्वस्यप्रथितांचमूम् ६ ॥ वासुदेवउवाच ॥ एवमुक्त्वाततोवीरहयान्संचोद्यसंगरे ॥ रश्मिभिस्तुसमुद्यम्यजवेनाभ्यपतत्तदा ७ मंडलानिवि
चित्राणियमकानीतराणिच ॥ सव्यानिचविचित्राणिदक्षिणानिचसर्वशः ८ प्रतोदेनाहताराजन्रश्मिभिश्चसमुद्यताः ॥ उत्पतंतइवाकाशेव्यचरंस्तेहयोत्तमाः ९ तेहस्त
लाघवोपेतंविज्ञायनृपदारुकिम् ॥ दह्यमानाइवतदानास्पृशंश्चरणैर्महीम् १० सोपसव्यांचमूंतस्यशाल्वस्यभरतर्षभ ॥ चकारनातियत्नेनतदद्भुतमिवाभवत् ११
अमृष्यमाणोऽपसव्यंप्रद्युम्नेनचसौभराट् ॥ यंतारमस्यसहसात्रिभिर्बाणैःसमार्दयत् १२ दारुकस्यसुतस्तत्रबाणवेगमचिंतयन् ॥ भूयएवमहाबाहोप्रययावपसव्यतः
१३ ततोबाणान्बहुविधान्पुनरेवससौभराट् ॥ मुमोचतनयेवीरममरुक्मिणिनंदने १४ तानप्राप्तान्शितैर्बाणैश्चिच्छेदपरवीरहा ॥ रौक्मिणेयःस्मितंकृत्वादर्शयन्हृ
स्तलाघवम् १५ छिन्नान्दृष्ट्वातुतान्बाणान्प्रद्युम्नेनचसौभराट् ॥ आसुरींदारुणींमायामास्थायव्यवसृजच्छरान् १६ प्रयुज्यमानमाज्ञायदैतेयास्त्रंमहाबलम् ॥ ब्रह्मास्त्र
णांतराच्छित्वासुमोचान्यान्पतत्रिणः १७ तेतदस्त्रंविधूयाशुविव्यधूरुधिराशनाः ॥ शिरस्युरसिवक्त्रेचसमुमोहपपातच १८ तस्मिन्निपतितेक्षुद्रेशाल्वेबाणप्रपीडिते ॥
रौक्मिणेयोपरंबाणंसंदधेशत्रुनाशनम् १९ तमर्चितंसर्वदाशार्हपूगैराशीविषाग्निज्वलनप्रकाशम् ॥ दृष्ट्वाशरंज्यामभिनीयमानंबभूवहाहाकृतमंतरिक्षम् २० ततोदेव
गणाःसर्वेसेंद्राःसहधनेश्वराः ॥ नारदंप्रेषयामासुःश्वसनंचमनोजवम् २१ तौरौक्मिणेयमागम्यवचोऽब्रूतांदिवौकसाम् ॥ नैषवध्यस्त्वयावीरशाल्वराजःकथंचन २२
संहरस्वपुनर्बाणमवध्योऽयंत्वयारणे ॥ एतस्यचशरस्याजौनावध्योऽस्तिपुमान्क्वचित् २३ मृत्युरस्यमहाबाहोरणेदेवकिनंदनः ॥ कृष्णःसंकल्पितोधात्रातन्मिथ्या
नभवेदिति २४ ततःपरमसंहृष्टःप्रद्युम्नःशरमुत्तमम् ॥ संजहारधनुःश्रेष्ठात्तूणेचैवन्यवेशयत् २५ ततउत्थायराजेंद्रशाल्वःपरमदुर्मनाः ॥ व्यपायात्सबलस्तूर्णं
प्रद्युम्नशरपीडितः २६ सद्वारकांपरित्यज्यक्रूरोवृष्णिभिरार्दितः ॥ सौभमास्थायराजेंद्रदिवमाचक्रमेतदा २७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्व
णिसौभवधोपाख्यानेएकोनविंशोऽध्यायः ॥ १९ ॥

२५ । २६ । २७ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

आनर्त्तेति १ । २ हृदिकात्मजंकृतवर्माणम् ३ । ४ । ५ । ६ । ७ । ८ । ९ त्रिःसामात्रिस्वरा नीचमंद्रतारभावेन त्रिःसमाहन्यतामित्यपिपठंति १० । ११ वाचयित्वास्त्रस्तिवादानितिशेषः १२ । १३ जितकाशिनाजयशोभिना । जिताः काशयोदेशविशेषायेनेतिवा तेहिशूरत्वेनातिप्रसिद्धाः काश्योवावैदेहोवेतिश्रुतिलिंगात् १४ मार्तिकावतंदेशविशेषमासदंप्राप्तः १५ सागरमंतिकात्सागरसमीपेअन्वयामनु

॥ वासुदेवउवाच ॥ आनर्त्तनगरंमुक्तंततोऽहमगमंतदा ॥ महाक्रतौराजसूयेनिवृत्तेनृपतेतव १ अपश्यंद्वारकांचाहंमहाराजहतत्विषम् ॥ निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् २ अनभिज्ञेयरूपाणिद्वारकोपवनानिच ॥ दृष्ट्वाशंकोपपन्नोऽहमपृच्छंहृदिकात्मजम् ३ अस्वस्थनरनारीकमिदंवृष्णिकुलंभृशम् ॥ किमिदंनर शार्दूलश्रोतुमिच्छामितत्त्वतः ४ एवमुक्तःसतुमयाविस्तरेणेदमब्रवीत् ॥ रोधंमोक्षंचशाल्वेनहार्दिक्योराजसत्तम ५ ततोऽहंभरतश्रेष्ठश्रुत्वासर्वमशेषतः ॥ विनाशेशाल्वराजस्यतदैवाकरवंमतिम् ६ ततोहंभरतश्रेष्ठसमाश्वास्यपुरेजनम् ॥ राजानमाहुकंचैवतथैवानकदुंदुभिम् ७ सर्वान्वृष्णिप्रवीरांश्चहर्षयन्नब्रुवंतदा ॥ अप्रमादःसदाकार्योनगरेयादवर्षभाः ८ शाल्वराजविनाशायप्रयातंमांनिबोधत ॥ नाहत्वातंनिवर्तिष्येपुरींद्वारवतींप्रति ९ सशाल्वंसौभनगरंहत्वाद्रष्टाऽस्मिवःपुनः ॥ त्रिःसामाहन्यतामेषादुंदुभिःशत्रुभीषणा १० तेमयाऽऽश्वासिताबीरायथावद्भरतर्षभ ॥ सर्वेमामब्रुवन्हृष्टाःप्रयाहिजहिशात्रवान् ११ तैःप्रहृष्टात्मभिर्वीरैराशीर्भिरभिनंदितः ॥ वाचयित्वाद्विजश्रेष्ठान्प्रणम्यशिरसाभवम् १२ शैब्यसुग्रीवयुक्तेनरथेनानादयन्दिशः ॥ प्रध्मायशंखप्रवरंपांचजन्यमहंनृप १३ प्रयातोऽस्मिनरव्याघ्रबलेनमहतावृतः ॥ क्लृप्तेनचतुरंगेणयत्तेनजितकाशिना १४ समतीत्यबहून्देशान्गिरींश्चबहुपादपान् ॥ सरांसिसरितश्चैवमार्तिकावतमासदम् १५ तत्राश्रौषं नरव्याघ्रशाल्वंसागरमंतिकात् ॥ प्रयांतंसौभमास्थायतमहंपृष्ठतोऽन्वयाम् १६ ततःसागरमासाद्यकुक्षौतस्यमहोर्मिणः ॥ समुद्रनाभ्यांशाल्वोऽभूत्सौभमास्थाय शत्रुहन् १७ ससमालोक्यदूरान्मांस्मयन्निवयुधिष्ठिर ॥ आह्वयामासदुष्टात्मायुद्धायैवमुहुर्मुहुः १८ तस्यशार्ङ्गविनिर्मुक्तैर्बहुभिर्मर्मभेदिभिः ॥ पुरंनासाद्यतशरैस्ततोमांरोषआविशत् १९ सचापिपापप्रकृतिर्दैतेयापसदोनृप ॥ मय्यवर्षतदुर्धर्षःशरधाराःसहस्रशः २० सैनिकान्ममसूतंचहयांश्चसमाकिरत् ॥ अचिंतयंतस्तुशरानवयंयुद्ध्यामभारत २१ ततःशतसहस्राणिशराणांनतपर्वणाम् ॥ चिक्षिपुःसमरेवीरामयिशाल्वपदानुगाः २२ तेहयांश्चरथंचैवतदादारुकमेवच ॥ छादयामासुरसुरास्तैर्बाणैर्मर्मभेदिभिः २३ नहयानरथोवीरनयंताममदारुकः ॥ अदृश्यंतशरैश्छन्नास्तथाऽहंसैनिकाश्चमे २४ ततोऽहमपिकौंतेयशराणामयुतान्बहून् ॥ आमंत्रितानांधनुषादिव्येनविधिनाऽक्षिपम् २५

गतवानस्मि १६ महोर्मिणः महोर्मिमतः व्रीह्यादित्वादिनिः नाभ्यांगर्भेगुप्तइत्यर्थः १७ । १८ तस्यपुरं मदीयैःशरैर्नासाद्यतेतिसंबंधः १९ । २० । २१ नतानिनिम्नीकृतानिपर्वाणिग्रंथयोयेषांश्लक्ष्णानामित्यर्थः २२ । २३ । २४ आमंत्रितानामभिमंत्रितानां दिव्येनविधिनाअलौकिकयाऽस्त्रविद्यया २५

विषयोगोचरःतत्रहेतुः खेविषक्तंलग्नम २६ तलस्वनैर्हस्ततलशब्दैः २७ दानवानामंगेष्वितिसंबंधः रुचिरापांगाश्चित्रपुंखाः २८ वध्यतांवध्यमानानां २९ । ३० । ३१ प्राणेनबलेन ३२ । ३३ असयः खड्गाः शक्तिःकौमारी कुलिशानिवज्राणि पाशावारुणाः ऋष्टयोदंडाः शक्त्यादीनांक्रमोदीप्तिर्गतिःशोभावातांपांतितेशक्तिकुलिशपाशर्ष्टिकनपाः कार्तिकेयेंद्रवरुणयमायुधतुल्याइत्यर्थः । कनीत्रिश्रीगति

नतत्रविषमस्त्वासीन्ममसैन्यस्यभारत ॥ खेविषक्तंहितत्सौभंक्रोशमात्रइवाभवत् २६ ततस्तेप्रेक्षकाःसर्वेरंगवाटइवस्थिताः ॥ हर्षयामासुरुच्चैर्मांसिंहनादतलस्वनैः २७ मत्कराग्रविनिर्मुक्तादानवानांशरास्तथा ॥ अंगेषुरुचिरापांगाविविशुःशलभाइव २८ ततोहलहलाशब्दःसौभमध्येव्यवर्धत ॥ वध्यतांविशिखैस्तीक्ष्णैःपततांचमहार्णवे २९ तेनिकृत्तभुजस्कंधाःकबंधाकृतिदर्शनाः ॥ नदंतोभैरवान्नादान्निपतंतिस्मदानवाः ३० प्रतितास्तेऽपिभक्ष्यंतेसमुद्रांभोनिवासिभिः ॥ ततोगोक्षीरकुंदेंदुमृणालरजतप्रभम् ३१ जलजंपांचजन्यंवैप्राणेनाहमपूरयम् ॥ तान्दृष्ट्वापतितांस्तत्रशाल्वःसौभपतिस्ततः ३२ मायायुद्धेनमहतायोधयामासमांयुधि ॥ ततोगदाहलाःप्रासाःशूलशक्तिपरश्वधाः ३३ असयःशक्तिकुलिशपाशर्ष्टिकनपाःशराः ॥ पट्टिशाश्चभुशुंड्यश्चप्रपतंत्यनिशंमयि ३४ तामहंमाययैवाशुप्रतिगृह्यव्यनाशयम् ॥ तस्यांहतायांमायायांगिरिशृंगैरयोधयत् ३५ ततोऽभवत्तमइवप्रकाशइवचाभवत् ॥ दुर्दिनंसुदिनंचैवशीतमुष्णंचभारत ३६ अंगारपांशुवर्षंचशस्त्रवर्षंचभारत ॥ एवंमायांप्रकुर्वाणोयोधयामासमांरिपुः ३७ विज्ञायतदहंसर्वंमाययैवव्यनाशयम् ॥ यथाकालंतुयुद्धेनव्यधमंसर्वतःशरैः ३८ ततोव्योममहाराजशतसूर्यमिवाभवत् ॥ शतचंद्रंचकौंतेयसहस्रायुततारकम् ३९ ततोनाज्ञायततदादिवारात्रंतथादिशः ॥ ततोऽहंमोहमापन्नःप्रज्ञास्त्रंसमयोजयम् ४० ततस्तदस्त्रंकौंतेयधूतंतूलमिवानिलैः ॥ तथातदभवद्युद्धंतुमुलंलोमहर्षणम् ॥ लब्धालोकस्तुराजेंद्रपुनःशत्रुमयोधयम् ४१ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुना०प०सौभवधोपाख्यानेविंशोऽध्यायः ॥ २० ॥ ॥ वासुदेवउवाच ॥ ॥ एवंसपुरुषव्याघ्रःशाल्वराजोमहारिपुः ॥ युध्यमानोमयासंख्येवियदभ्यगमत्पुनः १ ततःशतघ्नीश्चमहागदाश्चदीप्तांश्चशूलान्मुसलानसींश्च ॥ चिक्षेपरोषान्मयिमंदबुद्धिःशाल्वोमहाराजजयाभिकांक्षी २ तानाशुगैरापततोऽहमाशुनिवार्यहंतुंखगमान्खएव ॥ द्विधात्रिधाचाच्छिनमाशुमुक्तैस्ततोंऽतरिक्षेनिनदोबभूव ३ ततःशतसहस्रेणशराणांनतपर्वणाम् ॥ दारुकंवाजिनश्चैवरथंचसमवाकिरत् ४ ततोमामब्रवीद्वीरदारुकोविव्हलन्निव ॥ स्थातव्यमितितिष्ठामिशाल्वबाणप्रपीडितः ॥ अवस्थातुंनशक्नोमिअंगंमेव्यवसीदति ५ इतितस्यनिशम्याहंसारथेःकरुणंवचः ॥ अवेक्षमाणोयंतारमपश्यंशरपीडितम् ६ नतस्योरसिनोमूर्ध्निनकायेनभुजद्वये ॥ अंतरंपांडवश्रेष्ठपश्याम्यनिचितंशरैः ७

द्रुताविति बोपदेवः ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० तदस्त्रंमायामयम् ४१ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेविंशोऽध्यायः ॥ २० ॥ ॥ ॥ एवंसइति १ २ । ३ । ४ । ५ । ६ । ७

वाणवरोत्पीडात्क्षतस्थानात् उल्बणमुत्कटम् ८ अस्तंभयमाश्वासितवान् ९ अथमांपुरुषःकश्चिदित्यादेरध्यायशेषस्यतात्पर्यं भगवानपिक्षुद्रजनमाययामोहितः किमुतक्षुद्रजनोभगवन्मायथेति शुद्धचैतन्याश्रितत्रैवाज्ञानमितिवा १० । ११ पितृसखआहुकः १२ उपायायोपगम्य विषक्तेऽन्यत्रव्यासक्ते शूरसुतोवसुदेवः १३ । १४ । १५ अहंजगर्हे । वैचित्यात्पारोक्ष्येलिट् निंदितवान् १६ । १७

सतुबाणवरोत्पीडाद्विस्रवत्यसृगुल्बणम् ॥ अभिवृष्टेयथामेघेगिरिर्गैरिकधातुमान् ८ अभीषुहस्तंतंदृष्ट्वासीदंतंसारथिंरणे ॥ अस्तंभयंमहाबाहोशाल्वबाणप्रपीडितम् ९ अथमांपुरुषःकश्चिद्द्वारकानिलयोऽब्रवीत् ॥ त्वरितोरथमारोप्यसौहृदादिवभारत १० आहुकस्यवचोवीरतस्यैवपरिचारकः ॥ विषण्णःसन्नकंठेनतन्निबोधयुधिष्ठिर ११ द्वारकाधिपतिर्वीरआहत्वामाहुकोवचः ॥ केशवेहिविजानीष्वयत्त्वांपितृसखोऽब्रवीत् १२ उपायायाद्यशाल्वेनद्वारकांवृष्णिनंदन ॥ विषक्तेत्वयिदुर्धर्षहतःशूरसुतोबलात् १३ तदलंसाधुयुद्धेननिवर्तस्वजनार्दन ॥ द्वारकामेवरक्षस्वकार्यमेतन्महत्तव १४ इत्यहंतस्यवचनंश्रुत्वापरमदुर्मनाः ॥ निश्चयंनाधिगच्छामिकर्तव्यस्येतरस्यच १५ सात्यकिंबलदेवंचप्रद्युम्नंचमहारथम् ॥ जगर्हेमनसावीरतच्छ्रुत्वामहदप्रियम् १६ अहंहिद्वारकायाश्चपितुश्चकुरुनंदन ॥ तेषुरक्षांसमाधायप्रयातःसौभपातने १७ बलदेवोमहाबाहुःकच्चिज्जीवतिशत्रुहा ॥ सात्यकीरौक्मिणेयश्चचारुदेष्णश्ववीर्यवान् १८ सांबप्रभृतयश्चैवेत्यहमासंसुदुर्मनाः ॥ एतेषुहिनरव्याघ्रजीवत्सुनकथंचन १९ शक्यःशूरसुतोहंतुमपिवज्रभृतास्वयम् ॥ हतःशूरसुतोव्यक्तंव्यक्तंचैतेपरासवः २० बलदेवमुखाःसर्वइतिमेनिश्चितामतिः ॥ सोऽहंसर्वविनाशंतंचिंतयानोमुहुर्मुहुः ॥ सुविह्वलोमहाराजपुनःशाल्वमयोधयम् २१ ततोऽपश्यंमहाराजप्रपतंतमहंतदा ॥ सौभाच्छूरसुतंवीरततोमांमोहआविशत् २२ तस्यरूपंप्रपततःपितुर्ममनराधिप ॥ ययातेःक्षीणपुण्यस्यस्वर्गादिवमहीतलम् २३ विशीर्णमलिनोष्णीषप्रकीर्णांबरमूर्धजः ॥ प्रपतन्दृश्यतेहस्मक्षीणपुण्यइवग्रहः २४ ततःशार्ङ्गधनुःश्रेष्ठंकरात्प्रपतितंमम ॥ मोहापन्नश्चकौंतेयरथोपस्थउपाविशम् २५ ततोहाहाकृतंसर्वंसैन्यंमेगतचेतनम् ॥ मांदृष्ट्वारथनीडस्थंगतासुमिवभारत २६ प्रसार्यबाहूपततःप्रसार्यचरणावपि ॥ रूपंपितुर्मेविबभौशकुनेःपततोयथा २७ तंपतंतंमहाबाहोशूलपट्टिशपाणयः ॥ अभिघ्नंतोभृशंवीरममचेतोह्यकंपयन् २८ ततोमुहूर्त्तात्प्रतिलभ्यसंज्ञामहंतदावीरमहाविमर्दे ॥ नतत्रसौभंनरिपुंचशाल्वंपश्यामिवृद्धंपितरंनचापि २९ ततोममासीन्मनसिमायेयमितिनिश्चितम् ॥ प्रबुद्धोऽस्मिततोभूयःशतशोऽवाकिरञ्छरान् ३० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिसौभवधोपाख्यानेएकविंशोऽध्यायः २१ ॥ ॥ वासुदेवउवाच ॥ ततोऽहंभरतश्रेष्ठप्रगृह्यरुचिरंधनुः ॥ शरैरपातयंसौभाच्छिरांसिविबुधद्विषाम् १ शरांश्चाशीविषाकारानूर्ध्वगांस्तिग्मतेजसः ॥ प्रैषयंशाल्वराजायशार्ङ्गमुक्तान्सुवाससः २ ततोनादृश्यततदासौभंकुरुकुलोद्वह ॥ अंतर्हितंमाययाऽभूत्ततोऽहंविस्मितोऽभवम् ३

१८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीयेभारतभावदीपेएकविंशोऽध्यायः ॥ २१ ॥ ॥ ॥ तत्रोऽहमिति १ सुवाससःसुपुंखान् २ । ३

विकृताननमूर्धजाईतितेषांस्वरूपकथनंनतुतद्दर्शनं धिष्ठितेप्रागल्भ्येनस्थिते । विष्ठितेइतिपाठेऽपिसएवार्थः ४ शब्दएवसाहोलक्ष्यंयत्रतत्तथा शब्दवेधिशब्देष्वमुपारमन्न्यपतदित्यर्थः । शब्दसाहंशब्द
बाधानिवारकंवा ५ शब्दसाधनैःशब्दएवसाधनंलक्ष्यसंबंधेकारणंयेषांतैःपुरस्यादृश्यत्वात् ६ । ७ । ८ प्राग्ज्योतिषंपूर्वसमुद्रतीरस्थंनगरविशेषं यतःकामगममतःप्राग्ज्योतिषंगत्वाव्यदृश्यत ९ । १० । ११
अप्रख्यातिमदर्शनं इयांप्राप्तवान् १२ । १३ । १४ । १५ एवमिति । हेवीरहेअच्युत एवंमांसौभराजोविजितवान्एतदप्यहंपश्चादश्रौषं पूर्वंमोहमापन्नःसन्संज्ञालाभानंतरंश्रुतवान्सारथिमुखेनेतिशेषः १६ इंद्रद

अथदानवसंघास्तेविकृताननमूर्धजाः ॥ उदक्रोशन्महाराजधिष्ठितेमयिभारत ४ ततोऽस्त्रंशब्दसाहंवैत्वरमाणोमहारणे ॥ अयोजयंतद्वधायततःशब्दउपारमत्
५ हतास्तेदानवाःसर्वेयैःसशब्दउदीरितः ॥ शरैरादित्यसंकाशैर्ज्वलितैःशब्दसाधनैः ६ तस्मिन्नुपरतेशब्देपुनरेवान्यतोऽभवत् ॥ शब्दोऽपरोमहाराजतत्रापि
प्राहरंशरैः ७ एवंदशदिशःसर्वास्तिर्यगूर्ध्वंचभारत ॥ नादयामासुरसुरास्तेचापिनिहतामया ८ ततःप्राग्ज्योतिषंगत्वापुनरेवव्यदृश्यत ॥ सौभंकामगमंवीर
मोहयन्ममचक्षुषी ९ ततोलोकांतकरणोदानवोदारुणाकृतिः ॥ शिलावर्षेणमहतासहसामांसमावृणोत् १० सोऽहंपर्वतवर्षेणवध्यमानःपुनःपुनः ॥ वल्मीकइव
राजेंद्रपर्वतोपचितोऽभवम् ११ ततोऽहंपर्वतचितःसहयःसहसारथिः ॥ अप्रख्यातिमियांराजन्सर्वतःपर्वतैश्चितः १२ ततोवृष्णिप्रवीरायेममासन्सैनिकास्तदा ॥
तेभयार्त्तादिशःसर्वेसहसाविप्रदुद्रुवुः १३ ततोहाहाकृतमभूत्सर्वंकिलविशांपते ॥ द्यौश्चभूमिश्चखंचैवादृश्यमानेतथामयि १४ ततोविषण्णमनसोममराजन्सुहृ
ज्जनाः ॥ रुरुदुश्चुक्रुशुश्चैवदुःखशोकसमन्विताः १५ द्विषतांचप्रहर्षोऽभूदार्तिश्चाद्विषतामपि ॥ एवंविजितवान्वीरपश्चादश्रौषमच्युत १६ ततोऽहमिंद्रदयितं
सर्वपाषाणभेदनम् ॥ वज्रमुद्यम्यतान्सर्वान्पर्वतान्समशातयम् १७ ततःपर्वतभारार्त्तामंदप्राणविचेष्टिताः ॥ हयाममममहाराजवेपमानाइवाभवन् १८ मेघजालइवा
काशेविदार्याभ्युदितंरविम् ॥ दृष्ट्वामांबांधवाःसर्वेहर्षमाहारयन्पुनः १९ ततःपर्वतभारार्त्तान्मंदप्राणविचेष्टितान् ॥ हयान्संदृश्यमांसूतःप्राहतात्कालिकंवचः २०
साधुसंपश्यवार्ष्णेयशाल्वंसौभपतिंस्थितम् ॥ अलंकृष्णावमन्यैनंसाधुयत्नंसमाचर २१ मार्दवंसखितांचैवशाल्वादद्यव्यपाहर ॥ जहिशाल्वंमहाबाहोमैनंजीवयके
शव २२ सर्वैःपराक्रमैर्वीरवध्यःशत्रुरमित्रहन् ॥ नशत्रुरवमंतव्योदुर्बलोऽपिबलीयसा २३ योऽपिस्यात्पीठगःकश्चित्किंपुनःसमरेस्थितः ॥ सत्वंपुरुषशार्दूलसर्वे
यत्नैरिमंप्रभो २४ जहिवृष्णिकुलश्रेष्ठमात्वांकालोऽत्यगात्पुनः ॥ नैषमार्दवसाध्योवैमतोनापिसखातव २५ येनत्वंयोधितोवीरद्वारकाचावमर्दिता ॥ एवमादि
तुकौंतेयश्रुत्वाऽहंसारथेर्वचः २६ तत्त्वमेतदितिज्ञात्वायुद्धेमतिमधारयम् ॥ वधायशाल्वराजस्यसौभस्यचनिपातने २७ दारुकंचाब्रुवंवीरमुहूर्तंस्थीयतामिति ॥
ततोऽप्रतिहतंदिव्यमभेद्यमतिवीर्यवान् २८

यितमिंद्रदैवत्यंवज्रंवज्रास्त्रं । यद्वा इंद्रोऽप्यस्यैवविभूतिरतस्तच्छस्त्रमप्येतदीयमेवेतिध्येयं समशातयंनाशितवान् १७ । १८ आहारयन्प्राप्तवंतः १९ तात्कालिकंतत्कालयोग्यम् २० । २१ । २२ । २३ पीठगः
स्वासनस्थः अयुध्यमानोऽपीत्यर्थः २४ । २५ । २६ । २७ । २८

२९ प्रतिलोमानांविपरीताचाराणांम्लेच्छानां ३० क्षुरांतंतीक्ष्णपरिधि ३१ तस्मैसौभायप्राप्रहिणवंहितवान् ३२ । ३३ क्रकचःदंतुरखङ्गः ३४।३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ यद्यागच्छेयंतर्हिन

आग्नेयमस्त्रंदयितंसर्वसाहंमहाप्रभम् ॥ योजयंतत्रधनुषादानवांतकरंरणे २९ यक्षाणांराक्षसानांचदानवानांचसंयुगे ॥ राज्ञांचप्रतिलोमानांभस्मांतकरणंमह त् ३० क्षुरांतममलंचक्रंकालांतकयमोपमम् ॥ अनुमंत्र्याहमतुलंद्विषतांविनिबर्हणम् ३१ जहिसौभंस्ववीर्येणयेचात्ररिपवोमम ॥ इत्युक्त्वाभुजवीर्येणतस्मैप्राहिण वंरुषा ३२ रूपंसुदर्शनस्यासीदाकाशेपततस्तदा ॥ द्वितीयस्येवसूर्यस्ययुगांतेप्रतपिष्यतः ३३ तत्समासाद्यनगरंसौभंव्यपगतत्विषम् ॥ मध्येनपाटयामासक्रकचो दार्विवोच्छ्रितम् ३४ द्विधाकृतंततःसौभंसुदर्शनबलाद्धतम् ॥ महेश्वरशरोद्धूतंपपातत्रिपुरंयथा ३५ तस्मिन्निपतितेसौभेचक्रमागात्करंमम ॥ पुनश्चादायवेगेनशा ल्वायेत्यहमब्रुवम् ३६ ततःशाल्वंगदांगुर्वीमाविध्यंतंमहाहवे ॥ द्विधाचकारसहसाप्रजज्वालचतेजसा ३७ तस्मिन्विनिहतेवीरेदानवास्त्रस्तचेतसः ॥ हाहाभूता दिशोजग्मुरर्दितामसायकैः ३८ ततोऽहंसमवस्थाप्यरथंसौभसमीपतः ॥ शंखंप्रध्माप्यहर्षेणसुहृदःपर्यहर्षयम् ३९ तन्मेरुशिखराकारंविध्वस्ताट्टालगोपुरम् ॥ दह्यमानमभिप्रेक्ष्यस्त्रियस्ताःसंप्रदुद्रुवुः ४० एवंनिहत्यसमरेसौभंशाल्वंनिपात्यच ॥ आनर्त्तान्पुनरागम्यसुहृदांप्रीतिमावहम् ४१ तदेतत्कारणंराजन्यदहंनागसाह्व यम् ॥ नागमंपरवीरघ्ननहिजीवेत्सुयोधनः ४२ मय्यागतेऽथवावीरद्यूतंनभवितातथा ॥ अद्याहंकिंकरिष्यामिभिन्नसेतुरिवोदकम् ४३ ॥ वैशंपायनउवाच ॥ एव मुक्त्वामहाबाहुःकौरवंपुरुषोत्तमः ॥ आमंत्र्यप्रययौश्रीमान्पांडवान्मधुसूदनः ४४ अभिवाद्यमहाबाहुर्धर्मराजंयुधिष्ठिरम् ॥ राज्ञामूर्धन्युपाघ्रातोभीमेनचमहाभुजः ४५ परिष्वक्तश्चार्जुनेनयमाभ्यांचाभिवादितः ॥ संमानितश्चधौम्येनद्रौपद्याचार्चितोऽश्रुभिः ४६ सुभद्रामभिमन्युंचरथमारोप्यकांचनम् ॥ आरुरोहरथंकृष्णःपांड वैरभिपूजितः ४७ शैब्यसुग्रीवयुक्तेनरथेनादित्यवर्चसा ॥ द्वारकांप्रययौकृष्णःसमाश्वास्ययुधिष्ठिरम् ४८ ततःप्रयातेदाशार्हेधृष्टद्युम्नोऽपिपार्षतः ॥ द्रौपदेयानुपादा यप्रययौस्वपुरंतदा ४९ धृष्टकेतुःस्वसारंचसमादायाथचेदिराट् ॥ जगामपांडवान्दृष्ट्वारम्यांशुक्तिमतींपुरीम् ५० केकयाश्चाप्यनुज्ञाताःकौंतेयेनामितौजसा ॥ आमंत्र्यपांडवान्सर्वान्प्रययुस्तेऽपिभारत ५१ ब्राह्मणाश्चविशश्चैवतथाविषयवासिनः ॥ विसृज्यमानाःसुभृशंनत्यजंतिस्मपांडवान् ५२ समवायःसराजेंद्रसुमहाद्भुत दर्शनः ॥ आसीन्महात्मनांतेषांकाम्यकेभरतर्षभ ५३

हिजीवेत ४२ किंकरिष्यामिअद्याहमकिंचित्करइत्यर्थः उदकंधारयितुमितिशेषः ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ धृष्टकेतुःशिशुपालसुतः स्वसारंकरेणुमतींनकुलभार्याम् ५० केकयाःसहदेवश्या लाः ५१ । ५२ समवायःमेलकः ५३

शशास आज्ञापयामास एवमुक्त्वामहाबाहुरित्याद्यध्यायशेषस्याग्रिमाध्यायसहितस्यतात्पर्यम् पांडवेष्विवसाधुषुसर्वैनिसर्गादिरज्यंते धार्त्तराष्ट्रेष्विवासाधुषुद्वेषवंतोभवंतीति ५४ ॥ इत्यारण्यकेपर्वणिनैलकंठीये भारतभावदीपेसौभवधोपाख्यानेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ तस्मिन्निति १ भूतपतिःशिवः निष्कःअष्टोत्तरशतंसुवर्णानि वक्षोऽलंकारोवा । शिक्षेतिव्याकरणाद्यंगानामुपलक्षणं अक्षराणिवेदःनित्यत्वात्क्षरणशून्यः । 'वाचाविरूपनित्यया' इतिश्रुतेः । मंत्रःप्रणवःतान्पाठतोऽर्थतश्चजानन्तःशिक्षाक्षरमंत्रविद्वयः २ प्रेष्याःकर्मकराः पुरःप्रागेव जघन्यंपाश्चात्त्यंद्वारकादेशम् ३ राजपुत्र्यासुभद्रयासह ४ । ५ । ६ प्रव

युधिष्ठिरस्तुविप्रांस्ताननुमान्यमहामनाः ॥ शशासपुरुषान्कालेरथान्योजयतेतिवै ५४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिसौभवधोपाख्यानेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ वैशंपायनउवाच ॥ तस्मिन्दशार्हाधिपतौप्रयातेयुधिष्ठिरोभीमसेनार्जुनौच ॥ यमौचकृष्णाचपुरोहितश्चरथान्महार्हान्परमाश्वयुक्तान् १ आस्थायवीराःसहितावनायप्रतस्थिरेभूतपतिप्रकाशाः ॥ हिरण्यनिष्कान्वसनानिगाश्चप्रादायशिक्षाक्षरमंत्रविद्भ्यः २ प्रेष्याःपुरोविंशतिरात्तशस्त्राधनूंषिशस्त्राणिशरांश्चदीप्तान् ॥ मौर्वीश्चयंत्राणिचसायकांश्चसर्वेसमादायजघन्यमीयुः ३ ततस्तुवासांसिचराजपुत्र्याधात्र्यश्चदास्यश्चविभूषणंच ॥ तदिंद्रसेनस्त्वरितःप्रगृह्यजघन्यमेवोपययौरथेन ४ ततःकुरुश्रेष्ठमुपेत्यपौराःप्रदक्षिणंचक्रुरदीनसत्त्वाः ॥ तंब्राह्मणाश्चाभ्यवदन्प्रसन्नामुख्याश्चसर्वेकुरुजांगलानाम् ५ सचापितानभ्यवदत्प्रसन्नःसहैवतैर्भ्रातृभिर्धर्मराजः ॥ तस्थौचतत्राधिपतिर्महात्मादृष्ट्वाजनौघंकुरुजांगलानाम् ६ पितेवपुत्रेषुसतेषुभावंचक्रेकुरूणामृषभोमहात्मा ॥ तेचापितस्मिन्भरतप्रबर्हेतदाबभूवुःपितरीवपुत्राः ७ ततस्तमासाद्यमहाजनौघाःकुरुप्रवीरंपरिवार्यतस्थुः ॥ हानाथहाधर्मइतिब्रुवाणाह्रीताश्चसर्वेऽश्रुमुखाश्चराजन् ८ वरःकुरूणामधिपःप्रजानांपितेवपुत्रानपहायचास्मान् ॥ पौरानिमाञ्जानपदांश्चसर्वान्हित्वाप्रयातःक्वनुधर्मराजः ९ धिग्धार्त्तराष्ट्रंसुनृशंसबुद्धिंधिक्सौबलंपापमतिंचकर्णम् ॥ अनर्थमिच्छंतिनरेंद्रपापायेधर्मनित्यस्यसतस्तवैवम् १० स्वयंनिवेश्याप्रतिमंमहात्मापुरंमहादेवपुरप्रकाशम् ॥ शतक्रतुप्रस्थममेयकर्माहित्वाप्रयातःक्वनुधर्मराजः ११ चकारयामप्रतिमांमहात्मासभांमयोदेवसभाप्रकाशाम् ॥ तांदेवगुप्तामिवदेवमायांहित्वाप्रयातःक्वनुधर्मराजः १२ तान्धर्मकामार्थविदुत्तमौजाबीभत्सुरुच्चैःसहितानुवाच ॥ आदास्यतेवासमिमंनिरुष्यवनेषुराजाद्विषतांयशांसि १३ द्विजातिमुख्याःसहिताःपृथक्चभवद्भिरासाद्यतपस्विनश्च ॥ प्रसाद्यधर्मार्थविदश्चवाच्यायथार्थसिद्धिःपरमाभवेन्नः १४ इत्येवमुक्तेवचनेऽर्जुनेनतेब्राह्मणाःसर्ववर्णाश्चराजन् ॥ मुदाऽभ्यनंदन्सहिताश्चचक्रुःप्रदक्षिणंधर्मभृतांवरिष्ठम् १५ आमंत्र्यपार्थंचवृकोदरंचधनंजयंयाज्ञसेनींयमौच ॥ प्रतस्थिरेराष्ट्रमपेतहर्षायुधिष्ठिरेणानुमतायथास्वम् १६ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिद्वैतवनप्रवेशेत्रयोविंशोऽध्यायः ॥ २३ ॥

र्हेश्रेष्ठे ७ ह्रीताःकुराज्येतिष्ठामइतिहेतोःशंकयालज्जिताः भीताइतिपाठांतरम् ८ । ९ अनर्थंद्यूतजं एवमेवंप्रकारम् १० । ११ । १२ बीभत्सुरर्जुनः आदास्यतेआच्छिद्यग्रहीष्यति यशांसियशस्कराणिदिव्यसभादीनि १३ भवद्भिःपौरैः वाच्याःप्रार्थ्याः १४ । १५ । १६ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रयोविंशोऽध्यायः ॥ २३ ॥

ततइति । सत्यसंगरःसत्यप्रतिज्ञः १ समाःवर्षाणि संधिरार्षः २ शरदोवत्सरान् ३ । ४ । ५ । ६ । ७ अनुभावान्कर्त्तव्याकर्त्तव्यविषयान्निश्चयान् प्रभावोनिग्रहानुग्रहशक्तिः। 'अनुभावोनिश्चयेस्यात्प्रभावःशक्तितेजसोः' इतिविश्वः ८ श्रेयोमोक्षःकारणंतत्साधनम् ९ द्वैतंद्वौशोकमोहौइतोगतौयस्माद्द्वीतंद्वीतमेवद्वैतं स्वार्थेतद्धितः वनंजलंयस्मिन्द्वैतवनं पुण्येनपावनेनजलेनउचितंसमवेतं एतेनद्वैतवनशब्दार्थःसूचितः





॥ वैशंपायनउवाच ॥ ॥ ततस्तेषुप्रयातेषुकौंतेयःसत्यसंगरः ॥ अभ्यभाषतधर्मात्माभ्रातृन्सर्वान्युधिष्ठिरः १ द्वादशेमाःसमास्माभिर्वस्तव्यंनिर्जने वने ॥ समीक्षध्वंमहारण्येदेशंबहुमृगद्विजम् २ बहुपुष्पफलंरम्यंशिवंपुण्यजनावृतम् ॥ यत्रेमाःशरदःसर्वाःसुखंप्रतिवसेमहि ३ एवमुक्तेप्रत्युवाचधर्मराजंधनंजयः ॥ गुरुवन्मानवगुरुंमानयित्वामनस्विनम् ४ ॥ अर्जुनउवाच ॥ ॥ भवानेवमहर्षीणांवृद्धानांपर्युपासिता ॥ अज्ञातंमानुषेलोकेभवतोनास्तिकिंचन ५ त्वयाह्युपासितानित्यंब्राह्मणाभरतर्षभ ॥ द्वैपायनप्रभृतयोनारदश्चमहातपाः ६ यःसर्वलोकद्वाराणिनित्यंसंचरतेवशी ॥ देवलोकाद्ब्रह्मलोकंगंधर्वाप्सरसामपि ७ अनुभावांश्चजानासिब्राह्मणानांनसंशयः ॥ प्रभावांश्चैववेत्थत्वंसर्वेषामेवपार्थिव ८ त्वमेवराजन्जानासिश्रेयःकारणमेवच ॥ यत्रेच्छसिमहाराजनिवासंतत्रकुर्महे ९ इदंद्वैतवनंनामसरःपुण्यजलोचितम् ॥ बहुपुष्पफलंरम्यंनानाद्विजनिषेवितम् १० यत्रेमाद्वादशसमाविहरेमेतिरोचये ॥ यदितेऽनुमतंराजन्किमन्यन्मन्यतेभवान् ११ ॥ युधिष्ठिरउवाच ॥ ममाप्येतन्मतंपार्थत्वयायत्समुदाहृतम् ॥ गच्छामःपुण्यविख्यातंमहद्द्वैतवनंसरः १२ ॥ वैशंपायनउवाच ॥ ततस्तेप्रययुःसर्वेपांडवाधर्मचारिणः ॥ ब्राह्मणैर्बहुभिःसार्धंपुण्यंद्वैतवनंसरः १३ ब्राह्मणाःसाग्निहोत्राश्चतथैवचनिरग्नयः ॥ स्वाध्यायिनोभिक्षवश्चतथैववनवासिनः १४ बहवोब्राह्मणास्तत्रपरिवव्रुर्युधिष्ठिरम् ॥ तपःसिद्धामहात्मानःशतशःसंशितव्रताः १५ तेयात्वापांडवास्तत्रब्राह्मणैर्बहुभिःसह ॥ पुण्यंद्वैतवनंरम्यंविविशुर्भरतर्षभाः १६ तत्सालतालाम्रमधूकनीपकदंबसर्जार्जुनकर्णिकारैः ॥ तपात्ययेपुष्पधरैरुपेतंमहावलंराष्ट्रपतिर्ददर्श १७ महाद्रुमाणांशिखरेषुतस्थुर्मनोरमांवाचमुदीरयंतः ॥ मयूरदात्यूहचकोरसंघास्तस्मिन्वनेबर्हिणकोकिलाश्च १८ करेणुयूथैःसहयूथपानांमदोत्कटानामचलप्रभाणाम् ॥ महांतियूथानिमहाद्विपानांतस्मिन्वनेराष्ट्रपतिर्ददर्श १९ मनोरमांभोगवतीमुपेत्यपूतात्मनांचीरजटाधराणाम् ॥ तस्मिन्वनेधर्मभृतांनिवासेददर्शसिद्धर्षिगणाननेकान् २० ततःसयानादवरुह्यराजासभ्रातृकःसजनःकाननंतत् ॥ विवेशधर्मात्मवतांवरिष्ठस्त्रिविष्टपंशक्रइवामितौजाः २१ तंसत्यसंधंसहिताऽभिपेतुर्दिदृक्षवश्चारणसिद्धसंघाः ॥ वनौकसश्चापिनरेंद्रसिंहंमनस्विनंतंपरिवार्यतस्थुः २२ सतत्रसिद्धानभिवाद्यसर्वान्प्रत्यर्चितोराजवद्देववच्च ॥ विवेशसर्वैःसहितोद्विजाग्र्यैःकृतांजलिर्धर्मभृतांवरिष्ठः २३

उचसमवायेदिवादिः १० विहरेमप्रीत्यानयेम ११ । १२ । १३ । १४ । १५ यात्वागत्वा १६ तपात्ययेवर्षासु महावलंमहावनं दंत्यादिरयंशब्दः 'देवावैवलेगाःपर्यपश्यन्' इतिवनेवलशब्दप्रयोगदर्शनात् १७ १८ करेणुःहस्तिनी १९ भोगवतींसरस्वतींनदीम् २० । २१ चारणाःदेवगायनाः सिद्धाःमहर्षयः २२ । २३

महाद्रुमःकदंबः २४ । २५ लतावतानावनतःवल्लीतंतुभिरावृततयानम्रः २६ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेचतुर्विंशोऽध्यायः ॥ २४ ॥ तत्काननमित्यध्यायद्वयेनवृद्धतमाभ्यांमार्कण्डे यदाल्भ्याभ्यांधर्मस्यात्यागोब्राह्मणभक्तिश्चकर्तव्येत्युच्यते । तत्कारणांमितिपाठेतद्वनंकारणं चिक्रीडिषाहेतुः कृच्छ्रंवनवाससंकटम् १ । २ इष्टीर्दर्शपौर्णमासाद्याः पित्र्याणिपिंडपितृयज्ञदर्शश्राद्धादीनि ३ राष्ट्रादपेत्यनिर्गत्य वनेवसतांतीव्रंदुःसहंसमृद्धंपुष्कलंचतेजोयस्य ४ । ५ अस्मयतविस्मितवान् ६ ह्रियाप्रागल्भ्यसंकोचेन ७ । ८ । ९ सहस्रनेत्रःप्रतिमारूपांतरंयस्य 'देवा

सपुण्यशीलःपितृव महात्मातपस्विभिर्धर्मपरैरुपेत्य ॥ प्रत्यर्चितःपुष्पधरस्यमूलेमहाद्रुमस्योपविवेशराजा २४ भीमश्चकृष्णाचधनंजयश्चयमौचतेचानुचरा नरेंद्रम् ॥ विमुच्यवाहानवशाश्चसर्वेतत्रोपतस्थुर्भरतप्रबर्हाः २५ लतावतानावनतःसपांडवैर्महाद्रुमःपंचभिरेवधन्विभिः ॥ बभौनिवासोपगतैर्महात्मभिर्महा गिरिर्वारणयूथपैरिव २६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिद्वैतवनप्रवेशेचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ वैशंपायनउवाच ॥ तत्काननंप्राप्यनरेंद्रपुत्राःसुखोचितावासमुपेत्यकृच्छ्रम् ॥ विजह्रुरिंद्रप्रतिमाःशिवेषुसरस्वतीशालवनेषुतेषु १ यतींश्चराजासमुनींश्चसर्वांस्तस्मिन्वनेमूलफलै रुदग्रैः ॥ द्विजातिमुख्यानृषभःकुरूणांसंतर्पयामाससमहानुभावः २ इष्टीश्चपित्र्याणितथाक्रियाश्चमहावनेवसतांपांडवानाम् ॥ पुरोहितस्तत्रसमृद्धतेजाश्चका रधौम्यःपितृवन्नृपाणाम् ३ अपेत्यराष्ट्राद्वसतांतुतेषामृषिःपुराणोऽतिथिराजगाम ॥ तमाश्रमंतीव्रसमृद्धतेजामार्कंडेयःश्रीमतांपांडवानाम् ४ तमागतंज्वलित हुताशनप्रभंमहामनाःकुरुवृषभोयुधिष्ठिरः ॥ अपूजयत्सुरऋषिमानवार्चितंमहामुनिंह्यनुपमसत्ववीर्यवान् ५ ससर्वविद्द्रौपदींवीक्ष्यकृष्णांयुधिष्ठिरंभीमसेनार्जुनौच ॥ संस्मृत्यरामंमनसामहात्मातपस्विमध्येऽस्मयतामितौजाः ६ तंधर्मराजोविमनाइवाब्रवीत्सर्वेह्रियासंतितपस्विनोऽमी ॥ भवानिदंकिंस्मयतीवहृष्टस्तपस्विनां पश्यतांमासुदीक्ष्य ७ ॥ मार्कंडेयउवाच ॥ नताततहृष्यामिनचस्मयामिप्रहर्षजोमांभजतेनदर्पः ॥ तवापदंत्वद्यसमीक्ष्यरामंसत्यव्रतंदाशरथिंस्मरामि ८ सचापि राजासहलक्ष्मणेनवनेनिवासंपितुरेवशासनात् ॥ धन्वीचरन्पार्थमयैवदृष्टोगिरेःपुराऋष्यमूकस्यसानौ ९ सहस्रनेत्रप्रतिमोमहात्मायमस्यनेतानमुचेश्चहंता ॥ पितु र्निदेशादनघःस्वधर्मंवासंवनेदाशरथिश्चकार १० सचापिशक्रस्यसमप्रभावोमहानुभावःसमरेष्वजेयः ॥ विहायभोगानचरद्वनेषुनेशेबलस्येतिचरेदधर्मम् ११ भूपा श्चनाभागभगीरथादयोमहीमिमांसागरांतांविजित्य ॥ सत्येनतेऽप्यजयंस्तातलोकान्नेशेबलस्येतिचरेदधर्मम् १२ अलर्कमाहुर्नरवर्यसंतंसत्यव्रतंकाशिकरूषराजम् ॥ विहायराज्यानिवसूनिचैवनेशेबलस्येतिचरेदधर्मम् १३

नामस्मि्प्रासवः' इत्युक्तत्वात् । अतएवयमस्यनियंतुरपिनेतानिर्वाहकः नमुचेश्चहंता इतिसर्वमिंद्रकर्मतस्यैवकर्मेत्यर्थः १० तदेवाहसचेति । शक्रस्यसमप्रभावःकृत्स्नप्रभावः समशब्दःसर्वपर्यायःसर्व नाम्ना । प्रभावःशक्तिः अनुभावोभावसूचनंविद्याबलमित्यर्थः । शक्रस्यप्रभावादिकमयमेवातोऽसौसमरेष्वजेयः । तस्मादितिसर्वत्राध्याहारः । बलस्यबहुसामर्थ्यस्यईशोप्रभवामीतिहेतोरधर्मनचरेत् शक्तौसत्यांधर्ममेवाचरेन्नत्वधर्ममित्यर्थः ११ । १२ । १३

धात्राईशेन पुराणैर्वेदवाक्यैर्विहितोविधिरग्निहोत्रादिः १४ पशवोऽपिबलवानस्मीतिदर्पेणाधर्मंनचरंतीत्याह महाबलानिति । 'विषाणंदंतशृंगयोः' इतिकोशः १५ एवंसर्पादिष्वपिज्ञेयमित्याह सर्वाणीति । स्वयोनितोजन्मानुरूपम् १६ विभाप्रभासैववसुर्वित्तंयस्य १७ आदास्यसेग्रहीष्यसि १८ । १९ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेपंचविंशोऽध्यायः ॥ २५ ॥ वसत्स्विति । अनुकीर्णंव्याप्तम् १

धात्राविधिर्योविहितःपुराणैस्तंपूजयंतोनरवर्यसंतः ॥ सप्तर्षयःपार्थदिविप्रभांतिनेशेबलस्येतिचरेदधर्मम् १४ महाबलान्पर्वतकूटमात्रान्विषाणिनःपश्यगजान्नरेंद्र ॥ स्थितान्निदेशेनरवर्यधातुर्नेशेबलस्येतिचरेदधर्मम् १५ सर्वाणिभूतानिनरेंद्रपश्यतथायथावद्विहितंविधात्रा ॥ स्वयोनितःकर्मसदाऽऽचरंतिनेशेबलस्येति चरेदधर्मम् १६ सत्येनधर्मेणयथार्हवृत्त्याह्रियातथासर्वभूतान्यतीत्य ॥ यशश्चतेजश्चतवापिदीप्तंविभावसोर्भास्करस्येवपार्थ १७ यथाप्रतिज्ञंचमहानुभावकृच्छ्रं वनेवासमिमंनिरुष्य ॥ ततःश्रियंतेजसातेनदीप्तामादास्यसेपार्थिवकौरवेभ्यः १८ ॥ वैशंपायनउवाच ॥ तमेवमुक्त्वावचनंमहर्षिस्तपस्विमध्येसहितंसुहृद्भिः ॥ आमंत्र्यधौम्यंसहितांश्चपार्थांस्ततःप्रतस्थेदिशमुत्तरांसः १९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जु०द्वैतवनप्रवेशेपंचविंशोऽध्यायः ॥ २५ ॥ वैशंपायन उवाच ॥ वसत्सुवैद्वैतवनेपाण्डवेषुमहात्मसु ॥ अनुकीर्णंमहारण्यंब्राह्मणैःसमपद्यत १ ईर्यमाणेनसततंब्रह्मघोषेणसर्वशः ॥ ब्रह्मलोकसमंपुण्यमासीद्द्वैतवनंसरः २ यजुषामृचांसाम्नांचगद्यानांचैवसर्वशः ॥ आसीदुच्चार्यमाणानांनिःस्वनोहृदयंगमः ३ ज्याघोषश्चैवपार्थानांब्रह्मघोषश्चधीमताम् ॥ संसृष्टंब्रह्मणाक्षत्रंभूयएवव्यरोचत ४ अथाब्रवीद्बकोदाल्भ्योधर्मराजंयुधिष्ठिरम् ॥ संध्यांकौंतेयमासीनमृषिभिःपरिवारितम् ५ पश्यद्वैतवनेपार्थब्राह्मणानांतपस्विनाम् ॥ होमवेलांकुरुश्रेष्ठसंप्रज्वलित पावकाम् ६ चरंतिधर्मंपुण्येऽस्मिंस्त्वयागुप्ताधृतव्रताः ॥ भृगवोंऽगिरसश्चैववासिष्ठाःकाश्यपैःसह ७ आगस्त्याश्चमहाभागाआत्रेयाश्चोत्तमव्रताः ॥ सर्वस्यजगतः श्रेष्ठःब्राह्मणाःसंगतास्त्वया ८ इदंतुवचनंपार्थशृणुष्वगदतोमम ॥ भ्रातृभिःसहकौंतेययत्त्वांवक्ष्यामिकौरव ९ ब्रह्मक्षत्रेणसंसृष्टंक्षत्रंचब्रह्मणासह ॥ उदीर्णौदहतः शत्रून्वनानीवाग्निमारुतौ १० नाब्राह्मणस्तातचिरंबुभूषेदिच्छन्निमंलोकममुंचजेतुम् ॥ विनीतधर्मार्थमपेतमोहंलब्ध्वाद्विजंनुदतिनृपःसपत्नान् ११ चरन्नैःश्रेयसं धर्मंप्रजापालनकारितम् ॥ नाध्यगच्छद्बलिर्लोकेतीर्थमन्यत्रवैद्विजात् १२ अनूनमासीदसुरस्यकामैर्वैरोचनेःश्रीरपिचाक्षयाऽऽसीत् ॥ लब्ध्वामहींब्राह्मणसंप्रयोगा त्तेष्वाचरन्दुष्टमथोव्यनश्यत् १३ नाब्राह्मणंभूमिरियंसभूतिर्वर्णंद्वितीयंभजतेचिराय ॥ समुद्रनेमिर्नमतेतुतस्मैयंब्राह्मणःशास्तिनयैर्विनीतम् १४ कुंजरस्येवसंग्रामेप रिगृह्यांकुशग्रहम् ॥ ब्राह्मणैर्विप्रहीनस्यक्षत्रस्यक्षीयतेबलम् १५

२ गद्यानांब्राह्मणवाक्यानांपादाक्षरादिनियमहीनानाम् ३ । ४ संध्यामुपास्येतिशेषः ५ । ६ । ७ । ८ । ९ । १० अब्राह्मणोब्राह्मणहीनोनृपः बुभूषेदैश्वर्यमिच्छेत् तस्येच्छतोऽपिजयोदुर्लभइत्यर्थः । विनीतौसम्यकशिक्षितौधर्मार्थौयेन ११ तीर्थमुपायं १२ वैरोचनेर्बलेः १३ । १४ अंकुशग्रहमंकुशेननिगृह्णातितं परिगृह्यवर्जयित्वा परिवर्जने १५

१६ । १७ बुद्धिपर्यैषणंबुद्धेःसाकल्येनसंग्रहणम् १८ यथार्हतीर्थेयथायोग्यपात्रे प्रतिपादनायदानाय १९ वृत्तिर्वर्त्तनम् २० । २१ । २२ । २३ । २४ । २५ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेषड्विं

ब्राह्मण्यनुपमादृष्टिःक्षात्रमप्रतिमंबलम् ॥ तौयदाचरतःसार्धंतदालोकःप्रसीदति १६ यथाहिसुमहानग्निःकक्षंदहतिसानिलः ॥ तथादहतिराजन्योब्राह्मणेन
समंरिपुम् १७ ब्राह्मणेष्वेवमेधावीबुद्धिपर्यैषणंचरेत् ॥ अलब्धस्यचलाभायलब्धस्यपरिवृद्धये १८ अलब्धलाभायचलब्धवृद्धयेयथार्हतीर्थप्रतिपादनाय ॥
यशस्विनंवेदविदंविपश्चितंबहुश्रुतंब्राह्मणमेववासय १९ ब्राह्मणेषूत्तमावृत्तिस्तवनित्यंयुधिष्ठिर ॥ तेनतेसर्वलोकेषुदीप्यतेप्रथितंयशः २० ॥ वैशंपायनउवाच ॥
ततस्तेब्राह्मणाःसर्वेबकंदाल्भ्यमपूजयन् ॥ युधिष्ठिरेस्तूयमानेभूयःसुमनसोऽभवन् २१ द्वैपायनोनारदश्चजामदग्न्यःपृथुश्रवाः ॥ इंद्रद्युम्नोभालुकिश्चकृतचेताः
सहस्रपात् २२ कर्णश्रवाश्चमुंजश्चलवणाश्वश्चकाश्यपः ॥ हारीतःस्थूणकर्णश्चअग्निवेश्योऽथशौनकः २३ कृतवाक्सुवाक्चैवबृहदश्वोविभावसुः ॥ ऊर्ध्वरेता
वृषामित्रःसुहोत्रोहोत्रवाहनः २४ एतेचान्येचबहवोब्राह्मणाःसंशितव्रताः ॥ अजातशत्रुमानर्चुःपुरंदरमिवर्षयः २५ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिग
मनपर्वणिद्वैतवनप्रवेशेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ वैशंपायनउवाच ॥ ततोवनगताःपार्थाःसायाह्नेसहकृष्णया ॥ उपविष्टाःकथाश्चक्रुर्दुःखशोकपरायणाः १
प्रियाचदर्शनीयाचपंडिताचपतिव्रता ॥ अथकृष्णाधर्मराजमिदंवचनमब्रवीत् २ ॥ द्रौपद्युवाच ॥ ननूनंतस्यपापस्यदुःखमस्मासुकिंचन ॥ विद्यतेधार्त्तराष्ट्रस्यनृशं
सस्यदुरात्मनः ३ यस्त्वांराजन्मयासार्धमजिनैःप्रतिवासितम् ॥ वनंप्रस्थाप्यदुष्टात्मानान्वतप्यतदुर्मतिः ४ आयसंहृदयंनूनंतस्यदुष्कृतकर्मणः ॥ यस्त्वांधर्मपरं
श्रेष्ठंरूक्षाण्यश्रावयत्तदा ५ सुखोचितमदुःखार्हंदुरात्माससुहृद्गणः ॥ ईदृशंदुःखमानीयमोदतेपापपूरुषः ६ चतुर्णामेवपापानामस्रंनपतितंतदा ॥ त्वयिभारतनिष्क्रां
तेवनायाजिनवाससि ७ दुर्योधनस्यकर्णस्यशकुनेश्चदुरात्मनः ॥ दुर्भ्रातुस्तस्यचोग्रस्यराजन्दुःशासनस्यच ८ इतरेषांतुसर्वेषांकुरूणांकुरुसत्तम ॥ दुःखेनाभिपरी
तानांनेत्रेभ्यःप्रापतज्जलम् ९ इदंचशयनंदृष्ट्वायच्चासीत्तेपुरातनम् ॥ शोचामित्वांमहाराजदुःखानर्हंसुखोचितम् १० दांतंयच्चसभामध्यआसनंरत्नभूषितम् ॥ दृष्ट्वाकु
शबृसींचेमांशोकोमांरुंधयत्ययम् ११ यदपश्यंसभायांत्वांराजभिःपरिवारितम् ॥ तच्चराजन्नपश्यंत्याःकाशांतिर्हृदयस्यमे १२ यात्वाऽहंचंदनादिग्धमपश्यंसूर्यवर्च
सम् ॥ सात्वांपंकमलादिग्धंदृष्ट्वामुह्यामिभारत १३ यात्वाऽहंकौशिकैर्वस्त्रैःशुभ्रैराच्छादितंपुरा ॥ दृष्टवत्यस्मिराजेंद्रसात्वांपश्यामिचीरिणम् १४ यच्चतद्रुक्मपात्री
भिर्ब्राह्मणेभ्यःसहस्रशः ॥ ह्रियतेतेगृहादन्नंसंस्कृतंसार्वकामिकम् १५

शोऽध्यायः ॥ २६ ॥. ॥ ततइति । इतोध्यायद्वयस्यतात्पर्यंसुशीलाऽपिस्त्रीधर्मेलाजयतिकिमुतेतरेति १ । २ अस्मासुदुःखितेष्वितिशेषः ३ । ४ । ५ आनीयप्रापय्य ६ अस्रंनेत्रजलम् ७ । ८ । ९ । १०
दांतंगजदंतमयं कुशबृसींकुशासनं रुंधयतिआवृणोतिमोहयतीत्यर्थः ११ । १२ त्वाऽहं त्वामहं आदिग्धंलिप्तम् १३ कौशिकैःकोशजैः १४ । १५

अगृहाणांब्रह्मचारिणां १६ सहस्राणिसहस्रसंज्ञानिसत्रपरिवेषणपात्राणि 'तेषांयस्सहस्रंसत्रपरिवेषणंतत्तेस्त्रयंतोदास्यंति' इतिबह्वृचब्राह्मणेदर्शनात् । सत्कृतानिप्रसहमुपयोगात्संभावितानि सर्वकामैःकाम्यमानै रन्नैः यत्त्वयैःसहस्रैःसर्वैःकामैर्मनोरथैर्द्विजान्अपूजयथाः वनेतुएकमेवसूर्यदत्तंपरिवेषणपात्रमित्यर्थः १७ । १८ । १९ । २० मन्युःक्रोधः २१ । २२ । २३ अर्जुनेनकार्त्तवीर्येण २४ शरावमर्देबाणपाते २५ ।

यतीनामगृहाणांतेतथैवगृहमेधिनाम् ॥ दीयतेभोजनंराजन्नतीवगुणवत्प्रभो १६ सत्कृतानिसहस्राणिसर्वकामैःपुरागृहे ॥ सर्वकामैःसुविहितैर्यदपूजयथाद्विजान् १७ तच्चराजन्नपश्यंत्याःकाशांतिर्हृदयस्यमे ॥ यत्तेभ्रातॄन्महाराजयुवानोमृष्टकुंडलाः १८ अभोजयंतमृष्टान्नैःसूदाःपरमसंस्कृतैः ॥ सर्वांस्तानद्यपश्यामिवनेवन्येनजीविनः १९ अदुःखार्हान्मनुष्येंद्रनोपशाम्यतिमेमनः ॥ भीमसेनमिमंचापिदुःखितंवनवासिनम् २० ध्यायतःकिंनमन्युस्तेप्राप्तेकालेविवर्धते ॥ भीमसेनंहिकर्माणिस्वयंकुर्वाणमच्युतम् २१ सुखार्हंदुःखितंदृष्ट्वाकस्मान्मन्युर्नवर्धते ॥ सत्कृतंविविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा २२ तंतेवनगतंदृष्ट्वाकस्मान्मन्युर्नवर्धते ॥ अयंकुरूनरणेसर्वान्हंतुमुत्सहतेप्रभुः २३ त्वत्प्रतिज्ञांप्रतीक्षंस्तुसहतेऽयंवृकोदरः ॥ योऽर्जुनेनार्जुनस्तुल्योद्विबाहुर्बहुबाहुना २४ शरावमर्देशीघ्रत्वात्कालांतकयमोपमः ॥ यस्यशस्त्रप्रतापेनप्रणताःसर्वपार्थिवाः २५ यज्ञेतवमहाराजब्राह्मणानुपतस्थिरे ॥ तमिमंपुरुषव्याघ्रंपूजितंदेवदानवैः २६ ध्यायंतमर्जुनंदृष्ट्वाकस्माद्राजन्नकुप्यसि ॥ दृष्ट्वावनगतंपार्थमदुःखार्हंसुखोचितम् २७ नचतेवर्धतेमन्युस्तेनमुह्यामिभारत ॥ योदेवांश्चमनुष्यांश्चसर्पांश्चैकरथोऽजयत् २८ तंतेवनगतंदृष्ट्वाकस्मान्मन्युर्नवर्धते ॥ योयानैरद्भुताकारैर्हयैर्नागैश्चसंवृतः २९ प्रसह्यवित्तान्यादत्तपार्थिवेभ्यःपरंतप ॥ क्षिपत्येकेनवेगेनपंचबाणशतानियः ३० तंतेवनगतंदृष्ट्वाकस्मान्मन्युर्नवर्धते ॥ श्यामंबृहंतंतरुणंचर्मिणामुत्तमंरणे ३१ नकुलंतेवनेदृष्ट्वाकस्मान्मन्युर्नवर्धते ॥ दर्शनीयंचशूरंचमाद्रीपुत्रंयुधिष्ठिर ३२ सहदेवंवनेदृष्ट्वाकस्मात्क्षमसिपार्थिव ॥ नकुलंसहदेवंचदृष्ट्वातेदुःखितावुभौ ३३ अदुःखार्हौमनुष्येंद्रकस्मान्मन्युर्नवर्धते ॥ द्रुपदस्यकुलेजातांस्नुषांपांडोर्महात्मनः ३४ धृष्टद्युम्नस्यभगिनींवीरपत्नीमनुव्रताम् ॥ मांवैवनगतांदृष्ट्वाकस्मात्क्षमसिपार्थिव ३५ नूनंचतववैनास्तिमन्युर्भरतसत्तम ॥ यत्तेभ्रातॄंश्चमांचैवदृष्ट्वानव्यथतेमनः ३६ ननिर्मन्युःक्षत्रियोऽस्तिलोकेनिर्वचनंस्मृतम् ॥ तदद्यत्वयिपश्यामिक्षत्रियेविपरीतवत् ३७ योनदर्शयतेतेजःक्षत्रियःकालआगते ॥ सर्वभूतानितंपार्थसदापरिभवंत्युत ३८ तत्त्वयानक्षमाकार्याशत्रून्प्रतिकथंचन ॥ तेजसैवहितेशक्यानिहंतुंनात्रसंशयः ३९ तथैवयःक्षमाकालेक्षत्रियोनोपशाम्यति ॥ अप्रियःसर्वभूतानांसोऽमुत्रेहचनश्यति ४० ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणि अर्जुनाभिगमनपर्वणिद्रौपदीपरितापवाक्येसप्तविंशोऽध्यायः ॥ २७ ॥

२६ । २७ । २८ । २९ आदत्तआत्तवान् ३० चर्मिणांखड्गचर्मधराणाम् ३१ । ३२ । ३३ । ३४ । ३५ । ३६ निर्वचनंक्षत्रियशब्दस्य क्षरतेहिंनस्तीतिक्षत्रमिति ३७ हिंस्रत्वंनिंद्यमितिचेत्तत्राह योनेति । तेजःक्रोधः ३८ । ३९ । ४० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तविंशोऽध्यायः ॥ २७ ॥

अत्रापीति १ आगतागमंप्राप्तरहस्यम् २ । ३ श्रेयःप्रशस्ततरं अत्रक्षमातेजसोर्मध्ये ४ । ५ । ६ । ७ अस्यणनं ८ । ९ । १० अधिकृताःअन्नपानादिसंरक्षणेनियुक्ताः प्रदिष्टानिइदमस्मैदेयमित्याज्ञापितानि ११ एनंक्षमिणं भर्तृपूजाभिःस्वाम्युचितमानेन १२ । १३ । १४ नित्यमुदिताःनित्यंहोलकाद्युत्सवपराः १५ । १६ तेजसाक्रोधेन १७ । १८ उपालंभंधिक्कारम् १९ । २० उपकर्तॄनितिच्छेदः

॥ द्रौपद्युवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ प्रह्लादस्यचसंवादंबलेर्वैरोचनस्यच १ असुरेंद्रंमहाप्राज्ञंधर्माणामागतागमम् ॥ बलिःपप्रच्छदैत्येंद्रंप्रह्लादंपितरंपितुः २ ॥ बलिरुवाच ॥ क्षमास्विच्छ्रेयसीतातउताहोतेजइत्युत ॥ एतन्मेसंशयंतातयथावद्ब्रूहिपृच्छते ३ श्रेयोयदत्रधर्मज्ञब्रूहिमेतदसंशयम् ॥ करिष्यामिहितत्सर्वंयथावदनुशासनम् ४ तस्मैप्रोवाचतत्सर्वमेवंपृष्टःपितामहः ॥ सर्वनिश्चयवित्प्राज्ञःसंशयंपरिपृच्छते ५ ॥ प्रह्लादउवाच ॥ नश्रेयःसततंतेजोननित्यंश्रेयसीक्षमा ॥ इतितातविजानीहिद्वयमेतदसंशयम् ६ योनित्यंक्षमतेतातबहून्दोषान्सविंदति ॥ भृत्याःपरिभवंत्येनमुदासीनास्तथाऽरयः ७ सर्वभूतानिचाप्यस्यननमंतेकदाचन ॥ तस्मान्नित्यंक्षमातातपंडितैरपिवर्जिता ८ अवज्ञायहितंभृत्याभजंतेबहुदोषताम् ॥ आदातुंचास्यवित्तानिप्रार्थयंतेऽल्पचेतसः ९ यानंवस्त्राण्यलंकारान्शयनान्यासनानिच ॥ भोजनान्यथपानानिसर्वोपकरणानिच १० आददीरन्नधिकृतायथाकाममचेतसः ॥ प्रदिष्टानिचदेयानिनदद्युर्भर्तृशासनात् ११ नचैनंभर्तृपूजाभिःपूजयंतिकथंचन ॥ अवज्ञानंहिलोकेऽस्मिन्मरणादपिगर्हितम् १२ क्षमिणंतादृशंतातब्रुवंतिकटुकान्यपि ॥ प्रेष्याःपुत्राश्चभृत्याश्चतथोदासीनवृत्तयः १३ अथास्यदारानिच्छंतिपरिभूयक्षमावतः ॥ दाराश्चास्यप्रवर्ततेयथाकाममचेतसः १४ तथाचनित्यमुदितायदिनाल्पमपीश्वरात् ॥ दंडमर्हंतिदुष्यंतिदुष्टाश्चाप्यपकुर्वते १५ एतेचान्येचबहवोनित्यंदोषाःक्षमावताम् ॥ अथवैरोचनेदोषानिमान्विद्ध्यक्षमावताम् १६ अस्थानेयदिवास्थानेसततंरजसावृतः ॥ क्रुद्धोदंडान्प्रणयतिविविधान्स्वेनतेजसा १७ मित्रैःसहविरोधंचप्राप्नुतेतेजसावृतः ॥ आप्नोतिद्वेष्यतांचैवलोकात्स्वजनतस्तथा १८ सोऽवमानादर्थहानिमुपालंभमनादरम् ॥ संतापद्वेषमोहांश्चशत्रूंश्चलभतेनरः १९ क्रोधाद्दंडान्मनुष्येषुविविधान्पुरुषोऽनयात् ॥ भ्रश्यतेशीघ्रमैश्वर्यात्प्राणेभ्यःस्वजनादपि २० योपकर्तॄंश्चहर्तॄंश्चतेजसैवोपगच्छति ॥ तस्मादुद्विजतेलोकःसर्पाद्वेश्मगतादिव २१ यस्मादुद्विजतेलोकःकथंतस्यभवोभवेत् ॥ अंतरंतस्यदृष्ट्वैवलोकोविकुरुतेध्रुवम् २२ तस्मान्नात्युत्सृजेत्तेजोनचनित्यंमृदुर्भवेत् ॥ कालेकालेतुसंप्राप्तेमृदुस्तीक्ष्णोऽपिवाभवेत् २३ कालेमृदुर्योभवतिकालेभवतिदारुणः ॥ सवैसुखमवाप्नोतिलोकेऽमुष्मिन्निहैवच २४ क्षमाकालांस्तुवक्ष्यामिशृणुमेविस्तरेणतान् ॥ येतेनित्यमसंत्याज्यायथाप्राहुर्मनीषिणः २५ पूर्वोपकारीयस्तेस्यादपराधेगरीयसि ॥ उपकारेणतत्तस्यक्षंतव्यमपराधिनः २६ अबुद्धिमाश्रितानांतुक्षंतव्यमपराधिनाम् ॥ नहिसर्वत्रपांडित्यंसुलभंपुरुषेणवै २७

संधिरार्षः उपकर्तॄन् कोशादिवृद्धिकरान् हर्तॄन् चोरान् २१ भवःऐश्वर्यं अंतरंछिद्रं विकुरुतेप्रथयति २२ । २३ । २४ असंत्याज्याःक्रोधेनानतिक्रमणीयाः २५ पूर्वेसंपूर्वकालेवाउपकारीउपकर्ता २६ अबुद्धिमौढ्यम् २७

२८ अपकृतेअपकारे २९ । ३० मृदुनासाम्ना ३१ सामापिदेशकालापेक्षयैवकर्त्तव्यमित्याह देशेति ३२ । ३३ । ३४ उत्स्रष्टुंप्रयोक्तुम् ३५ । ३६ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेअष्टाविंशोऽध्यायः ॥ २८ ॥ क्रोधइति । परैरपकृताआत्मिश्रोद्दीपिताः सामर्थ्यवंतोऽपिसंतःक्षमामेवश्रयंतइत्यध्यायतात्पर्यं । भावयितावर्धयिताजितःसन्निति शेषः १ तदेवाह योहीति २ लोकआत्मास्वर्गोवातन्नाशनं ३ तदेवाह क्रुद्धइति । श्रेयसःश्रेष्ठान्श्रेयोऽपिप्राप्येतिवाल्यब्लोपेपंचमीमाश्रित्यव्याख्येयम् ४ । ५।६ । ७ तं क्रोधंविक्रमं। धीरैरितिपाठेविपरीतःक्रमोयेनतमित्यर्थः चरेदाचरेत् ८ अप्रतिक्रुध्यन् त्रायते द्वयोरा

अथचेद्बुद्धिजंकृत्वाब्रूयुस्तेतदबुद्धिजम् ॥ पापान्स्वल्पेऽपितान्हन्यादपराधेतथाऽनृजून् २८ सर्वस्यैकोऽपराधस्तेक्षंतव्यःप्राणिनोभवेत् ॥ द्वितीयेसतिवध्यस्तुस्वल्पेऽप्यपकृतेभवेत् २९ अजानताभवेत्कश्चिदपराधःकृतोयदि ॥ क्षंतव्यमेवतस्याहुःसुपरीक्ष्यपरीक्षया ३० मृदुनादारुणंहंतिमृदुनाहंत्यदारुणम् ॥ नासाध्यंमृदुनाकिंचित्तस्मात्तीव्रतरंमृदु ३१ देशकालौतुसंप्रेक्ष्यबलाबलमथात्मनः ॥ नादेशकालेकिंचित्स्याद्देशकालौप्रतीक्षताम् ॥ तथालोकभयाच्चैवक्षंतव्यमपराधिनः ३२ एतएवंविधाःकालाःक्षमायाःपरिकीर्त्तिताः ॥ अतोऽन्यथाऽनुवर्तत्सुतेजसःकालउच्यते ३३ तदहंतेजसःकालंतवमन्येनराधिप ॥ धार्त्तराष्ट्रेषुलुब्धेषुसततंचापकारिषु ३४ नहिकश्चित्क्षमाकालोविद्यतेऽद्यकुरून्प्रति ॥ तेजसश्चागतेकालेतेजउत्स्रष्टुमर्हसि ३५ मृदुर्भवत्यनुज्ञातस्तीक्ष्णादुद्विजतेजनः ॥ कालेप्राप्तेद्वयंचैतद्योवेदसमहीपतिः ३६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिद्रौपदीवाक्येअष्टाविंशोऽध्यायः ॥ २८ ॥ युधिष्ठिरउवाच ॥ क्रोधोहंतामनुष्याणांक्रोधोभावयितापुनः ॥ इतिविद्धिमहाप्राज्ञेक्रोधमूलौभवाभवौ १ योहिसंहरतेक्रोधंभवस्तस्यसुशोभने ॥ यःपुनःपुरुषःक्रोधंनित्यंनसहतेशुभे ॥ तस्याभावायभवतिक्रोधःपरमदारुणः २ क्रोधमूलोविनाशोहिप्रजानामिहदृश्यते ॥ तत्कथंमादृशःक्रोधमुत्सृजेल्लोकनाशनम् ३ क्रुद्धःपापंनरःकुर्यात्क्रुद्धोहन्याद्गुरूनपि ॥ क्रुद्धःपरुषयावाचाश्रेयसोऽप्यवमन्यते ४ वाच्यावाच्येहिकुपितोनप्रजानातिकर्हिचित् ॥ नाकार्यमस्तिक्रुद्धस्यनावाच्यंविद्यते तथा ५ हिंस्यात्क्रोधादवध्यांस्तुवध्यान्संपूजयीतच ॥ आत्मानमपिचक्रुद्धःप्रेषयेद्यमसादनम् ६ एतान्दोषान्प्रपश्यद्भिर्जितःक्रोधोमनीषिभिः ॥ इच्छद्भिःपरमंश्रेयइहचामुत्रचोत्तमम् ७ तंक्रोधंवर्जितंधीरैःकथमस्मद्विधश्चरेत् ॥ एतद्द्रौपदिसंधायनमेमन्युःप्रवर्धते ८ आत्मानंचपरांश्चैवत्रायतेमहतोभयात् ॥ क्रुध्यंतमप्रतिक्रुध्यन्द्वयोरेषचिकित्सकः ९ मूढोयदिक्लिश्यमानःक्लिश्यतेऽशक्तिमान्नरः ॥ बलीयसांमनुष्याणांत्यजत्यात्मानमात्मना १० तस्यात्मानंसंत्यजतोलोकानश्यंत्यनात्मनः ॥ तस्माद्द्रौपद्यशक्तस्यमन्योर्नियमनंस्मृतम् ११

त्मपरयोः चिकित्सकःदोषापहर्त्ता ९ एतदेवाह मूढइति । बलीयसामुपरियदिअशक्तिमान्क्लिश्यतेक्रुध्यते तर्हिआत्मानंदेहंत्यजति १० अनात्मनःअजितचित्तस्यनियमनंकर्त्तव्यमितिस्मृतं अशक्तःक्रोधंजित्वा आत्मानमात्महत्यादोषात् परंचपरहत्यादोषात्त्रायतइत्यर्थः ११

शक्तस्यापिक्रोधजयेआत्मपरत्रातृत्वमाह विद्वानिति १२ । १३ । १४ । १५ प्रसृजेत्प्रकर्षेणप्रयुंजीत सुयोधनवधादपिसुयोधनाद्धर्मंप्राप्यापीत्यर्थः । यदुक्तंतेजसश्चागतेकालेतेजउत्स्रष्टुमर्हसीतितत्राह तेजस्वीति । क्रोधजिदेवतेजस्वीनतुक्रोधीत्यर्थः १६ । १७ प्रत्युतक्रोधाजयेदोषमाह क्रुद्धोहीति १८ तुदतिव्यथयतिपरुषोक्त्यादिना तेजसिसतिक्रोधजयित्वमेवतेजोनान्यदित्यर्थः १९ एतदेवतेजोलक्षणप्रदर्शनेनप्रतिपादयति दाक्ष्यमिति । दाक्ष्यंकर्मसुकौशलं । अमर्षःशत्रोरपकारोपायचिंतनं । शौर्यंपराभिभवशक्तिः । शीघ्रत्वंआशुकारिता । अंजसाआर्जवेन २० क्रुद्धैःकालयुक्तंदेशकालोपपन्नंतेजःसुदुःसहम् २१ पंडितैरित्युपहासोमूर्खैरित्यर्थः । अपंडितैरितिगौडपाठःस्वच्छः । रजःरजोगुणपरिणामः २२ स्वधर्मान् अपगःअपहायगच्छतीतितथा द्वितीयायाअलुगार्षः जातिभ्रष्टात्पतितादपिक्रोधीहीनइत्यर्थः २३ स

विद्वांस्तथैवयःशक्तःक्लिश्यमानोनकुप्यति ॥ अनाशयित्वाक्लेष्टारंपरलोकेचनंदति १२ तस्माद्बलवताचैवदुर्बलेनचनित्यदा ॥ क्षंतव्यंपुरुषेणाहुरापत्स्वपिविजानता १३ मन्योर्हिविजयंकृष्णेप्रशंसंतीहसाधवः ॥ क्षमावतोजयोनित्यंसाधोरिहसतांमतम् १४ सत्यंचानृततःश्रेयोनृशंसाच्चानृशंसता ॥ तमेवंबहुदोषंतुक्रोधंसाधुविवर्जितम् १५ मादृशःप्रसृजेत्कस्मात्सुयोधनवधादपि ॥ तेजस्वीतियमाहुर्वैपंडितादीर्घदर्शिनः १६ नक्रोधोऽभ्यंतरस्तस्यभवतीतिविनिश्चितम् ॥ यस्तुक्रोधंसमुत्पन्नंप्रज्ञयाप्रतिबाधते १७ तेजस्विनंतंविद्वांसोमन्यंतेतत्त्वदर्शिनः ॥ क्रुद्धोहिकार्यंसुश्रोणिनयथावत्प्रपश्यति ॥ नाकार्यंनचमर्यादांनरःक्रुद्धोऽनुपश्यति १८ हंत्यवध्यानपिक्रुद्धोगुरून्क्रुद्धस्तुदत्यपि ॥ तस्मात्तेजसिकर्तव्यःक्रोधोदूरेप्रतिष्ठितः १९ दाक्ष्यंह्यमर्षःशौर्यंचशीघ्रत्वमितितेजसः ॥ गुणाःक्रोधाभिभूतेननशक्याःप्राप्तुमंजसा २० क्रोधंत्यक्त्वातुपुरुषःसम्यक्तेजोऽभिपद्यते ॥ कालयुक्तंमहाप्राज्ञेक्रुद्धैस्तेजःसुदुःसहम् २१ क्रोधस्तुपंडितैःशश्वत्तेजइत्यभिनिश्चितम् ॥ रजस्तुलोकनाशायविहितंमानुषंप्रति २२ तस्माच्छश्वत्त्यजेत्क्रोधंपुरुषःसम्यगाचरन् ॥ श्रेयान्स्वधर्मानपगोनक्रुद्धइतिनिश्चितम् २३ यदिसर्वमबुद्धीनामतिक्रांतमचेतसाम् ॥ अतिक्रमोमद्विधस्यकथंस्वित्स्यादनिंदिते २४ यदिनस्युर्मानुषेषुक्षमिणःपृथिवीसमाः ॥ नस्यात्संधिर्मनुष्याणांक्रोधमूलोहिविग्रहः २५ अभिषक्तोह्यभिषजेदाहन्याद्गुरुणाहतः ॥ एवंविनाशोभूतानामधर्मःप्रथितोभवेत् २६ आक्रुष्टःपुरुषःसर्वंप्रत्याक्रोशेदनंतरम् ॥ प्रतिहन्याद्धतश्चैवतथाहिंस्याच्चहिंसितः २७ हन्युर्हिपितरःपुत्रान्पुत्राश्चापितथापितृन् ॥ हन्युश्चपतयोभार्याःपतीन्भार्यास्तथैवच २८ एवंसंकुपितेलोकेजन्मकृष्णेनविद्यते ॥ प्रजानांसंधिमूलंहिजन्मविद्धिशुभानने २९ ताःक्षिपेरन्प्रजाःसर्वाःक्षिप्रंद्रौपदितादृशे ॥ तस्मान्मन्युर्विनाशायप्रजानामभवायच ३० यस्मात्तुलोकेदृश्यंतेक्षमिणःपृथिवीसमाः ॥ तस्माज्जन्मचभूतानांभवश्चप्रतिपद्यते ३१

र्वक्षमार्जवादिकं अबुद्धीनांमूढैःअतिक्रांतंलंघितं अनिंदितेप्रशस्तेविषयेक्षमादौ २४ । २७ अभिषक्तःतापितःअभिषजेत्तापयेत् गुरुणाऽपिहतस्तंआहन्यात्ताडयेत् किमुतान्यमितिभावः एवंविनाशःअधर्मश्चप्रथितोभवेत् २६ आक्रुष्टोवाचाताडितः हतोऽन्येनाभिगतःहिंसितस्ताडितः २७ । २८ जन्मोत्पत्तिः तत्रहेतुःप्रजानांसंधिःदंपत्योःप्रीतिः शभइतिपाठेक्षमा २९ तादृशेक्रोधपरेराज्ञिसति क्षिपेरन्नश्येयुः अभवायानैश्वर्याय ३० जन्मप्रतिपद्यतेअन्यथाक्रोधप्राबल्येपूर्ववयस्येवदंपत्योर्नाशाज्जन्मासंभवइत्यर्थः ३१

बलीयसाबलवत्तरेणस्वाम्यादिनायथाआक्रुष्टस्ताडितोवाऽशक्तःक्षमते तथायःप्रभाववानपिक्षमतेतस्यलोकाइतिसार्द्धश्लोकोवाक्यम् ३३ अन्यथादोषमाहार्द्धेन क्रोधनस्त्विति ३४ अत्रेति । क्षमावतांगाथाःप्रशंसाःक्षमावतांमध्येमहात्मना ३५ क्षमाधर्मइति । क्षमाहीनस्यधर्मादिरनर्थकरइत्यर्थः । यःधर्मादिफलार्थी ३६ ब्रह्मब्राह्मणजातिः सत्यंपरंब्रह्मापिक्षमाप्राप्यं भूतंसंचितं तपःभाविचक्षमैवरक्षति ३७ अति अतिक्रम्यप्राप्नुवंति तदूर्ध्वंपदमितिशेषः ब्रह्मविदांवेदविदाम् ३८ यजुषांत्रेताग्निसाध्यकर्मवतां कर्मिणांवापीकूपादिधर्मवताम् ३९ । ४० । ४१ सर्वमनःप्राणेंद्रियाणांवेगंक्षमतेसोढुंशक्नोति ४२

क्षंतव्यंपुरुषेणेहसर्वापत्सुसुशोभने ॥ क्षमावतोहिभूतानांजन्मचैवप्रकीर्तितम् ३२ आक्रुष्टस्ताडितःक्रुद्धःक्षमतेयोबलीयसा ॥ यश्चनित्यंजितक्रोधोविद्वानुत्तमपूरुषः ३३ प्रभाववानपिनरस्तस्यलोकाःसनातनाः ॥ क्रोधनस्त्वल्पविज्ञानःप्रेत्यचेहचनश्यति ३४ अत्राप्युदाहरंतीमागाथानित्यंक्षमावताम् ॥ गीताःक्षमावतांकृष्णेकाश्यपेनमहात्मना ३५ क्षमाधर्मःक्षमायज्ञःक्षमावेदाःक्षमाश्रुतम् ॥ यएतदेवंजानातिसससर्वंक्षंतुमर्हति ३६ क्षमाब्रह्मक्षमासत्यंक्षमाभूतंचभाविच ॥ क्षमातपःक्षमाशौचंक्षमयेदंधृतंजगत् ३७ अतियज्ञविदांलोकान्क्षमिणःप्राप्नुवंतिच ॥ अतिब्रह्मविदांलोकानतिचापितपस्विनाम् ३८ अन्येवैयजुषांलोकाःकर्मिणामपरेतथा ॥ क्षमावतांब्रह्मलोकेलोकाःपरमपूजिताः ३९ क्षमातेजस्विनांतेजःक्षमाब्रह्मतपस्विनाम् ॥ क्षमासत्यंसत्यवतांक्षमायज्ञःक्षमाशमः ४० तांक्षमांतादृशींकृष्णेकथमस्मद्विधस्त्यजेत् ॥ यस्यांब्रह्मचसत्यंचयज्ञालोकाश्चधिष्ठिताः ४१ क्षंतव्यमेवसततंपुरुषेणविजानता ॥ यदाहिक्षमतेसर्वंब्रह्मसंपद्यतेतदा ४२ क्षमावतामयंलोकःपरश्चैवक्षमावताम् ॥ इहसन्मानमृच्छंतिपरत्रचशुभांगतिम् ४३ येषांमन्युर्मनुष्याणांक्षमयाऽभिहतःसदा ॥ तेषांपरतरेलोकास्तस्मात्क्षांतिःपरामता ४४ इतिगीताःकाश्यपेनगाथानित्यंक्षमावताम् ॥ श्रुत्वागाथाःक्षमायास्त्वंतुष्यद्रौपदिमाक्रुधः ४५ पितामहःशांतनवःशमंसंपूजयिष्यति ॥ कृष्णश्चदेवकीपुत्रःशमंसंपूजयिष्यति ४६ आचार्योविदुरःक्षत्ताशममेववदिष्यतः ॥ कृपश्चसंजयश्चैवशममेववदिष्यतः ४७ सोमदत्तोयुयुत्सुश्चद्रोणपुत्रस्तथैवच ॥ पितामहश्चनोव्यासःशमंवदतिनित्यशः ४८ एतैर्हिराजानियतंचोद्यमानःशमंप्रति ॥ राज्यंदातेतिमेबुद्धिर्नचेल्लोभान्नशिष्यति ४९ कालोऽयंदारुणःप्राप्तोभरतानामभूतये ॥ निश्चितंमेसदैवैतत्पुरस्तादपिभाविनि ५० सुयोधनोनार्हतीतिक्षमामेवंनविंदति ॥ अर्हस्तत्राहमित्येवंतस्मान्मांविंदतेक्षमा ५१ एतदात्मवतांवृत्तमेषधर्मःसनातनः ॥ क्षमाचैवानृशंस्यंचतत्कर्त्तास्म्यहमंजसा ५२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुना०द्रौपदीयुधिष्ठिरसंवादेऊनत्रिंशोऽध्यायः ॥ २९ ॥ ॥

द्रौपद्युवाच ॥ नमोधात्रेविधात्रेचयौमोहंचक्रतुस्तव ॥ पितृपैतामहेवृत्तेवोढव्येतेऽन्यथामतिः १

४३ परतरेसत्यलोके लोकाःभोग्यपदार्थाः ४४ तुष्य तुष्टाभव ४५ । ४६ । ४७ । ४८ राजाधृतराष्ट्रःतत्पुत्रोवादातादास्यति ४९ अभूतयेनाशाय ५० नार्हतिराज्यमितिशेषः तत्रहेतुः इतीति । एवंउक्तरीसा ५१ अंजसातत्त्वतः ५२ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपे ऊनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ नमोधात्रेइति । धात्रेईश्वराय विधात्रेपूर्वकर्मणे वृत्ते बलेनराज्याक्रमणरूपे १

ईश्वरस्यापिकर्मापेक्षत्वात्प्रथमंकर्मप्राबल्यमेवाह कर्मभिरिति । चितितःकल्पितोलोकोभोगसाधनं गत्यांगत्यांउर्ध्वाधोमध्यमोत्तमाधमयोनिषु नित्यानिअपरिहार्यफलानि लोभात्मोहात् मोक्षंकर्मफलेभ्योदुःखेभ्योमुक्तिंयियासतिप्राप्तुमिच्छति २ कर्मनित्यत्वमेवाह नेहेति । इहजन्मनिपुरुषःपूर्वकर्मभिर्बाध्यमानो धर्मादिनानश्रियमाप्नोति आनृशंस्यंदया घृणालोकापवादभयम् ३ तत्रत्वमेवदृष्टांतइत्याह त्वामित्यादिना ४ तदानींराज्यकाले अद्यराज्यच्युतौ जातुकदाचिद्धर्मात्प्रियतरंनहितेअध्यगमन्ज्ञातवंतः किंतुजीवितादपिप्रियतरंधर्ममेवाध्यगमन् ५ । ६ । ७ । ८ । ९ शृंगंप्रभुत्वाभिमानः १० । ११ तेत्वया मोक्षिणः संन्यासिनोमोक्षाश्रमस्थाः १२ आरण्यकेभ्योवानप्रस्थेभ्यः लौहानिसौवर्णादीनि । लोहानांकांचनंवरमितिलिंगात् १३ । १४ पाकयज्ञागृह्याग्निसाध्याइष्टयः १५ । १६ । १७ परीतयाविपरीतया १८

कर्मभिश्चिंतितोलोकोगत्यांगत्यांपृथग्विधः ॥ तस्मात्कर्माणिनित्यानिलोभान्मोक्षंयियासति २ नेहधर्मानृशंस्याभ्यांनक्षांत्यानार्जवेनच ॥ पुरुषःश्रियमाप्नोतिनघृणित्वेनकर्हिचित् ३ त्वांचव्यसनमभ्यागादिदंभारतदुःसहम् ॥ यत्त्वंनार्हसिनापीमेभ्रातरस्तेमहौजसः ४ नहितेऽध्यगमन्जातुतदानींनाद्यभारत ॥ धर्मात्प्रियतरंकिंचिदपिचेज्जीवितादिह ५ धर्मार्थमेवतेराज्यंधर्मार्थंजीवितंचते ॥ ब्राह्मणागुरवश्चैवजानंत्यपिचदेवताः ६ भीमसेनार्जुनौचोभौमाद्रेयौचमयासह ॥ त्यजेस्त्वमितिमेबुद्धिर्नतुधर्मंपरित्यजेः ७ राजानंधर्मगोप्तारंधर्मोरक्षतिरक्षितः ॥ इतिमेश्रुतमार्याणांत्वांतुमन्येनरक्षति ८ अनन्याहिनरव्याघ्रनित्यदाधर्ममेवते ॥ बुद्धिःसततमन्वेतिछायेवपुरुषंनिजा ९ नावमंस्थाहिसदृशान्नावरान्श्रेयसःकुतः ॥ अवाप्यपृथिवींकृत्स्नांनतेशृंगमवर्द्धत १० स्वाहाकारैःस्वधाभिश्चपूजाभिरपिचद्विजान् ॥ दैवतानिपितॄंश्चैवसततंपार्थसेवसे ११ ब्राह्मणाःसर्वकामैस्तेसततंपार्थतर्पिताः ॥ यतयोमोक्षिणश्चैवगृहस्थाश्चैवभारत १२ भुंजतेरुक्मपात्रीभिर्यत्राहंपरिचारिका ॥ आरण्यकेभ्योलौहानिभाजनानिप्रयच्छसि ॥ नादेयंब्राह्मणेभ्यस्तेगृहेकिंचनविद्यते १३ यदिदंवैश्वदेवंतेशांतयेक्रियतेगृहे ॥ तद्दत्वातिथिभूतेभ्योराजन्शिष्टेनजीवसि १४ इष्टयःपशुबंधाश्चकाम्यनैमित्तिकाश्चये ॥ वर्ततेपाकयज्ञाश्चयज्ञकर्मचनित्यदा १५ अस्मिन्नपिमहारण्येविजनेदस्युसेविते ॥ राष्ट्रादपेत्यवसतोधर्मस्तेनावसीदति १६ अश्वमेधोराजसूयःपुंडरीकोऽथगोसवः ॥ एतैरपिमहायज्ञैरिष्टंतेभूरिदक्षिणैः १७ राजन्परीतयाबुद्ध्याविषमेऽक्षपराजये ॥ राज्यंवसून्यायुधानिभ्रातॄन्मांचासिनिर्जितः १८ ऋजोर्मृदोर्वदान्यस्यह्रीमतःसत्यवादिनः ॥ कथमक्षव्यसनजाबुद्धिरापतितातव १९ अतीवमोहमायातिमनश्चपरिभूयते ॥ निशाम्यतेदुःखमिदमिमांचापदमीदृशीम् २० अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ ईश्वरस्यवशेलोकास्तिष्ठंतेनात्मनोयथा २१ धातैवखलुभूतानांसुखदुःखेप्रियाप्रिये ॥ दधातिसर्वमीशानःपुरस्ताच्छुक्रमुच्चरन् २२ यथादारुमयीयोषानरवीरसमाहिता ॥ ईरयत्यंगमंगानितथाराजन्निमाःप्रजाः २३

ऋजोरवक्रस्य मृदोर्दयालोः १९ निशाम्यआलोच्य ममनोमोहंमौढ्यमायातिपरिभूयतेचेत्यन्वयः परिभवआर्तिः २० लोकाभोग्यानितिष्ठंतेप्रकाशंते । प्रकाशनस्थेयाख्ययोश्चेतितङ् २१ धाताईश्वरः शुक्रंप्राक्कर्मबीजं उच्चरन्नुत्कर्षेणानुसरन् २२ यथेति । हेनरवीर सूत्रधारेणसमाहितासम्यङ्नियुक्तासतीअंगमीरयति तथाइमाःप्रजाःअंगानिहस्तादीनि ईश्वरेणसमाहिताःसत्यईरयंति । चेष्टयंत्यंगकर्माणीतिपाठे हेअंगकर्माणिकर्तॄणि कर्मानुरोधीईश्वरइत्यर्थः इमाःप्रजाः चेष्टयंतीतिसंबंधः २३

अंतर्बहिर्व्याप्तौआकाशदृष्टांतः भूतानिजरायुजादीनि २४ बद्धोवाबद्धइव अन्येषामुपाध्यायादीनाम् २५ नसिनासिकायां नस्यंनासासूत्रं तेनवाओतःप्रोतः अत्रद्वौआकाशशकुनिसूत्रदृष्टांतौईश्वरस्य व्यापकत्वप्रेरकत्वयोः त्रयोमणिवृषवृक्षदृष्टांताजीवस्यास्वातंत्र्ये २६ आदेशमाज्ञामन्वेतिअनुसरति तत्रहेतुः तन्मयोहितदर्पणइति । यथामृन्मयोघटोमृद्येवलीयतेऽतोमध्येपिमृद्धीनोऽनन्य एवंजीवोऽपीश्वरस्यैवरूपभेदस्तन्मयस्तदर्पणश्चातोमध्येऽपितत्प्रेर्यएवेत्यर्थः यथोक्तम् । 'अजनिचयन्मयंतदविमुच्यनियंतृभवेत्'इतियन्मयंतत्तन्नियम्यमितितस्यार्थः । अयमात्माधीनोनकिंतुकंचनानिर्देश्यरूपं कालंकालयितारमीशंभजत्यनुसरति २७ । २८ । २९ चरतेभुंक्ते कर्मव्यतिहारेतङ् । फलप्रदत्वेनोपकारकमीशंजीवोभुंक्ते कर्मकर्तृत्वेनोपकारकंजीवमीशोभुंक्तइत्यर्थः अयमिति । राजवत्तटस्थतयानचलक्ष्यते अंतर्यामित्वात् ३० नन्वीश्वरोजीवादन्योऽनन्यो वा । आद्येनचायमितिलक्ष्यतइत्यनुपपन्नं द्वितीयेतयोःशास्तृशास्यभावानुपपत्तिरित्याशंक्याह हेतुमात्रमिति । विभुश्चिदात्मायेनप्रयोज्येनकर्मकारयते ततइदंशरीरंमहाभूतान्यहंकारइत्यादिनोक्तरूपंस्थूलसूक्ष्मदेहद्वयं तदेवकर्तृइत्यर्थः । ननुजडेकर्तृत्वासंभवइत्याशंक्याह धातुःक्षेत्रसंज्ञितंक्षेत्रमिवक्षेत्रंचिदात्मनआभासरूपबीजनिवापस्थानं चिदाभासयुक्तंक्षेत्रंकर्तृ

आकाशइवभूतानिव्याप्यसर्वाणिभारत ॥ ईश्वरोविदधातीहकल्याणंयच्चपापकम् २४ शकुनिस्तंतुबद्धोवानियतोऽयमनीश्वरः ॥ ईश्वरस्यवशेतिष्ठेन्नान्येषांनात्मनःप्रभुः २५ मणिःसूत्रइवप्रोतोनस्योतइवगोवृषः ॥ स्रोतसोमध्यमापन्नःकूलाद्वृक्षइवच्युतः २६ धातुरादेशमन्वेतितन्मयोहितदर्पणः ॥ नात्माधीनोमनुष्योऽयंकालंभजतिकंचन २७ अज्ञोजंतुरनीशोऽयमात्मनःसुखदुःखयोः ॥ ईश्वरप्रेरितोगच्छेत्स्वर्गंनरकमेवच २८ यथावायोस्तृणाग्राणिवशंयांतिबलीयसः ॥ धातुरेवंवशंयांतिसर्वभूतानिभारत २९ आर्येकर्मणियुंजानःपापेवापुनरीश्वरः ॥ व्याप्यभूतानिचरतेनचायमितिलक्ष्यते ३० हेतुमात्रमिदंधातुःशरीरंक्षेत्रसंज्ञितम् ॥ येनकारयतेकर्मशुभाशुभफलंविभुः ३१ पश्यमायाप्रभावोऽयमीश्वरेणयथाकृतः ॥ योहंतिभूतैर्भूतानिमोहयित्वाऽऽत्ममायया ३२ अन्यथापरिदृष्टानिमुनिभिस्तत्त्वदर्शिभिः ॥ अन्यथापरिवर्त्तंतेवेगाइवनभस्वतः ३३ अन्यथैवहिमन्यंतेपुरुषास्तानितानिच ॥ अन्यथैवप्रभुस्तानिकरोतिविकरोतिच ३४ यथाकाष्ठेनवाकाष्ठमश्मानंचाश्मनापुनः ॥ अयसाचाप्ययश्छिंद्यान्निर्विचेष्टमचेतनम् ३५ एवंसभगवान्देवःस्वयंभूःप्रपितामहः ॥ हिनस्तिभूतैर्भूतानिच्छद्मकृत्वायुधिष्ठिर ३६ संप्रयोज्यवियोज्यायंकामकारकरःप्रभुः ॥ क्रीडतेभगवान्भूतैर्बालःक्रीडनकैरिव ३७

इत्यर्थः । तच्चहेतुमात्रंइच्छाद्यात्मकत्वात् हेतुरपिनमुख्यहेतुभूतं बिंबप्रतिबिंबदृष्टांतेनचिदाभासस्यचिदात्मतंत्रत्वात् तथाचाभासस्यान्यत्वमादायशास्तृशास्यभावोव्यावहारिकः परमार्थतस्तुक्षेत्रस्यसुप्तिसमाध्योरभावान्नचायमितिलक्ष्यतइत्युक्तमितिभावः ३१ अयंपूर्वोक्तोमायायाअघटितघटनापटीयस्याअनिर्वचनीयाज्ञानाख्यायाःप्रभावः यईश्वरोभूतैःपृथक्पृथक्क्षेत्राभिमानिभिर्मोहयित्वा अनात्मनिदेहादावात्मबुद्धिंजनयित्वा ३२ मोहमेवविवृणोतिद्वाभ्यां अन्यथेति । तत्त्वदर्शिभिः स्वप्नमायेंद्रजालवद्दृष्टान्यपि मूढानांसत्यवत्परिवर्त्तंतेभासंते वेगाःकरप्रसराः नभस्वतआकाशगामिनः सूर्यस्यतेजोमयाःसंतोजलहृदवदवभासंते ३३ अनित्याशुचिदुःखरूपाण्यपितानिनित्यशुचिसुखस्वरूपाणिमन्यंते अन्यथाकरोति गगनवदजातमप्यंकुरादिक्रमेणजनयति विकरोतिचजीर्णत्वादिभावंचनयति ३४ अयोवत्तरुवच्चकेवलंनिश्चेष्टं किंत्वचेतनमपि ३५ छद्ममायाम् ३६ संप्रयोज्यसंयोगंकृत्वा कामकारइच्छातयैवकरोतीतिकामकारकरः बालःप्राकृतः क्रीडनकैःमारीप्रभृतिभिः ३७

नमात्रिति । ईशोनदयालुःप्रत्युतनृशंसइत्यर्थः ३८ किंचईशस्यदुष्टेषुपक्षपातःसाधुषुचद्वेषोदृश्यतेऽतःसनिंद्यएवेत्याह आर्यानित्यादित्रिभिः । चिंतयाध्यनादिध्यानेन ३९ । ४० धर्माभिशंकिनीतिपाठेधर्मश्रद्धा शून्येफलंयज्ञादिनातृप्तिंकिमश्नुतेअपितुनैवेत्यर्थः ४१ कर्मेति । कृतंकर्मयदिकर्त्तारमेवगच्छतिनत्वन्यंतर्हिकारयितृत्वादीश्वरोऽपिपापेनलिप्येतैवेत्यर्थः ४२ अथेति । कर्त्तारंकारयितारमीश्वरंऐश्वर्यादेवकर्म नस्पृशतितर्हितत्प्रयोज्याजीवाएवकर्मभिर्हतास्तथाचईश्वरोबलादीनान्नरकेपातयतीसत्यंतंनिंद्यएवसइतिभावः ४३ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रिंशोऽध्यायः ॥ ३० ॥ ॥ एवंध र्मेश्वरयोराक्षेपेप्राप्तेप्रत्यक्षानुमानागमैस्तौसमर्थयितुमध्यायआरभ्यते वल्गुचित्रेति । वल्गुशोभनं श्लक्ष्णंसुकुमारं नास्तिक्यंवेदविद्विष्टं १ यदुक्तं त्वांचेद्व्यसनिनमित्यादिनाधर्मस्यनैष्फल्येत्वदभिभवएवदृष्टांतइतित त्राह नाहमिति । कर्म धर्म फलार्थिनाकृतोधर्मोयदिनिष्फलःस्यात्तर्हिभवेदयमाक्षेपो नत्वहंतथाऽऽचरामीत्यर्थः ननुफलेच्छायाअभावेकिमर्थंधर्मःकर्तव्यइत्यतआह ददामीत्यादिना देयमृणमित्येवददामि । 'जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायते ब्रह्मचर्येणऋषिभ्यो यज्ञेनदेवेभ्यः प्रजयापितृभ्यः' इतिश्रुतेः । ऋणवाऋणवान् २ यथाशक्तियत्कर्त्तव्यंतत्करोमीत्यन्वयः ३ धर्ममिति । वेदवाक्यात्शिष्टाचाराच्चनि

नमात्पितृवद्राजन्धाताभूतेषुवर्त्तते ॥ रोषादिवप्रवृत्तोऽयंयथाऽयमितरोजनः ३८ आर्यान्शीलवतोदृष्ट्वान्हीमतोवृत्तिकर्षितान् ॥ अनार्यान्सुखिनश्चैवविव्हलानिव चिंतया ३९ तवेमामापदंदृष्ट्वासमृद्धिंचसुयोधने ॥ धातारंगर्हयेपार्थविषमंयोऽनुपश्यति ४० आर्यशास्त्रातिगेक्रूरेलुब्धेधर्मापचायिनि ॥ धार्त्तराष्ट्रेश्रियंदत्वाधाता किंफलमश्नुते ४१ कर्मचेत्कृतमन्वेतिकर्त्तारंनान्यमृच्छति ॥ कर्मणातेनपापेनलिप्यतेनूनमीश्वरः ४२ अथकर्मकृतंपापंनचेत्कर्त्तारमृच्छति ॥ कारणंबलमेवेहज नान्शोचामिदुर्बलान् ४३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुना॰द्रौपदीवाक्येत्रिंशोऽध्यायः ॥ ३० ॥ ॥ युधिष्ठिरउवाच ॥ वल्गुचित्रपदंश्लक्ष्णं याज्ञसेनित्वयावचः ॥ उक्तंतच्छ्रुतमस्माभिर्नास्तिक्यंतुप्रभाषसे १ नाहंकर्मफलान्वेषीराजपुत्रिचराम्युत ॥ ददामिदेयमित्येवयजेयष्टव्यमित्युत २ अस्तुवात्रफलंमा वाकर्त्तव्यंपुरुषेणयत् ॥ गृहेवावसताकृष्णेयथाशक्तिकरोमितत् ३ धर्मचरामिसुश्रोणिनधर्मफलकारणात् ॥ आगमाननतिक्रम्यसतांवृत्तमवेक्ष्यच ४ धर्मएवमनः कृष्णेस्वभावाच्चैवमेधृतम् ॥ धर्मवाणिज्यकोहीनोजघन्योधर्मवादिनाम् ५ नधर्मफलमाप्नोतियोधर्मंदोग्धुमिच्छति ॥ यश्चैनंशंकतेकृत्वानास्तिक्यात्पापचेतनः ६ अतिवादाद्वदाम्येषमाधर्ममभिशंकिथाः ॥ धर्माभिशंकीपुरुषस्तिर्यग्गतिपरायणः ७ धर्मोयस्याभिशंक्यःस्यादार्षंवादुर्बलात्मनः ॥ वेदाच्छूद्रइवापेयात्सलो कादजरामरात् ८

ष्काममेवधर्मंचरामि । 'अग्निहोत्रंजुहुयात्स्वर्गकामः' इतिस्वर्गादिफलश्रुतिस्तुधर्मेप्ररोचनार्थेतिभावः ४ स्वभावात् । 'शौर्यंतेजोधृतिर्दाक्ष्यंयुद्धेचाप्यपलायनम् । दानमीश्वरभावश्चक्षात्रंकर्मस्वभावजम्' इतिगी तावचनोक्तधर्माचरणशीलएवक्षत्रियोनान्यइतिनियमान्मेमयाधर्मेमनोधृतं यतोधर्मवाणिज्यकोधर्मात्स्वर्गादिफलमिच्छन्हीनोमुख्यफलात्च्युतोऽतएवजघन्योनीचः ५ धर्मफलं । 'तमेतंवेदानुवचनेनब्राह्मणा विविदिषंतियज्ञेनदानेनतपसाऽनाशकेन' इतिश्रुतेर्विद्याविविदिषा वा धर्मफलंमुख्यंतन्नाप्नोति यश्चैनंधर्मशंकते विश्वासंनकुरुते सोऽपिधर्मफलंनाप्नोति पापचेतनःपापबुद्धिः ६ अतिवादात् मानांतरमति क्रांतोवादोवचनं तस्माद्वेदैकप्रामाण्यात् ७ आर्षंऋषयोमंत्रास्तद्द्रष्टारोमन्वादयोवा धर्ममूलभूतंमंत्रजातंवा मन्वादिवाक्यंवेत्यर्थः । अर्थेवेतिपाठे फलेविषयेइत्यर्थः । दुर्बलात्मनःविवेकाक्षमचित्तस्य अपेयात्अ पगच्छेत् लोकादात्मलोकात् । स्वर्लोकादितिपाठेऽप्यानंदरूपादात्मलोकादित्यर्थः । अनात्मलोकेषुअजरामरत्वयोरसंभवात् अजरामरात् मोक्षरूपात् ८

बालोऽपिस्थविरेषुयोक्तव्योनियोक्तव्यो गणनीयः ९ । १० एवंधर्मस्यवेदैकगम्यत्वादनतिशंक्यत्वंवेदस्यचश्रेष्ठप्रमाणत्वमुक्त्वाप्रत्यक्षत्वादपिधर्मफलस्यानतिशंक्यत्वमाह प्रत्यक्षंहीत्यादिना। चिरजीविताचिरजीवी ११ । १२ । १३ धर्मकर्त्तव्यंवर्णयंति प्रत्यक्षागमबुद्धयः अस्माकंवेदैकगम्यमप्यर्थंप्रत्यक्षेणपश्यंतइत्यर्थः १४ क्षेपोनिंदा शंकाफलेसंशयः १५ एतच्चमूढकार्यमित्याह उन्मत्तानित्यादिना। आगतनिश्चयान् प्राप्ततत्त्वनिश्चयान् १६ उन्नद्धोदृप्तः श्रेयसोधर्मस्य अन्यत्रातींद्रियेधर्माद्यर्थे १७ ध्यायन् अर्थांश्चिंतयन्नपि लोकान्धर्मप्राप्यान् १८ कामलोभावत्यंतंगच्छतिप्राप्नोतीतिकामलोभातिगः १९ आनंत्यं ब्रह्मभावम् २० शंकल्याणम् २१ । २२ । २३ । २४। अनुमानमपिधर्मेप्रमाणमित्याह अफलइति । अयंभावः यदिधर्मोनस्यात्तर्हिऊर्ध्वगतिंकश्चिदपिनाप्नुयात् । जायस्वम्रियस्वेतिमशकादीनां पूर्वसंस्कारात्पुनःपुनस्तत्तज्जातीयदेहस्यैवप्राप्तिश्रुतेरंधंतमःप्राप्तिरेवसर्वेषांस्यात् ततश्च शास्त्रानर्थक्यं । यदितुधर्मोऽस्तितर्हितेषामपिविशिष्टदेशनिवासादिजनितस्यपुण्यस्यापरिहार्यत्वादूर्ध्वगतिः संभवति

वेदाध्यायीधर्मपरःकुलेजातोमनस्विनि ॥ स्थविरेषुसयोक्तव्योराजर्षिर्धर्मचारिभिः ९ पापीयान्सहिशूद्रेभ्यस्तस्करेभ्योविशिष्यते ॥ शास्त्रातिगोमंदबुद्धिर्योधर्ममभिशंकते १० प्रत्यक्षंहित्वयादृष्टऋषिर्गच्छन्महातपाः ॥ मार्कंडेयोऽप्रमेयात्माधर्मेणचिरजीविता ११ व्यासोवसिष्ठोमैत्रेयोनारदोलोमशःशुकः ॥ अन्येचऋषयःसर्वेधर्मेणैवसुचेतसः १२ प्रत्यक्षंपश्यसिह्येतान्दिव्ययोगसमन्वितान् ॥ शापानुग्रहणेशक्तान्देवेभ्योऽपिगरीयसः १३ एतेहिधर्ममेवादौवर्णयंतिसदाऽनघे ॥ कर्त्तव्यममरप्रख्याःप्रत्यक्षागमबुद्धयः १४ अतोनार्हसिकल्याणिधातारंधर्ममेवच ॥ राज्ञिमूढेनमनसाक्षेप्तुंशंकितुमेवच १५ उन्मत्तान्मन्यतेबालःसर्वानागतनिश्चयान् ॥ धर्माभिशंकीनान्यस्मात्प्रमाणमधिगच्छति १६ आत्मप्रमाणउन्नद्धःश्रेयसोह्यवमन्यकः ॥ इंद्रियप्रीतिसंबद्धंयदिदंलोकसाक्षिकम् ॥ एतावन्मन्यतेबालोमोहमन्यत्रगच्छति १७ प्रायश्चित्तंनतस्यास्तियोधर्ममभिशंकते ॥ ध्यायन्सकृपणःपापोनलोकान्प्रतिपद्यते १८ प्रमाणाद्धिनिवृत्तोहिवेदशास्त्रार्थनिंदकः ॥ कामलोभातिगोमूढोनरकंप्रतिपद्यते १९ यस्तुनित्यंकृतमतिर्धर्ममेवाभिपद्यते ॥ अशंकमानःकल्याणिसोऽमुत्रानंत्यमश्नुते २० आर्षप्रमाणमुत्क्रम्यधर्मंनप्रतिपालयन् ॥ सर्वशास्त्रातिगोमूढःशंजन्मसुनविंदति २१ यस्यनार्षंप्रमाणंस्याच्छिष्टाचारश्चभाविनि ॥ नवैतस्यपरोलोकोनायमस्तीतिनिश्चयः २२ शिष्टैराचरितंधर्मंकृष्णेमाऽस्माभिशंकिथाः ॥ पुराणमृषिभिःप्रोक्तंसर्वज्ञैःसर्वदर्शिभिः २३ धर्मएवप्लवोनान्यःस्वर्गंद्रौपदिगच्छताम् ॥ सैवनौःसागरस्यैववणिजःपारमिच्छतः २४ अफलोयदिधर्मःस्याच्चरितोधर्मचारिभिः ॥ अप्रतिष्ठेतमस्येतज्जगन्मज्जेदनिंदिते २५ निर्वाणंनाधिगच्छेयुर्जीवेयुःपशुजीविकाम् ॥ विद्यांतेनैवयुज्येयुर्नचार्थंकेचिदाप्नुयुः २६

२५ ननुयथातृणात्क्षीरंक्षीराद्दधीतिवत् परिणामक्रमादेवतत्तद्विशिष्टदेहलाभादूर्ध्वगतिर्भविष्यति किंधर्मेणेत्याशंक्याह निर्वाणमिति। दृष्टोपिगवोपभुक्तात्क्षीरमूत्रादिनीचपरिणामदृष्टेर्नैतद्युक्तं । तथाचमोक्षासिद्धिः तस्यांचासत्यां बोधशून्याः पशुजीविकांजीवेयुरंधंतमःप्रविशेयुरेवेत्यर्थः । ततश्चतेपशुतुल्याविद्यांविद्ययानैवयुज्येरन् । संतुतर्हिस्वभावेनैवसर्वेऽपिप्राणिनः किंविद्ययाकिंवामोक्षेणेत्याशंक्याह नचार्थंकेचिदाप्नुयुरिति । अयंभावः घटशरावोदंचनादिकार्यवैचित्र्यं क्रियावैचित्र्यायत्तंयथादृष्टं तथाऐहिकयत्नाभावेपिनृषुपश्वादिषुज्ञानैश्वर्यतारतम्यंदृश्यमानंजन्मांतरीयक्रियानुमापकं तदभावेजगद्वैचित्र्यस्याकस्मिकनिधिलाभादेश्चासंभवःस्यादिति २६

अनादिपरंपरागतःशिष्टाचारोऽपिधर्मास्तित्वेप्रमाणमित्याह तपश्चेत्यादिना २७ विप्रलंभोवंचनं अयंयज्ञादिधर्मः २८। २९ श्रेयसिश्रेयोनिमित्तंधर्मंव्यचरन् तद्धिधर्मोहिश्रेयःश्रेयःसाधनं सनातनमनाद्यनन्तं ३०। ३१ अनुभवोऽपिधर्मेप्रमाणमित्याह त्वमिति। अयंभावः 'अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते। आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः' इति स्मृतेः। पंचाग्निविद्यायांचद्युपर्जन्यपृथिवीपुरुषयोषास्वग्निषुश्रद्धासोमवर्षान्नरेतआहुतयोहूयंते ततःशरीरमितिक्रमेण 'पंचम्यामाहुतावापःपुरुषवचसोभवंति' इतिश्रुतेश्चसर्वेषांप्राणिनामुत्पत्तिरवगता तत्रगर्भवासाख्यारेतोद्रव्यकपंचम्याहुत्यवस्थाऽत्यंतदुःखमयीपुण्यवशात्द्रोणस्यनासीत् द्रौपदीधृष्टद्युम्नयोस्त्वतिपुण्यवशात्रेतोरूपमलपरिणामहेतुरन्नाहुतिरपिनास्ति साक्षादग्निकुण्डोद्भवत्वात् तदिदंधर्मफलंतवानुभवसिद्धमतोधर्ममाऽवमंस्था इति ३२ उपमानंनिदर्शनं कर्मस्वादरवशादल्पेनअन्नाच्छादनमात्रेणतुष्टोभवति नतुकर्माण्युपेक्ष्यबहुलाभार्थयततेइत्यर्थः ३३। ३४ श्रुतंवेदोदितंपुण्यंयेषांपापानामनिष्टसाधनानांचफलोदयः स्वर्गनरकहेतुत्वं प्रभवउत्पत्तिः अविद्येतियावत् अप्ययोनाशः विद्येतियावत् देवगुह्यानिवेदैकवेद्यत्वात्। 'तस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युः' इतिश्रुतेर्देवगोप्यान्येतानिस्वपशुभूतपुरुषविनाशकत्वात् ३५ एतानीति। अत्रएतेषुदेवगुह्ये

तपश्चब्रह्मचर्यंचयज्ञःस्वाध्यायएवच ॥ दानमार्जवमेतानियदिस्युरफलानिवै २७ नाचरिष्यन्परेधर्मंपरेपरतरेचये ॥ विप्रलंभोऽयमत्यंतंयदिस्युरफलाःक्रियाः २८ ऋषयश्चैवदेवाश्चगंधर्वासुरराक्षसाः ॥ ईश्वराःकस्यहेतोस्तेचरेयुर्धर्ममादृताः २९ फलदंत्विहविज्ञायधातारंश्रेयसिध्रुवम् ॥ धर्मंतेव्यचरन्कृष्णेतद्धिश्रेयःसनातनम् ३० सनायमफलोधर्मोनाधर्मोऽफलवानपि ॥ दृश्यंतेऽपिहिविद्यानांफलानितपसांतथा ३१ त्वमात्मनोविजानीहिजन्मकृष्णेयथाश्रुतम् ॥ वेत्थचापियथाजातोधृष्टद्युम्नःप्रतापवान् ३२ एतावदेवपर्याप्तमुपमानंशुचिस्मिते ॥ कर्मणांफलमाप्नोतिधीरोऽल्पेनापितुष्यति ३३ बहुनाप्यविद्वांसोनैवतुष्यंत्यबुद्धयः ॥ तेषांनधर्मजंकिंचित्प्रेत्यशर्मास्तिवापुनः ३४ कर्मणांश्रुतपुण्यानांपापानांचफलोदयः ॥ प्रभवश्चात्ययश्चैवदेवगुह्यानिभाविनि ३५ एतानिवेदयःकश्चिन्मुह्यंतेऽत्रप्रजाइमाः ॥ अपिकल्पसहस्रेणनसश्रेयोऽधिगच्छति ३६ रक्ष्याण्येतानिदेवानांगूढमायाहिदेवताः ॥ कृताशाश्चव्रताशाश्चतपसादग्धकिल्बिषाः ॥ प्रसादैर्मानसैर्युक्ताःपश्यंत्येतानिवैद्विजाः ३७ नफलादर्शनाद्धर्मःशंकितव्योनदेवताः ॥ यष्टव्यंचप्रयत्नेनदातव्यंचानसूयता ३८ कर्मणांफलमस्तीहतथैतद्धर्मशाश्वतम् ॥ ब्रह्माप्रोवाचपुत्राणांयदृषिर्वेदकश्यपः ३९ तस्मात्तेसंशयःकृष्णेनीहारइवनश्यतु ॥ व्यवस्यसर्वमस्तीतिनास्तिक्यंभावमुत्सृज ४० ईश्वरंचापिभूतानांधातारंमाचवैक्षिप ॥ शिक्षस्वैनंनमस्वैनंमातेऽभूद्बुद्धिरीदृशी ४१

षुविषयेष्विमाःप्राकृताःप्रजामुह्यंते अविद्यामपिविद्यात्वेनविद्यांचाविद्यात्वेनगृह्णंति एवंपुण्यपापविपर्ययोऽपिज्ञेयः अतएतानियस्तत्त्वतोवेदसश्रेयोदेवानांहिततरंकर्मनाधिगच्छतिनानुसरति कर्तृत्वादिमदन्तःकरणस्यविविक्तत्वादितिभावः ३६ कृतानाशिताआशायैस्ते। कृहिंसायांस्वादिः। व्रतंहितंमितंमेध्यंचाश्नंतितेकृताशाश्चव्रताशाश्चशांतादांताइत्यर्थः तपसाश्रवणमननात्मकेनालोचनेन मनःप्रसादैर्ध्यानफलैर्युक्ताद्विजायोगिनः एतानिदेवगुह्यानि ३७। ३८ धर्मशाश्वतंधर्मस्यशश्वद्भवोयंस्वभावः ३९ व्यवस्यनिश्चित्य भावमभिप्रायम् ४० एवंधर्मश्रैष्ठ्यंनिश्चित्यईश्वरश्रैष्ठ्यमप्याह ईश्वरमिति। धातारंदधातिकर्मफलानियथास्वंविभजतीतितं कर्मणामाशुतरविनाशित्वात्नष्टानांचकालांतरीयफलहेतुत्वायोगात् अपूर्वकल्पनायाश्च 'सर्वस्यवशीसर्वस्येशानः' इति सर्वस्येश्वराधीनत्वप्रतिपादकश्रुत्याबाधात् लौकिकराजभृत्यदृष्टांताच्च कर्मभिस्तुष्टोरुष्टोवाईश्वरएवसदसत्फलविभाजकइतिभावः। माक्षिपमानिंदांकुरु शिक्षस्वशास्त्राचार्योपदेशादधीष्व ४१

४२ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपे एकत्रिंशोऽध्यायः ॥ ३१ ॥ नावमन्य इति १ । २ स्थावराइतरेजनावा हियस्माद्कर्माणोनजीवंयतःकर्मकर्त्तव्यमितियोजना । तथाचायंप्रयोगः स्थावरजीविका प्राक्कर्मपूर्विकाजीविकात्वात्पाकादिक्रियापूर्वकास्मदादिजीविकावदिति ३ स्थावरेषूक्तंन्यायंतिर्यक्षुयोजयति यावदिति । सद्योजातस्यगोवत्सस्य स्तनपानादिप्रवृत्तिरपिस्वजनकसंस्कारहेतु प्राक्तनकर्मसत्त्वेप्रमाणमित्यर्थः यावद्गोस्तनपानात्गोस्तनपानादेरित्यर्थः यावच्छायोपसेवनात् प्रतिमाद्वारकभोगादित्यर्थः । अयंभावः कौलिकशास्त्रप्रसिद्ध्याशत्रुनिर्मितायांचैत्रप्रतिमायांशत्रुणाकंटका दिनानुन्नायांचैत्रोव्यथते तत्रव्यथानिमित्तमांतरंधातुवैषम्यं बाह्यंवाकंटकवेधादि नार्किचिद्दृष्टमस्ति किंतुकेवलमदृष्टमेव अनेनैवन्यायेनजंतवःकर्मणाप्राचीनेनैववृत्तिंजीवनमाप्नुवंति ४ जंगमेष्विति प्रेत्यमृत्वा ५ उत्थानंउत्तिष्ठतिप्रवर्त्ततेऽस्मादित्युत्थानंप्राक्कर्मसंस्कारस्तं सर्वेऽपिप्राणिनोऽभिजानंत्यनुभवंति ततःकर्मसुप्रवर्त्तंतेतत्फलंचाप्नुवंति तस्मात्कर्मतत्संस्कारपरंपरेयमनादिरित्यर्थः ६ सर्वेहीति । यथाऽयंबकःपूर्वसं

यस्यप्रसादात्तद्भक्तोमर्त्योगच्छत्यमर्त्यताम् ॥ उत्तमांदेवतांकृष्णेमाऽवमंस्थाःकथंचन ४२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणियुधिष्ठिरवाक्येएकत्रिंशोऽध्यायः ३१ ॥ ॥ द्रौपद्युवाच ॥ ॥ नावमन्येनगर्हेचधर्मंपार्थकथंचन ॥ ईश्वरंकुतएवाहमवमंस्येप्रजापतिम् १ आर्ताऽहंप्रलपामीदमितिमांविद्धिभारत ॥ भूयश्चविलपिष्यामिसुमनास्त्वंनिबोधमे २ कर्मखल्विहकर्त्तव्यंजानताऽमित्रकर्शन ॥ अकर्माणोहिजीवंतिस्थावरानेतरेजनाः ३ यावद्गोस्तनपानाच्चयावच्छायोपसेवनात् ॥ जंतवःकर्मणावृत्तिमाप्नुवंतियुधिष्ठिर ४ जंगमेषुविशेषेणमनुष्याभरतर्षभ ॥ इच्छंतिकर्मणावृत्तिमवाप्तुंप्रेत्यचेहच ५ उत्थानमभिजानंतिसर्वभूतानिभारत ॥ प्रत्यक्षंफलमश्नंतिकर्मणांलोकसाक्षिकम् ६ सर्वेहिस्वंसमुत्थानमुपजीवंतिजंतवः ॥ अपिधाताविधाताचयथाऽयमुदकेबकः ७ अकर्मणांवैभूतानांवृत्तिःस्यान्नहिकाचन ॥ तदेवाभिप्रपद्येतनविहन्यात्कदाचन ८ सकर्मकुरुमाग्लासीःकर्मणाभवदंशितः ॥ कृतंहियोऽभिजानातिसहस्रेसोऽस्तिनास्तिच ९ तस्यचापिभवेत्कार्यंविवृद्धौरक्षणेतथा ॥ भक्ष्यमाणोह्यनादानात्क्षीयेतहिमवानपि १० उत्सीदेरन्प्रजाःसर्वानकुर्युःकर्मचेद्भुवि ॥ तथाह्येतानवर्धेरन्कर्मचेदफलंभवेत् ११ अपिचाप्यफलंकर्मपश्यामःकुर्वतोजनान् ॥ नान्यथाह्यपिगच्छंतिवृत्तिंलोकाःकथंचन १२ यश्चदिष्टपरोलोकेयश्चापिहठवादिकः ॥ उभावपिशठावेतौकर्मबुद्धिःप्रशस्यते १३

स्कारात्वृत्त्यर्थीध्यायतिएवंधाताईश्वरोऽप्यनादिसंस्कारवशात् पूर्वपूर्वकल्पस्वरूपामेवसृष्टिंकरोति । 'धातायथापूर्वमकल्पयत' इतिश्रुतेः । तथाविधाताधर्मोऽपिपूर्वसंस्कारानुरोधेनैवकर्माणिप्रवर्त्तयति अन्यथा संसारानादित्वानभ्युपगमेकृतहानाकृताभ्यागमादिदोषःस्यादितिभावः ७ एवंप्राक्तनकर्मप्राबल्यमुपपाद्यऐहिकानामपितेषांप्राबल्यमाह अकर्मणामिति । याञ्चामुखचालनादिदृष्टयत्नशून्यानजीविकाऽस्तिअतस्तदेवदृष्टफलंकर्मैवनविहन्यात्दैवपरोभूत्वानत्यजेदित्यर्थः ८ दंशितःसन्नद्धः कृतंकर्मकर्तुमितिशेषः ९ तस्यकर्मणःकार्यंप्रयोजनंरक्षणेऽर्थानामितिशेषः अनादानादसंग्रहात् लब्धेनार्थेननसंतोष्टव्यंकिंतुतद्विवृद्ध्यर्थंकर्मकर्त्तव्यमित्यर्थः १० । ११ अपिचेतिकर्मणांकचिदफलत्वेऽप्यावश्यकत्वंनित्यमित्यर्थः १२ यश्चेति । दिष्टपरोमंत्रौषधाद्यदृष्टद्वारैवार्थसाधनपरःकौलिकः । हठवादिकः प्राग्जन्माभावादकृतमेवोपस्थास्यतीतिवदन्चार्वाकः । एतौशठौप्राक्कर्मानंगीकारात् । पाठांतरेअपसदौअधमौ । कर्मबुद्धिःप्राक्तनेतात्कालिकंचकर्मसहितंसदिष्टसाधनमितिबुद्धिमान् १३

निर्विचेष्टो दृष्टयत्नहीनः शयेत्शेयात् आमोऽपकः १४ । १५ हठादीन्व्याचष्टे अकस्मादिति। अचिंतितस्यातर्कितस्यचलाभोहठः १६ दैवंदेवताराधनम् १७ पौरुषंयथोक्तप्रतिग्रहादिवृत्तिः १८ स्वभावो यःप्राक्कर्मानुग्रहः यथा नष्टकपर्दिकान्वेषणप्रवृत्तस्यरत्नलाभः १९ एतच्चतुष्टयजोऽपिलाभः पूर्वकर्मफलमेव २० स्वकर्मैव कर्माधीनएव विदधात्यर्पयति पूर्वकृतं पूर्वकर्मजम् २१ एतदेवस्पष्टयति यदीति २२ कारणमिति । यःकर्मणिवर्त्तते सोऽयं मानुषदेहः प्राग्भवीयस्तस्यप्रवर्तकस्यधातुरपिकारणंप्रवर्त्तकःसधाता एनंवर्त्तमानदेहंबीजांकुरवत् धातृप्रेर्योदेहोदेहप्रेर्यश्चधातेत्यर्थः देहोदेहसाध्यंकर्म २३ । २४ ननुपूर्वकर्मैवप्रवर्तकंचेत्किंपुरुषकारेणेत्याशंक्याह मनसेति २५ एतदपिप्राक्कर्मजमेवेत्याशंक्याह संख्यातुमिति । संख्यातुंप्राक्कर्मैवकारणं नपुरुषकारइतिनिश्चेतुं तत्रहेतुःअगारेति २६ तिलेइति । पंग्वंधन्या

योहिदिष्टमुपासीनोनिर्विचेष्टःसुखंशयेत् ॥ अवसीदेत्सदुर्बुद्धिरामोघटइवोदके १४ तथैवहठदुर्बुद्धिःशक्तःकर्मण्यकर्मकृत् ॥ आसीतनचिरंजीवेदनाथइवदुर्बलः १५ अकस्मादिहयःकश्चिदर्थंप्राप्नोतिपूरुषः ॥ तंहठेनेतिमन्यंतेसहियत्नोनकस्यचित् १६ यच्चापिकिंचित्पुरुषोदिष्टंनामभजत्युत ॥ दैवेनविधिनापार्थतद्दैवमितिनिश्चितम् १७ यत्स्वयंकर्मणाकिंचित्फलमाप्नोतिपूरुषः ॥ प्रत्यक्षमेतल्लोकेषुतत्पौरुषमितिश्रुतम् १८ स्वभावतःप्रवृत्तोयःप्राप्नोत्यर्थंनकारणात् ॥ तत्स्वभावात्मकंविद्धिफलंपुरुषसत्तम १९ एवंहठाच्चदैवाच्चस्वभावात्कर्मणस्तथा ॥ यानिप्राप्नोतिपुरुषस्तत्फलंपूर्वकर्मणाम् २० धाताऽपिहिस्वकर्मैवतैस्तैर्हेतुभिरीश्वरः ॥ विदधातिविभज्येहफलंपूर्वकृतंनृणाम् २१ यद्ध्ययंपुरुषःकिंचित्कुरुतेवैशुभाशुभम् ॥ तद्धातृविहितंविद्धिपूर्वकर्मफलोदयम् २२ कारणंतस्यदेहोऽयंधातुःकर्मणिवर्त्तते ॥ सयथाप्रेरयत्येनंतथाऽयंकुरुतेऽवशः २३ तेषुतेषुहिकृत्येषुविनियोक्तामहेश्वरः ॥ सर्वभूतानिकौंतेयकारयत्यवशान्यपि २४ मनसाऽर्थान्विनिश्चित्यपश्चात्प्राप्नोतिकर्मणा ॥ बुद्धिपूर्वंस्वयंवीरपुरुषस्तत्रकारणम् २५ संख्यातुंनैवशक्यानिकर्माणिपुरुषर्षभ ॥ अगारनगराणांहिसिद्धिःपुरुषहैतुकी २६ तिलेतैलंगविक्षीरंकाष्ठेपावकमंततः ॥ धियाधीरोविजानीयादुपायंचास्यसिद्धये २७ ततःप्रवर्त्ततेपश्चात्कारणैस्तस्यसिद्धये ॥ तांसिद्धिमुपजीवंतिकर्मजामिहजंतवः २८ कुशलेनकृतंकर्मकर्त्रासाधुस्वनुष्ठितम् ॥ इदंत्वकुशलेनेतिविशेषादुपलभ्यते २९ इष्टापूर्त्तफलंनस्यान्नशिष्योनगुरुर्भवेत्॥ पुरुषःकर्मसाध्येषुस्याच्चेदयमकारणम् ३० कर्तृत्वादेवपुरुषःकर्मसिद्धौप्रशस्यते ॥ असिद्धौनिंद्यतेचापिकर्मनाशात्कथंत्विह ३१ सर्वमेवहठेनैकेदैवेनैकेवदंत्युत ॥ पुंसःप्रयत्नजंकेचित्त्रैधमेतन्निरुच्यते ३२

येनप्राक्कर्मसिद्धमेवपुरुषकारोऽभिव्यनक्तीत्यर्थः अस्यतैलादेः सिद्धयेप्राप्तये २७ कारणैर्यंत्रनिपीडनादिभिः तांसिद्धिंतैलादिप्राप्तिं । कर्मणामितिपाठे सिद्धिफलं तां तैलप्राप्तिम् २८ कुशलेनेति । विशेषात्फलभेदात्ऐहिककर्मणोऽपिप्राबल्यमस्तीत्यर्थः २९ विधिप्रतिषेधशास्त्रवैयर्थ्यान्यथानुपपत्त्याऽपि पुरुषकारस्यश्रैष्ठ्यमाह इष्टेतिद्वाभ्यां । इष्टंयागादि आपूर्त्तंतडागारामादि ३० । ३१ सर्वमिति । हठादयोऽकस्मादिहयःकश्चिदित्यादिश्लोकत्रयेणव्याख्याताः स्वभावस्यापिहठएवांतर्भावः हठेनैकेचार्वाकाः दैवेनैकेकौलिकाः प्रयत्नजंप्राकृताः ३२

एतैरेवनार्थसिद्धिरितिवैदिकाइत्याह नचेति । अदृश्यं धर्माधर्मरूपंप्राक्कर्म तदेवदिष्टहठादिकंसर्वमित्यर्थः ३३ अत्रपूर्वपक्षः दृश्यतेहीति । स्वभावतोऽयत्नतः ३४ चतुर्थंप्राक्कर्मकुशलाइत्युपहासः इतिप्रतिजानंती त्यध्याहृत्ययोज्यम् ३५ सिद्धांतमाह तथेति ३६ । ३७ त्रिद्वारामिति । हठादित्रयंद्वारमेवार्थसिद्धेर्मुख्यंकारणंकर्मैवेत्यर्थः । आत्मादेहः देहवत्तेजडाइत्यर्थः । यथालोकाइतिपाठेलोकालोकायतिकाः ३८ कर्त्त व्यमेवेति । यथाग्रामकामस्यसांग्रहणीष्टीराजसेवाचेतिद्वयमनुष्ठेयं तद्वदिहदिष्टपौरुषात्मकंकर्मकर्त्तव्यमेव हठपक्षस्त्याज्यएवेत्यर्थः एकांतेनातिशयेन अनीहोनिश्चेष्टः हठवादीत्यर्थः ३९ भवत्येवफलसिद्धिः अलसोऽसम्यक्कारी ४० असंभवेत्त्विति । अंगवैकल्यात्कर्मफलानुत्पादेत्वस्यफलस्यहेतुःप्रायश्चित्तंदोषप्रतिसमाधानंलक्षयेत् कर्मतःफलाभावेंऽगवैकल्यंकल्प्यं नतुकर्मवैयर्थ्यमितिभावः । कर्मणिसांगेकृते

नचैवैतावताकार्यमन्यंतइतिचापरे ॥ अस्तिसर्वमदृश्यंतुदिष्टंचैवतथाहठः ३३ दृश्यतेहिहठाच्चैवदिष्टाच्चार्थस्यसंततिः ॥ किंचिद्दैवाद्धठात्किंचित्किंचिदेवस्व भावतः ३४ पुरुषःफलमाप्नोतिचतुर्थंनात्रकारणम् ॥ कुशलाःप्रतिजानंतियेवैतत्त्वविदोजनाः ३५ तथैवधाताभूतानामिष्टानिष्टफलप्रदः ॥ यदिनस्यान्नभूतानां कृपणोनामकश्चन ३६ यंयमर्थमभिप्रेप्सुःकुरुतेकर्मपूरुषः ॥ तत्तत्सफलमेवस्याद्यदिनस्यात्पुराकृतम् ३७ त्रिद्वारामर्थसिद्धिंतुनानुपश्यंतियेनराः ॥ तथैवानर्थ सिद्धिंचयथैवात्मातथैवते ३८ कर्त्तव्यमेवकर्मेतिमनोरेषविनिश्चयः ॥ एकांतेनह्यनीहोऽयंपराभवतिपूरुषः ३९ कुर्वतोहिभवत्येवप्रायेणेहयुधिष्ठिर ॥ एकांतंफल सिद्धिंतुनविंदत्यलसःक्वचित् ४० असंभवेत्वस्यहेतुःप्रायश्चित्तंतुलक्षयेत् ॥ कृतेकर्मणिराजेंद्रतथाऽऽनृण्यमवाप्नुते ४१ अलक्ष्मीराविशत्येनंशयानमलसंनरम् ॥ निःसंशयंफलंलब्ध्वादक्षोभूतिमुपाश्नुते ४२ अनर्थाःसंशयावस्थाःसिद्ध्यंतेमुक्तसंशयाः ॥ धीरानराःकर्मरतानतुनिःसंशयाःक्वचित् ४३ एकांतेनह्यनर्थोऽयंवर्त्ततेऽ स्मासुसांप्रतम् ॥ सतुनिःसंशयंनस्यात्त्वयिकर्मण्यवस्थिते ४४ अथवाऽसिद्धिरेवस्यादभिमानंतदेवते ॥ वृकोदरस्यबीभत्सोर्भ्रात्रोश्चयमयोरपि ४५ अन्येषांकर्म सफलमस्माकमपिवापुनः ॥ विप्रकर्षेणबुद्ध्येतकृतकर्मायथाफलम् ४६ पृथिवींलांगलेनेहभित्त्वाबीजंवपत्युत ॥ आस्तेऽथकर्षकस्तूष्णींपर्जन्यस्तत्रकारणम् ४७ वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्रकर्षकः ॥ यदन्यःपुरुषःकुर्यात्तत्कृतंसफलंमया ४८ तच्चेदंफलमस्माकमपराधोनमेक्वचित् ॥ इतिधीरोऽन्ववेक्ष्यैवनात्मानंतत्रगर्हयेत् ४९ कुर्वतोनार्थसिद्धिर्मेभवतीतिहभारत ॥ निर्वेदोनात्रकर्तव्योद्वावन्यौह्यत्रकारणम् ५० सिद्धिर्वाप्यथवाऽसिद्धिरप्रवृत्तिरतोऽन्यथा ॥ बहूनांसमवायेहिभावानां कर्मसिद्धयः ५१ गुणाभावेफलंन्यूनंभवत्यफलमेवच ॥ अनारंभेहिनफलंनगुणोदृश्यतेक्वचित् ५२

आनृण्यं फलानुत्पादेऽपिनिर्दोषत्वम् ४१ । ४२ अनर्थाअर्थहीनाः ननुनिश्चितं धीरानिःसंशयादुर्लभाइत्यर्थः ४३ अनर्थोराज्यच्युतिः कर्मणिपौरुषे ४४ असिद्धिरितिच्छेदः कृतेऽपिपौरुषेयदिफलासि द्धिरेवस्यात्तर्हितदेवतेतववृकोदरादीनामभिमानंसाकल्येनप्रमाणंराज्यानर्हत्वेस्यात् । तदाराज्याशाविच्छेदान्नममराज्यार्थमुद्वेगःस्यादितिभावः ४५ अन्येषामस्माकंवाकर्मसफलं यथातथाकृतकर्मैवविप्रक र्षेणकर्मकरणांतेबुध्येत त्वंत्वकृतकर्मातत्कथंबुध्येरितिभावः ४६ । ४७ । ४८ । ४९ निर्वेदोवैराग्यं द्वावन्यौपौरुषानिर्वेदौ अत्रफलसिद्धौ ५० सिद्धिरसिद्धिर्वाऽस्तु किंत्वप्रवृत्तिरेवमास्त्वित्यर्थः बहूनांसर्वेषां समवायेसमुदाये भावानांकारणानाम् ५१ गुणोऽप्रधानस्यंगं तदभावेगुणःशौर्यादिः ५२

उपाया:सामादयः स्वस्तिवृद्धयेकल्याणवृद्धये ५३ अप्रमत्तेनेति । तत् देशकालादियोगाख्यंकार्यमादरणीयं तत्रपराक्रमःपुरुषकारस्तुउपदेष्टाकार्यकर्तामुख्यइत्यर्थः भूयिष्ठंश्रेष्ठंकर्मयोगेषुकार्यघटनासुपराक्र मोदृश्यमेवप्रसिद्धएव श्रेष्ठत्वेनतस्मात्पराक्रमेयतितव्यमितिभावः ५४ ननु भ्रातृषुधार्त्तराष्ट्रेषुकथंपराक्रांतुंशक्यमित्याशंक्यसामासंभवमाहयत्रेति अवेक्षेतादरंकुर्यात् श्रेयांसंप्रशस्ततरंकर्मचभेदंदानाख्यंवा ५५ दुर्मेधसिदुर्योधनेतुनसामभेददानानामुपायानांसंभवोऽस्ति अतस्तत्रदंडएवश्रेयानित्याह व्यसनमिति । व्यसनंराष्ट्रोपप्लवादि विवासनंदेशान्निःसारणम् ५६ उत्थानयुक्तोयत्नवान् अंतरैषणेछिद्रान्वेषणे । आनृण्येनिर्दोषत्वं । परस्यामात्यादेः ५७ नन्वशक्तःकथमुत्थानंकुर्यामित्याशंक्याह नत्वेवेति ५८ एवंसंस्थितिकाईदृग्व्यवस्थावती । सांसिद्धिकीतिपाठेस्वाभाविकीत्यर्थः । सिद्धिःफलसिद्धिः तत्रेतिकाला

देशकालावुपायांश्चमंगलंस्वस्तिवृद्धये ॥ युनक्तिमेधयाधीरोयथाशक्तियथाबलम् ५३ अप्रमत्तेनतत्कार्यमुपदेष्टापराक्रमः ॥ भूयिष्ठंकर्मयोगेषुदृश्यमेवपराक्रमः ५४ यत्रधीमानवेक्षेतश्रेयांसंबहुभिर्गुणैः ॥ साम्नैवार्थंततोलिप्सेत्कर्मचास्मैप्रयोजयेत् ५५ व्यसनंवाऽस्यकांक्षेतविवासंवायुधिष्ठिर ॥ अपिसिंधोर्गिरेर्वाऽपिकिंपुनर्मर्त्यधर्मिणः ५६ उत्थानयुक्तःसततंपरेषामंतरैषणे ॥ आनृण्यमाप्नोतिनरःपरस्यात्मनएवच ५७ नत्वेवात्माऽवमंतव्यःपुरुषेणकदाचन ॥ नह्यात्मपरिभूतस्यभूतिर्भवतिशोभना ५८ एवंसंस्थितिकासिद्धिरियंलोकस्यभारत ॥ तत्रसिद्धिर्गतिःप्रोक्ताकालावस्थाविभागतः ५९ ब्राह्मणंमेपितापूर्ववासयामासपंडितम् ॥ सोऽपिसर्वामिमांप्राहपित्रेमेभरतर्षभ ६० नीतिंबृहस्पतिप्रोक्तांभ्रातॄन्मेऽग्राहयत्पुरा ॥ तेषांसकाशादश्रौषमहमेतांतदागृहे ६१ समांराजन्कर्मवतीमागतामाहसांत्वयन् ॥ शुश्रूषमाणामासीनांपितुरंकेयुधिष्ठिर ॥ ६२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुना० द्रौपदीवाक्येद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ॥ याज्ञसेन्यावचःश्रुत्वाभीमसेनोऽत्यमर्षणः ॥ निःश्वसन्नुपसंगम्यक्रुद्धोराजानमब्रवीत् १ राज्यस्यपदवींधर्म्यांव्रजसत्पुरुषोचिताम् ॥ धर्मकामार्थहीनानांकिंनोवस्तुंतपोवने २ नैवधर्मेणतद्राज्यंनार्जवेननचौजसा ॥ अक्षकूटमधिष्ठायहृतंदुर्योधनेनवै ३ गोमायुनेवसिंहानांदुर्बलेनबलीयसाम् ॥ आमिषंविघसाशेनतद्वद्राज्यंहिनोहृतम् ४ धर्मलेशप्रतिच्छन्नःप्रभवंधर्मकामयोः ॥ अर्थमुत्सृज्यकिंराजन्दुःखेषुपरितप्यसे ५ भवतोऽनवधानेनराज्यंनःपश्यतांहृतम् ॥ आहार्यमपिशक्रेणगुप्तंगांडीवधन्वना ६ कुणीनामिवबिल्वानिपंगूनामिवधेनवः ॥ हृतमैश्वर्यमस्माकंजीवतांभवतःकृते ७ भवतःप्रियमित्येवंमहद्व्यसनमीदृशम् ॥ धर्मकामेप्रतीतस्यप्रतिपन्नाःस्मभारत ८

वस्थयोरानुकूल्येनगतिरन्वेषणेयत्नः सैवसिद्धिःसिद्धिमूलं ५९ । ६० । ६१ कर्मवतीमागतांकिंचित्कार्योद्देशेनपितुरंतिकेआगताम् ६२ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेद्वात्रिंशोऽध्यायः ॥ ३२ ॥ याज्ञसेन्या इति १ एवंद्रौपद्याप्राक्कर्माधीनांफलसिद्धिमंगीकृत्यापि तद्द्वारभूतस्यपुरुषकारस्यप्राबल्येप्रतिपादिते राजानमुद्योजयन्भीमआह राज्यस्यपदवीमित्यादि । पदवींप्राप्तिमार्गं धर्म्यांवनवासकालपालनरूपाद्धर्मादनपेतां किंप्रयोजनमितिशेषः २ कूटंकपटम् ३ विघसोभूतबलिशेषःश्वकाकादियोग्यस्तद्भक्षकेनशुनकेनेत्यर्थः ४ धर्मलेशःप्रतिज्ञापालनजस्तेनप्रतिच्छन्नआवृतः अर्थंराज्याख्यम् ५ अनवधानेनप्रमादेनपश्यतामित्यनादरेषष्ठी ६ कुणीनांहस्तविकलानां पंगूनांपादविकलानां षष्ठीपूर्ववत् । भवतःकृतेभवन्निमित्तं ७ धर्मकामेधर्मेच्छायांप्रतीतस्यविश्वस्तस्य । धर्मकाम्याप्रतीतस्येतिपाठेधर्मेच्छायांविश्वस्तस्य ८

शास्त्रैःशमवचनैः भवतांभाःसमानानांयोगिनां ९ । १० मृगचर्यामिवएनांवनचर्यां अबलस्थैर्निषेवितामित्येकंपदं बलवद्भिरसेवितामित्यर्थः ११ । १२ नआपन्नइतिसंबंधः १३ । १४ । १५ अलंसमर्थान्सतः १६ । १७ गांपृथिवीं १८ । १९ कृत्यलक्षणेकरणीयस्वरूपे २० कुधर्मंतनोतीतिकुधर्मतत् कुधर्मबीजमित्यर्थः २१ धर्मार्थौ बलसाध्यहेमंतप्रातःस्नानशत्रुजयसंभवौ २२ धर्मार्थिनत्वर्थकामार्थं अर्थप्रयोजनं २३ । २४ अतिवेलमसंतं २५ इतरावर्थकामौ २६ कामतोरममाणस्यतस्यकामांतेनिधनमितिसंबंधः २७ साहिधर्मार्थरूपाहि २८ अर्थपरिग्रहोऽर्थार्थमेवालंबनीयः इतरेतरयोनीतौधर्मादर्थःप्रणीयतेऽर्थाच्च

कर्षयामःस्वमित्राणिनंदयामश्वशात्रवान् ॥ आत्मानंभवतांशास्त्रैर्नियम्यभरतर्षभ ९ यद्वयंनतदैवैतान्धार्त्तराष्ट्रान्निहन्महि ॥ भवतःशास्त्रमादायतन्नस्तपति दुष्कृतम् १० अथैनामन्ववेक्षस्वमृगचर्यामिवात्मनः ॥ दुर्बलाचरितांराजन्नबलस्थैर्निषेविताम् ११ यांनकृष्णोनबीभत्सुर्नाभिमन्युर्नसृंजयाः ॥ नचाहमभिनंदामिनचमाद्रीसुतावुभौ १२ भवान्धर्मोधर्मइतिसततंव्रतकर्शितः ॥ कच्चिद्राजन्ननिर्वेदादापन्नःक्लीबजीविकाम् १३ दुर्मनुष्याहिनिर्वेदमफलंस्वार्थघातकम् ॥ अशक्ताःश्रियमाहर्तुमात्मनःकुर्वतेप्रियम् १४ सभवान्दृष्टिमान्शक्तःपश्यन्नस्मासुपौरुषम् ॥ आनृशंस्यपरोराजन्नानर्थमवबुद्ध्यसे १५ अस्मानमीधार्त्तराष्ट्राःक्षममाणानलंसतः ॥ अशक्तानिवमन्यंतेतद्दुःखंनाहवेवधः १६ तत्रचेद्युध्यमानानामजिह्मनिवर्तिनाम् ॥ सर्वशोहिवधःश्रेयान्प्रेत्यलोकान्लभेमहि १७ अथवावयमेवैतान्निहत्यभरतर्षभ ॥ आददीमहिगांसर्वांतथापिश्रेयएवनः १८ सर्वथाकार्यमेतन्नःस्वधर्ममनुतिष्ठताम् ॥ कांक्षतांविपुलांकीर्तिंवैरंप्रतिचिकीर्षताम् १९ आत्मार्थंयुध्यमानानांविदितेकृत्यलक्षणे ॥ अन्यैरपिहृतेराज्येप्रशंसैवनगर्हणा २० कर्षणार्थोहियोधर्मोमित्राणामात्मनस्तथा ॥ व्यसनंनामतद्राजन्नधर्मःसकुधर्मतत् २१ सर्वथाधर्मनित्यंतुपुरुषंधर्मदुर्बलम् ॥ त्यजतस्तातधर्मार्थौप्रेतंदुःखसुखेयथा २२ यस्यधर्मोहिधर्मार्थंक्लेशभाङ्नसपंडितः ॥ नसधर्मस्यवेदार्थंसूर्यस्यांधःप्रभामिव २३ यस्यचात्मार्थमेवार्थःसचनार्थस्यकोविदः ॥ रक्षेतभृतकोऽरण्येयथागास्तादृगेवसः २४ अतिवेलंहियोऽर्थार्थीनेतरावनुतिष्ठति ॥ सवध्यःसर्वभूतानांब्रह्महेवजुगुप्सितः २५ सततंयश्चकामार्थीनेतरावनुतिष्ठति ॥ मित्राणितस्यनश्यंतिधर्मार्थाभ्यांचहीयते २६ तस्यधर्मार्थहीनस्यकामांतेनिधनंध्रुवम् ॥ कामतोरममाणस्यमीनस्येवांभसःक्षये २७ तस्माद्धर्मार्थयोर्नित्यंनप्रमाद्यंतिपंडिताः ॥ प्रकृतिःसाहिकामस्यपावकस्यारणिर्यथा २८ सर्वथाधर्ममूलोऽर्थोधर्मश्चार्थपरिग्रहः ॥ इतरेतरयोनीतौविद्धिमेघोदधीयथा २९ द्रव्यार्थस्पर्शसंयोगेयाप्रीतिरुपजायते ॥ सकामश्चित्तसंकल्पःशरीरंनास्यदृश्यते ३० अर्थार्थीपुरुषोराजन्बृहंतंधर्ममिच्छति ॥ अर्थमिच्छतिकामार्थीनकामादन्यमिच्छति ३१ नहिकामेनकामोऽन्यःसाध्यतेफलमेवतत् ॥ उपयोगात्फलस्येवकाष्ठाद्भस्मेवपंडितैः ३२

धर्मइत्यर्थः मेघादुदधिपुष्टिरुदधेर्मेघपूर्तिरिव २९ द्रव्यस्यस्रक्चंदनादेःस्पर्शः अर्थस्यस्वर्णादेःसंयोगोलाभः ३० । ३१ उपयोगःसाक्षात्प्रीत्युत्पादनेनकृतार्थत्वं काष्ठाद्भस्मसाध्यं नतुभस्मतोऽपिभस्मांतरंसाध्यमस्तितद्वत् ३२

वैतंसिकोवीतंसेनजीवतीतिपक्षिहंता । वीतंसंबंधनोपायेमृगाणांपक्षिणामपि ' इतिविश्वः । विहिंसता विशिष्टहिंसावत्त्वम् ३३ प्रकृतिंस्वरूपम् ३४ व्यक्तमिति । अर्थःप्रयोजनंकामाख्यं सद्रव्येणस्त्रीध नगोहस्त्यश्वात्मनापरिगृह्यतइतिद्रव्यपरिग्रहः अस्यद्रव्यस्यप्रकृतिंरूयादिरूपां विकृतिंत्यागभोगादिरूपाम् ३५ तस्यस्त्रीधनादिरूपद्रव्यस्य नाशेअदर्शनेअभावे विनाशेलब्धस्यवियोगे जरामरणेस्त्रीगोऽश्वादी नां सोऽयमनर्थः स्त्रीपरामर्शराज्यनाशादिरूपः । अनर्थपरिहारायधर्मोऽपिलंघनीयइतिभावः ३६ पंचानांश्रोत्रादीनांविषयेशब्दादौ मनसोविषयः संकल्पः हृदयस्यनिश्चयः ३७ पृथक्भिन्नान्दृष्ट्वा ३८

इमान्शकुनकान्राजन्हंतिवैतंसिकोयथा ॥ एतद्रूपमधर्मस्यभूतेषुहिविहिंसता ३३ कामाल्लोभाच्चधर्मस्यप्रकृतिंयोनपश्यति ॥ सवध्यःसर्वभूतानांप्रेत्यचेहचदुर्मतिः ॥ ३४ व्यक्तंतेविदितोराजन्नार्थोद्रव्यपरिग्रहः ॥ प्रकृतिंचापिवेत्थास्यविकृतिंचापिभूयसीम् ३५ तस्यनाशेविनाशेवाजरयामरणेनवा ॥ अनर्थइतिमन्यंतेसोऽयमस्मासु वर्त्तते ३५ इंद्रियाणांचपंचानांमनसोहृदयस्यच ॥ विषयेवर्त्तमानानांयाप्रीतिरुपजायते ३७ सकामइतिमेबुद्धिःकर्मणांफलमुत्तमम् ॥ एवमेवपृथग्दृष्ट्वाधर्मार्थौकाममे वच ३६ नधर्मपरएवस्यान्नचार्थपरमोनरः ॥ नकामपरमोवास्यात्सर्वान्सेवेतसर्वदा ३९ धर्मंपूर्वेधनंमध्येजघन्येकाममाचरेत् ॥ अहन्यनुचरेदेवमेषशास्त्रकृ तोविधिः ४० कामंपूर्वेधनंमध्येजघन्येधर्ममाचरेत् ॥ वयस्यनुचरेदेवमेषशास्त्रकृतोविधिः ४१ धर्मंचार्थंचकामंचयथावद्वदतांवर ॥ विभज्यकालेकालज्ञः सर्वान्सेवेतपंडितः ४२ मोक्षोवापरमंश्रेयएषराजन्सुखार्थिनाम् ॥ प्राप्तिंवाबुद्धिमास्थायसोपायांकुरुनंदन ४३ तद्वाशुक्रियतांराजन्प्राप्तिंवाऽप्यधिगम्य ताम् ॥ जीवितंह्यातुरस्येवदुःखमंतरवर्तिनः ४४ विदितश्चैवमेधर्मःसततंचरितश्चते ॥ जानंतस्त्वयिशंसंतिसुहृदःकर्मचोदनाम् ४५ दानंयज्ञाःसतांपूजावे दधारणमार्जवम् ॥ एषधर्मःपरोराजन्बलवान्प्रेत्यचेहच ४६ एषनार्थविहीनेनशक्योराजन्निषेवितुम् ॥ अखिलाःपुरुषव्याघ्रगुणाःस्युर्यद्यपीतरे ४७ धर्म मूलंजगद्राजन्नान्यद्धर्माद्विशिष्यते ॥ धर्मश्चार्थेनमहताशक्योराजन्निषेवितुम् ४८ नचार्थोभैक्ष्यचर्येणनापिक्लैब्येनकर्हिचित् ॥ वेत्तुंशक्यःसदाराजन्केवलं धर्मबुद्धिना ४९ प्रतिषिद्धाहितेयाच्ञाययासिध्यतिवैद्विजः ॥ तेजसैवार्थलिप्सायांयतस्वपुरुषर्षभ ५० भैक्ष्यचर्यानविहितानचविट्शूद्रजीविका ॥ क्ष त्रियस्यविशेषेणधर्मस्तुबलमौरसम् ५१ स्वधर्मंप्रतिपद्यस्वजहिशत्रून्समागतान् ॥ धार्त्तराष्ट्रवनंपार्थमयापार्थेननाशय ५२ उदारमेवविद्वांसोधर्मंप्राहुर्मनीषि णः ॥ उदारंप्रतिपद्यस्वनावरेस्थातुमर्हसि ५३ अनुबुद्ध्यस्वराजेंद्रवेत्थधर्मान्सनातनान् ॥ क्रूरकर्माभिजातोऽसियस्मादुद्विजतेजनः ५४ प्रजापालनसंभूतंफलं तवनगर्हितम् ॥ एषतेविहितोराजन्धात्राधर्मःसनातनः ५५

३९ धर्मंपूर्वेअहनिचरेत् ४० कामंपूर्वेवयसिचरेत् ४१ । ४२ । ४३ प्राप्तिंमहोदयंवाराज्यलाभजम् । 'प्राप्तिर्लाभेमहोदये' इतिविश्वः । तन्मोक्षाख्यंश्रेयः दुःखंदुःखदम् ४४ कर्मचोदनांप्रवृत्तिज नकंवेदवाक्यं शंसंतिकथयंति ४५ । ४६ अखिलाः खिलंशल्यंतद्रहिताः ४७ । ४८ क्लैब्येनकातर्येणवेत्तुंलब्धुम् ४९ द्विजोब्राह्मणः तेजसापराभिभवशक्त्या ५० औरसमुत्साहः ५१ । ५२ उदा रमीश्वरभावं अवरेअनैश्वर्ये ५३ क्रूरंहिंसात्मकंक्षात्रंकर्मयस्य ५४ । ५५

अपचितोहीनः ५६ शिथिलंदुर्बलम् ५७ नभूतिमनैश्वर्यंनपुनःश्रियंनास्तिपुनःश्रीर्ययेतिनभूतेरेवविशेषणम् । उभयत्रनैकधेतिवन्नशब्देनसमासः । व्यजयत्पराभूतवान् ५८ जिह्वांजिह्वायाःप्रियंसाध्वन्नं उत्कोचमित्यर्थः । क्षुद्राणांशत्रुपक्षीयाणांनिकृत्याभेदरूपेणच्छलेन शल्यकोव्याधः सहिमृगेभ्योभक्ष्यंदत्वाविश्वास्यहत्वाआहारंलभतेतद्वत् शल्यकःश्वावित् क्षुद्रान्मधुमक्षिकाविशेषान्जिह्वांदत्वाबहिर्निःसार्य भक्षयतितद्वज्जिह्वांवाचंदत्वाशत्रून्जहीतिप्राञ्चः ५९ । ६० बलवतःशत्रून्परांनिकृतिंसंवत्सरशब्दंमीमांसकन्यायेनदिनपरंकुर्वितिभावः ६१ । ६२ सत्वेनबलेनप्रमाणेनसंधेन उत्साहेनशत्रुपक्षीयैःसहसंधानलक्षणेनसूत्रेण । 'प्रमाणंनित्यमर्यादासंघवादिप्रमादिषु । उत्साहस्तूद्यमेसूत्रे' इतिविश्वः । अप्रमादीमहोत्साहीत्यपिपाठः ६३ सत्वादन्यस्यवितथत्वेहेतुः नत्विति । प्रसक्तमुपकारकत्वेनप्रत्यासन्नं इष्टमित्यर्थः ६४ अर्थत्यागोपीति । दुर्योधनेराज्यार्पणंनश्रेयसेऽपितुखरकंडूयनवदपकारायैव यथाखरकंडूयनंस्पर्शदोषात्सद्योदुःखदस्नाननिमित्तं गोकंडूयनवन्नपरत्रनहितं एवमेतदपीतिश्लोकद्वयार्थः ६५ विप

तस्मादपचितःपार्थलोकेहास्यंगमिष्यसि ॥ स्वधर्माद्धिमनुष्याणांचलनंनप्रशस्यते ५६ सक्षात्रंहृदयंकृत्वात्यक्त्वेदंशिथिलंमनः ॥ वीर्यमास्थायकौरव्यधुरमुद्वहधुर्यवत् ५७ नहिकेवलधर्मात्मापृथिवींजातुकश्चन ॥ पार्थिवोव्यजयद्राजन्नभूतिंनपुनःश्रियम् ५८ जिव्हांदत्वाबहूनांहिक्षुद्राणांलुब्धचेतसाम् ॥ निकृत्यालभते राज्यमाहारमिवशल्यकः ५९ भ्रातरःपूर्वजाताश्चसुसमृद्धाश्चसर्वशः ॥ निकृत्यानिर्जितादेवैरसुराःपार्थिवर्षभ ६० एवंबलवतःसर्वमितिबुद्ध्वामहीपते ॥ जहिशत्रून्महाबाहोपरांनिकृतिमास्थितः ६१ नह्यर्जुनसमःकश्चिद्युधियोधोधनुर्धरः ॥ भवितावापुमान्कश्चिन्मत्समोवागदाधरः ६२ सत्वेनकुरुतेयुद्धंराजन्सुबलवानपि ॥ नप्रमाणेननोत्साहात्सत्वस्थोभवपांडव ६३ सत्वंहिमूलमर्थस्यवितथंयदतोऽन्यथा ॥ नतुप्रसक्तंभवतिवृक्षच्छायेवहैमनी ६४ अर्थत्यागोऽपिकार्यःस्यादर्थंश्रेयांसमिच्छता ॥ बीजौपम्येनकौंतेयमातेऽभूदत्रसंशयः ६५ अर्थेनतुसमोऽनर्थोयत्रलभ्येतनोदयः ॥ नतत्रविपणःकार्यःखरकंडूयनंहितत् ६६ एवमेवमनुष्येंद्रधर्मंत्यक्त्वाल्पकंनरः ॥ बृहंतंधर्ममाप्नोतिसबुद्धइतिनिश्चितम् ६७ अमित्रंमित्रसंपन्नंमित्रैर्भिंदंतिपंडिताः ॥ भिन्नैर्मित्रैःपरित्यक्तंयुवानंकुरुतेवशम् ६८ सत्वेनकुरुतेयुद्धंराजन्सुबलवानपि ॥ नोद्यमेननहोत्राभिःसर्वाःस्वीकुरुतेप्रजाः ६९ सर्वथासंहतैरेवदुर्बलैर्बलवानपि ॥ अमित्रःशक्यतेहंतुंमधुहाभ्रमरैरिव ७० यथाराजन्प्रजाःसर्वाःसूर्यःपातिगभस्तिभिः ॥ अत्तिचैवतथैवत्वंसदृशःसवितुर्भव ७१

णःप्रतिज्ञा नकार्योननिर्वाहः ६६ एवमेवबीजौपम्येनप्रतिज्ञानिर्वाहजमल्पंधर्मंत्यक्त्वा राज्यलाभजोदानयागादिर्महान्धर्मआदर्तव्यइत्यर्थः ६७ युवानमल्पबुद्धिं । 'यदेकःस्थविरोवेत्तिनतत्तरुणकोटयः' इत्युक्तेः । दुर्बलमित्यपिपाठः ६८ पक्वबुद्धेःसर्वत्रसावधानस्यमित्राणिदुर्भेद्यान्यतस्तादृशेदुर्योधनेबलमेवश्रेयइत्याह सत्वेनेति । युद्धेनैवशत्रुजये कृतेप्रजाःस्वाधीनाभवंति नतूद्यमेननिग्रहेणनहोत्राभिः सांत्वेनाऽऽह्वानैः ६९ संहतैर्मिलितैः मधुहामध्वर्थंगतः । ओहाड्गतावित्यस्यरूपं । भ्रमरैर्मधुपटलस्थैः सविषवक्त्रैर्युगपद्दष्टोम्रियतइतिप्रसिद्धं । कालप्रतीक्षायांहिशत्रुर्बलवान्भूत्वाऽस्माञ्जेष्यतीतिभावः ७० यथेति । अत्तिरसशोषणेन पातिवर्षेण तथात्वंदुर्योधनादीन्वशमानीयपालयेत्यर्थः ७१

एतद्धर्मः पालनंवक्ष्यमाणंतपःस्वधर्मः पुराणमनादि । एतच्चावितथमितिपाठांतरेपुराणंवेदविहितमित्यर्थः ७२ सृष्टेनविहितेनधर्मेणेत्यर्थः इतरेणपरेणेन ७३ अपेयात् अपगच्छेत् व्यवसितोनिश्चितः ७४ । ७५ ७६ । ७७ ननुकथंतर्हिमयाराज्यार्थमनृतंकर्त्तव्यमतआह यदेनइति । एनःपापमवाप्नुवन् अवाप्तिंहंतोः ७८ । ७९ । ८० परस्यापिराज्यानर्हत्वादवरोपणमुचितमित्याह श्वदृताविति । श्वदृतौसारमेयचर्मकोशे ब्रह्म वेदः वृषलेशूद्रे ८१ स्वाध्यायमधिकुर्वतेश्वदृताविति श्लोकंवेदवत्स्यादयोनित्यंपठंतीत्यर्थः ८२ भवताहेतुना उपद्रवेराज्यभ्रंशे ८३ अर्थविभावकोजयार्जितमर्थंप्रदातुं । तुमुन्ण्वुलौक्रियायांक्रियार्थायामितिण्वुल्

एतच्चापितपोराजन्पुराणमितिनःश्रुतम् ॥ विधिनापालनंभूमेर्यत्कृतंनःपितामहैः ७२ नतथातपसाराजन्लोकान्प्राप्नोतिक्षत्रियः ॥ यथासृष्टेनयुद्धेनविजये नेतरेणवा ७३ अपेयात्किलभाःसूर्याल्लक्ष्मीश्चंद्रमसस्तथा ॥ इतिलोकोव्यवसितोदृष्ट्वेमांभवतोव्यथाम् ७४ भवतश्चप्रशंसाभिर्निन्दाभिरितरस्यच ॥ कथायुक्ताःपरिषदःपृथग्राजन्समागताः ७५ इदमभ्यधिकंराजन्ब्राम्हणाःकुरवश्चते ॥ समेताःकथयंतीहमुदिताःसत्यसंधताम् ७६ यन्नमोहान्नकार्पण्यान्नलोभान्नभयादपि ॥ अनृतंकिंचिदुक्तंतेनकामान्नार्थकारणात् ७७ यदेनःकुरुतेकिंचिद्राजाभूमिमवाप्नुवन् ॥ सर्वंतन्नुदतेपश्चाद्यज्ञैर्विपुलदक्षिणैः ७८ ब्राह्मणेभ्योऽददद्ग्रामान्गाश्चराजन्सहस्रशः ॥ मुच्यतेसर्वपापेभ्यस्तमोभ्यइवचंद्रमाः ७९ पौरजानपदाःसर्वेप्रायशःकुरुनंदन ॥ सवृद्धबालसहिताःशंसंतित्वांयुधिष्ठिर ८० श्वदृतौक्षीरमासक्तंब्रह्मवावृषलेयथा ॥ सत्यंस्तेनेबलंनार्याराज्यंदुर्योधनेतथा ८१ इतिलोकेनिर्वचनंपुरश्चरतिभारत ॥ अपिचैताःस्त्रियोबालाःस्वाध्यायमधिकुर्वते ८२ इमामवस्थांचगतेसहास्माभिररिंदम ॥ हंतनष्टाःस्मसर्वेवैभवतोपद्रवेसति ८३ सभवान्रथमास्थायसर्वोपकरणान्वितम् ॥ त्वरमाणोऽभिनिर्यातुविप्रेभ्योऽर्थविभावकः ८४ वाचयित्वाद्विजश्रेष्ठानद्यैवगजसाह्वयम् ॥ अस्त्रविद्भिःपरिवृतोभ्रातृभिर्दृढधन्विभिः ८५ आशीविषसमैर्वीरैर्मरुद्भिरिववृत्रहा ॥ अमित्रांस्तेजसामृद्नन्नसुरानिववृत्रहा ॥ श्रियमादत्स्वकौंतेयधार्तराष्ट्रान्महाबल ८६ नहिगांडीवमुक्तानांशराणांगार्ध्रवाससाम् ॥ स्पर्शमाशीविषाभानांमर्त्यःकश्चनसंसहेत् ८७ नसवीरोनमातंगोनचसोऽश्वोऽस्तिभारत ॥ यःसहेतगदावेगंममक्रुद्धस्यसंयुगे ८८ सृंजयैःसहकैकेयैर्वृष्णीनांवृषभेणच ॥ कथंस्वित्युधिकौंतेयनराज्यंप्राप्नुयामहे ८९ शत्रुहस्तगतांराजन्कथंस्विन्नाहरेर्महीम् ॥ इहयत्नमुपाहृत्यबलेनमहताऽन्वितः ॥ ९० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जु॰भीमवाक्येत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ वैशंपायनउवाच ॥ सएवमुक्तस्तुमहानुभावःसत्यव्रतोभीमसेनेनराजा ॥ अजातशत्रुस्तदनंतरंवैधैर्यान्वितोवाक्यमिदंबभाषे १ ॥ युधिष्ठिरउवाच ॥ असंशयंभारतसत्यमेतद्यन्मांतुदन्वाक्यशल्यैःक्षिणोषि ॥ नत्वांविगर्हेप्रतिकूलमेवममानयाद्धिव्यसनंवआगात् २

८४ वाचयित्वाआशीर्वादान् ८५ धार्त्तराष्ट्रादितिच्छेदः ८६ गार्ध्रवाससांगृध्रपक्षमयपुंखवतां संसहेत् सम्यक्सहेत ८७ । ८८ सृंजयादिभिःसहायैः स्विदितिविस्मयेनशिरश्चालने ८९ उपाहृत्यआलंब्य ॥ ९० ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ सएवमिति १ एवमम ममैव वोयुष्मान् २

अन्वपद्यमनुसृतवान् जिहीर्षन्हर्तुमिच्छन् शठःकूटपाशकर्तृत्वात् कितवोद्यूतकारः ३ प्रवपन्पातयन् अक्षपूगान्पाशसमूहान् वृजिनंदुःखदंव्यसनं ४ कामानुकूलानिच्छानुकूलान् अयुजोविषमान् युजःस
मान् । शक्यमिति यःपुरुषस्यधैर्यंहन्यात् समन्युर्यद्विनाभविष्य तर्ह्यात्मामनोनियंतुंशक्यमभविष्यदित्यध्याहृत्ययोज्यं परस्यानुकूलानक्षान्दृष्ट्वा मन्युवशान्ममद्यूतोपरमेबुद्धिर्नासीदित्यर्थः ५ । ६ । ७ । ८
समा वर्षाणि अथापरंवर्षं ९ अवभोत्स्यंतेज्ञास्यंति १० नोइतिनिपातः वितस्तादिपंचनद्युपलक्षितोदेशः ११ सर्वेशतमपिभ्रातरः सराजादुर्योधनः १२ नोऽस्माकंजघन्यंनीचं कृच्छ्ररूपाःक्लिष्टरूपाः १३ शांतिं

अहंह्यक्षानन्वपद्यंजिहीर्षन्राज्यंसराष्ट्रंधृतराष्ट्रस्यपुत्रात् ॥ तन्मांशठःकितवःप्रत्यदेवीत्सुयोधनार्थंसुबलस्यपुत्रः ३ महामायःशकुनिःपार्वतीयःसभामध्येप्रवप
न्नक्षपूगान् ॥ अमायिनंमाययाप्रत्यजैषीत्ततोऽपश्यंवृजिनंभीमसेन ४ अक्षांश्चदृष्ट्वाशकुनेर्यथावत्कामानुकूलानयुजोयुजश्च ॥ शक्यंनियंतुमभविष्यदात्मामन्यु
स्तुहन्यात्पुरुषस्यधैर्यम् ५ यंतुंनात्माशक्यतेपौरुषेणमानेनवीर्येणचतातनद्धः ॥ नतेवाचोभीमसेनाभ्यसूयेमन्येतथातद्भवितव्यमासीत् ६ सनोराजाधृत
राष्ट्रस्यपुत्रोन्यपातयद्व्यसनेराज्यमिच्छन् ॥ दास्यंचनोऽगमयद्भीमसेनयत्राभवच्छरणंद्रौपदीनः ७ त्वंचापितद्वेत्थधनंजयश्चपुनर्द्यूतायागतांस्तांसभांनः ॥
यन्मांब्रवीद्धृतराष्ट्रस्यपुत्रएकग्लहार्थंभरतानांसमक्षम् ८ वनेसमाद्वादशराजपुत्रयथाकामंविदितमजातशत्रो ॥ अथापरंचाविदितश्चरेथाःसर्वैःसहभ्रातृभिश्छ
द्मगूढः ९ त्वांचेच्छ्रुत्वातातथाचरंतमवभोत्स्यंतेभारतानांचराश्च ॥ अन्यांश्चरेथास्तावतोब्दांस्तथात्वंनिश्चित्यतत्प्रतिजानीहिपार्थ १० चरैश्चेन्नोविदि
तःकालमेतंयुक्तोराजन्मोहयित्वामदीयान् ॥ ब्रवीमिसत्यंकुरुसंसदीहतवैवताभारतपंचनद्यः ११ वयंचैतद्धारतसर्वएवत्वयाजिताःकालमपास्यभोगान् ॥ वसे
मइत्याहपुरासराजामध्येकुरूणांसमयोक्तस्तथेति १२ तत्रद्यूतमभवन्नोजघन्यंतस्मिन्जिताःप्रव्रजिताश्चसर्वे ॥ इत्थंतुदेशाननुसंचरामोवनानिकृच्छ्राणिचकृ
च्छ्ररूपाः १३ सुयोधनश्चापिनशांतिमिच्छन्भूयःसमन्योर्वशमन्वगच्छत् ॥ उद्योजयामासकुरूंश्चसर्वान्येचास्यकेचिद्वशमन्वगच्छन् १४ तंसंधिमास्थाय
सतांसकाशेकोनामजह्यादिहराज्यहेतोः ॥ आर्यस्यमन्येमरणाद्गरीयोयद्धर्ममुत्क्रम्यमहींप्रशासेत् १५ तदैवचेद्वीरकर्माकरिष्योयदाद्यूतेपरिघंपर्यमृक्षः ॥ बाहूदिधक्ष
न्वारितःफाल्गुनेनकिंदुष्कृतंभीमतदाऽभविष्यत् १६ प्रागेवचैवंसमयक्रियायाःकिंनाब्रवीःपौरुषमाविदानः ॥ प्राप्तंतुकालंत्वभिपद्यपश्चात्किंमामिदानीमतिवेल
मात्थ १७ भूयोऽपिदुःखंममभीमसेनदूयेविषस्येवरसंहिपीत्वा ॥ यद्याज्ञसेनींपरिक्लिश्यमानांसंदृश्यतत्क्षांतमितिस्मभीम १८ नत्वद्यशक्यंभरतप्रवीरकृत्वायदुक्तं
कुरुवीरमध्ये ॥ कालंप्रतीक्षस्वसुखोदयस्यपंक्तिफलानामिवबीजवापः १९

नेच्छन्अनिच्छन् उद्योजयामासोत्कर्षेणस्वेच्छयातेपुतेषुदुर्गदेशादिपालनकार्येष्विष्टान्योजितवान् १४ । १५ पर्यमृक्षःपरामृष्टवानसि दिधक्षन्दग्धुमिच्छन् १६ समयक्रियातःप्रागेवचेदिदमब्रवीस्तर्हि किंदु
ष्कृतमभविष्यन्नकिमपीत्यर्थः आविदानोजानन् प्राप्तंकालंकालतुल्यांविपदमभिपद्यस्वीकृत्य अतिवेलमतिशयेन १७ भूयोऽपिबह्वपि दूयेउपतप्ये १८ यदुक्तं यांप्रतिज्ञांकृत्वा बीजवापःकृषीवलः १९

पूर्वनिकृतौवंचितः वैरंवैरिममूहं मपुष्पंसफलंविदित्वापुष्टतरंज्ञात्वा यदायदिनिकृंतोच्छिद्यात तदाहिप्रसिद्धं महागुणंमहान्तंगुणंहरत्याहरति २० । २१ अमृतात्देवभावात्कलांषोडशंभागम् २२
इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपे चतुस्त्रिंशोऽध्यायः॥ ३४ ॥ संधिमिति । पतत्रिणाबाणवच्छीघ्रगामिना प्राणहरेणवा स्रोतसानिप्रवाहिना १ प्रत्यक्षंप्रत्यक्षेणज्ञातं कालबंधनः कालवश्यः फेनधर्मानिः
सारः फलधर्मापतनशीलः २ सूच्येवांजनचूर्णस्य यथाक्जलक्षोदस्यातिश्लक्ष्णस्य सूक्ष्माग्रयासूच्याऽपिकिंचिदपचीयते एवंनिमेषादपियस्यायुरपचीयते सकिमित्यत्राधिप्रतिपालयेन्नकथमपीत्यध्याहृत्ययोज्यं ।
'चूर्णःक्षोदेक्षारभेदे'इति विश्वः । शून्येवेतिपाठेऽपिसएवार्थः श्वयतेप्रविशतीतिशूनः स्थूलसूची'सूवा'इति प्रसिद्धः अल्पःशूनः शूनी तयेति योगात । पूर्णस्येत्यपपाठः ३ प्रमाणविदायुःप्रमाणज्ञः ४ । ५ । ६

यदाहिपूर्वंनिकृतोनिकृंतेद्वैरंसपुष्पंसफलंविदित्वा ॥ महागुणंहरतिहिपौरुषेणतदावीरोजीवतिजीवलोके २० श्रियंचलोकेलभतेसमग्रांमन्येचास्मैशत्रवःसन्नमंते ॥ मित्राणिचैनमचिराद्भजंतेदेवाइवेंद्रमुपजीवंतिचैनम् २१ ममप्रतिज्ञांचनिबोधसत्यांवृणेधर्मममृताज्जीविताच्च ॥ राज्यंचपुत्राश्चयशोधनंचसर्वंनसत्यस्यकलामुपैति २२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जु॰युधिष्ठिरवाक्येचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ भीमसेनउवाच ॥ संधिंकृत्वैवकालेनह्यन्तकेनपतत्रिणा ॥ अनंतेनाप्रमेयेणस्रोतसासर्वहारिणा १ प्रत्यक्षंमन्यसेकालंमर्त्यःसन्कालबंधनः ॥ फेनधर्मामहाराजफलधर्मातथैवच २ निमिषादपिकौंतेययस्यायुरपचीयते ॥ सूच्येवांजनचूर्णस्यकिमितिप्रतिपालयेत् ३ योनूनममितायुःस्यादथवाऽपिप्रमाणवित् ॥ सकालंवैप्रतीक्षेतसर्वप्रत्यक्षदर्शीवान् ४ प्रतीक्ष्यमाणःकालेनःसमाराजंस्त्रयोदश ॥ आयुषोऽपचयंकृत्वामरणायोपनेष्यति ५ शरीरिणांहिमरणंशरीरेनित्यमाश्रितम् ॥ प्रागेवमरणात्तस्माद्राज्यायैवघटामहे ६ योनयातिप्रसंख्यानमस्पष्टोभूमिवर्धनः ॥ अयातयित्वावैराणिसोऽवसीदतिगौरिव ७ योनयातयतेवैरमल्पसत्वोद्यमःपुमान् ॥ अफलंजन्मतस्याहंमन्येदुर्जातजायिनः ८ हैरण्यौभवतोबाहूश्रुतिर्भवतिपार्थिवी ॥ हत्वाद्विषंतंसंग्रामेभुंक्ष्वबाहुजितंवसु ९ हत्वावैपुरुषोराजन्निकर्तारमरिंदम ॥ अह्नायनरकंगच्छेत्स्वर्गेणास्यसंमितः १० अमर्षजोहिसंतापःपावकाद्दीप्तिमत्तरः ॥ येनाहमभिसंतप्तोननक्तंनदिवाशये ११ अयंचपार्थोबीभत्सुर्वरिष्ठोज्याविकर्षणे ॥ आस्तेपरमसंतप्तोनूनंसिंहइवाशये १२ योऽयमेकोऽभिमनुतेसर्वांल्लोकेधनुर्भृतः ॥ सोऽयमात्मजमूष्माणंमहाहस्तीवयच्छति १३ नकुलःसहदेवश्चवृद्धामाताचवीरसूः ॥ तवैवप्रियमिच्छंतआसतेजडमूकवत् १४

यानिप्राप्नोति प्रसंख्यानं प्रकृष्टांसाधुकीर्तिं यतोऽस्पष्टःशौर्याद्यभावादितरैरविदितः भूमिवर्धनो भूमिहिंसकः भूमेर्भारभूतइत्यर्थः अयातयित्वाअनिस्तीर्य गौर्बलीवर्दइव सोऽप्यशक्तश्चेत्गोषुसंख्यानंस्पष्टतांवाऽप्यप्राप्नुवन्भूमेर्भारभूतो भवति ७ दुर्जातजायिनोकुजन्मभाजः ८ हैरण्यौहिरण्यस्वामिनौ श्रुतिःकीर्तिःपार्थिवीपृथोराज्ञइवेत्यर्थः ९ निकर्त्तारंवंचकं अह्नायसद्यः सनरकमापद्  १० । ११ आशयेस्वस्थाने १२
अभिमनुते हिनस्ति । 'यदिवेमर्माभिमंस्येकनीयोऽन्नंकरिष्ये' इतिबृहदारण्यकादावभिपूर्वस्यमन्यतेर्हिंसार्थत्वदृष्टेः । इमंप्रथमजं सूक्ष्मंबीजभूतमितिश्रुतिपदस्यार्थः । आत्मजं चित्तजमूष्माणंतापम् १३ । १४

प्रतिविंध्यतःप्रतिविंध्यस्यमातात्रौपदी १५ । १६ । १७ घृणाविष्टःकथंसत्यंत्यजेयमितिलज्जयाव्याप्तः आनृशंस्यादयालुत्वात १८ मंदकस्यकुत्सितमंदस्यअनुवाको गुरूक्तमनुवचनंतेनहता अथज्ञानशून्यस्य वेदाक्षरमात्राभ्यासिनः १९ घृणीदयालुः जायया:जातोऽसि २० । २१ आस्सेतूष्णींभूतोऽसि पीठसर्पवदजगरवत २२ अज्ञातवासस्यदुष्करत्वमाह तृणानामिति २३ संवर्तुंसंवरीतुंछादितुं २४ अनूपेबहुजलेदेशे २५ । २६ । २७ । २८ । २९ । ३० निकर्त्तव्यंतेनोचंमुचनादिकर्मकर्त्तव्यं ३१ । ३२ 'योमासः ससंवत्सरः' इतिश्रुतेर्मासःप्रतिनिधिःसंवत्सरस्यास्ति । 'सोमाभावेपूतिकानभिषुणुयात'

सर्वेतेप्रियमिच्छंतिबांधवाःसहसृंजयैः ॥ अहमेकश्चमंतप्तोमाताचप्रतिविंध्यतः १५ प्रियमेवतुसर्वेषांयद्ब्रवीम्युतकिंचन ॥ सर्वेहिव्यसनंप्राप्ताःसर्वेयुद्धाभिनंदिनः १६ नातःपापीयसींकांचिदापद्राजन्भविष्यति ॥ यन्नोनीचैरल्पबलैराज्यमाच्छिद्यभुज्यते १७ शीलदोषाद्घृणाविष्टआनृशंस्यात्परंतप ॥ क्लेशांस्तितिक्षसेराजन्नान्यःकश्चित्प्रशंसति १८ श्रोत्रियस्येववैराजन्मंदकस्याविपश्चितः ॥ अनुवाकहताबुद्धिर्नैषातत्त्वार्थदर्शिनी १९ घृणीब्राह्मणरूपोऽसिकथंक्षत्रेयुजायथाः ॥ अस्यांहियोनौजायंतेप्रायशःक्रूरबुद्धयः २० अश्रौषीस्त्वंराजधर्मान्यथावैमनुरब्रवीत् ॥ क्रूरान्निकृतिसंपन्नान्विहितानशमात्मकान् २१ धार्त्तराष्ट्रान्महाराजक्षमसेकिंदुरात्मनः ॥ कर्तव्येपुरुषव्याघ्रकिमास्सेपीठसर्पवत् २२ बुद्ध्यावीर्येणसंयुक्तःश्रुतेनाभिजनेनच ॥ तृणानांमुष्टिनैकेनहिमवंतंचपर्वतम् २३ छन्नमिच्छसिकौंतेययोऽस्मान्संवर्तुमिच्छसि ॥ अज्ञातचर्यांगूढेनपृथिव्यांविश्रुतेनच २४ दिवीवपार्थसूर्येणनशक्याचरितुंत्वया ॥ बृहच्छालइवानूपेशाखापुष्पपलाशवान् २५ हस्तीश्वेतइवाज्ञातःकथंजिष्णुश्चरिष्यति ॥ इमौचसिंहसंकाशौभ्रातरौसहितौशिशू २६ नकुलःसहदेवश्चकथंपार्थचरिष्यतः ॥ पुण्यकीर्तीराजपुत्रीद्रौपदीवीरसूरियम् २७ विश्रुताकथमज्ञाताकृष्णापार्थचरिष्यति ॥ मांचापिराजन्जानंतिआकुमारमिमाःप्रजाः २८ नाज्ञातचर्यांपश्यामिमेरोरिवनिगूहनम् ॥ तथैवबहवोऽस्माभीराष्ट्रेभ्योविप्रवासिताः २९ राजानोराजपुत्राश्चधृतराष्ट्रमनुव्रताः ॥ नहितेऽप्युपशाम्यंतिनिकृतावानिराकृताः ३० अवश्यंतैर्निकर्तव्यमस्माकंतत्प्रियैषिभिः ॥ तेऽप्यस्मासुप्रयुंजीरन्प्रच्छन्नान्सुबहूंश्चरान् ॥ आचक्षीरंश्चनोज्ञात्वातत:स्यात्सुमहद्भयम् ३१ अस्माभिरुषिताःसम्यग्वनेमासास्त्रयोदश ॥ परिमाणेनतान्पश्यतावतःपरिवत्सरान् ३२ अस्तिमासःप्रतिनिधिर्यथाप्राहुर्मनीषिणः ॥ पूतिकानिवसोमस्यतथेदंक्रियतामिति ३३ अथवाऽनडुहेराजन्साधवेसाधुवाहिने ॥ सौहित्यदानादेतस्मादेनसःप्रतिमुच्यते ३४ तस्माच्छत्रुवधेराजन्क्रियतांनिश्चयस्त्वया ॥ क्षत्रियस्यहिसर्वस्यनान्योधर्मोऽस्तिसंयुगात् ३५ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिभीमवाक्येपंचत्रिंशोऽध्यायः ॥ ३५ ॥

इतिश्रुतेः पूतिकाःसोमस्यप्रतिनिधयः ३३ 'अनडुहःपूर्णयासमुपाद्दत्यानृतान्मुच्यते' इतिधर्मशास्त्रोक्तंप्रायश्चित्तंवाकर्त्तव्यमित्याहाथवेति । सौहित्यमातृप्तिभोजनंतस्यदानात एतस्मान्मिथ्यावादकृतादेनसःपापात ३४ । ३५ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचत्रिंशोऽध्यायः ॥ ३५ ॥

भीमसेनेति १ आयत्यामुत्तरकाले तदात्वेवर्त्तमानकाले यस्तान्पश्यति २ जानमानोजानन् अभिवकरणत्वमार्षम् ३ इतिकृत्यतामितिकर्त्तव्यतां अपदांतरमविलंबितम् ४ ममादत्स्वांगीकुरु ५ व्यर्थंते व्यथयंति ६ सुमंत्रितेशोभनमंत्रे क्रियमाणेसति सुविक्रांतेउत्कर्षेणोपस्थिते सुकृतेपुण्यकर्मणिसुविचारितेनिश्चितेसति चकारोयद्यर्थे ७ बलंशारीरंसामर्थ्यं दर्पोगर्वस्ताभ्यामुत्थितःप्रवृत्तः ८

वैशंपायनउवाच ॥ ॥ भीमसेनवचःश्रुत्वाकुंतीपुत्रोयुधिष्ठिरः ॥ निःश्वस्यपुरुषव्याघ्रःसंप्रदध्यौपरंतपः १ श्रुतामेराजधर्माश्चवर्णानांचविनिश्चयाः ॥ आयत्यांचत दात्वेचयःपश्यतिसपश्यति २ धर्मस्यजानमानोऽहंगतिमग्र्यांसुदुर्विदाम् ॥ कथंबलात्करिष्यामिमेरोरिवविमर्दनम् ३ समुहूर्त्तमिवध्यात्वाविनिश्चित्येतिकृत्यताम् ॥ भीमसेनमिदंवाक्यमपदांतरमब्रवीत् ४ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ एवमेतन्महाबाहोयथावदसिभारत ॥ इदमन्यत्समादत्स्ववाच्यंमेवाच्यकोविद ५ म हापापानिकर्माणियानिकेवलसाहसात् ॥ आरभ्यंतेभीमसेनव्यथंतेतानिभारत ६ सुमंत्रितेसुविक्रांतेसुकृतेसुविचारिते ॥ सिद्ध्यंत्यर्थामहाबाहोदैवंचात्रप्रदक्षिणम् ७ यत्तुकेवलचापल्याद्बलदर्पोत्थितःस्वयम् ॥ आरब्धव्यमिदंकार्यंमन्यसेशृणुतत्रमे ८ भूरिश्रवाःशलश्चैवजलसंधश्चवीर्यवान् ॥ भीष्मोद्रोणश्चकर्णश्चद्रोणपुत्रश्च वीर्यवान् ९ धार्त्तराष्ट्रादुराधर्षादुर्योधनपुरोगमाः ॥ सर्वएवकृतास्त्राश्चसततंचाततायिनः १० राजानःपार्थिवाश्चैवयेऽस्माभिरुपतापिताः ॥ संश्रिताःकौरवंपक्षं जातस्नेहाश्चसंप्रति ११ दुर्योधनहितेयुक्तानतथाऽस्मासुभारत ॥ पूर्णकोशाबलोपेताःप्रयतिष्यंतिसंगरे १२ सर्वेकौरवसैन्यस्यसपुत्रामात्यसैनिकाः ॥ संविभ क्ताहिमात्राभिर्भोगैरपिचसर्वशः १३ दुर्योधनेनतेवीरामानिताश्चविशेषतः ॥ प्राणांस्त्यक्ष्यंतिसंग्रामेइतिमेनिश्चितामतिः १४ समायद्यपिभीष्मस्यवृत्तिरस्मासु तेषुच ॥ द्रोणस्यचमहाबाहोकृपस्यचमहात्मनः १५ अवश्यंराजपिंडस्तैर्निर्वेश्यइतिमेमतिः ॥ तस्मात्त्यक्ष्यंतिसंग्रामेप्राणानपिसुदुस्त्यजान् १६ सर्वेदिव्या स्त्रविद्वांसःसर्वेधर्मपरायणाः ॥ अजेयाश्चेतिमेबुद्धिरपिदेवैःसवासवैः १७ अमर्षीनित्यसंरब्धस्तत्रकर्णोमहारथः ॥ सर्वास्त्रविदनाधृष्योह्यभेद्यकवचावृतः १८ अनिर्जित्यरणेसर्वानेतान्पुरुषसत्तमान् ॥ अशक्योह्यसहायेनहंतुंदुर्योधनस्त्वया १९ ननिद्रामधिगच्छामिचिंतयानोवृकोदर ॥ अतिसर्वान्धनुर्ग्राहान्सूतपु त्रस्यलाघवम् २० ॥ ॥ वैशंपायनउवाच ॥ ॥ एतद्वचनमाज्ञायभीमसेनोऽत्यमर्षणः ॥ बभूवविमनास्त्रस्तोनचैवोवाचकिंचन २१ तयोःसंवदतोरेवं तदापांडवयोर्द्वयोः ॥ आजगाममहायोगीव्यासःसत्यवतीसुतः २२ सोऽभिगम्ययथान्यायंपांडवैःप्रतिपूजितः ॥ युधिष्ठिरमिदंवाक्यमुवाचवदतांवरः २३ ॥ व्यासउवाच ॥ ॥ युधिष्ठिरमहाबाहोवेद्मितेहृदयस्थितम् ॥ मनीषयाततःक्षिप्रमागतोऽस्मिनरर्षभ २४ भीष्माद्द्रोणात्कृपात्कर्णाद्द्रोणपुत्राच्चभारत ॥ दुर्योध नाद्राजसुतात्तथादुःशासनादपि २५

९ । १० । ११ । १२ सैन्यस्यसैन्यसंबंधिनःसर्वे मात्राभिरंशपरिच्छेदैः १३ । १४ । १५ राजपिंडोराजदत्तोग्रासोनिर्वेश्यआनृण्यार्थंशोधनीयः १६ । १७ । १८ । १९ लाघवंशीघ्रताम् २० । २१ । २२ । २३ । २४ । २५

२६ । २७ । २८ । २९ । ३० सार्वयिष्यनिराज्यम ३१ । ३२ । ३३ । ३४ । ३५ । ३६ उपयोगोव्ययः वीरुधःप्रतानवत्यः औषध्यःफलपाकांताः ३७ । ३८ अनुज्ञायपृष्ट्वा ३९ ब्रह्मंत्रम ४० । ४१ ४२ । ४३ । ४४ । ४५ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपे षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ कस्यचित्कस्मिंश्चित १ । २ वनवासं द्रौपदीवियोगत्र । 'गृहिणीगृहमुच्यते'





यत्तेभयममित्रघ्नहृदिसंपरिवर्तते ॥ ततेऽहंनाशयिष्यामिविधिदृष्टेनकर्मणा २६ तच्छ्रुत्वाधृतिमास्थायकर्मणाप्रतिपादय ॥ प्रतिपाद्यतुराजेंद्रततःक्षिप्रंज्वरंजहि ॥ २७ ततएकांतमुन्नीयपाराशर्योयुधिष्ठिरम् ॥ अब्रवीदुपपन्नार्थमिदंवाक्यविशारदः २८ श्रेयसस्तेपरःकालःप्राप्तोभरतसत्तम ॥ येनाभिभविताशत्रून्रणेपार्थोधनुर्द्धरः २९ गृहाणेमांमयाप्रोक्तांसिद्धिंमूर्तिमतीमिव ॥ विद्यांप्रतिस्मृतिंनामप्रपन्नायब्रवीमिते ३० यामवाप्यमहाबाहुरर्जुनःसाधयिष्यति ॥ अस्त्रहेतोर्महेंद्रंचरुद्रंचैवाभिगच्छतु ३१ वरुणंचकुबेरंचधर्मराजंचपांडव ॥ शक्तोह्येषसुरान्द्रष्टुंतपसाविक्रमेणच ३२ ऋषिरेषमहातेजानारायणसहायवान् ॥ पुराणःशाश्वतोदेवस्त्वजेयोजिष्णुरच्युतः ३३ अस्त्राणींद्राच्चरुद्राच्चलोकपालेभ्यएवच ॥ समादायमहाबाहुर्महत्कर्मकरिष्यति ३४ वनादस्माच्चकौंतेयवनमन्यद्विचिंत्यताम् ॥ निवासार्थायद्युक्तंपवद्वःपृथिवीपते ३५ एकत्रचिरवासोहिनप्रीतिजननोभवेत् ॥ तापसानांचसर्वेषांभवेदुद्वेगकारकः ३६ मृगाणामुपयोगश्चवीरुदौषधिसंशयः ॥ बिभर्षिचबहून्विप्रान्वेदवेदांगपारगान् ३७ ॥ ॥ वैशंपायनउवाच ॥ ॥ एवमुक्त्वाप्रपन्नायशुचयेभगवान्प्रभुः ॥ प्रोवाचलोकतत्त्वज्ञोयोगीविद्यामनुत्तमाम् ३८ धर्मराजायधीमान्सव्यासःसत्यवतीसुतः ॥ अनुज्ञायचकौंतेयंतत्रैवांतरधीयत ३९ युधिष्ठिरस्तुधर्मात्मातद्ब्रह्ममनसायतः ॥ धारयामासमेधावीकालेकालेसदाऽभ्यसन् ४० सव्यासवाक्यमुदितोवनाद्वैतवनात्ततः ॥ ययौसरस्वतीकूलेकाम्यकंनामकाननम् ४१ तमन्वयुर्महाराजशिक्षाक्षरविशारदाः ॥ ब्राह्मणास्तपसायुक्तादेवेंद्रमृषयोयथा ४२ ततःकाम्यकमासाद्यपुनस्तेभरतर्षभ ॥ न्यविशंतमहात्मानःसामात्याःसपरिच्छदाः ४३ तत्रतेन्यवसन्राजन्किंचित्कालंमनस्विनः ॥ धनुर्वेदपरावीराःशृण्वंतोवेदमुत्तमम् ४४ चरंतोमृगयांनित्यंशुद्धैर्बाणैर्मृगार्थिनः ॥ पितृदैवतविप्रेभ्योनिर्वपंतोयथाविधि ४५ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिकाम्यकवनगमनेषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ वैशंपायनउवाच ॥ ॥ कस्यचित्त्वथकालस्यधर्मराजोयुधिष्ठिरः ॥ संस्मृत्यमुनिसंदेशमिदंवचनमब्रवीत् १ विविक्तेविदितप्रज्ञमर्जुनंपुरुषर्षभं ॥ सांत्वपूर्वंस्मितंकृत्वापाणिनापरिसंस्पृशन् २ समुहूर्तमिवध्यात्वावनवासमरिंदमः ॥ धनंजयंधर्मराजोरहसीदमुवाचह ३ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ भीष्मेद्रोणेकृपेकर्णेद्रोणपुत्रेचभारत ॥ धनुर्वेदश्चतुष्पादएतेष्वद्यप्रतिष्ठितः ४ दैवंब्राह्मंमानुषंचसयत्नंसचिकित्सितम् ॥ सर्वास्त्राणांप्रयोगंचअभिजानंतिकृत्स्नशः ५



इतिस्मृतेः ३ चतुष्पादः आदानसंधानविमोक्षसंहाराश्चत्वारःपादा यस्य ४ दैवमिंद्रवरुणाद्यस्त्रं ब्राह्मं ब्रह्मास्त्रं मानुषं धनुर्बाणादि यत्नो ग्रहणधारणप्रयोगरूपः चिकित्सापरप्रयुक्तानामेषांप्रतीकारः एवंतेसर्वास्त्राणांप्रयोगमभितःसाकल्येनजानन्ति ५

गुरुवत्गुरूनिव ६ शांतिंदोषपरिहारंकर्तुं व्यवहर्तुमियतंते ७ शक्तिंसामर्थ्यंनहापयिष्यंतित्याजयिष्यंत्यपितुउद्दीपयिष्यंति ८ । ९ उपनिषत्रहस्यविद्यां १० । ११ प्रतिपालयप्राप्नुहि १२ मार्गंनददतअद दत १३ बलंसर्वास्त्ररूपं १४ ततःशक्रात् १५ दीक्षितःस्वीकृतव्रतः अध्यापयत विद्ययायोजितवान् १६ अनुजज्ञे गमनायानुज्ञातवान् १७ । १८ । १९ । २० । २१ इतिवक्ष्यमाणमब्रुवन २२ । २३

तेसर्वेधृतराष्ट्रस्यपुत्रेणपरिसांत्विताः ॥ संविभक्ताश्चतुष्टाश्चगुरुवत्तेषुवर्तते ६ सर्वयोधेषुचैवास्यसदाप्रीतिरनुत्तमा ॥ आचार्यामानितास्तुष्टाःशांतिंव्यवहरं त्युत ७ शक्तिंनहापयिष्यंतितेकालेप्रतिपूजिताः ॥ अद्यचेयंमहीकृत्स्नादुर्योधनवशानुगा ८ सग्रामनगरापार्थससागरवनाकरा ॥ भवानेवप्रियोऽस्माकंत्वयि भारःसमाहितः ९ अत्रकृत्यंप्रपश्यामिप्राप्तकालमरिंदम ॥ कृष्णद्वैपायनात्ताततगृहीतोपनिषन्मया १० तयाप्रयुक्तयासम्यक्जगत्सर्वंप्रकाशते ॥ तेनत्वंब्र ह्मणातातसंयुक्तःसुसमाहितः ११ देवतानांयथाकालंप्रसादंप्रतिपालय ॥ तपसायोजयात्मानमुग्रेणभरतर्षभ १२ धनुष्मान्कवचीखड्गीमुनिःसाधुव्रतेस्थितः ॥ नकस्यचिद्ददन्मार्गंगच्छतातोत्तरांदिशम् १३ इंद्रेह्यस्त्राणिदिव्यानिसमस्तानिधनंजय ॥ वृत्राद्भीतैर्बलंदेवैस्तदाशक्रेसमर्पितम् १४ तान्येकस्थानिसर्वाणि ततस्त्वंप्रतिपत्स्यसे ॥ शक्रमेवप्रपद्यस्वसतेऽस्त्राणिप्रदास्यति १५ दीक्षितोऽद्यैवगच्छत्वंद्रष्टुंदेवंपुरंदरम् ॥ वैशंपायनउवाच ॥ एवमुक्त्वाधर्मराजस्तमध्या पयत्प्रभुः १६ दीक्षितंविधिनाऽनेनधृतवाक्कायमानसम् ॥ अनुजज्ञेततदावीरंभ्राताभ्रातरमग्रजः १७ निदेशाद्धर्मराजस्यद्रष्टुकामःपुरंदरम् ॥ धनुर्गांडीवमा दायतथाऽक्षय्येमहेषुधी १८ कवचीसतलत्राणोबद्धगोधांगुलित्रवान् ॥ हुत्वाग्निंब्राह्मणान्निष्कैःस्वस्तिवाच्यमहाभुजः १९ प्रातिष्ठतमहाबाहुःप्रगृहीतशरास नः ॥ वधायधार्तराष्ट्राणांनिःश्वस्योर्ध्वमुदीक्ष्यच २० तंदृष्ट्वातत्रकौंतेयंप्रगृहीतशरासनम् ॥ अब्रुवन्ब्राह्मणाःसिद्धाभूतान्यंतर्हितानिच २१ क्षिप्रमाप्नुहि कौंतेयमनसायद्यदिच्छसि ॥ अब्रुवन्ब्राह्मणाःपार्थमितिकृत्वाजयाशिषः २२ संसाधयस्वकौंतेयध्रुवोऽस्तुविजयस्तव ॥ तंतथाप्रस्थितंवीरंशालस्कंधोरुमर्जुनम् २३ मनांस्यादायसर्वेषांकृष्णावचनमब्रवीत् ॥ कृष्णोवाच ॥ यत्तेकुंतीमहाबाहोजातस्यैच्छद्धनंजय २४ तत्तेऽस्तुसर्वंकौंतेययथाचस्वयमिच्छसि ॥ माऽ स्माकंक्षत्रियकुलेजन्मकश्चिदवाप्नुयात् २५ ब्राह्मणेभ्योनमोनित्यंयेषांभैक्ष्येणजीविका ॥ इदंमेपरमंदुःखंयःसपापःसुयोधनः २६ दृष्ट्वामांगौरितिप्राहप्रहसन् राजसंसदि ॥ तस्माद्दुःखादिदंदुःखंगरीयइतिमेमतिः २७ यत्तत्परिषदोमध्येबह्वयुक्तमभाषत ॥ नूनंतेभ्रातरःसर्वेत्वत्कथाभिःप्रजागरे २८ रंस्यंतेवीरकर्माणिकथयं तःपुनःपुनः ॥ नैवनःपार्थभोगेषुनधनेनोतजीविते २९ तुष्टिर्बुद्धिर्भवित्रीवात्वयिदीर्घप्रवासिनि ॥ त्वयिनःपार्थसर्वेषांसुखदुःखेसमाहिते ३० जीवितंमरणंचैवराज्य मैश्वर्यमेवच ॥ आपृष्टोमेऽसिकौंतेयस्वस्तिप्राप्नुहिभारत ३१

यतमंगल्यं तेतव २४ । २५ । २६ गौरितिबहुपुरुषभोग्येत्युपहासः २७ अभाषतशत्रुर्यत्तस्मात्दुःखादिदंत्वद्वियोगजमितिपूर्वेणसंबंधः २८ । २९ । ३० । ३१

३२ तवत्राम ३३ ज्येष्ठापचायीज्येष्ठपूजनशीलः । ज्येष्ठोपचायीतिपाठेज्येष्ठवृद्धिकरणशीलः ३४ । ३५ । ३६ । ३७ शुष्मिणोबलिनः । शुष्ममितिबलनामेतियास्कः ३८ । ३९ । ४० । ४१ । ४२ । ४३ ४४ । ४५ । विनीतौजितौक्रोधहर्षौयैः ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ कामान्काम्यंतइतिव्युत्पत्त्या इष्टान् लोकान्भोगान् ५३ नलोभान्नपुनःकामादितिनशब्दोवाशब्दार्थौ लोभाद्वाका



बलवद्भिर्विरुद्धंनकार्यमेतत्त्वयाऽनघ ॥ प्रयाह्यविघ्नेनैवाशुविजयायमहाबल ॥ नमोधात्रेविधात्रेचस्वस्तिगच्छह्यनामयम् ३२ ह्रीःश्रीःकीर्तिर्द्युतिःपुष्टिरुमालक्ष्मीः सरस्वती ॥ इमावैतवपांथस्यपालयंतुधनंजय ३३ ज्येष्ठापचायीज्येष्ठस्यभ्रातुर्वचनकारकः ॥ प्रपद्येऽहंवसून्रुद्रानादित्यान्समरुद्गणान् ३४ विश्वेदेवांस्तथासाध्यान् शांत्यर्थंभरतर्षभ ॥ स्वस्तितेऽस्त्वांतरिक्षेभ्यःपार्थिवेभ्यश्चभारत ३५ दिव्येभ्यश्चैवभूतेभ्योयेचान्येपरिपंथिनः ॥ वैशंपायनउवाच ॥ एवमुक्त्वाऽऽशिषःकृष्णाविररा मयशस्विनी ३६ ततःप्रदक्षिणंकृत्वाभ्रातॄन्धौम्यंचपांडवः ॥ प्रातिष्ठतमहाबाहुःप्रगृह्यरुचिरंधनुः ३७ तस्यमार्गादपाक्रामन्सर्वभूतानिगच्छतः ॥ युक्तस्यैंद्रेणयोगे नपराक्रांतस्यशुष्मिणः ३८ सोऽगच्छत्पर्वतांस्तातततपोधननिषेवितान् ॥ दिव्यंहैमवतंपुण्यंदेवजुष्टंपरंतपः ३९ अगच्छत्पर्वतंपुण्यमेकाह्नैवमहामनाः ॥ मनोजव गतिर्भूत्वायोगयुक्तोयथाऽनिलः ४० हिमवंतमतिक्रम्यगंधमादनमेवच ॥ अत्यक्रामत्सदुर्गाणिदिवारात्रमतंद्रितः ४१ इंद्रकीलंसमासाद्यततोऽतिष्ठद्धनंजयः ॥ अं तरिक्षेऽतिशुश्रावतिष्ठेतिसवचस्तदा ४२ तच्छ्रुत्वासर्वतोदृष्टिंचारयामासपांडवः ॥ अथापश्यत्सव्यसाचीवृक्षमूलेतपस्विनम् ४३ ब्राह्म्याश्रियादीप्यमानंपिंगलंज टिलंकृशम् ॥ सोऽब्रवीदर्जुनंतत्रस्थितंदृष्ट्वामहातपाः ४४ कस्त्वंतातेहसंप्राप्तोधनुष्मान्कवचीशरी ॥ निबद्धासितलत्राणःक्षत्रधर्ममनुव्रतः ४५ नेहशस्त्रेणकर्त्तव्यंशां तानामेषआलयः ॥ विनीतक्रोधहर्षाणांब्राह्मणानांतपस्विनाम् ४६ नेहास्तिधनुषाकार्यंनसंग्रामोऽत्रकर्हिचित् ॥ निक्षिपैतद्धनुस्तातप्राप्तोऽसिपरमांगतिम् ४७ ओ जसातेजसावीरःयथानान्यःपुमान्क्वचित् ॥ तथाहसन्निवाभीक्ष्णंब्राह्मणोऽर्जुनमब्रवीत् ॥ नचैनंचालयामासधैर्यात्सुधृतनिश्चयम् ४८ तमुवाचततःप्रीतःसद्विजःप्रह सन्निव ॥ वरंवृणीष्वभद्रंतेशक्रोऽहमरिसूदन ४९ एवमुक्तःसहस्राक्षंप्रत्युवाचधनंजयः ॥ प्रांजलिःप्रणतोभूत्वाशूरःकुरुकुलोद्वहः ५० ईप्सितोह्येषवैकामोवरंचैनंप्रय च्छमे ॥ त्वत्तोऽद्यभगवन्नस्त्रंकृत्स्नमिच्छामिवेदितुम् ५१ प्रत्युवाचमहेंद्रस्तंप्रीतात्माप्रहसन्निव ॥ इहप्राप्तस्यकिंकार्यमस्त्रैस्तवधनंजय ५२ कामान्वृणीष्वलोकांस्त्वं प्राप्तोऽसिपरमांगतिम् ॥ एवमुक्तःप्रत्युवाचसहस्राक्षंधनंजयः ५३ नलोभान्नपुनःकामान्नदेवत्वंपुनःसुखम् ॥ नचसर्वामरैश्वर्यंकामयेत्रिदशाधिप ५४ भ्रातॄंस्तान्वि पिनेत्यक्त्वावैरमप्रतियात्यच ॥ अकीर्तिंसर्वलो[illegible]प्यशाश्वतीःसमाः ५५ एवमुक्तःप्रत्युवाचवृत्रहापांडुनंदनम् ॥ [illegible]श्लक्ष्णयावाचासर्वलोकनमस्कृतः ५६ यदाद्रक्ष्यसिभूतेशंत्र्यक्षंशूलधरंशिवम् ॥ तदादातास्मितेतातदिव्यान्यस्त्राणिसर्वशः ५७

मा,त्यर्थः ५४ अप्रतियात्यानिस्तीर्य एतेन ज्येष्ठभ्रात्रादित्यजनमैंद्रपदप्राप्तात्रपिनोपेक्षणीयमित्युक्तम् ५५ । ५६ । ५७

५८ । ५९ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ भगवन्निति १ । २ । ३ । ४ । ५ दैन्यहर्षातिविस्मयात् दैन्यंनाशभयात् हर्षोमहादेवप्रतिभटत्वात् विस्मयस्तत्प्रसादेना

क्रियतांदर्शनेयत्नोदेवस्यपरमेष्ठिनः ॥ दर्शनात्तस्यकौंतेयसंसिद्धःस्वर्गमेष्यसि ५८ इत्युक्त्वाफाल्गुनंशक्रोजगामादर्शनंपुनः ॥ अर्जुनोऽप्यथतत्रैवतस्थौयो गसमन्वितः ॥ ५९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिअर्जुनाभिगमनपर्वणिइंद्रदर्शनेसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ समाप्तंचार्जुनाभिगमनपर्व ॥ अथकैरा तपर्व ॥ जनमेजयउवाच ॥ भगवञ्छ्रोतुमिच्छामिपार्थस्याक्लिष्टकर्मणः ॥ विस्तरेणकथामेतांयथास्त्राण्युपलब्धवान् १ यथाचपुरुषव्याघ्रोदीर्घबाहुर्धनंज यः ॥ वनंप्रविष्टस्तेजस्वीनिर्मनुष्यमभीतवत् २ किंचतेनकृतंतत्रवसताब्रह्मवित्तम ॥ कथंचभगवान्स्थाणुर्देवराजश्चतोषितः ३ एतदिच्छाम्यहंश्रोतुंत्वत्प्र सादाद्द्विजोत्तम ॥ त्वंहिसर्वज्ञदिव्यंचमानुषंचैववेत्थह ४ अत्यद्भुततमंब्रह्मन्रोमहर्षणमर्जुनः ॥ भवेनसहसंग्रामंचकाराप्रतिमंकिल ५ पुराप्रहरतांश्रेष्ठःसंग्रामे ष्वपराजितः ॥ यच्छ्रुत्वानरसिंहानांदैन्यहर्षातिविस्मयात् ६ शूराणामपिपार्थानांहृदयानिचकंपिरे ॥ यद्यच्चकृतवानन्यत्पार्थस्तदखिलंवद ७ नह्यस्यनिं दितंजिष्णोःसुसूक्ष्ममपिलक्षये ॥ चरितंतस्यशूरस्यतन्मेसर्वंप्रकीर्त्तय ८ ॥ वैशंपायनउवाच ॥ कथयिष्यामितेतातकथामेतांमहात्मनः ॥ दिव्यांपौरवशा र्दूलमहतीमद्भुतोपमाम् ९ गात्रसंस्पर्शसंबद्धांत्र्यंबकेणसहानघ ॥ पार्थस्यदेवदेवेनशृणुसम्यक्समागमम् १० युधिष्ठिरनियोगात्सजगामामितविक्रमः ॥ शक्रं सुरेश्वरंद्रष्टुंदेवदेवंचशंकरम् ११ दिव्यंतद्धनुरादायखड्गंचकनकत्सरुम् ॥ महाबलोमहाबाहुरर्जुनःकार्यसिद्धये १२ दिशंह्युदीचींकौरव्योहिमवच्छिखरंप्रति ॥ ऐंद्रिःस्थिरमनाराजन्सर्वलोकमहारथः १३ त्वरयापरयायुक्तस्तपसेधृतनिश्चयः ॥ वनंकंटकितंघोरमेकएवान्वपद्यत १४ नानापुष्पफलोपेतंनानापक्षिनि षेवितम् ॥ नानामृगगणाकीर्णंसिद्धचारणसेवितम् १५ ततःप्रयातेकौंतेयेवनंमानुषवर्जितम् ॥ शंखानांपटहानांचशब्दःसमभवद्दिवि १६ पुष्पवर्षंचानुमह न्निपपातमहीतले ॥ मेघजालंचविततंछादयामाससर्वतः १७ सोऽतीत्यवनदुर्गाणिसन्निकर्षेमहागिरेः ॥ शुशुभेहिमवत्पृष्ठेवसमानोऽर्जुनस्तदा १८ तत्रापश्य द्द्रुमान्फुल्लान्विहगैर्वल्गुनादितान् ॥ नदीश्चविपुलावर्तावैदूर्यविमलप्रभाः १९ हंसकारंडवोद्गीताःसारसाभिरुतास्तथा ॥ पुंस्कोकिलरुताश्चैवक्रौंचबर्हिणना दिताः २० मनोहरवनोपेतास्तस्मिन्नतिरथोऽर्जुनः ॥ पुण्यशीतामलजलाःपश्यन्प्रीतमनाऽभवत् २१ रमणीयेवनोद्देशेरममाणोऽर्जुनस्तदा ॥ तपस्युग्रेवर्त मानउग्रतेजामहामनाः २२ दर्भचीरंनिवस्याथदंडाजिनविभूषितः ॥ शीर्णंचपतितंभूमौपर्णंसमुपयुक्तवान् २३

लौकिकसामर्थ्यलाभात् ६ । ७ । ८ । ९ । १० । ११ कनकत्सरुंस्वर्णमुष्टिं १२ ऐंद्रिरर्जुनः १३ कंटकितंकंटकाक्रांतं १४ । १५ । १६ । १७ । १८ वल्गुमधुरं १९ । २० । २१ २२ दर्भचीरंतृणमयंवासः निवस्यपरिधाय समुपयुक्तवान्भुक्तवान् २३

द्विगुणेनषड्रात्रेणात्ययादतिवाहितवान् २४ । २५ निरालंबोनिराश्रयः २६ । २७ । २८ । २९ धूमाययन्धूमवतीरिवकुर्वन् ३० । ३१ । ३२ संकल्पंमनोरथं ३३ । ३४ । ३५ इत्यारण्यके पर्वणिनै०

पूर्णेपूर्णेत्रिरात्रेतुमासमेकंफलाशनः ॥ द्विगुणेनहिकालेनद्वितीयंमासमत्ययात् २४ तृतीयमपिमासंसपक्षेणाहारमाचरन् ॥ चतुर्थेत्वथसंप्राप्तेमासेभरतसत्तमः २५ वायुभक्षोमहाबाहुरभवत्पांडुनंदनः ॥ उर्ध्वबाहुर्निरालंबःपदांगुष्ठाग्रधिष्ठितः २६ सदोपस्पर्शनाच्चास्यबभूवुरमितौजसः ॥ विद्युदंभोरुहनिभाजटास्तस्यमहात्मनः २७ ततोमहर्षयःसर्वेजग्मुर्देवंपिनाकिनम् ॥ निवेदयिषवःपार्थंतपस्युग्रेसमास्थितम् २८ तंप्रणम्यमहादेवंशशंसुःपार्थकर्मतत् ॥ एषपार्थोमहातेजाहिमवत्पृष्ठमास्थितः २९ उग्रेतपसिदुष्पारेस्थितोधूमाययन्दिशः ॥ तस्यदेवेशनवयंविद्मःसर्वेचिकीर्षितम् ३० संतापयतिनःसर्वान्सौसाधुनिवार्यताम् ॥ तेषांतद्वचनंश्रुत्वामुनीनांभावितात्मनाम् ३१ उमापतिर्भूतपतिर्वाक्यमेतदुवाचह ॥ महादेवउवाच ॥ नवोविषादःकर्तव्यःफाल्गुनंप्रतिसर्वशः ३२ शीघ्रंगच्छतसंहृष्टायथागतमतंद्रिताः ॥ अहमस्यविजानामिसंकल्पंमनसिस्थितम् ३३ नास्यस्वर्गस्पृहाकाचिन्नैश्वर्यस्यनतथाऽऽयुषः ॥ यत्तस्यकांक्षितंसर्वंतत्करिष्येऽहमद्यवै ३४ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वाशर्ववचनमृषयःसत्यवादिनः ॥ प्रहृष्टमनसोजग्मुर्यथास्वान्पुनरालयान् ३५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिकैरातप० मुनिशंकरसंवादेअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ वैशंपायनउवाच ॥ गतेषुतेषुसर्वेषुतपस्विषुमहात्मसु ॥ पिनाकपाणिर्भगवान्सर्वपापहरोहरः १ कैरातंवेषमास्थायकांचनद्रुमसन्निभम् ॥ विभ्राजमानोविपुलोगिरिर्मेरुरिवापरः २ श्रीमद्धनुरुपादायशरांश्चाशीविषोपमान् ॥ निष्पपातमहावेगोदहनोदेहवानिव ३ देव्यासहोमयाश्रीमान्समानव्रतवेषया ॥ नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तदा ४ किरातवेषसंछन्नःस्त्रीभिश्चापिसहस्रशः ॥ अशोभततदाराजन्सदेशोऽतीवभारत ५ क्षणेनतद्वनंसर्वंनिःशब्दमभवत्तदा ॥ नादःप्रस्रवणानांचपक्षिणांचाप्युपारमत् ६ ससन्निकर्षमागम्यपार्थस्याक्लिष्टकर्मणः ॥ मूकंनामदनोःपुत्रंददर्शाद्भुतदर्शनम् ७ वाराहंरूपमास्थायतर्कयंतमिवार्जुनम् ॥ हंतुंपरंदीप्यमानंतमुवाचाथफाल्गुनः ८ गांडीवंधनुरादायशरांश्चाशीविषोपमान् सज्यंधनुर्वरंकृत्वाज्याघोषेणनिनादयन् ९ यन्मांप्रार्थयसेहंतुमनागसमिहागतम् ॥ तस्मात्त्वांपूर्वमेवाहंनेताऽद्ययमसादनम् १० दृष्ट्वातंप्रहरिष्यंतंफाल्गुनंदृढधन्विनम् ॥ किरातरूपीसहसावारयामासशंकरः ११ मयैषप्रार्थितःपूर्वमिंद्रकीलसमप्रभः ॥ अनादृत्यचतद्वाक्यंप्रजहाराथफाल्गुनः १२ किरातश्चसमंतस्मिन्नेकलक्ष्येमहाद्युतिः ॥ प्रमुमोचाशनिप्रख्यंशरमग्निशिखोपमम् १३ तौमुक्तौसायकौताभ्यांसमंतत्रनिपेततुः ॥ मूकस्यगात्रेविस्तीर्णेशैलसंहननेतदा १४

कंठोयेभारतभावदीपेअष्टत्रिंशोऽध्यायः ॥ ३८ ॥ गतेष्विति १ । २ । ३ भूतैःप्रमथाख्यैःस्वपार्षदैः ४ । ५ । ६ । ७ अर्जुनंहंतुंतर्कयंतमिच्छंतं क्रोधेनदीप्यमानमिव ८ । ९ नेतानेष्यामि १० । ११ इंद्रकीलो माहेंद्रमणिमयःपर्वतः १२ सममेककालं १३ शैलसंहननेशैलवद्दृढे १४

अशनिर्मेघजंवज्रं वज्रमिंद्रप्रहरणं संनिपातोयोगः १५ सदानवः राक्षसमिव १६ । १७ । १८ । १९ अभिपन्नः परिगृहीतः कामाद्यदृच्छातः परिभवान्ममाभिभवाय २० । २१ । २२ मत्कृतेमन्निमित्तं

यथाऽशनेर्विनिर्घोषोवज्रस्येवचपर्वते ॥ तथातयोःसन्निपातःशरयोरभवत्तदा १५ सविद्धोबहुभिर्बाणैर्दीप्तास्यैःपन्नगैरिव ॥ ममाररराक्षसंरूपंभूयःकृत्वाविभीषणम् १६ सददर्शततोजिष्णुःपुरुषंकांचनप्रभम् ॥ किरातवेषसंछन्नंस्त्रीसहायममित्रहा १७ तमब्रवीत्प्रीतमनाःकौंतेयःप्रहसन्निव ॥ कोभवानटतेशून्येवनेस्त्रीगणसंवृतः १८ नत्वमस्मिन्वनेघोरेबिभेषिकनकप्रभ ॥ किमर्थंचत्वयाविद्धोवराहोमत्परिग्रहः १९ मयाऽभिपन्नःपूर्वंहिराक्षसोऽयमिहागतः ॥ कामात्परिभवाद्वापिनमेजीवन्विमोक्ष्यसे २० नह्येषमृगयाधर्मोयस्त्वयाऽद्यकृतोमयि ॥ तेनत्वांभ्रंशयिष्यामिजीवितात्पर्वताश्रयम् २१ इत्युक्तःपांडवेयेनकिरातःप्रहसन्निव ॥ उवाचश्लक्ष्णयावाचापांडवंसव्यसाचिनम् २२ नमत्कृतेत्वयावीरभीःकार्यावनमंतिकात् ॥ इयंभूमिःसदाऽस्माकमुचितावसतांवने २३ त्वयातुदुष्करःकस्मादिहवासःप्ररोचितः ॥ वयंतुबहुसत्त्वेऽस्मिन्निवसामस्तपोधन २४ भवांस्तुकृष्णवर्त्माभःसुकुमारःसुखोचितः ॥ कथंशून्यमिमंदेशमेकाकीविचरिष्यति २५ ॥ अर्जुनउवाच ॥ गांडीवमाश्रयंकृत्वानाराचांश्चाग्निसन्निभान् ॥ निवसामिमहारण्येद्वितीयइवपावकिः २६ एषचापिमयाजंतुर्मृगरूपंसमाश्रितः ॥ राक्षसोनिहतोघोरोहंतुंमामिहचागतः २७ ॥ किरातउवाच ॥ मयैषधन्वनिर्मुक्तैस्ताडितःपूर्वमेवहि ॥ बाणैरभिहतःशेतेनीतश्चयमसादनम् २८ ममैषलक्ष्यभूतोहिममपूर्वंपरिग्रहः ॥ ममैवचप्रहारेणजीविताद्व्यपरोपितः २९ दोषान्स्वान्नार्हसेऽन्यस्मैवक्तुंस्वबलदर्पितः ॥ अवलिप्तोऽसिमंदात्मन्नमेजीवन्विमोक्ष्यसे ३० स्थिरोभवस्वमोक्ष्यामिसायकानशनीनिव ॥ घटस्वपरयाशक्त्यामुंचत्वमपिसायकान् ३१ तस्यतद्वचनंश्रुत्वाकिरातस्यार्जुनस्तदा ॥ रोषमाहारयामासताडयामासचेषुभिः ३२ ततोहृष्टेनमनसाप्रतिजग्राहसायकान् ॥ भूयोभूयइतिप्राहमंदमंदेत्युवाचह ३३ प्रहरस्वशरानेतान्नाराचान्मर्मभेदिनः ॥ इत्युक्तोबाणवर्षंसमुमोचसहसाऽर्जुनः ३४ ततस्तौतत्रसंरब्धौराजमानौमुहुर्मुहुः ॥ शरैराशीविषाकारैस्ततक्षातेपरस्परम् ३५ ततोऽर्जुनःशरवर्षंकिरातेसमवासृजत ॥ तत्प्रसन्नेनमनसाप्रतिजग्राहशंकरः ३६ मुहूर्तंशरवर्षंतत्प्रतिगृह्यपिनाकधृक् ॥ अक्षतेनशरीरेणतस्थौगिरिरिवाचलः ३७ सदृष्ट्वाबाणवर्षंतुमोघीभूतंधनंजयः ॥ परमंविस्मयंचक्रेसाधुसाध्वितिचाब्रवीत् ३८ अहोऽयंसुकुमारांगोहिमवच्छिखराश्रयः ॥ गांडीवमुक्तान्नाराचान्प्रतिगृह्णात्यविह्वलः ३९ कोऽयंदेवोभवेत्साक्षाद्रुद्रोयक्षःसुरोऽसुरः ॥ विद्यतेहिगिरिश्रेष्ठेत्रिदशानांसमागमः ४० नहिमद्बाणजालानामुत्सृष्टानांसहस्रशः ॥ शक्तोऽन्यःसहितुंवेगमृतेदेवंपिनाकिनम् ४१ देवोवायदिवायक्षोरुद्रादन्योव्यवस्थितः ॥ अहमेनंशरैस्तीक्ष्णैर्नयामियमसादनम् ४२

वनमंतिकाद्वनस्यसमीपे २३ प्ररोचितःस्वीकृतः २४ । २५ पावकिःस्वामीकार्त्तिकेयः २६ । २७ । २८ । २९ दोषान्मृगयाधर्मातिक्रमरूपान् ३० स्थिरःसन्भवस्वप्राप्नुहि ३१ । ३२ । ३३ । नाराचान् शरजातिभेदान् ३४ । ३५ । ३६ । ३७ । ३८ अहोयमितिसंधिरार्षः ३९ । ४० सहितुंसोढुं ऋतेविना ४१ । ४२

ततोहृष्टमनाजिष्णुर्नाराचान्मर्मभेदिनः ॥ व्यसृजच्छतधाराजन्मयूखानिवभास्करः ४३ तान्प्रसन्नेनमनसाभगवाल्लोकभावनः ॥ शूलपाणिःप्रत्यगृह्णात् शिलावर्षमिवाचलः ४४ क्षणेनक्षीणबाणोऽथसंवृत्तःफाल्गुनस्तदा ॥ भीश्चैनमाविशत्तीव्रातंदृष्ट्वाशरसंक्षयम् ४५ चिंतयामासजिष्णुस्तुभगवंतंहुताशनम् ॥ पुरस्तादक्षयौदत्तौतूणौयेनास्यखांडवे ४६ किंनुमोक्ष्यामिधनुषायन्मेबाणाःक्षयंगताः ॥ अयंचपुरुषःकोऽपिबाणान्ग्रसतिसर्वशः ४७ हत्वाचैनंधनुष्कोट्या शूलाग्रेणवकुंजरम् ॥ नयामिदंडधारस्ययमस्यसदनंप्रति ४८ प्रगृह्याथधनुष्कोट्याज्यापाशेनावकृष्यच ॥ मुष्टिभिश्चापिहतवान्वज्रकल्पैर्महाद्युतिः ४९ संप्रयुद्धोधनुष्कोट्याकौंतेयःपरवीरहा ॥ तदप्यस्यधनुर्दिव्यंजग्राहगिरिगोचरः ५० ततोऽर्जुनोग्रस्तधनुःखड्गपाणिरतिष्ठत ॥ युद्धस्यांतमभीप्सन्वैवेगेनाभिजगामतम् ५१ तस्यमूर्ध्निशितंखड्गमसक्तंपर्वतेष्वपि ॥ मुमोचभुजवीर्येणविक्रम्यकुरुनंदनः ५२ तस्यमूर्धानमासाद्यपफालासिवरोहिसः ॥ ततोवृक्षैःशिलाभिश्चयोधयामासफाल्गुनः ५३ तदावृक्षान्महाकायःप्रत्यगृह्णादथोशिलाः ॥ किरातरूपीभगवांस्ततःपार्थोमहाबलः ५४ मुष्टिभिर्वज्रसंकाशैर्धूममुत्पादयन्मुखे ॥ प्रजहारदुराधर्षेकिरातसमरूपिणि ५५ ततःशक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः ॥ किरातरूपीभगवानर्दयामासफाल्गुनम् ५६ ततश्चटचटाशब्दःसुघोरःसमपद्यत ॥ पांडवस्यचमुष्टीनांकिरातस्यचयुध्यतः ५७ सुमुहूर्तंतुतद्युद्धमभवल्लोमहर्षणम् ॥ भुजप्रहारसंयुक्तंवृत्रवासवयोरिव ५८ जघानाथततोजिष्णुःकिरातमुरसाबली ॥ पाण्डवंचविचेष्टंतंकिरातोऽप्यहनद्बली ५९ तयोर्भुजविनिष्पेषात्संघर्षेणोरसोस्तथा ॥ समजायतगात्रेषुपावकोंऽगारधूमवान् ६० ततएनंमहादेवःपीड्यगात्रैःसुपीडितम् ॥ तेजसाव्यक्रमद्रोषाच्चेतस्तस्यविमोहयन् ६१ ततोऽभिपीडितैर्गात्रैःपिंडीकृतइवाबभौ ॥ फाल्गुनोगात्रसंरुद्धोदेवदेवेनभारत ६२ निरुच्छ्वासोऽभवच्चैवसन्निरुद्धोमहात्मना ॥ पपातभूम्यांनिश्चेष्टोगतसत्वइवाभवत् ६३ समुहूर्तंतथाभूत्वासचेताःपुनरुत्थितः ॥ रुधिरेणाप्लुतांगस्तुपांडवोभृशदुःखितः ६४ शरण्यंशरणंगत्वाभगवंतंपिनाकिनम् ॥ मृन्मयंस्थंडिलंकृत्वामाल्येनापूजयद्भवम् ६५ तच्चमाल्यंतदापार्थःकिरातशिरसिस्थितम् ॥ अपश्यत्पांडवश्रेष्ठोहर्षेणप्रकृतिंगतः ६६ पपातपादयोस्तस्यततःप्रीतोऽभवद्भवः ॥ उवाचचैनंवचसामेघगंभीरगीर्हरः ॥ जातविस्मयमालोक्यततःक्षीणांगसंहतिम् ६७ ॥ भवउवाच ॥ भोभोफाल्गुनतुष्टोऽस्मिकर्मणाऽप्रतिमेनते ॥ शौर्येणानेनधृत्याचक्षत्रियोनास्तितेसमः ६८ समंतेजश्चवीर्यंचममाद्यतवचानघ ॥ प्रीतस्तेऽहंमहाबाहोपश्यमांभरतर्षभ ६९ ददामितेविशालाक्षचक्षुःपूर्वऋषिर्भवान् ॥ विजेष्यसिरणेशत्रूनपिसर्वान्दिवौकसः ७०

पीड्यनिपीड्य ६१ गात्रेषुसंरुद्धश्चलनहीनः ६२ । ६३ । ६४ । ६५ मक्रीतिस्वास्थ्यं ६६ । ६७ । ६८ । ६९ चक्षुर्दिव्यज्ञानं ७०

७१ । ७२ । ७३ कपर्दिन्नित्यादिनामानि शिवसहस्रनामव्याख्यायांव्याख्यास्यंते ७४ । ७५ । ७६ । मीढुषेवर्षकाय ७७ मार्जालीयायकिरातायशुद्धदेहायवा । 'मार्जालीयःस्मृतःशूद्रेबिडालेकायशोधने'

प्रीत्याचतेऽहंदास्यामियदस्त्रमनिवारितम् ॥ त्वंहिशक्तोमदीयंतदस्त्रंधारयितुंक्षणात् ७१ ॥ वैशंपायनउवाच ॥ ततोदेवंमहादेवंगिरिशंशूलपाणिनम् ॥ ददर्श फाल्गुनस्तत्रसहदेव्यामहाद्युतिम् ७२ सजानुभ्यांमहींगत्वाशिरसाप्रणिपत्यच ॥ प्रसादयामासहरंपार्थःपरपुरंजयः ७३ ॥ अर्जुनउवाच ॥ कपर्दिन्सर्वदेवेशभग नेत्रनिपातन ॥ देवदेवमहादेवनीलग्रीवजटाधर ७४ कारणानांचपरमंजानेत्वांत्र्यंबकंविभुम् ॥ देवानांचगतिंदेवंत्वत्प्रसूतमिदंजगत् ७५ अजेयस्त्वंत्रिभिर्लो कैःसदेवासुरमानुषैः ॥ शिवायविष्णुरूपायविष्णवेशिवरूपिणे ७६ दक्षयज्ञविनाशायहरिरुद्रायवैनमः ॥ ललाटाक्षायशर्वायमीढुषेशूलपाणये ७७ पिनाकगो प्त्रेसूर्यायमार्जालीयायवेधसे ॥ प्रसादयेत्वांभगवन्सर्वभूतमहेश्वर ७८ गणेशंजगतःशंभुंलोककारणकारणम् ॥ प्रधानपुरुषातीतंपरंसूक्ष्मतरंहरम् ७९ व्यति क्रमंमेभगवन्क्षंतुमर्हसिशंकर ॥ भगवन्दर्शनाकांक्षीप्राप्तोऽस्मीमंमहागिरिम् ८० दयितंतवदेवेशतापसालयमुत्तमम् ॥ प्रसादयेत्वांभगवन्सर्वलोकनमस्कृतम् ८१ नमेस्यादपराधोऽयंमहादेवातिसाहसात् ॥ कृतोमयाऽयमज्ञानाद्विमर्दोयस्त्वयासह ॥ शरणंप्रतिपन्नायतत्क्षमस्वाद्यशंकर ८२ ॥ वैशंपायनउवाच ॥ त मुवाचमहातेजाःप्रहस्यवृषभध्वजः ॥ प्रगृह्यरुचिरंबाहुंक्षांतमित्येवफाल्गुनम् ८३ परिष्वज्यचबाहुभ्यांप्रीतात्माभगवान्हरः ॥ पुनःपार्थंसांत्वपूर्वमुवाचवृषभ ध्वजः ८४ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिकैरातपर्वणिमहादेवस्तवेएकोनचत्वारिंशोऽध्यायः ३९ ॥ ॥ देवदेवउवाच ॥ नरस्त्वंपूर्वदेहेवैना रायणसहायवान् ॥ बदर्यांतप्तवानुग्रंतपोवर्षायुतान्बहून् १ त्वयिवापरमंतेजोविष्णौवापुरुषोत्तमे ॥ युवाभ्यांपुरुषाग्र्याभ्यांतेजसाधार्यतेजगत् २ शक्राभिषे केतुमहद्धनुर्जलदनिःस्वनम् ॥ प्रगृह्यदानवाःशस्तास्त्वयाकृष्णेनचप्रभो ३ तदेतदेवगांडीवंतवपार्थकरोचितम् ॥ मायामास्थाययद्ग्रस्तंमयापुरुषसत्तम ४ तूणौचाप्यक्षयौभूयस्तवपार्थयथोचितौ ॥ भविष्यतिशरीरंचनीरुजंकुरुनंदन ५ प्रीतिमानस्मितेपार्थभवान्सत्यपराक्रमः ॥ गृहाणवरमस्मत्तःकांक्षितंपुरुषो त्तम ६ नत्वयापुरुषःकश्चित्पुमान्मर्त्येषुमानद ॥ दिविवावर्ततेक्षत्रंत्वत्प्रधानमरिंदम ७ ॥ अर्जुनउवाच ॥ भगवन्ददासिचेन्मह्यंकामंप्रीत्यावृषध्वज ॥ का मयेदिव्यमस्त्रंतद्घोरंपाशुपतंप्रभो ८ यत्तद्ब्रह्मशिरोनामरौद्रंभीमपराक्रमम् ॥ युगांतेदारुणेप्राप्तेकृत्स्नंसंहरतेजगत् ९ कर्णभीष्मकृपद्रोणैर्भवितातुमहाहवः ॥ त्वत्प्रसादान्महादेवजयेयंतान्यथायुधि १० दहेयंयेनसंग्रामेदानवान्राक्षसांस्तथा ॥ भूतानिचपिशाचांश्चगंधर्वानथपन्नगान् ११ यस्मिन्शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः ॥ शराश्चाशीविषाकाराःसंभवंत्यनुमंत्रिते १२

इतिविश्वः ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ नरस्त्वमिति १ । २ शस्तामारिताः ३ त्वयापुरुषइतिपाठे समभिस व्याहारः ४ । ५ । ६ त्वत्प्रधानं त्वमेवश्रेष्ठोयस्मिन्क्षत्रे ७ कामंवरं ८ । ९ । १० । ११ । १२

१३ विनिर्वृत्तोविशेषेणकृतकृत्यः १४ संहारेनिवर्त्तने १५ । १६ । १७ मनसासंकल्पमात्रेणनिपातयेत् शत्रुं धनुषेतिबाणप्रयोगेण १८ अधीष्वाध्यापय १९।२० उपतस्थे कर्मव्यतिहारेतङ् पार्थोऽस्त्रंप्रत्युपनत

युध्येयंयेनभीष्मेणद्रोणेनचकृपेणच ॥ सूतपुत्रेणचरणेनित्यंकटुकभाषिणा १३ एषमेप्रथमःकामोभगवन्भगनेत्रहन् ॥ त्वत्प्रसादाद्विनिर्वृत्तःसमर्थःस्यामहं यथा १४ ॥ भवउवाच ॥ ददामितेऽस्त्रंदयितमहंपाशुपतंविभो ॥ समर्थोधारणेमोक्षेसंहारेचासिपांडव १५ नैतद्वेदमहेंद्रोऽपिनयमोनचयक्षराट् ॥ वरुणोऽप्यथवावायुःकुतोवेत्स्यंतिमानवाः १६ नत्वेतत्सहसापार्थमोक्तव्यंपुरुषेक्वचित् ॥ जगद्विनाशयेत्सर्वमल्पतेजसिपातितम् १७ अवध्योनामनास्त्यत्रत्रैलोक्ये सचराचरे ॥ मनसाचक्षुषावाचाधनुषाचनिपातयेत् १८ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वात्वरितःपार्थःशुचिर्भूत्वासमाहितः ॥ उपसंगम्यविश्वेशमधीष्वेत्यथसोऽब्रवीत् १९ ततस्त्वध्यापयामाससरहस्यनिवर्त्तनम् ॥ तदस्त्रंपांडवश्रेष्ठंमूर्त्तिमंतमिवांतकम् २० उपतस्थेचतत्पार्थंयथात्र्यक्षमुमापतिम् ॥ प्रतिजग्राहतच्चापिप्रीतिमानर्जुनस्तदा २१ ततश्चचालपृथिवीसपर्वतवनद्रुमा ॥ ससागरवनोद्देशासग्रामनगराकरा २२ शंखदुंदुभिघोषाश्चभेरीणांचसहस्रशः ॥ तस्मिन्मुहूर्त्तेसंप्राप्तेनिर्घाताश्चापतन्मुहुः २३ अथास्त्रंजाज्वलद्घोरंपांडवस्यामितौजसः ॥ मूर्तिमद्वैस्थितंपार्श्वेददृशुर्देवदानवाः २४ स्पृष्टस्यत्र्यंबकेणाथफाल्गुनस्यामितौजसः ॥ यत्किंचिदशुभंदेहेतत्सर्वंनाशमीयिवत् २५ स्वर्गंगच्छेत्यनुज्ञातस्त्र्यंबकेणतदाऽर्जुनः ॥ प्रणम्यशिरसाराजन्प्रांजलिर्देवमैक्षत २६ ततःप्रभुस्त्रिदिवनिवासिनांवशीमहामतिर्गिरिश उमापतिःशिवः ॥ धनुर्महद्दितिजपिशाचसूदनंददौभवःपुरुषवरायगांडिवम् २७ ततःशुभंगिरिवरमीश्वरस्तदासहोमयासिततटसानुकंदरम् ॥ विहायतंपतगमहर्षिसेवितंजगामखंपुरुषवरस्यपश्यतः २८ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिकैरा० शिवप्रस्थानेचत्वारिंशोऽध्यायः ॥ ४० ॥ वैशंपायनउवाच ॥ तस्यसंपश्यतस्त्वेवपिनाकीवृषभध्वजः ॥ जगामादर्शनंभानुर्लोकस्येवास्तमीयिवान् १ ततोऽर्जुनःपरंचक्रेविस्मयंपरवीरहा ॥ मयासाक्षान्महादेवोदृष्टइत्येवभारत २ धन्योऽस्म्यनुगृहीतोऽस्मियन्मयात्र्यंबकोहरः ॥ पिनाकीवरदोरूपीदृष्टःस्पृष्टश्चपाणिना ३ कृतार्थंचावगच्छामिपरमात्मानमाहवे ॥ शत्रूंश्चविजितान्सर्वान्निर्वृत्तंचप्रयोजनम् ४ इत्येवंचिंतयानस्यपार्थस्यामिततेजसः ॥ ततोवैडूर्यवर्णाभोभासयन्सर्वतोदिशः ॥ यादोगणवृतःश्रीमानाजगामजलेश्वरः ५ नागैर्नदैर्नदीभिश्चदैत्यैःसाध्यैश्चदैवतैः ॥ वरुणोयादसांभर्त्तावशीतंदेशमागमत् ६ अथजांबूनदवपुर्विमानेनमहार्चिषा ॥ कुबेरःसमनुप्राप्तोयक्षैरनुगतःप्रभुः ७ विद्योतयन्निवाकाशमद्भुतोपमदर्शनः ॥ धनानामीश्वरःश्रीमानर्जुनंद्रष्टुमागतः ८

एवमस्त्रंपार्थंप्रतीत्यर्थः २१ । २२ निर्घाताउत्पाताः २३ । २४ । २५ । २६ वशीवशइच्छातद्वान् तज्जयीत्यर्थः २७ । २८ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेचत्वारिंशोऽध्यायः ॥ ४० ॥
तस्येति । अस्तंस्वस्थानमदर्शनंच १ । २ । ३ परमात्मानं कृतार्थंकृतकृत्यं निर्वृत्तंनिष्पन्नं ४ वैदूर्यरत्नविशेषः यादांसिजलजंतवस्तेषांगणः ५ नागाःसर्पाः ६ । ७ । ८

९ । १० । ११ भानुमंतिदीप्तिमंति १२ । १३ । १४ । १५ । १६ । वितरामोयच्छामः १७ । १८ संसाध्योजेतव्यः १९ । २० ममपितुःसूर्यस्य २१ । २२ । २३ मृधेसंग्रामे २४ लब्वी

तथालोकांतकृच्छ्रीमान्यमःसाक्षात्प्रतापवान् ॥ मर्त्यमूर्तिधरैःसार्धंपितृभिर्लोकभावनैः ९ दंडपाणिरचिंत्यात्मासर्वभूतविनाशकृत् ॥ वैवस्वतोधर्मराजोविमाने नावभासयन् १० त्रीँल्लोकान्गुह्यकांश्चैवगंधर्वांश्चसपन्नगान् ॥ द्वितीयइवमार्त्तंडोयुगांतेसमुपस्थिते ११ तेभानुमंतिचित्राणिशिखराणिमहागिरेः ॥ समास्था यार्जुनंतत्रददृशुस्तपसाऽन्वितम् १२ ततोमुहूर्त्ताद्भगवानैरावतशिरोगतः ॥ आजगामसहेंद्राण्याशक्रःसुरगणैर्वृतः १३ पांडुरेणातपत्रेणध्रियमाणेनमूर्द्धनि ॥ शुशुभेतारकाराजःसितमभ्रमिवस्थितः १४ संस्तूयमानोगंधर्वैर्ऋषिभिश्चतपोधनैः ॥ शृंगंगिरेःसमासाद्यतस्थौसूर्यइवोदितः १५ अथमेघस्वनोधीमान्व्याजहा रशुभांगिरम् ॥ यमःपरमधर्मज्ञोदक्षिणांदिशमास्थितः १६ अर्जुनार्जुनपश्यास्मान्लोकपालान्समागतान् ॥ दृष्टिंतेवितरामोऽद्यभवानर्हतिदर्शनम् १७ पूर्वर्षिरमि तात्मात्वंनरोनाममहाबलः ॥ नियोगाद्ब्रह्मणस्तातमर्त्यतांसमुपागतः १८ त्वयाचवसुसंभूतोमहावीर्यःपितामहः ॥ भीष्मःपरमधर्मात्मासंसाध्यश्चरणेऽनघ १९ क्षत्रंचाग्निसमस्पर्शंभारद्वाजेनरक्षितम् ॥ दानवाश्चमहावीर्यायेमनुष्यत्वमागताः २० निवातकवचाश्चैवदानवाःकुरुनंदन ॥ पितुर्ममांशोदेवस्यसर्वलोकप्रतापिनः २१ कर्णश्चसुमहावीर्यस्त्वयावध्योधनंजय ॥ अंशाश्चक्षितिसंप्राप्तादेवदानवरक्षसाम् २२ त्वयानिपातितायुद्धेस्वकर्मफलनिर्जिताम् ॥ गतिंप्राप्स्यंतिकौंतेयय थास्वमरिकर्षण २३ अक्षयातवकीर्तिश्चलोकेस्थास्यतिफाल्गुन ॥ त्वयासाक्षान्महादेवस्तोषितोहिमहामृधे २४ लघ्वीवसुमतीचापिकर्त्तव्याविष्णुनासह ॥ गृहा णास्त्रंमहाबाहोदंडमप्रतिवारणम् ॥ अनेनास्त्रेणसुमहत्त्वंहिकर्मकरिष्यसि २५ ॥ वैशंपायनउवाच ॥ प्रतिजग्राहतत्पार्थोविधिवत्कुरुनंदनः ॥ समंत्रंसोपचारंच समोक्षविनिवर्त्तनम् २६ ततोजलधरश्यामोवरुणोयादसांपतिः ॥ पश्चिमांदिशमास्थायगिरमुच्चारयन्प्रभुः २७ पार्थक्षत्रियमुख्यस्त्वंक्षत्रधर्मेव्यवस्थितः ॥ पश्यमां पृथुताम्राक्षवरुणोऽस्मिजलेश्वर २८ मयासमुद्यतान्पाशान्वारुणाननिवारितान् ॥ प्रतिगृह्णीष्वकौंतेयसरहस्यनिवर्त्तनान् २९ एभिस्तदामयावीरसंग्रामेतारका मये ॥ दैतेयानांसहस्राणिसंयतानिमहात्मनाम् ३० तस्मादिमान्महासत्वमत्प्रसादसमुत्थितान् ॥ गृहाणनहितेमुच्येदंतकोऽप्याततायिनः ३१ अनेनत्वंयदाऽस्त्रे णसंग्रामेविचरिष्यसि ॥ तदानिःक्षत्रियाभूमिर्भविष्यतिनसंशयः ३२ ॥ वैशंपायनउवाच ॥ ततःकैलासनिलयोधनाध्यक्षोऽभ्यभाषत ॥ दत्तेष्वस्त्रेषुदिव्येषु वरुणेनयमेनच ३३ प्रीतोऽहमपितेप्राज्ञपांडवेयमहाबल ॥ त्वयासहसमागम्यअजितेनतथैवच ३४ सव्यसाचिन्महाबाहोपूर्वदेवसनातन ॥ सहास्माभिर्भ वान्श्रांतःपुराकल्पेषुनित्यशः ३५



भारशून्या २५ सोपचारंसेतिकर्त्तव्यताकं २६ । २७ । २८ । २९ संयतानिबद्धानि ३० । ३१ । ३२ । ३३ अजितेनकृष्णेनयथातथैवप्रीतोऽस्मि ३४ पूर्वदेव नरनारायणसख ३५

३६ । ३७ । ३८ । ३९ उद्यतमुपस्थितम् ४० । ४१ देवगतिंदेवानांपरायणत्वम् ४२ । ४३ आगंताआयास्यति ४४ । ४५ । ४६ । ४७ । ४८।४९ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ गतेष्विति १ । २ पाटयन् द्विधाकुर्वन् ३ । ४ तुलागुडाभांडगोलकाः भांडानितु 'नाल बंदूख' इत्यादिम्लेच्छभाषयाप्रसिद्धान्याग्नेयौषधबलेनपाषाणगोलका



दर्शनात्तेत्विदंदिव्यंप्रदिशामिनरर्षभ ॥ अमनुष्यान्महाबाहोदुर्जयानपिजेष्यसि ३६ मत्तश्चैवभवानाशुगृह्णात्वस्त्रमनुत्तमम् ॥ अनेनत्वमनीकानिधार्त्तराष्ट्रस्यधक्ष्यसि ३७ तदिदंप्रतिगृह्णीष्वअंतर्धानंप्रियंमम ॥ ओजस्तेजोद्युतिकरंप्रस्वापनमरातिनुत् ३८ महात्मनाशंकरेणत्रिपुरंनिहतंयदा ॥ तदैतदस्त्रंनिर्मुक्तंयेनदग्धामहासुराः ३९ त्वदर्थमुद्यतंचेदंमयासत्यपराक्रम ॥ त्वमर्होधारणेचास्यमेरुप्रतिमगौरव ४० ततोऽर्जुनोमहाबाहुर्विधिवत्कुरुनंदनः ॥ कौबेरमधिजग्राहदिव्यमस्त्रंमहाबलः ४१ ततोऽब्रवीद्देवराजःपार्थमक्लिष्टकारिणम् ॥ सांत्वयन्श्लक्ष्णयावाचामेघदुंदुभिनिःस्वनः ४२ कुंतीमातर्महाबाहोत्वमीशानःपुरातनः ॥ परांसिद्धिमनुप्राप्तःसाक्षाद्देवगतिंगतः ४३ देवकार्यंतुसुमहत्त्वयाकार्यमरिंदम ॥ आरोढव्यस्त्वयास्वर्गःसज्जीभवमहाद्युते ४४ रथोमातलिसंयुक्तआगंतात्वत्कृतेमहीम् ॥ तत्रतेऽहंप्रदास्यामिदिव्यान्यस्त्राणिकौरव ४५ तान्दृष्ट्वालोकपालांस्तुसमेतान्गिरिमूर्धनि ॥ जगामविस्मयंधीमान्कुंतीपुत्रोधनंजयः ४६ ततोऽर्जुनोमहातेजालोकपालान्समागतान् ॥ पूजयामासविधिवद्वाग्भिरद्भिःफलैरपि ४७ ततःप्रतिययुर्देवाःप्रतिमान्यधनंजयम् ॥ यथागतेनविबुधाःसर्वेकाममनोजवाः ४८ ततोऽर्जुनोमुदंलेभेलब्धास्त्रःपुरुषर्षभः ॥ कृतार्थमथचात्मानंसमेनेपूर्णमानसम् ४९ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिकैरा०देवप्रस्थानेएकचत्वारिंशोऽध्यायः ४१ ॥ ॥ कैरातपर्वसमाप्तम् ॥ अथेंद्रलोकाभिगमनपर्व ॥ ॥ वैशंपायनउवाच ॥ गतेषुलोकपालेषुपार्थःशत्रुनिबर्हणः ॥ चिंतयामासराजेंद्रदेवराजरथंप्रति १ ततश्चिंतयमानस्यगुडाकेशस्यधीमतः ॥ रथोमातलिसंयुक्तआजगाममहाप्रभः २ नभोवितिमिरंकुर्वन्जलदान्पाटयन्निव ॥ दिशःसंपूरयन्नादैर्महामेघरवोपमैः ३ असयःशक्तयोभीमागदाश्चोग्रप्रदर्शनाः ॥ दिव्यप्रभावाःप्रासाश्चविद्युतश्चमहाप्रभाः ४ तथैवाशनयश्चैवचक्रयुक्तास्तुलागुडाः ॥ वायुस्फोटाःसनिर्घातामहामेघस्वनास्तथा ५ तत्रनागामहाकायाज्वलितास्याःसुदारुणाः ॥ सिताभ्रकूटप्रतिमाःसंहताश्चतथोपलाः ६ दशवाजिसहस्राणिहरीणांवातरंहसाम् ॥ वहंतियंनेत्रमुषंदिव्यंमायामयंरथम् ७ तत्रापश्यन्महानीलंवैजयंतंमहाप्रभम् ॥ ध्वजमिंदीवरश्यामंवंशंकनकभूषणम् ८ तस्मिन्रथेस्थितंसूतंतप्तहेमविभूषितम् ॥ दृष्ट्वापार्थोमहाबाहुर्देवमेवान्वतर्कयत् ९ तथातर्कयतस्तस्यफाल्गुनस्याथमातलिः ॥ सन्नतःप्रस्थितोभूत्वावाक्यमर्जुनमब्रवीत् १० ॥ मातलिरुवाच ॥ भोभोशक्रात्मजश्रीमन्शक्रस्त्वांद्रष्टुमिच्छति ॥ आरोहतुभवान्शीघ्रंरथमिंद्रस्यसंमतम् ११ आहमाममरश्रेष्ठःपितातवशतक्रतुः ॥ कुंतीसुतमिहप्राप्तंपश्यन्तुत्रिदशालयाः १२

दिनिक्षेपपात्राणि वायुस्फोटाःवेगवशाद्वायुंजनयंतः सनिर्घाताअशनिध्वनियुक्ताश्चमहामेघस्वनाः ५ । ६ 'त्वक्केशवालरोमाणिसुवर्णाभानियस्यतु ॥ हरिःसवर्णतोऽश्वस्तुपीतकौशेयसंनिभः' वातरंहसांहरीणांवाजिनांसहस्राणीत्येकदेशान्वयः नेत्रमुषंदृष्टिचोरम् ७ वैजयंतंनाम्नादेवेंद्रध्वजम् ८ । ९ । १० । ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ येमे नियमितवान् १९ आप्लुतःस्नातः २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ललितंक्रीडितं २८ । २९ । ३० । ३१ । ३२ । ३३ विप्रकृष्ट

एषशक्रःपरिवृतोदेवैर्ऋषिगणैस्तथा ॥ गंधर्वैरप्सरोभिश्चत्वांदिदृक्षुःप्रतीक्षते १३ अस्माल्लोकाद्देवलोकंपाकशासनशासनात् ॥ आरोहत्वंमयासार्धंलब्धास्त्रःपुनरे
ष्यसि १४ ॥ अर्जुनउवाच ॥ मातलेगच्छशीघ्रंत्वमारोहस्वरथोत्तमम् ॥ राजसूयाश्वमेधानांशतैरपिसुदुर्लभम् १५ पार्थिवैःसुमहाभागैर्यज्वभिर्भूरिदक्षिणैः ॥
दैवतैर्वासमारोढुंदानवैर्वारथोत्तमम् १६ नातप्ततपसाशक्यएषदिव्योमहारथः ॥ द्रष्टुंवाऽप्यथवास्प्रष्टुमारोढुंकुतएवच १७ त्वयिप्रतिष्ठितेसाधोरथस्थेस्थिरवाजि
नि ॥ पश्चादहमथारोक्ष्येसुकृतीसत्पथंयथा १८ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वामातलिःशक्रसारथिः ॥ आरुरोहरथंशीघ्रंहयान्येमेचरश्मिभिः
१९ ततोऽर्जुनोहृष्टमनागंगायामाप्लुतःशुचिः ॥ जजापजप्यंकौंतेयोविधिवत्कुरुनंदनः २० ततःपितॄन्यथान्यायंतर्पयित्वायथाविधि ॥ मंदरंशैलराजंतमा
प्रष्टुमुपचक्रमे २१ साधूनांपुण्यशीलानांमुनीनांपुण्यकर्मणाम् ॥ त्वंसदासंश्रयःशैलस्वर्गमार्गाभिकांक्षिणाम् २२ त्वत्प्रसादात्सदाशैलब्राह्मणाःक्षत्रियाविशः ॥
स्वर्गंप्राप्ताश्चरंतिस्मदेवैःसहगतव्यथाः २३ अद्रिराजमहाशैलमुनिसंश्रयतीर्थवन् ॥ गच्छाम्यामंत्रयित्वात्वांसुखमस्म्युषितस्त्वयि २४ तवसानूनिकुंजाश्चनद्यः
प्रस्रवणानिच ॥ तीर्थानिचसुपुण्यानिमयादृष्टान्यनेकशः २५ फलानिचसुगंधीनिभक्षितानिततस्ततः ॥ सुसुगंधाश्चवार्योघास्त्वच्छरीरविनिःसृताः २६ अ
मृतास्वादनीयामेपीताःप्रस्रवणोदकाः ॥ शिशुर्यथापितुरंकेसुसुखंवर्त्ततेनग २७ तथातवांकेललितंशैलराजमयाप्रभो ॥ अप्सरोगणसंकीर्णेब्रह्मघोषानुनादिते
२८ सुखमस्म्युषितःशैलतवसानुषुनित्यदा ॥ एवमुक्त्वाऽर्जुनःशैलमामंत्र्यपरवीरहा २९ आरुरोहरथंदिव्यंद्योतयन्निवभास्करः ॥ सतेनादित्यरूपेणदिव्येना
द्भुतकर्मणा ३० ऊर्ध्वमाचक्रमेधीमान्प्रहृष्टःकुरुनंदनः ॥ सोऽदर्शनपथंयातोमर्त्यानांधर्मचारिणाम् ३१ ददर्शाद्भुतरूपाणिविमानानिसहस्रशः ॥ नतत्रसूर्यः
सोमोवाद्योततेनचपावकः ३२ स्वयैवप्रभयातत्रद्योतंतेपुण्यलब्धया ॥ तारारूपाणियानीहदृश्यंतेद्युतिमंतिवै ३३ दीपवद्विप्रकृष्टत्वात्तनूनिसुमहांत्यपि ॥
तानितत्रप्रभास्वंतिरूपवंतिचपांडवः ३४ ददर्शस्वेषुधिष्ण्येषुदीप्तिमंतःस्वयाऽर्चिषा ॥ तत्रराजर्षयःसिद्धावीराश्चनिहतायुधि ३५ तपसाचजितंस्वर्गंसंपेतुः
शतसंघशः ॥ गंधर्वाणांसहस्राणिसूर्यज्वलिततेजसाम् ३६ गुह्यकानामृषीणांचतथैवाप्सरसांगणान् ॥ लोकानात्मप्रभान्पश्यन्फाल्गुनोविस्मयान्वितः ३७
पप्रच्छमातलिंप्रीत्यासचाप्येनमुवाचह ॥ एतेसुकृतिनःपार्थस्वेषुधिष्ण्येष्ववस्थिताः ३८ तान्दृष्टवानसिविभोतारारूपाणिभूतले ॥ ततोऽपश्यत्स्थितंद्वारि
शुभंवैजयिनंगजम् ३९ ऐरावतंचतुर्दंतंकैलासमिवशृंगिणम् ॥ ससिद्धमार्गमाक्रम्यकुरुपांडवसत्तमः ४० व्यरोचतयथापूर्वंमांधातापार्थिवोत्तमः ॥ अभिचक्राम
लोकान्सराज्ञांराजीवलोचनः ४१

त्वाद्दूरत्वात्सुमहान्त्यपितनूनिसूक्ष्माणिदृश्यंते ३४ धिष्ण्येषुस्थानेषु ३५ । ३६ आत्मनैवसूर्यादिवत्प्रभांति तानात्मप्रभान् ३७ । ३८ वैजयिनंविजयिनमेववैजयिनं स्वार्थेतद्धितः ३९ । ४० । ४१

संक्रमन् गच्छन् अमरावतींनाम्ना ४२ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ददर्शेति १ सौगंधिकानांकल्हाराणांपुष्पाणांचमिश्रेणवायुनेतिसंबंधः २ नंदनंनामतः ३ नातप्ततपस इति । तप आदीनांनिषेधमुखेनस्वर्गसाधनत्वंविधीयते ४ । ५ यज्ञहनैः द्रव्यंदेवताचयज्ञस्वरूपंतत्रयोदक्षिणाहीनं देवतास्वरूपज्ञानहीनंचयज्ञंकरोति सवृथापशुबीजघातीयज्ञहनइत्युच्यते । तथाचश्रूयतेशतपथे ‘ घ्नंतिवाएतद्यज्ञं यदेनंतन्वतेयत्त्वेवराजानमभिषुण्वंतितत्तं घ्नंतियत्पशुं संज्ञपयंतिविशासतितत्तं घ्नंत्युलूखलमुसलाभ्यां दृषदुपलाभ्यांहविर्यज्ञं घ्नंतिसएषयज्ञोहतोनददक्षेतंदेवादक्षिणाभिरदक्षयंस्तद्येनं दक्षिणाभिरदक्षयंस्तद्दक्षिणानामेति ’ राजानंसोमवल्लींअभिषुण्वंतिकंडयंतिसंज्ञपयंतिघ्नंतिविशासतिविशसनंकरोति नददक्षेदक्षोनबभूवअदक्षयन् दक्षमकुर्वन् । असंज्ञायामपि

एवंससंक्रमंस्तत्रस्वर्गलोकेमहायशाः ॥ ततोददर्शशक्रस्यपुरींताममरावतीम् ४२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ वैशंपायनउवाच ॥ ददर्शसपुरींरम्यांसिद्धचारणसेविताम् ॥ सर्वर्तुकुसुमैःपुण्यैःपादपैरुपशोभिताम् १ तत्रसौगंधिकानांचपुष्पाणांपुण्यगंधिनाम् ॥ उद्वीज्यमानोमिश्रेणवायुनापुण्यगंधिना २ नंदनंचवनंदिव्यमप्सरोगणसेवितम् ॥ ददर्शदिव्यकुसुमैराह्वयद्भिरिवद्रुमैः ३ नातप्ततपसाशक्योद्रष्टुंनानाहिताग्निना ॥ सलोकःपुण्यकर्तॄणांनापियुद्धेपराङ्मुखैः ४ नायज्वभिर्नाव्रतिकैर्नवेदश्रुतिवर्जितैः ॥ नानाप्लुतांगैस्तीर्थेषुयज्ञदानबहिष्कृतैः ५ नापियज्ञहनैःक्षुद्रैर्द्रष्टुंशक्यःकथंचन ॥ पानपैर्गुरुतल्पैश्चमांसादैर्वादुरात्मभिः ६ सतद्दिव्यंवनंपश्यन्दिव्यगीतनिनादितम् ॥ प्रविवेशमहाबाहुःशक्रस्यदयितांपुरीम् ७ तत्रदेवविमानानिकामगानिसहस्रशः ॥ संस्थितान्यभियातानिददर्शायुतशस्तदा ८ संस्तूयमानोगंधर्वैरप्सरोभिश्चपांडवः ॥ पुष्पगन्धवहैःपुण्यैर्वायुभिश्चानुवीजितः ९ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ हृष्टाःसंपूजयामासुःपार्थमक्लिष्टकारिणम् १० आशीर्वादैःस्तूयमानोदिव्यवादित्रनिःस्वनैः ॥ प्रतिपेदेमहाबाहुःशंखदुंदुभिनादितम् ११ ॥ नक्षत्रमार्गंविपुलंसुरवीथीतिविश्रुतम् ॥ इंद्राज्ञयाययौपार्थःस्तूयमानःसमंततः १२ तत्रसाध्यास्तथाविश्वेमरुतोऽथाश्विनौतथा ॥ आदित्यावसवोरुद्रास्तथाब्रह्मर्षयोऽमलाः १३ राजर्षयश्चबहवोदिलीपप्रमुखानृपाः ॥ तुंबुरुर्नारदश्चैवगंधर्वौचहाहाहूहूः १४ तान्ससर्वान्समागम्यविधिवत्कुरुनंदनः ॥ ततोऽपश्यद्देवराजंशतक्रतुमरिंदमः १५ ततःपार्थोमहाबाहुरवतीर्यरथोत्तमात् ॥ ददर्शसाक्षाद्देवेशंपितरंपाकशासनम् १६ पांडुरेणातपत्रेणहेमदंडेनचारुणा ॥ दिव्यगंधाधिवासेनव्यजनेनविधूयता १७ विश्वावसुप्रभृतिभिर्गंधर्वैःस्तुतिवंदिभिः ॥ स्तूयमानंद्विजाग्र्यैश्चऋग्यजुःसामसंभवैः १८

हंतेर्घः । यज्ञहरैरित्यपपाठः । अतएवक्षुद्रैर्लुब्धैः पानशब्दोनिरुपपदोमद्यवाची गुरुतल्पसमभिव्याहाराद्वापानपैर्मद्यपैःमांसादैर्वृथामांसभक्षकैः । अन्यत्रतु ‘देवान्पितॄन्समभ्यर्च्यखादन्मांसंनदोषभाक्’ इतिस्मृतेर्नदोषः अतएवदुरात्मभिर्हिंस्रैः ६ । ७ अभितोयांतिएतान्देशानित्यभियातान्यापानभूमयः ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ पाकशासनंपाकशब्दः प्रशस्तेनीचेचवर्तते । ‘ योमापाकेनमनसाचरंतं । योऽस्मात्पाकतर’इत्यादिप्रयोगात् तेनदेवादीनामधिपतिरितिवा दुष्टानांदंडयितेतिवापाकशासनपदस्यावयवार्थः पाकनामादैत्यइत्यन्ये १६ । १७ स्तुतिवंदिभिःस्तुत्यावंदमानैः १८

१९ । २० प्रश्रयःवनतंविनयेनप्रह्वीभूतं २१ । २२ । २३ । २४ वज्रग्रहणस्यचिन्हंकिणोयस्मिन २५ । २६ चतुर्दश्यामिति । यद्यपिदर्शेएवसूर्येंद्रोरेकासनगतत्वमेकनक्षत्रस्थत्वादस्तिनचतुर्दश्यांतथाऽपिसामी
प्यलक्षणयाएकराशिस्थत्वमत्रग्राह्यं अन्यथाश्विनीस्थेसूर्ये चतुर्दश्यांरेवतीयोगेएकराशिस्थितत्वस्याप्यलाभात् २७ साम्नाप्रीत्या वल्गुनारम्येण गीतानिअमंत्रोपरिगानं साममंत्रोपरिगानं २८ । २९ । ३०
३१ चेतोऽलोचनात्मिकाचित्तवृत्तिः । बुद्धिरध्यवसायरूपा । मनःसंकल्पविकल्पात्मकं कटाक्षादिभिश्चित्तस्यवृत्त्यंतरंहरंतीत्यर्थः ३२ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेत्रिचत्वारिंशोऽध्यायः

ततोऽभिगम्यकौंतेयःशिरसाऽभ्यगमद्बली ॥ सचैनंवृत्तपीनाभ्यांबाहुभ्यांप्रत्यगृह्णत १९ ततःशक्रासनेपुण्येदेवर्षिगणसेविते ॥ शक्रःपाणौगृहीत्वैनमुपावेशयदं
तिके २० मूर्ध्निचैनमुपाघ्रायदेवेंद्रःपरवीरहा ॥ अंकमारोपयामासप्रश्रयावनतंतदा २१ सहस्राक्षनियोगात्सपार्थःशक्रासनंगतः ॥ अध्यक्रामदमेयात्माद्वितीयइववा
सवः २२ ततःप्रेम्णावृत्रशत्रुरर्जुनस्यशुभंमुखम् ॥ पस्पर्शपुण्यगंधेनकरेणपरिसांत्वयन् २३ प्रमार्जमानःशनकैर्बाहूचास्यायतौशुभौ ॥ ज्याशरक्षेपकठिनौस्तंभावि
वहिरण्मयौ २४ वज्रग्रहणचिह्नेनकरेणपरिसांत्वयन् ॥ मुहुर्मुहुर्वज्रधरोबाहूचास्फोटयन्शनैः २५ स्मयन्निवगुडाकेशंप्रेक्षमाणःसहस्रदृक् ॥ हर्षेणोत्फुल्लनयनोनचा
तृप्यतवृत्रहा २६ एकासनोपविष्टौतौशोभयांचक्रतुःसभाम् ॥ सूर्याचंद्रमसौव्योमचतुर्दश्यामिवोदितौ २७ तत्रस्मगाथागायंतिसाम्नापरमवल्गुना ॥ गंधर्वा
स्तुंबुरुश्रेष्ठाःकुशलागीतसामसु २८ घृताचीमेनकारंभापूर्वचित्तिःस्वयंप्रभा ॥ उर्वशीमिश्रकेशीचदंडगौरीवरूथिनी २९ गोपालीसहजन्याचकुंभयोनिःप्रजागरा ॥
चित्रसेनाचित्रलेखासहाचमधुरस्वरा ३० एताश्चान्याश्चननृतुस्तत्रतत्रसहस्रशः ॥ चित्तप्रसादनेयुक्ताःसिद्धानांपद्मलोचनाः ३१ महाकटितटश्रोण्यःकंपमानैः
पयोधरैः ॥ कटाक्षहावमाधुर्यैश्चेतोबुद्धिमनोहरैः ३२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिइंद्रसभादर्शनेत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
वैशंपायनउवाच ॥ ततोदेवाःसगंधर्वाःसमादायार्घ्यमुत्तमम् ॥ शक्रस्यमतमाज्ञायपार्थमानर्चुरंजसा १ पाद्यमाचमनीयंचप्रतिग्राह्यनृपात्मजम् ॥ प्रवेशयामासुर
थोपुरंदरनिवेशनम् २ एवंसंपूजितोजिष्णुरुवासभवनेपितुः ॥ उपशिक्षन्महास्त्राणिससंहाराणिपांडवः ३ शक्रस्यहस्ताद्दयितंवज्रमस्त्रंचदुःसहम् ॥ अशनीश्चमहा
नादामेघबर्हिणलक्षणाः ४ गृहीतास्त्रस्तुकौंतेयोभ्रातॄन्सस्मारपांडवः ॥ पुरंदरनियोगाच्चपंचाब्दानवसत्सुखी ५ ततःशक्रोऽब्रवीत्पार्थंकृतास्त्रंकालआगते ॥
नृत्यंगीतंचकौंतेयचित्रसेनादवाप्नुहि ६ वादित्रंदेवविहितंनृलोकेयन्नविद्यते ॥ तदर्जयस्वकौंतेयश्रेयोवैतेभविष्यति ७ सखायंप्रददौचास्यचित्रसेनंपुरंदरः ॥ सतेन
सहसंगम्यरेमेपार्थोनिरामयः ८ गीतवादित्रनृत्यानिभूयएवादिदेशह ॥ तथापिनालभच्छर्मतपस्वीद्यूतकारितम् ९ दुःशासनवधामर्षीशकुनेःसौबलस्यच ॥ तत
स्तेनातुलांप्रीतिमुपागम्यक्वचित्क्वचित् ॥ गांधर्वमतुलंनृत्यंवादित्रंचोपलब्धवान् १०

॥ ४३ ॥ ततइति १ । २ । ३ मेघबर्हिणलक्षणाः अकालेऽपिउद्यतैर्मेघैर्नृत्यमानैश्चमयूरैर्यदशन्यस्त्रं देशांतरेप्रयुक्तमितिलक्ष्यते देशांतरीयैस्ताअशनीर्बह्वीरित्यर्थः ४ भ्रातॄन्सस्मारस्वर्गेऽपिदुःखितभ्रातृस्मरणे
नदुःखवानेवाभूदित्यर्थः ५ । ६ । ७ । ८ । ९ । १०

११ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ आदाविति १ उर्वशींगच्छ साचफाल्गुनमुपातिष्ठतु २ । ३ । ४ । ५ । ६ प्रतिभानंसमयेस्फूर्तिः ७ वर्चःशरीरे विद्यैश्व र्यादिजंतेजस्तद्वान्वर्चस्वीतेजःशौर्यंतेनयुक्तः । चतुराख्यानपंचमान् चतुश्चतुःसंख्यान् विभक्तिलोपआर्षः आख्यानं भारतादि । चतुरप्रियमाख्यानं चतुराख्यानमितिमध्यमपदलोपेनवाशाकपार्थिवादि वत्समासः ८ गुरुशुश्रूषांमेधांचप्रत्येकमष्टगुणामधीतेप्राप्नोति । गुणाश्चवाक्यशेषादेवयथायथमूह्याः । ब्रह्मचर्यमुपस्थनिग्रहः । दाक्ष्यंअनालस्यं प्रसवैर्द्वैमातुः कुलेद्वेपितुस्तैश्चतुर्भिः वयासातारुण्येन ९ रक्षिता पालकः । अकत्थनइतिपाठकश्चेतिश्लाघाराहित्यं । स्थूलमिवसुज्ञेयंलक्ष्यंलक्षयितुंयोग्यंसूक्ष्मंयस्य सूक्ष्मानप्यर्थान्स्थूलवज्झटित्येवावगच्छतीत्यर्थः दातावा १० रूपवान्सुंदरः ११ कांतःसुखदः अतएवप्रियः

सशिक्षितोनृत्यगुणाननेकान्वादित्रगीतार्थगुणांश्चसर्वान् ॥ नशर्मलेभेपरवीरहंताभ्रातॄन्स्मरन्मातरंचैवकुंतीम् ११ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ॥ आदावेवाथतंशक्रश्चित्रसेनंरहोब्रवीत् ॥ पार्थस्यचक्षुरुर्वश्यांसक्तंविज्ञायवासवः १ गंधर्वराजगच्छाद्यप्रहितोऽप्सरसांवराम् ॥ उर्वशींपुरुषव्याघ्रसोपातिष्ठतुफाल्गुनम् २ यथार्चितोगृहीतास्त्रोविद्ययामन्नियोगतः ॥ तथात्वयाविधातव्यंस्त्रीषुसंगविशारदः ३ एवमुक्तस्तथेत्युक्त्वासोऽनुज्ञांप्राप्यवासवात् ॥ गंधर्वराजोऽप्सरसमभ्यगादुर्वशींवराम् ४ तांदृष्ट्वाविदितोहृष्टःस्वागतेनार्चितस्तया ॥ सुखासीनःसुखासीनांस्मितपूर्वंवचोऽब्रवीत् ४ विदितंतेस्तुसुश्रोणिप्रहितोऽहमिहागतः ॥ त्रिदिवस्यैकराजेनत्वत्प्रसादाभिनंदिना ६ यस्तुदेवमनुष्येषुप्रख्यातःसहजैर्गुणैः ॥ श्रियाशीलेनरूपेणव्रतेनचदमेनच ॥ प्रख्यातोबलवीर्येणसंमतःप्रतिभानवान् ७ वर्चस्वीतेजसायुक्तःक्षमावान्वीतमत्सरः ॥ सांगोपनिषदान्वेदांश्चतुराख्यानपंचमान् ८ योऽधीतेगुरुशुश्रूषांमेधांचाष्टगुणाश्रयाम् ॥ ब्रह्मचर्येणदाक्ष्येणप्रसवैर्वयसाऽपिच ९ एकोवैरक्षिताचैवत्रिदिवंमघवानिव ॥ अकत्थनोमानयितास्थूललक्ष्यःप्रियंवदः १० सुहृदश्चान्नपानेनविविधेनाभिवर्षति ॥ सत्यवाक्पूजितोवक्तारूपवाननहंकृतः ११ भक्तानुकंपीकांतश्चप्रियश्चस्थिरसंगरः ॥ प्रार्थनीयैर्गुणगणैर्महेन्द्रवरुणोपमः १२ विदितस्तेऽर्जुनोवीरःसस्वर्गफलमाप्नुयात् ॥ तवशक्राभ्यनुज्ञातःपादावद्यप्रपद्यताम् ॥ तदेवंकुरुकल्याणिप्रपन्नस्त्वांधनंजयः १३ एवमुक्तास्मितंकृत्वासंमानंबहुमन्यच ॥ प्रत्युवाचोर्वशीप्रीताचित्रसेनमनिंदिता १४ यस्त्वस्यकथितःसत्योगुणोद्देशस्त्वयामम ॥ तंश्रुत्वाऽव्यथयंपुंसोवृणुयांकिमतोऽर्जुनम् १५ महेंद्रस्यनियोगेनत्वत्तःसंप्रणयेनच ॥ तस्यचाहंगुणौघेनफाल्गुनेजातमन्मथा ॥ गच्छत्वंहियथाकाममागमिष्याम्यहंसुखम् १६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिचित्रसेनोर्वशीसंवादेपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

प्रेमास्पदंप्रसववयोतिरिक्ताब्रह्मचर्यादयोऽष्टौशुश्रूषागुणाःसत्यवाक्त्वादयः पूजितत्वादन्येऽष्टौमेधागुणाइतिविभागः । यद्वा 'शुश्रूषाश्रवणंचैवग्रहणंधारणंतथा ॥ ऊहापोहार्थविज्ञानंतत्त्वज्ञानंचधीगुणाः' इतिधीगुणाष्टकंग्राह्यं १२ स्वर्गफलंत्वत्संगंतवपादाविनिप्रपन्नइतिच रतार्थिनोदीनतादर्शिता १३ बहुमन्य मत्वा १४ गुणोद्देशःगुणलेशः तमर्जुनंपुंसःयतःकुतश्चित्सकाशाच्छ्रुत्वा अव्यथयंस्वार्थेणिच्प्रागेवकामव्यथांप्राप्तवत्यस्मि अतोहेतोरर्जुनंकिंवृणुयामितिकाका प्रागेववृतत्वंदर्शयति १५ । १६ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

तनइति १ रूपेणसौंदर्येण २ । ३ रमंती रमयंती ४ । ५ केशहस्तेन हस्तः शुंडादंडःतेनेववेण्येसर्थः ६ आह्वयंतीस्पर्धयाएहियुध्यावहेइतिवदंतीव ७ । ८ । ९ उन्नतःपीवरश्चनितंबएवेति विशेषणंविशेष्ये

वैशंपायनउवाच ॥ ॥ ततोविसृज्यगंधर्वंकृतकृत्यंशुचिस्मिता ॥ उर्वशीचाकरोत्स्नानंपार्थदर्शनलालसा १ स्नानालंकरणैर्हृद्यैर्गंधमाल्यैश्चसुप्रभैः ॥ धनंजयस्य रूपेणशरैर्मन्मथचोदितैः २ अतिविद्धेनमनसामन्मथेनप्रदीपिता ॥ दिव्यास्तरणसंस्तीर्णेविस्तीर्णेशयनोत्तमे ३ चित्तसंकल्पभावेनसुचित्ताऽनन्यमानसा ॥ मनोरथेनसंप्राप्तंरमंत्येनंहिफाल्गुनम् ४ निर्गम्यचंद्रोदयनेविगाढेरजनीमुखे ॥ प्रस्थितासापृथुश्रोणीपार्थस्यभवनंप्रति ५ मृदुकुंचितदीर्घेणकुमुदोत्कर धारिणा ॥ केशहस्तेनललनाजगामाथविराजती ६ भ्रूक्षेपालापमाधुर्यैःकांत्यासौम्यतयाऽपिच ॥ शशिनंवक्त्रचंद्रेणसाऽऽह्वयंतीवगच्छती ७ दिव्यांगरागौसु मुखौदिव्यचंदनरूषितौ ॥ गच्छंत्याहाररुचिरौस्तनौतस्यावल्गतुः ८ स्तनोद्वहनसंक्षोभान्नम्यमानापदेपदे ॥ त्रिवलीदामचित्रेणमध्येनातीवशोभिना ९ अधोभूधरविस्तीर्णंनितंबोन्नतपीवरम् ॥ मन्मथायतनंशुभ्रंरसनादामभूषितम् १० ऋषीणामपिदिव्यानांमनोव्याघातकारणम् ॥ सूक्ष्मवस्त्रधरंरेजेजघ नंनिरवद्यवत् ११ गूढगुल्फधरौपादौताम्रायततलांगुली ॥ कूर्मपृष्ठोन्नतौचापिशोभेतेकिंकिणीकिणौ १२ सीधुपानेनचाल्पेनतुष्ट्याऽथमदनेनच ॥ विलास नैश्चविविधैःप्रेक्षणीयतराऽभवत् १३ सिद्धचारणगंधर्वैःसाप्रयाताविलासिनी ॥ बह्वाश्चर्येऽपिवैस्वर्गेदर्शनीयतमाकृतिः १४ सुसूक्ष्मेणोत्तरीयेणमेघवर्णेनराज ता ॥ तनुरभ्रावृताव्योम्निचंद्रलेखेवगच्छती १५ ततःप्राप्ताक्षणेनैवमनःपवनगामिनी ॥ भवनंपांडुपुत्रस्यफाल्गुनस्यशुचिस्मिता १६ तत्रद्वारमनुप्राप्ता द्वारस्थैश्चनिवेदिता ॥ अर्जुनस्यनरश्रेष्ठउर्वशीशुभलोचना १७ उपातिष्ठततद्वेश्मनिर्मलंसुमनोहरम् ॥ सशंकितमनाराजन्प्रत्युद्गच्छततांनिशि १८ दृष्ट्वे वचोर्वशींपार्थोलज्जासंवृतलोचनः ॥ तदाऽभिवादनंकृत्वागुरुपूजांप्रयुक्तवान् १९ ॥ अर्जुनउवाच ॥ अभिवादयेत्वांशिरसाप्रवराप्सरसांवरे ॥ किमाज्ञापयसेदेवि प्रेष्यस्तेऽहमुपस्थितः २० फाल्गुनस्यवचःश्रुत्वागतसंज्ञातदोर्वशी ॥ गंधर्ववचनंसर्वंश्रावयामासतंतदा २१ ॥ उर्वश्युवाच ॥ यथामेचित्रसेनेनकथितंमनुजोत्त म ॥ तत्तेऽहंसंप्रवक्ष्यामियथाचाहमिहागता २२ उपस्थानेमहेंद्रस्यवर्तमानेमनोरमे ॥ तवागमनतोवृत्तेस्वर्गस्यपरमोत्सवे २३ रुद्राणांचैवसान्निध्यमादित्यानां चसर्वशः ॥ समागमेऽश्विनोश्चैववसूनांचनरोत्तम २४ महर्षीणांचसर्वेषुराजर्षिप्रवरेषुच ॥ सिद्धचारणयक्षेषुमहोरगगणेषुच २५ उपविष्टेषुसर्वेषुस्थानमान प्रभावतः ॥ ऋध्याप्रज्वलमानेषुअग्निसोमार्कवर्ष्मसु २६ वीणासुवाद्यमानासुगंधर्वैःशक्रनंदन ॥ दिव्येमनोरमेगेयेप्रवृत्तेपृथुलोचन २७ सर्वाप्सरःसुमुख्यासुप्र वृत्तासुकुरूद्वह ॥ त्वंकिलानिमिषःपार्थमामेकांतत्रदृष्टवान् २८ तत्रचावभृथेतस्मिन्नुपस्थानेदिवौकसाम् ॥ तवपित्राऽभ्यनुज्ञातागताःस्वंस्वंगृहंसुराः २९

णवहुलमितिवाहुलकात्समासः १० अवद्यवत्दोषवत्तदभावोनिरवद्यवत् ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ अवभृथो यज्ञान्तस्नानं तत्प्रान्ते २९

३० । ३१ । ३२ । ३३ तेनचित्रसेनेनतवपित्राचेंद्रेणचशुश्रूषितुंसेवितुम् ३४ । ३५ । ३६ दुःश्रुतंमेऽस्तुममश्रवणंव्यर्थमस्तु यतत्त्वमेवंविधदुष्कर्मयोग्यतांमयिसंभावयसीत्यर्थः ३७ । ३८ । ३९ । ४०

तथैवाप्सरसःसर्वाविशिष्टाःस्वगृहंगताः ॥ अपिचान्याश्चशत्रुघ्नतवपित्राविसर्जिताः ३० ततःशक्रेणसंदिष्टश्चित्रसेनोममांतिकम् ॥ प्राप्तःकमलपत्राक्षसचमामब्रवीदथ ३१ त्वत्कृतेऽहंसुरेशेनप्रेषितोवरवर्णिनि ॥ प्रियंकुरुमहेंद्रस्यममचैवात्मनश्चह ३२ शक्रतुल्यंरणेशूरंसदौदार्यगुणान्वितम् ॥ पार्थंप्रार्थयसुश्रोणित्वमित्येवंतदाऽब्रवीत् ३३ ततोऽहंसमनुज्ञातातेनपित्राचतेऽनघ ॥ तवांतिकमनुप्राप्ताशुश्रूषितुमरिंदम ३४ त्वद्गुणाकृष्टचित्ताऽहमनंगवशमागता ॥ चिराभिलषितोवीरममाप्येषमनोरथः ३५ ॥ वैशंपायनउवाच ॥ ॥ तांतथाब्रुवतींश्रुत्वाभृशंलज्जावृतोऽर्जुनः ॥ उवाचकर्णौहस्ताभ्यांपिधायत्रिदशालये ३६ दुःश्रुतंमेऽस्तुसुभगेयन्मांवदसिभाविनि ॥ गुरुदारैःसमानामेनिश्चयेनवरानने ३७ यथाकुंतीमहाभागायथेंद्राणीशचीमम ॥ तथात्वमपिकल्याणिनात्रकार्याविचारणा ३८ यच्चेक्षितासिविस्पष्टंविशेषेणमयाशुभे ॥ तच्चकारणपूर्वंहिशृणुसत्यंशुचिस्मिते ३९ इयंपौरववंशस्यजननीमुदितेतिह ॥ त्वामहंदृष्टवांस्तत्रविज्ञायोत्फुल्ललोचनः ४० नमामर्हसिकल्याणिअन्यथाध्यातुमप्सरः ॥ गुरोर्गुरुतरामेत्वंममत्वंवंशवर्धिनी ४१ ॥ उर्वश्युवाच ॥ अनावृताश्चसर्वाःस्मदेवराजाभिनंदन ॥ गुरुस्थानेनमांवीरनियोक्तुंत्वमिहार्हसि ४२ पुरोर्वंशेहियेपुत्रानप्तारोवात्विहागताः ॥ तपसारमयन्त्यस्मान्नचतेषांव्यतिक्रमः ४३ तत्प्रसीदनमामार्तांविसर्जयितुमर्हसि ॥ हृच्छयेनचसंतप्तांभक्तांचभजमानद ४४ ॥ अर्जुनउवाच ॥ शृणुसत्यंवरारोहेयत्त्वांवक्ष्याम्यनिंदिते ॥ शृण्वंतुमेदिशश्चैवविदिशश्चसदेवताः ४५ यथाकुंतीचमाद्रीचशचीचैवममानघे ॥ तथाचवंशजननीत्वंहिमेऽद्यगरीयसी ४६ गच्छमूर्ध्नाप्रपन्नोऽस्मिपादौतेवरवर्णिनि ॥ त्वंहिमेमातृवत्पूज्यारक्ष्योऽहंपुत्रवत्त्वया ४७ ॥ वैशंपायनउवाच ॥ एवमुक्तातुपार्थेनउर्वशीक्रोधमूर्च्छिता ॥ वेपंतीभ्रुकुटीवक्राशशापाथधनंजयम् ४८ ॥ ॥ उर्वश्युवाच ॥ ॥ तवपित्राभ्यनुज्ञातांस्वयंचगृहमागताम् ॥ यस्मान्मांनाभिनंदेथाःकामबाणवशंगताम् ४९ तस्मात्त्वंनर्तनःपार्थस्त्रीमध्येमानवर्जितः ॥ अपुमानितिविख्यातःषंढवद्विचरिष्यसि ५० एवंदत्त्वाऽर्जुनेशापंस्फुरदोष्ठीश्वसंत्यथ ॥ पुनःप्रत्यागताक्षिप्रमुर्वशीगृहमात्मनः ५१ ततोऽर्जुनस्त्वरमाणश्चित्रसेनमरिंदमः ॥ संप्राप्यरजनीवृत्तंतदुर्वश्यायथातथा ५२ निवेदयामासतदाचित्रसेनायपांडवः ॥ तत्रचैवंयथावृत्तंशापंचैवपुनःपुनः ५३ अवेदयच्चशक्रस्यचित्रसेनोऽपिसर्वशः ॥ ततआनाय्यतनयंविविक्तेहरिवाहनः ५४ सांत्वयित्वाशुभैर्वाक्यैःस्मयमानोऽभ्यभाषत ॥ सुपुत्राऽद्यपृथातातत्वयापुत्रेणसत्तम ५५ ऋषयोऽपिहिधैर्येणजितावैतेमहाभुज ॥ यत्तुदत्तवतीशापमुर्वशीतवमानद ५६ सचापितेऽर्थकृत्तातसाधकश्चभविष्यति ५७

अप्सरइसेकत्वमार्षं । यद्वास्यादेकत्वेऽप्सरा अपीतिशब्दार्णवादेकत्वंसाधु ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ भ्रुकुट्यावक्रा नतुमनसा हितार्थत्वाच्छापस्येतिभावः ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७

५८ । ५९ । ६० । ६१ । ६२ । ६३ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ कदाचिदिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

अज्ञातवासोवस्तव्योभवद्भिर्भूतलेऽनघ ॥ वर्षेत्रयोदशेवीरतंतत्रक्षपयिष्यसि ५८ तेननर्तनवेषेणअपुंस्त्वेनतथैवच ॥ वर्षमेकंविहृत्यैवततःपुंस्त्वमवाप्स्यसि ५९ एवमुक्तस्तुशक्रेणफाल्गुनःपरवीरहा ॥ मुदंपरमिकांलेभेनचशापंव्यचिंतयत् ६० चित्रसेनेनसहितोगंधर्वेणयशस्विना ॥ रेमेसस्वर्गभवनेपांडुपुत्रोधनंजयः ६१ इदंयःशृणुयाद्वृत्तंनित्यंपांडुसुतस्यवै ॥ नतस्यकामःकामेषुपापकेषुप्रवर्त्तते ६२ इदममरवरात्मजस्यघोरंशुचिचरितंविनिशम्यफाल्गुनस्य ॥ व्यपगतमददंभरागदोषास्त्रिदिवगताविरमंतिमानवेंद्राः ६३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिउर्वशीशापोनामषट्चत्वारिंशोऽध्यायः ॥ ४६॥

॥ ॥ वैशंपायनउवाच ॥ ॥ कदाचिदटमानस्तुमहर्षिरुतलोमशः ॥ जगामशक्रभवनंपुरंदरदिदृक्षया १ ससमेत्यनमस्कृत्यदेवराजंमहामुनिः ॥ ददर्शार्धासनगतंपांडवंवासवस्यहि २ ततःशक्राभ्यनुज्ञातआसनेविष्टरोत्तरे ॥ निषसादद्विजश्रेष्ठःपूज्यमानोमहर्षिभिः ३ तस्यदृष्ट्वाऽभवद्बुद्धिःपार्थमिंद्रासनेस्थितम् ॥ कथंनुक्षत्रियःपार्थःशक्रासनमवाप्तवान् ४ किंत्वस्यसुकृतंकर्मकेलोकावैविनिर्जिताः ॥ सएवमनुसंप्राप्तःस्थानंदेवनमस्कृतम् ५ तस्यविज्ञायसंकल्पंशक्रोवृत्रनिषूदनः ॥ लोमशंप्रहसन्वाक्यमिदमाहशचीपतिः ६ ब्रह्मर्षेश्रूयतांयत्तेमनसैतद्विवक्षितम् ॥ नायंकेवलमर्त्योवैमानुषत्वमुपागतः ७ महर्षेममपुत्रोऽयंकुंत्यांजातोमहाभुजः ॥ अस्त्रहेतोरिहप्राप्तःकस्माच्चित्कारणांतरात् ८ अहोनैनंभवान्वेत्तिपुराणमृषिसत्तमम् ॥ शृणुमेवदतोब्रह्मन्योऽयंयच्चास्यकारणम् ९ नरनारायणौयौतौपुराणावृषिसत्तमौ ॥ ताविमावनुजानीहिहृषीकेशधनंजयौ १० विख्यातौत्रिषुलोकेषुनरनारायणावृषी ॥ कार्यार्थमवतीर्णौतौपृथ्वींपुण्यप्रतिश्रयाम् ११ यन्नशक्यंसुरैर्द्रष्टुमृषिभिर्वामहात्मभिः ॥तदाश्रमपदंपुण्यंबदरीनामविश्रुतम् १२ सनिवासोऽभवद्विप्रविष्णोर्जिष्णोस्तथैवच ॥ यतःप्रववृतेगंगासिद्धचारणसेविता १३ तौमन्नियोगाद्ब्रह्मर्षेक्षितौजातौमहाद्युती ॥ भूमेर्भारावतरणंमहावीर्यौकरिष्यतः १४ उद्वृत्ताह्यसुराःकेचिन्निवातकवचाइति ॥ विप्रियेषुस्थितास्माकंवरदानेनमोहिताः १५ तर्कयंतेसुरान्हंतुंबलदर्पसमन्विताः ॥ देवान्नगणयंत्येतेतथादत्तवराहिते १६ पातालवासिनोरौद्रादनोःपुत्रामहाबलाः ॥ सर्वदेवनिकायाहिनालंयोधयितुंहितान् १७ योसौभूमिगतःश्रीमान्विष्णुर्मधुनिषूदनः ॥ कपिलोनामदेवोऽसौभगवानजितोहरिः १८ येनपूर्वमहात्मानःखनमानारसातलम् ॥ दर्शनादेवविहताःसगरस्यात्मजाविभो १९ तेनकार्यंमहत्कार्यमस्माकंद्विजसत्तम ॥ पार्थेनचमहायुद्धेसमेताभ्यांनसंशयः २० सोसुरान्दर्शनादेवशक्तोहंतुंसहानुगान् ॥ निवातकवचान्सर्वान्नागानिवमहाह्रदे २१ किंतुनाल्पेनकार्येणप्रबोध्योमधुसूदनः ॥ तेजसःसुमहाराशिःप्रबुद्धःप्रदहेज्जगत् २२

११ । १२ । १३ । १४ । १५ । १६ देवनिकायादेवसमूहाःनालम् नसमर्थाः १७ कपिलः । 'ऋषिंपुराणंकपिलं यस्तमग्रेज्ञानैर्बिभर्तिजायमानंचपश्येत्' इति श्रुतिप्रसिद्धः अग्रेजायमानम् पांचरात्रागमेऽनिरुद्धत्वेन वेदेसूत्रात्मत्वेनचव्यवहृतम् नारायणम् १८ । १९ । २० । २१ प्रबोध्योविज्ञाप्यः २२

तेषांनिवातकवचानांप्रतिसमासनेसंक्षेपणे २३ । २४ । २५ । २६ गुडाकेशोऽर्जुनः २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ संप्रतिज्ञायांगीकृत्य ३४ । ३५ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठी

अयंतेषांसमस्तानांशक्तःप्रतिसमासने ॥ तान्निहत्यरणेशूरःपुनर्यास्यतिमानुषान् २३ भवानस्मन्नियोगेनयातुतावन्महीतलम् ॥ काम्यकेद्रक्ष्यसेवीरंनिवसंतंयुधिष्ठिरम् २४ सवाच्योममसंदेशाद्धर्मात्मासत्यसंगरः ॥ नोत्कंठाफाल्गुनेकार्याकृतास्त्रःशीघ्रमेष्यति २५ नाशुद्धबाहुवीर्येणनाकृतास्त्रेणवारणे ॥ भीष्मद्रोणादयोयुद्धेशक्याःप्रतिसमासितुम् २६ गृहीतास्त्रोगुडाकेशोमहाबाहुर्महामनाः ॥ नृत्यवादित्रगीतानांदिव्यानांपारमीयिवान् २७ भवानपिविविक्तानितीर्थानिमनुजेश्वर ॥ भ्रातृभिःसहितःसर्वैद्रष्टुमर्हत्यरिंदम २८ तीर्थेष्वाप्लुत्यपुण्येषुविपाप्माविगतज्वरः ॥ राज्यंभोक्ष्यसिराजेंद्रसुखीविगतकल्मषः २९ भवांश्चैनंद्विजश्रेष्ठपर्यटंतंमहीतलम् ॥ त्रातुमर्हतिविप्राग्र्यतपोबलसमन्वितः ३० गिरिदुर्गेषुचसदादेशेषुविषमेषुच ॥ वसंतिराक्षसारौद्रास्तेभ्योरक्षांविधास्यति ३१ एवमुक्तेमहेंद्रेणबीभत्सुरपिलोमशम् ॥ उवाचप्रयतोवाक्यंरक्षेथाःपांडुनंदनम् ३२ यथागुप्तस्त्वयाराजाचरेत्तीर्थानिसत्तम ॥ दानंदद्याद्यथाचैवतथाकुरुमहामुने ३३ ॥ वैशंपायन उवाच ॥ ॥ तथेतिसंप्रतिज्ञायलोमशःसुमहातपाः ॥ काम्यकंवनमुद्दिश्यसमुपायान्महीतलम् ३४ ददर्शतत्रकौंतेयंधर्मराजमरिंदमम् ॥ तापसैर्भ्रातृभिश्चैवसर्वतःपरिवारितम् ३५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलो०लोमशगमनेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ जनमेजयउवाच ॥ ॥ अत्यद्भुतमिदंकर्मपार्थस्यामिततेजसः ॥ धृतराष्ट्रोमहाप्राज्ञःश्रुत्वाविप्रकिमब्रवीत् १ ॥ ॥ वैशंपायनउवाच ॥ ॥ शक्रलोकगतंपार्थंश्रुत्वाराजांऽबिकासुतः ॥ द्वैपायनादृषिश्रेष्ठात्संजयंवाक्यमब्रवीत् २ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ श्रुतंमेसूतकात्स्न्येनकर्मपार्थस्यधीमतः ॥ कच्चित्तवापिविदितंयाथातथ्येनसारथे ३ प्रमत्तोग्राम्यधर्मेषुमंदात्मापापनिश्चयः ॥ ममपुत्रःसुदुर्बुद्धिःपृथिवींघातयिष्यति ४ यस्यनित्यमृतावाचःस्वैरेष्वपिमहात्मनः ॥ त्रैलोक्यमपितस्यस्याद्योद्धायस्यधनंजयः ५ अस्यतःकर्णिनाराचांस्तीक्ष्णाग्रांश्चशिलाशितान् ॥ कोऽर्जुनस्याग्रतस्तिष्ठेदपिमृत्युर्जरातिगः ६ ममपुत्रादुरात्मानःसर्वेमृत्युवशानुगाः ॥ येषांयुद्धंदुराधर्षैःपांडवैःप्रत्युपस्थितम् ७ तथैवचनपश्यामियुधिगांडीवधन्वनः ॥ अनिशंचिंतयानोऽपियएनमुदियाद्रथी ८ द्रोणकर्णौप्रतीयातांयदिभीष्मोऽपिवारणे ॥ महान्स्यात्संशयोलोकेतत्रपश्यामिनोजयम् ९ घृणीकर्णःप्रमादीचआचार्यःस्थविरोगुरुः ॥ अमर्षीबलवान्पार्थःसंरंभीदृढविक्रमः १० संभवेत्तुमुलंयुद्धंसर्वशोऽप्यपराजितम् ॥ सर्वेह्यस्त्रविदःशूराःसर्वेप्राप्तामहद्यशः ११ अपिसर्वेश्वरत्वंहितेवांछंत्यपराजिताः ॥ वधेनूनंभवेच्छांतिरेतेषांफाल्गुनस्यवा १२ नतुहंताऽर्जुनस्यास्तिजेतावाऽस्यनविद्यते ॥ मन्युस्तस्यकथंशाम्येन्मांचैवप्रतिसंहितः १३

भारतभावदीपेसप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ अत्यद्भुतमिदंकर्मेत्यादेरध्यायद्वयस्यतात्पर्यंपरोत्कर्षेश्रुतेस्वनाशशंकयामूढस्तप्यतइति १ । २ । ३ । ४ ऋताःसत्याः ५ । ६ । ७ । ८ प्रतीयातांप्रतिगच्छेताम् ९ घृणीदयालुः प्रमादीअनवहितः संरंभीउद्यमी १० । ११ । १२ । १३

१४ । १५ । १६ अपीति । सव्यसाचिनोरथघोषेणापि तत् तत्ररणे १७ यत्यद्वा उद्गमन् निषंगादुद्धरन् । प्रवपयन् प्रेरयन् । स्थातास्थास्यति आततायीशस्त्रपाणिः यथोक्तं । 'अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः । क्षेत्रदारापहारीचषडेतेआततायिनः' । अपारणीयः अनुल्लंघनीयः जेतुमशक्यः १८ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेइंद्रलोकाभिगमनपर्वणि अष्टचत्वारिंशो

त्रिदशेशसमोवीरःखांडवेऽग्निमतर्पयत् ॥ जिगायपार्थिवान्सर्वान्राजसूयेमहाक्रतौ १४ शेषंकुर्याद्गिरेर्वज्रोनिपतन्मूर्ध्निसंजय ॥ नतुकुर्युःशराःशेषंक्षिप्तास्तातकिरीटिना १५ यथाहिकिरणाभानोस्तपंतीहचराचरम् ॥ तथापार्थभुजोत्सृष्टाःशरास्तप्स्यंतिमत्सुतान् १६ अपितद्रथघोषेणभयार्त्ताःसव्यसाचिनः ॥ प्रतिभातिविदीर्णेवसर्वतोभारतीचमूः १७ यदुद्वमन्प्रवपंश्चैवबाणान्स्थाताऽऽततायीसमरेकिरीटी ॥ सृष्टोंऽतकःसर्वहरोविधात्राभवेद्यथातद्वदपारणीयः १८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिधृतराष्ट्रविलापेअष्टचत्वारिंशोऽध्यायः ४८ ॥ ॥ संजयउवाच ॥ यदेतत्कथितंराजंस्त्वयादुर्योधनंप्रति ॥ सर्वमेतद्यथातत्त्वंनैतन्मिथ्यामहीपते १ मन्युनाहिसमाविष्टाःपांडवास्तेमहौजसः ॥ दृष्ट्वाकृष्णांसभांनीतांधर्मपत्नींयशस्विनीम् २ दुःशासनस्यतावाचःश्रुत्वातेदारुणोदयाः ॥ कर्णस्यचमहाराजजुगुप्संतीतिमेमतिः ३ श्रुतंहिमेमहाराजयथापार्थेनसंयुगे ॥ एकादशतनुःस्थाणुर्धनुषापरितोषितः ४ कैरातंवेषमास्थाययोधयामासफाल्गुनम् ॥ जिज्ञासुःसर्वदेवेशःकपर्दीभगवान्स्वयम् ५ तत्रैनंलोकपालास्तेदर्शयामासुरच्युतम् ॥ अस्त्रहेतोःपराक्रांततपसाकौरवर्षभम् ६ नैतदुत्सहतेचान्योलब्धुमन्यत्रफाल्गुनात् ॥ साक्षाद्दर्शनमेतेषामीश्वराणांनरोभुवि ७ महेश्वरेणयोराजन्नजीर्णोह्यष्टमूर्तिना ॥ कस्तमुत्सहतेवीरोयुद्धेजरयितुंपुमान् ८ आसादितमिदंघोरंतुमुलंलोमहर्षणम् ॥ द्रौपदींपरिकर्षद्भिःकोपयद्भिश्चपांडवान् ९ यत्तुप्रस्फुरमाणौष्ठोभीमःप्राहवचोऽर्थवत् ॥ दृष्ट्वादुर्योधनेनोरूद्रौपद्यादर्शितावुभौ १० ऊरूभेत्स्यामितेपापगदयाभीमवेगया ॥ त्रयोदशानांवर्षाणामंतेदुर्द्यूतदेविनः ११ सर्वेप्रहरतांश्रेष्ठाःसर्वेचामिततेजसः ॥ सर्वेसर्वास्त्रविद्वांसोदेवैरपिसुदुर्जयाः १२ मन्येमन्युसमुद्भूताःपुत्राणांतवसंयुगे ॥ अंतंपार्थाःकरिष्यंतिभार्यामर्षसमन्विताः १३ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ किंकृतंसूतकर्णेनवदतापरुषंवचः ॥ पर्याप्तंवैरमेतावद्यत्कृष्णासासभांगता १४ अपीदानींममसुतास्तिष्ठेरन्मंदचेतसः ॥ तेषांभ्रातागुरुर्ज्येष्ठोविनयेनावतिष्ठते १५ ममापिवचनंसूतनशुश्रूषतिमंदभाक् ॥ दृष्ट्वामांचक्षुषाहीनंनिर्विचेष्टमचेतसम् १६ येचास्यसचिवामंदाःकर्णसौबलकादयः ॥ तेतस्यभूयसोदोषान्वर्द्धयंतिविचेतसः १७ स्वैरमुक्ताह्यपिशराःपार्थेनामिततेजसा ॥ निर्दहेयुर्ममसुतान्किंपुनर्मन्युनेरिताः १८

ऽध्यायः ४८ ॥ ॥ यदेतदिति १ । २ । ३ । ४ । ५ । ६ । ७ नजीर्णोनक्षीणः अष्टौ पंचभूतानि सूर्यचंद्रपुरुषाश्चमूर्त्तयोयस्य ८ । ९ । १० दुर्द्यूतदेविनः छद्मद्यूतेनजेतुकामस्य ११ । १२ अंतंनाशम् १३ । १४ । विनयेनीतौ १५ । १६ । १७ । १८

१९ । २० । २१ । २२ नहिसंतीतिशेषः २३ ॥ ॥ इत्यारण्यकेप० नै० भा० एकोनपंचाशत्तमोऽध्यायः ४९ ॥ ॥ यदिदंशोचितमित्यादेरध्यायद्वयस्यतात्पर्यं सत्यसंरक्षणेकृतेदेवामानुषाश्चानुगृह्णंतीति १ । २ वानेयंवनभवंनीवारादि कृष्टंकर्षणजंग्राम्यधान्यम् ३ शुद्धैर्विषालिप्तैः 'विषलिप्तेनबाणेनयौहतौमृगपक्षिणौ । तयोर्मांसंकलंजंतद्भुक्त्वाचांद्रायणंचरेत्' इतिस्मृतेः ।

पार्थबाहुबलोत्सृष्टामहाचापविनिःसृताः ॥ दिव्यास्त्रमंत्रमुदिताःसादयेयुःसुरानपि १९ यस्यमंत्रीचगोप्ताचसुहृच्चैवजनार्दनः ॥ हरिस्त्रैलोक्यनाथःसकिंनुतस्यननिर्जितम् २० इदंहिसुमहच्चित्रमर्जुनस्येहसंजय ॥ महादेवेनबाहुभ्यांयत्समेतइतिश्रुतिः २१ प्रत्यक्षंसर्वलोकस्यखाण्डवेयत्कृतंपुरा ॥ फाल्गुनेनसहायार्थेवन्हेर्दामोदरेणच २२ सर्वथानहिमेपुत्राःसहामात्याःससौबलाः ॥ क्रुद्धेपार्थेचभीमेचवासुदेवेचसात्वते २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिधृतराष्ट्रखेदेएकोनपंचाशत्तमोऽध्यायः ४९ ॥ ॥ जनमेजयउवाच ॥ यदिदंशोचितंराज्ञाधृतराष्ट्रेणवैमुने ॥ प्रव्राज्यपांडवान्वीरान्सर्वमेतन्निरर्थकम् १ कथंचराजपुत्रंतमुपेक्षेताल्पचेतसम् ॥ दुर्योधनंपांडुपुत्रान्कोपयानंमहारथान् २ किमासीत्पांडुपुत्राणांवनेभोजनमुच्यताम् ॥ वानेयमथवाकृष्टमेतदाख्यातुनोभवान् ३ ॥ वैशंपायनउवाच ॥ वानेयंचमृगांश्चैवशुद्धैर्बाणैर्निपातितान् ॥ ब्राह्मणानांनिवेद्याग्रमभुंजन्पुरुषर्षभाः ४ तांस्तुशूरान्महेष्वासांस्तदानिवसतोवने ॥ अन्वयुर्ब्राह्मणाराजन्साग्नयोऽनग्नयस्तथा ५ ब्राह्मणानांसहस्राणिस्नातकानांमहात्मनाम् ॥ दशमोक्षविदांतत्रयान्बिभर्तियुधिष्ठिरः ६ रुरून्कृष्णमृगांश्चैवमेध्यांश्चान्यान्वनेचरान् ॥ बाणैरुन्मथ्यविविधैर्ब्राह्मणेभ्योन्यवेदयत् ७ नतत्रकश्चिद्दुर्वर्णोव्याधितोवाऽपिदृश्यते ॥ कृशोवादुर्बलोवाऽपिदीनोभीतोऽपिवापुनः ८ पुत्रानिवप्रियान्भ्रातॄन्ज्ञातीनिवसहोदरान् ॥ पुपोषकौरवश्रेष्ठोधर्मराजोयुधिष्ठिरः ९ पतींश्चद्रौपदीसर्वान्द्विजातींश्चयशस्विनी ॥ मातृवद्भोजयित्वाग्रेशिष्टमाहारयत्तदा १० प्राचींराजादक्षिणांभीमसेनोयमौप्रतीचीमथवाऽप्युदीचीम् ॥ धनुर्धरामांसहेतोर्मृगाणांक्षयंचक्रुर्नित्यमेवोपगम्य ११ तथातेषांवसतांकाम्यकेवैविहीनानामर्जुनेनोत्सुकानाम् ॥ पंचैववर्षाणितथाव्यतीयुरधीयतांजपतांजुह्वतांच १२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिपार्थाहारकथनेपंचाशत्तमोऽध्यायः ५० ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ॥ तेषांतच्चरितंश्रुत्वामनुष्यातीतमद्भुतम् ॥ चिंताशोकपरीतात्मामन्युनाऽभिपरिप्लुतः १ दीर्घमुष्णंचनिःश्वस्यधृतराष्ट्रोऽम्बिकासुतः ॥ अब्रवीत्संजयंसूतमामंत्र्यपुरुषर्षभ २ नरात्रौनदिवासूतशांतिंप्राप्नोमिवैक्षणम् ॥ संचिंत्यदुर्नयंघोरमतीतंद्यूतजंहितत् ३ तेषामसह्यवीर्याणांशौर्यंधैर्यंधृतिंपराम् ॥ अन्योन्यमनुरागंचभ्रातॄणामतिमानुषम् ४ देवपुत्रौमहाभागौदेवराजसमद्युती ॥ नकुलःसहदेवश्चपांडवौयुद्धदुर्मदौ ५ दृढायुधौदूरपातौयुद्धेचकृतनिश्चयौ ॥ शीघ्रहस्तौदृढक्रोधौनित्ययुक्तौतरस्विनौ ६

अग्रंहंतकारप्रदेयम् ४ अनग्नयः परिव्राजकाः ५ । ६ । ७ । ८ । ९ आहारयत् आहारंकृतवती १० । ११ । १२ ॥ ॥ इत्यारण्यकेपर्वणिनै० भा० पंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ तेषामिति । मन्युनादैन्येन १ । २ । ३ । ४ । ५ । ६

भीमार्जुनौपुरोधाययदातौरणमूर्धनि ॥ स्थास्येतेसिंहविक्रांतावश्विनाविवदुःसहौ ७ निःशेषमिहपश्यामिममसैन्यस्यसंजय ॥ तौह्यप्रतिरथौयुद्धेदेवपुत्रौमहारथौ ८ द्रौपद्यास्तंपरिक्लेशंनक्षंस्येतेत्वमर्षिणौ ॥ वृष्णयोऽथमहेष्वासाःपंचालावामहौजसः ९ युधिसत्याभिसंधेनवासुदेवेनरक्षिताः ॥ प्रधक्ष्यंतिरणेपार्थाःपुत्राणांममवाहिनीम् १० रामकृष्णप्रणीतानांवृष्णीनांसूतनंदन ॥ नशक्यःसहितुंवेगःसर्वैस्तैरपिसंयुगे ११ तेषांमध्येमहेष्वासोभीमोभीमपराक्रमः ॥ शैक्ययावीरघातिन्यागदयाविचरिष्यति १२ तथागांडीवनिर्घोषंविस्फूर्जितमिवाशनेः ॥ गदावेगंचभीमस्यनालंसोढुंनराधिपाः १३ ततोहंसुहृदांवाचोदुर्योधनवशानुगः ॥ स्मरणीयाःस्मरिष्यामिमयायानकृताःपुरा १४ ॥ संजयउवाच ॥ व्यतिक्रमोऽयंसुमहांस्त्वयाराजन्नुपेक्षितः ॥ समर्थेनापियन्मोहात्पुत्रस्तेननिवारितः १५ श्रुत्वाहिनिर्जितान्सूते पांडवान्मधुसूदनः ॥ त्वरितःकाम्यकेपार्थान्समभावयदच्युतः १६ द्रुपदस्यतथापुत्राधृष्टद्युम्नपुरोगमाः ॥ विराटोधृष्टकेतुश्चकेकयाश्चमहारथाः १७ तैश्चयत्कथितंराजन्दृष्ट्वापार्थान्पराजितान् ॥ चारेणविदितंसर्वंतन्मयाऽऽवेदितंचते १८ समागम्यवृतस्तत्रपांडवैर्मधुसूदनः ॥ सारथ्येफाल्गुनस्याजौतथेत्याहचतान्हरिः १९ अमर्षितोहिकृष्णोऽपिदृष्ट्वापार्थांस्तदागतान् ॥ कृष्णाजिनोत्तरासंगानब्रवीच्चयुधिष्ठिरम् २० यासासमृद्धिःपार्थानामिंद्रप्रस्थेबभूवह ॥ राजसूयेमयादृष्टानृपैरन्यैःसुदुर्लभा २१ यत्रसर्वान्महीपालान्शस्त्रतेजोभयार्दितान् ॥ सवंगांगान्सपौंड्रोड्रान्सचोलद्राविडांधकान् २२ सागरानूपकांश्चैवयेचप्रांताभिवासिनः ॥ सिंहलान्बर्बरान्म्लेच्छान्येचलंकानिवासिनः २३ पश्चिमानिचराष्ट्राणिशतशःसागरांतिकान् ॥ पल्हवान्दरदान्सर्वान्किरातान्यवनान्शकान् २४ हारहूणांश्चचीनांश्चतुषारान्सैन्धवांस्तथा ॥ जागुडान्रामठान्मुंडान्स्त्रीराज्यमथतंगणान् २५ केकयान्मालवांश्चैवतथाकाश्मीरकानपि ॥ अद्राक्षमहमाहूतान्यज्ञेतेपरिवेषकान् २६ सातेसमृद्धिर्यैरात्ताचपलाप्रतिसारिणी ॥ आदायजीवितंतेषामाहरिष्यामितामहम् २७ रामेणसहकौरव्यभीमार्जुनयमैस्तथा ॥ अक्रूरगदसांबैश्चप्रद्युम्नेनाहुकेनच २८ धृष्टद्युम्नेनवीरेणशिशुपालात्मजेनच ॥ दुर्योधनंरणेहत्वासद्यःकर्णंचभारत २९ दुःशासनंसौबलेयंयश्चान्यःप्रतियोत्स्यते ॥ ततस्त्वंहास्तिनपुरेभ्रातृभिःसहितोवसन् ३० धार्त्तराष्ट्रींश्रियंप्राप्यप्रशाधिपृथिवीमिमाम् ॥ अथैनमब्रवीद्राजातस्मिन्वीरसमागमे ३१ शृण्वत्स्वेतेषुवीरेषुधृष्टद्युम्नमुखेषुच ॥ ॥ युधिष्ठिरउवाच ॥ ॥ प्रतिगृह्णामितेवाचमिमांसत्यांजनार्दन ३२

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ प्रातिसारिणीप्रतीपंसरतीति नीचानुगामिनीत्यर्थः आहरिष्यामि इदानीमेवेतिशेषः अतएवप्रार्थना सत्संमांकुर्विति २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ समयामासुः समंयुक्तमित्याचख्युः । समशब्दात्तदाचष्टइतिणिचलिटिआम् । शमयामासुरितिपाठेस्पष्टोर्थः ३५ । ३६ । ३७ । ३८ । ३९ । ४० अहतलक्षणाअखंडितध्वजाः । आहतलक्षणा इतिपाठेआहवयोग्यानिशौर्यद्योतकानिलक्षणानिसामुद्रिकचिह्नानियेषामित्यर्थः ४१ । ४२ युयुधानः सात्यकिः ४३ केसरिणः क्रोधेनोच्छ्रितसटान् ४४ । ४५ । ४६ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारत

अमित्रान्मेमहाबाहोसानुबंधान्हनिष्यसि॥ वर्षात्त्रयोदशादूर्ध्वंसत्यंमांकुरुकेशव ३३ प्रतिज्ञातोवनेवासोराजमध्येमयाह्ययम् ॥ तद्धर्मराजवचनंप्रतिश्रुत्यसभासदः ३४ धृष्टद्युम्नपुरोगास्तेसमयामासुरंजसा ॥ केशवंमधुरैर्वाक्यैःकालयुक्तैरमर्षितम् ३५ पांचालींप्राहुरक्लिष्टांवासुदेवस्यशृण्वतः ॥ दुर्योधनस्तवक्रोधाद्देवित्यक्ष्यतिजीवितम् ३६ प्रतिजानीमहेसत्यंमाशुचोवरवर्णिनि ॥ येस्मतेऽक्षजितांकृष्णेदृष्ट्वात्वांप्राहसंस्तदा ॥ मांसानितेषांखादंतोहरिष्यन्तिवृकद्विजाः ३७ पास्यंतिरुधिरंतेषां गृध्रागोमायवस्तथा ॥ उत्तमांगानिकर्षन्तोयैःकृष्टाऽसिसभातले ३८ तेषांद्रक्ष्यसिपांचालिगात्राणिपृथिवीतले ॥ क्रव्यादैःकृष्यमाणानिभक्ष्यमाणानिवासकृत् ॥ ३९ परिक्लिष्टाऽसियैस्तत्रयैश्चासिसमुपेक्षिता ॥ तेषामुत्कृत्तशिरसांभूमिःपास्यतिशोणितम् ४० एवंबहुविधावाचस्तऊचुर्भरतर्षभाः ॥ सर्वेतेजस्विनःशूराःसर्वेचाहतलक्षणाः ४१ तेधर्मराजेनवृतावर्षादूर्ध्वंत्रयोदशात् ॥ पुरस्कृत्योपयास्यंतिवासुदेवंमहारथाः ४२ रामश्चकृष्णश्चधनंजयश्चप्रद्युम्नसांबौयुयुधानभीमौ ॥ माद्रीसुतौकेकयराजपुत्राःपंचालपुत्राःसहमत्स्यराज्ञा ४३ एतान्सर्वान्लोकवीरानजेयान्महात्मनःसानुबंधान्ससैन्यान् ॥ कोजीवितार्थीसमरेऽभ्युदीयात्क्रुद्धान्सिंहान्केसरिणोयथैव ४४ ॥ धृतराष्ट्रउवाच ॥ यन्माऽब्रवीद्विदुरोद्यूतकालेत्वंपांडवान्जेष्यसिचेन्नरेंद्र ॥ ध्रुवंकुरूणामयमंतकालोमहाभयोभविताशोणितौघः ४५ मन्येतथातद्भवितेतिसूतयथाक्षत्ताप्राहवचःपुरामाम् ॥ असंशयंभवितायुद्धमेतद्गतेकालेपांडवानांयथोक्तम् ४६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिइंद्रलोकाभिगमनपर्वणिधृतराष्ट्रविलापेएकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ समाप्तमिंद्रलोकाभिगमनपर्व ॥ अथनलोपाख्यानपर्व ॥ ॥ जनमेजयउवाच ॥ अस्त्रहेतोर्गतेपार्थेशक्रलोकंमहात्मनि ॥ युधिष्ठिरप्रभृतयःकिमकुर्वतपांडवाः १ ॥ ॥ वैशंपायनउवाच ॥ ॥ अस्त्रहेतोर्गतेपार्थेशक्रलोकंमहात्मनि ॥ आवसन्कृष्णयासार्धंकाम्यकेभरतर्षभाः २ ततःकदाचिदेकांतेविविक्तइवशाद्वले ॥ दुःखार्त्ताभरतश्रेष्ठानिषेदुःसहकृष्णया ३ धनंजयंशोचमानाःसाश्रुकंठाःसुदुःखिताः ॥ तद्वियोगार्दितान्सर्वान्शोकःसमभिपुप्लुवे ४ धनंजयवियोगाच्चराज्यभ्रंशाच्चदुःखिताः ॥ अथभीमोमहाबाहुर्युधिष्ठिरमभाषत ५ निदेशात्तेमहाराजगतोऽसौभरतर्षभः ॥ अर्जुनःपांडुपुत्राणांयस्मिन्प्राणाःप्रतिष्ठिताः ६ यस्मिन्विनष्टेपंचालाःसहपुत्रैस्तथावयम् ॥ सात्यकिर्वासुदेवश्चविनश्येयुर्नसंशयः ७ योऽसौगच्छतिधर्मात्माबहून्क्लेशान्विचिंतयन् ॥ भवन्नियोगाद्बीभत्सुस्ततोदुःखतरंनुकिम् ८ यस्यबाहूसमाश्रित्यवयंसर्वेमहात्मनः ॥ मन्यामहेजितानाजौपरान्प्राप्तांचमेदिनीम् ९ यस्यप्रभावान्नमयासभामध्येधनुष्मतः ॥ नीतालोकममुंसर्वेधार्तराष्ट्राःससौबलाः १०

भावदीपेएकपंचाशत्तमोऽध्यायः ५१ ॥ अस्त्रेति १ आवसन् आवासंकृतवंतः २ । ३ पुप्लुवेव्याप्तवान् ४ । ५ निदेशात आज्ञातः ६ । ७ । ८ । ९ अमुंलोकंपरलोकम् १०

११ । १२ अहीनपौरुषाअपिवयंउपप्लुताःकृताः येबालामूर्खादुर्योधनादयस्तेबलिभिःसामंतदत्तैर्धनैर्बलवत्तराःकृताः १३ । १४ मानीनशःमानाशय १५।१६ । १७ । १८ । १९ । २० बालिशःबालवद्वृथाहठी दीर्घसूत्रश्चिरकारी २१ । २२।२३ वेदेश्रूयते । विश्वसृजाः'सहस्रसंवत्सरम्' इति । अत्रहिसंवत्सरशब्दोदिनपरःकृतः अन्यथाशतायुर्वैपुरुषइतिश्रुतेरनधिकारिकंशास्त्रमप्रमाणंस्यात्तावदायुषोलोकेऽदर्शनाच्चकृच्छ्रतइतिद्वादशवार्षिकंप्रायश्चित्तंप्रतिज्ञातं तत्कृच्छ्रतःकृच्छ्रैरपिसद्योभवति तथाहि । 'त्रिंशताप्राजापत्यकृच्छ्रैरेकोऽब्दोभवति' एवंमित्रविंदेष्टिपवित्रेष्टिमृगारेष्टिप्रभृतिभिर्दशदशप्राजापत्यस्थानेधर्मशास्त्रेविहिता

तेवयंबाहुबलिनःक्रोधमुत्थितमात्मनः ॥ सहामहेभवन्मूलंवासुदेवेनपालिताः ११ वयंहिसहकृष्णेनहत्वाकर्णमुखान्परान् ॥ स्वबाहुविजितांकृत्स्नांप्रशासेमवसुंधराम् १२ भवतोद्यूतदोषेणसर्वेवयमुपप्लुताः ॥ अहीनपौरुषाबालाबलिभिर्बलवत्तराः १३ क्षात्रंधर्मंमहाराजत्वमवेक्षितुमर्हसि ॥ नहिधर्मोमहाराजक्षत्रियस्यवनाश्रयः १४ राज्यमेवपरंधर्मंक्षत्रियस्यविदुर्बुधाः ॥ सक्षत्रधर्मविद्राजामाधर्म्यान्नीनशःपथः १५ प्राग्द्वादशसमाराजन्धार्त्तराष्ट्रान्निहन्महि ॥ निवर्त्यचवनात्पार्थमानाय्यच जनार्दनम् १६ व्यूढानीकान्महाराजजवेनैवमहामते ॥ धार्त्तराष्ट्रानमुंलोकंगमयामिविशांपते १७ सर्वानहंहनिष्यामिधार्त्तराष्ट्रान्ससौबलान् ॥ दुर्योधनंचकर्णंचयोवाऽन्यःप्रतियोत्स्यते १८ मयाप्रशमितेपश्चात्त्वमेष्यसिवनंपुनः ॥ एवंकृतेनतेदोषाभविष्यंतिविशांपते १९ यज्ञैश्चविविधैस्तातकृतंपापमरिंदम ॥ अवधूयमहाराजगच्छेमस्वर्गमुत्तमम् २० एवमेतद्भवेद्राजन्यदिराजानबालिशः ॥ अस्माकंदीर्घसूत्रःस्याद्भवान्धर्मपरायणः २१ निकृत्यानिकृतिप्रज्ञाहंतव्याइतिनिश्चयः ॥ नहिनैकृतिकंहत्वानिकृत्याप्रापमुच्यते २२ तथाभारतधर्मेषुधर्मज्ञैरिहदृश्यते ॥ अहोरात्रंमहाराजतुल्यंसंवत्सरेणह २३ तथैववेदवचनंश्रूयतेनित्यदाविभो ॥ संवत्सरोमहाराजपूर्णोभवतिकृच्छ्रतः २४ यदिवेदाःप्रमाणास्तेदिवसादूर्ध्वमच्युत ॥ त्रयोदशसमाःकालोज्ञायतांपरिनिष्ठितः २५ कालोदुर्योधनंहंतुंसानुबंधमरिंदम ॥ एकाग्रांपृथिवींसर्वांपुराराजन्करोतिसः २६ द्यूतप्रियेणराजेंद्रतथातद्भवताकृतम् ॥ प्रायेणाज्ञातचर्यायांवयंसर्वेनिपातिताः २७ नतंदेशंप्रपश्यामियत्रसोऽस्मान्सुदुर्जनः ॥ नविज्ञास्यतिदुष्टात्माचारैरितिसुयोधनः २८ अधिगम्यचसर्वान्नोवनवासमिमंततः ॥ प्रव्राजयिष्यतिपुनर्निकृत्याऽधमपूरुषः २९ यद्यस्मानभिगच्छेतपापःसहिकथंचन ॥ अज्ञातचर्यामुत्तीर्णान्दृष्ट्वाचपुनराह्वयेत् ३० द्यूतेनतेमहाराजपुनर्द्यूतमवर्त्तत ॥ भवांश्चपुनराहूतोद्यूतेनैवापनेष्यति ३१ सतथाऽक्षेषुकुशलोनिश्चितोगतचेतनः ॥ चरिष्यसिमहाराजवनेषुवसतीःपुनः ३२ यद्यस्मान्सुमहाराजकृपणान्कर्तुमर्हसि ॥ यावज्जीवमवेक्षस्ववेदधर्मांश्चकृत्स्नशः ३३ निकृत्यानिकृतिप्रज्ञोहन्तव्यइतिनिश्चयः ॥ अनुज्ञातस्त्वयागत्वायावच्छक्तिसुयोधनम् ३४ यथैवकक्षमुत्सृष्टोदहेदनिलसारथिः ॥ हनिष्यामितथामंदमनुजानातुमेभवान् ३५

भिर्द्वादशवार्षिकंव्रतंसमापितुंशक्यमित्यर्थः २४ । २५ । पुराअग्रे २६ । २७ । २८ । २९ । ३० द्यूतेद्यूतार्थंपुनराह्वयेत् नन्वाहूतोऽप्यहंनगमिष्यामीत्याशंक्याहपुनर्द्यूतमवर्त्तत पूर्वमप्यनुद्यूतस्यकृतत्वात्पुनरपिद्यूतंकरिष्यस्येवेत्यर्थः अपनेष्यतिदूरीकरिष्यति श्रियमितिशेषः ३१ । ३२ । ३३ । ३४ कक्षंतृणंअभिलक्ष्येतिशेषः ३५

३६ । ३७ अनृतमिति । विश्वसृजांसत्रेसंवत्सरशब्दोनकालपरःकिंतु'पंचपंचाशतस्त्रिवृतःसंवत्सराःपंचपंचाशतःपंचदशाः'इत्यादिश्रुतौसंवत्सरपदस्यत्रिवृदादिशब्दसामानाधिकरण्यादहःशब्दवाच्यक्रतुपरत्वंदृष्टंअतःसंवत्सरशब्दोदिनपरइतिमवादमात्रं पंचपंचाशतइतिपंचाशदधिकंशतद्वयमुच्यते । नहिकालेनकर्तव्यंत्रतंकर्मणासमापयितुंशक्यमितिभावः ३८। ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ ॥

॥ वैशंपायनउवाच ॥ एवंब्रुवाणंभीमंतुधर्मराजोयुधिष्ठिरः ॥ उवाचसांत्वयन्राजामूर्ध्न्युपाघ्रायपांडवम् ३६ असंशयंमहाबाहोहनिष्यसिसुयोधनम् ॥ वर्षात्त्रयोदशादूर्ध्वं सहगांडीवधन्वना ३७ यत्त्वमाभाषसेपार्थप्राप्तःकालइतिप्रभो ॥ अनृतंनोत्सहेवक्तुंनह्येतन्ममविद्यते ३८ अंतरेणापिकौंतेयनिकृतिंपापनिश्चयम् ॥ हंतात्वमसि दुर्धर्षसानुबंधंसुयोधनम् ३९ एवंब्रुवतिभीमंतुधर्मराजेयुधिष्ठिरे ॥ आजगाममहाभागोबृहदश्वोमहानृषिः ४० तमभिप्रेक्ष्यधर्मात्मासंप्राप्तंधर्मचारिणम् ॥ शास्त्रवन्मधुपर्केणपूजयामासधर्मराट् ४१ आश्वस्तंचैनमासीनमुपासीनोयुधिष्ठिरः ॥ अभिप्रेक्ष्यमहाबाहुःकृपणंबह्वभाषत ४२ अक्षद्यूतेचभगवन्धनंराज्यंचमेहृतम् ॥ आहूयनिकृतिप्रज्ञैःकितवैरक्षकोविदैः ४३ अनक्षज्ञस्यहिसतोनिकृत्यापापनिश्चयैः ॥ भार्याचमेसभांनीताप्राणेभ्योऽपिगरीयसी ४४ पुनर्द्यूतेनमांजित्वावनवासंसुदारुणम् ॥ प्राव्राजयन्महारण्यमजिनैःपरिवारितम् ४५ अहंवनेदुर्वसतीर्वसन्परमदुःखितः ॥ अक्षद्यूताधिकारेचगिरःशृण्वन्सुदारुणाः ४६ आर्त्तानांसुहृदांवाचोद्यूतप्रभृतिशंसताम् ॥ अहंहृदिश्रिताःस्मृत्वासर्वरात्रीर्विचिंतयन् ४७ यस्मिंश्चैवसमस्तानांप्राणागांडीवधन्वनि ॥ 'विनामहात्मनातेनगतसत्वइवाभवम् ॥ ४८ कदाद्रक्ष्यामिबीभत्सुंकृतास्त्रंपुनरागतम् ॥ प्रियवादिनमक्षुद्रंदयायुक्तमतंद्रितः ४९ अस्तिराजामयाकश्चिदल्पभाग्यतरोभुवि ॥ भवताद्दृष्टपूर्वोवाश्रुतपूर्वोऽपिवाक्वचित् ॥ नमत्तोदुःखिततरःपुमानस्तीतिमेमतिः ५० ॥ बृहदश्वउवाच ॥ यद्ब्रवीषिमहाराजनमत्तोविद्यतेक्वचित् ॥ अल्पभाग्यतरःकश्चित्पुमानस्तीतिपांडव ५१ अत्रतेवर्णयिष्यामियदिशुश्रूषसेऽनघ ॥ यस्त्वत्तोदुःखिततरोराजाऽऽसीत्पृथिवीपते ५२ ॥ वैशंपायनउवाच ॥ अथैनमब्रवीद्राजाब्रवीतुभगवानिति ॥ इमामवस्थांसंप्राप्तंश्रोतुमिच्छामिपार्थिवम् ५३ ॥ बृहदश्वउवाच ॥ शृणुराजन्नवहितःसहभ्रातृभिरच्युत॥ यस्त्वत्तोदुःखिततरोराजाऽऽसीत्पृथिवीपते ५४ निषधेषुमहीपालोवीरसेनइतिश्रुतः ॥ तस्यपुत्रोऽभवन्नाम्नानलोधर्मार्थकोविदः ५५ सनिकृत्याजितोराजापुष्करेणेतिनःश्रुतम् ॥ वनवासंसुदुःखार्तोभार्ययान्यवसत्सह ५६ नतस्यदासानरथोनभ्रातानचबांधवाः ॥ वनेनिवसतोराजन्शिष्यंतेस्मकदाचन ५७ भवान्हिसंवृतोवीरैर्भ्रातृभिर्देवसंमितैः ॥ ब्रह्मकल्पैर्द्विजाग्र्यैश्चतस्मान्नार्हसिशोचितुम् ५८ ॥ युधिष्ठिरउवाच ॥ विस्तरेणाहमिच्छामिनलस्यसुमहात्मनः ॥ चरितंवदतांश्रेष्ठतन्ममाख्यातुमर्हसि ५९ ॥ ॥ इतिश्रीमहाभारतेआ०नलोपाख्यानपर्वणिद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ ॥

४७।४८ । ४९ अत्रवार्थेसत्यंसर्वथानराज्यमितिआख्यायिकाद्वाराभीमसेनंबोधयितुंराज्ञातृहदश्वःप्रवर्त्तते अस्तिराजामयाकश्चिदित्यादिना ५० । ५१ । ५२ । ५३ । ५४ । ५५ पुष्करेणराज्ञा ५६ शिष्यंते अवशिष्टाः कालस्त्वविवक्षितः ५७ । ५८ । ५९ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥

आसीदिति। उपपन्नोतियुक्तः १।२।३।४।५।६।७।८।९।१०।११ सौदामनीप्रावृषेण्यमेघसंबंधिनी सुष्ठुजगतोजीवनंददतितेसुदामानोमेघास्तेषांसमूहःसौदामनः प्रावृट्कालस्तत्संबंधिनी

॥ बृहदश्वउवाच ॥ आसीद्राजानलोनामवीरसेनसुतोबली ॥ उपपन्नोगुणैरिष्टैरूपवानश्वकोविदः १ अतिष्ठन्मनुजेंद्राणांमूर्ध्निदेवपतिर्यथा ॥ उपर्युपरिसर्वेषामादित्यइवतेजसा २ ब्रह्मण्योवेदविच्छूरोनिषधेषुमहीपतिः ॥ अक्षप्रियःसत्यवादीमहानक्षौहिणीपतिः ३ ईप्सितोवरनारीणामुदारःसंयतेंद्रियः ॥ रक्षिता धन्विनांश्रेष्ठःसाक्षादिवमनुःस्वयम् ४ तथैवासीद्विदर्भेषुभीमोभीमपराक्रमः ॥ शूरःसर्वगुणैर्युक्तःप्रजाकामःसचाप्रजः ५ सप्रजार्थेपरंयत्नमकरोत्सुसमाहितः ॥ तमभ्यगच्छद्ब्रह्मर्षिर्दमनोनामभारत ६ तंसभीमःप्रजाकामस्तोषयामासधर्मवित् ॥ महिष्यासहराजेंद्रसत्कारेणसुवर्चसम् ७ तस्मैप्रसन्नोदमनःसभार्यायवरंददौ ॥ कन्यारत्नंकुमारांश्चत्रीनुदारान्महायशाः ८ दमयंतींदमंदांतंदमनंचसुवर्चसम् ॥ उपपन्नान्गुणैःसर्वैर्भीमान्भीमपराक्रमान् ९ दमयंतीतुरूपेणतेजसायशसाश्रिया ॥ सौभाग्येनचलोकेषुयशःप्रापसुमध्यमा १० अथतांवयसिप्राप्तेदासीनांसमलंकृतम् ॥ शतंशतंसखीनांचपर्युपासच्छचीमिव ११ तत्रस्मराजतेभैमीसर्वाभरणभूषिता ॥ सखीमध्येऽनवद्यांगीविद्युत्सौदामनीयथा १२ अतीवरूपसंपन्नाश्रीरिवायतलोचना ॥ नदेवेषुनयक्षेषुतादृग्रूपवतीक्वचित् १३ मानुषेष्वपिचान्येषुदृष्टपूर्वाऽथवाश्रुता ॥ चित्तप्रसादनीबालादेवानामपिसुंदरी १४ नलश्चनरशार्दूलोलोकेष्वप्रतिमोभुवि ॥ कंदर्पइवरूपेणमूर्तिमानभवत्स्वयम् १५ तस्याःसमीपेतुनलंप्रशशंसुःकुतूहलात् ॥ नैषधस्यसमीपेतुदमयंतींपुनःपुनः १६ तयोरदृष्टःकामोऽभूच्छृण्वतोःसततंगुणान् ॥ अन्योन्यंप्रतिकौंतेयसव्यवर्धतहृच्छयः १७ अशक्नुवन्नलःकामंतदाधारयितुंहृदा ॥ अंतःपुरसमीपस्थेवनआस्तेरहोगतः १८ सददर्शततोहंसान्जातरूपपरिष्कृतान् ॥ वनेविचरतांतेषामेकंजग्राहपक्षिणम् १९ ततोंऽतरिक्षगोवाचंव्याजहारनलंतदा ॥ हंतव्योऽस्मिनतेराजन्करिष्यामितवप्रियम् २० दमयंतीसकाशेत्वांकथयिष्यामिनैषध ॥ यथात्वदन्यंपुरुषंनसामंस्यतिकर्हिचित् २१ एवमुक्तस्ततोहंसमुत्ससर्जमहीपतिः ॥ तेतुहंसाःसमुत्पत्यविदर्भानगमंस्ततः २२ विदर्भनगरींगत्वादमयंत्यास्तदांतिके ॥ निपेतुस्तेगरुत्मंतःसाददर्शचतान्खगान् २३ सातानद्भुतरूपान्वैदृष्ट्वासखिगणावृता ॥ हृष्टाग्रहीतुंखगमांस्त्वरमाणोपचक्रमे २४ अथहंसाविससृपुःसर्वतःप्रमदावने ॥ एकैकशस्तदाकन्यास्तानहंसान्समुपाद्रवन् २५ दमयंतीतुयंहंसंसमुपाधावदंतिके ॥ समानुषींगिरंकृत्वादमयंतीमथाब्रवीत् २६ दमयंतिनलोनामनिषधेषुमहीपतिः ॥ अश्विनोःसदृशोरूपेनसमास्तस्यमानुषाः २७ कंदर्पइवरूपेणमूर्तिमानभवत्स्वयम् ॥ तस्यवैयदिभार्यात्वंभवेथावरवर्णिनि २८ सफलंतेभवेज्जन्मरूपंचेदंसुमध्यमे ॥ वयंहिदेवगंधर्वमनुष्योरगराक्षसान् २९

माहिअसंतंद्योतमानाभवनीतिप्रसिद्धम १२।१३।१४ मूर्तिमानशरीरी १५ प्रशशंसुः वार्त्ताहराइतिशेषः १६ हृच्छयः कामः १७। १८ जातरूपपरिष्कृतानसुवर्णपक्षान् १९ अन्तरिक्षगः खगः २० २१।२२ गरुत्मंतः पक्षवंतः २३।२४।२५।२६।२७।२८। २९

३० संग्रामःकामयुद्धंसुरतमित्यर्थः संगमइतिपाठेऽपिसएवार्थः ३१ । ३२ ॥ इत्या०नै० भा०त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ दमयंतीति १ । २ । ३ । ४ जज्ञुः ज्ञातवत्यः । इंगितैः अभिप्रायसूच

दृष्टवंतोनचास्माभिर्दृष्टपूर्वस्तथाविधः ॥ त्वंचापिरत्नंनारीणांनरेषुचनलोवरः ३० विशिष्टयाविशिष्टेनसंग्रामोगुणवान्भवेत् ॥ एवमुक्तातुहंसेनदमयंतीविशांपते ३१ अब्रवीत्तत्रतंहंसंत्वमप्येवंनलेवद ॥ तथेत्युक्त्वांऽडजःकन्यांविदर्भस्यविशांपते ॥ पुनरागम्यनिषधान्नलेसर्वंन्यवेदयत् ३२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणि नलोपाख्यानप०हंसदमयंतीसंवादेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ॥ बृहदश्वउवाच ॥ ॥ दमयंतीतुतच्छ्रुत्वावचोहंसस्यभारत ॥ ततःप्रभृ तिनस्वस्थानलंप्रतिबभूवसा १ ततश्चितापरादीनाविवर्णवदनाकृशा ॥ बभूवदमयंतीतुनिःश्वासपरमातदा २ ऊर्ध्वदृष्टिर्ध्यानपराबभूवोन्मत्तदर्शना ॥ पांडुवर्णाक्षणे नाथहृच्छयाविष्टचेतना ३ नशय्यासनभोगेषुरतिंविंदतिकर्हिचित् ॥ ननक्तंनदिवाशेतेहाहेतिरुदतीपुनः ४ तामस्वस्थांतदाकारांसख्यस्ताजज्ञुरिंगितैः ॥ ततोविदर्भपत येदमयंत्याःसखीजनः ५ न्यवेदयत्तामस्वस्थांदमयंतींनरेश्वरे ॥ तच्छ्रुत्वानृपतिर्भीमोदमयंतींसखीगणात् ६ चिंतयामासतत्कार्यंसुमहत्स्वांसुतांप्रति ॥ किमर्थंदुहि तामेऽद्यनातिस्वस्थेवलक्ष्यते ७ ससमीक्ष्यमहीपालःस्वांसुतांप्राप्तयौवनाम् ॥ अपश्यदात्मनाकार्यंदमयंत्याःस्वयंवरम् ८ ससन्निमंत्रयामासमहीपालान्विशांपतिः ॥ अनुभूयतामयंवीराःस्वयंवरइतिप्रभो ९ श्रुत्वातुपार्थिवाःसर्वेदमयंत्याःस्वयंवरम् ॥ अभिजग्मुस्ततोभीमंराजानोभीमशासनात् १० हस्त्यश्वरथघोषेणपूरयंतोवसुंध राम् ॥ विचित्रमाल्याभरणैर्बलैर्दृश्यैःस्वलंकृतैः ११ तेषांभीमोमहाबाहुःपार्थिवानांमहात्मनाम् ॥ यथार्हमकरोत्पूजांतेऽवसंस्तत्रपूजिताः १२ एतस्मिन्नेवकाले तुसुराणामृषिसत्तमौ ॥ अटमानौमहात्मानाविंद्रलोकमितोगतौ १३ नारदःपर्वतश्चैवमहाप्राज्ञौमहाव्रतौ ॥ देवराजस्यभवनंविविशातेसुपूजितौ १४ तावर्चयित्वा मघवाततःकुशलमव्ययम् ॥ पप्रच्छानामयंचापितयोःसर्वगतंविभुः १५ ॥ नारदउवाच ॥ आवयोःकुशलंदेवसर्वत्रगतमीश्वर ॥ लोकेचमघवन्कृत्स्नेनृपाःकुशलि नोविभो १६ ॥ बृहदश्वउवाच ॥ नारदस्यवचःश्रुत्वापप्रच्छबलवृत्रहा ॥ धर्मज्ञाःपृथिवीपालास्त्यक्तजीवितयोधिनः १७ शस्त्रेणनिधनंकालेयेगच्छंत्यपराङ्मुखाः ॥ अयंलोकोऽक्षयस्तेषांयथैवममकामधुक् १८ क्वनुतेक्षत्रियाःशूरानहिपश्यामितानहम् ॥ आगच्छतोमहीपालान्दयितानतिथीन्मम १९ एवमुक्तस्तुशक्रेणनारदः प्रत्यभाषत ॥ ॥ नारदउवाच ॥ शृणुमेमघवन्येननदृश्यंतेमहीक्षितः २० विदर्भराज्ञोदुहितादमयंतीतिविश्रुता ॥ रूपेणसमतिक्रांतापृथिव्यांसर्वयोषितः २१ त स्याःस्वयंवरःशक्रभवितानचिरादिव ॥ तत्रगच्छन्तिराजानोराजपुत्राश्चसर्वशः २२ तांरत्नभूतांलोकस्यप्रार्थयंतोमहीक्षितः ॥ कांक्षंतिस्मविशेषेणबलवृत्रनिषूदन २३ एतस्मिन्कथ्यमानेतुलोकपालाश्चसाग्निकाः ॥ आजग्मुर्देवराजस्यसमीपममरोत्तमाः २४

कैश्चेष्टितैः ५ नरेश्वरेनलनिमित्तम् ६ । ७ । ८ सन्निमंत्रयामासआमंत्रितवान् अनुभूयतांप्रेक्ष्यतांभवद्भिः ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ महीक्षितः पृथ्वीश्वराः २० । २१ । २२ । २३ । २४

२५ । २६ । २७ । २८ । विगतोविनष्टःदमयंतींप्राप्स्यामइतिसंकल्पोयेषाम् २९ । ३० । ३१ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ तेभ्य इति ।

ततस्तेशुश्रुवुःसर्वेनारदस्यवचोमहत् ॥ श्रुत्वैवचाब्रुवन्हृष्टागच्छामोवयमप्युत २५ ततःसर्वेमहाराजसगणाःसहवाहनाः ॥ विदर्भानभिजग्मुस्तेयतःसर्वेमहीक्षितः २६ नलोऽपिराजाकौंतेयश्रुत्वाराज्ञांसमागमम् ॥ अभ्यगच्छददीनात्मादमयंतीमनुव्रतः २७ अथदेवाःपथिनलंददृशुर्भूतलेस्थितम् ॥ साक्षादिवस्थितंमूर्त्यामन्मथं रूपसंपदा २८ तंदृष्ट्वालोकपालास्तेभ्राजमानंयथारविम् ॥ तस्थुर्विगतसंकल्पाविस्मितारूपसंपदा २९ ततोंऽतरिक्षेविष्टभ्यविमानानिदिवौकसः ॥ अब्रुवन्नैषधंराज न्नवतीर्यनभस्तलात् ३० भोभोनिषधराजेंद्रनलसत्यव्रतोभवान् ॥ अस्माकंकुरुसाहाय्यंदूतोभवनरोत्तम ३१ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्या नपर्वणिइंद्रनारदसंवादेचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ बृहदश्वउवाच ॥ तेभ्यःप्रतिज्ञायनलःकरिष्यइतिभारत ॥ अथैतान्परिपप्रच्छकृतांजलिरुपस्थितः १ केवैभवंतःकश्चासौयस्याहंदूतईप्सितः ॥ किंचतद्वोमयाकार्यंकथयध्वंयथातथम् २ एवमुक्तेनैषधेनमघवानभ्यभाषत ॥ अमरान्वैनिबोधास्मान्दमयंत्यर्थमागतान् ३ अहमिंद्रोऽयमग्निश्चतथैवायमपांपतिः ॥ शरीरांतकरोनृणांयमोऽयमपिपार्थिव ४ त्वंवैसमागतानस्मान्दमयंत्यैनिवेदय ॥ लोकपालामहेंद्राद्याःसमायांतिदिदृक्षवः ५ प्राप्तुमिच्छंतिदेवास्त्वांशक्रोऽग्निर्वरुणोयमः ॥ तेषामन्यतमंदेवंपतित्वेवरयस्वह ६ एवमुक्तःसशक्रेणनलःप्रांजलिरब्रवीत् ॥ एकार्थंसमुपेतंमांनप्रेषयितुमर्हथ ७ कथं तुजातसंकल्पःस्त्रियमुत्सृजतेपुमान् ॥ परार्थमीदृशंवक्तुंतत्क्षमंतुमहेश्वराः ८ ॥ ॥ देवाऊचुः ॥ करिष्यइतिसंश्रुत्यपूर्वमस्मासुनैषध ॥ नकरिष्यसिकस्मात्त्वंव्रजनैष धमाचिरम् ९ ॥ बृहदश्वउवाच ॥ एवमुक्तःसदेवैस्तैर्नैषधःपुनरब्रवीत् ॥ सुरक्षितानिवेश्मानिप्रवेष्टुंकथमुत्सहे १० प्रवेक्ष्यसीतितंशक्रःपुनरेवाभ्यभाषत ॥ जगाम सतथेत्युक्त्वादमयंत्यानिवेशनम् ११ ददर्शतत्रवैदर्भींसखीगणसमावृताम् ॥ देदीप्यमानांवपुषाश्रियाचवरवर्णिनीम् १२ अतीवसुकुमारांगींतनुमध्यांसुलोचनाम् ॥ आक्षिपंतीमिवप्रभांशशिनःस्वेनतेजसा १३ तस्यदृष्ट्वैववव्रृधेकामस्तांचारुहासिनीम् ॥ सत्यंचिकीर्षमाणस्तुधारयामासहृच्छयम् १४ ततस्तानैषधंदृष्ट्वासंभ्रांताःपर मांगनाः ॥ आसनेभ्यःसमुत्पेतुस्तेजसातस्यधर्षिताः १५ प्रशशंसुश्चसुप्रीतानलंताविस्मयान्विताः ॥ नचैनमभ्यभाषंतमनोभिस्त्वभ्यपूजयन् १६ अहोरूपमहो कांतिरहोधैर्यंमहात्मनः ॥ कोऽयंदेवोऽथवायक्षोगंधर्वोवाभविष्यति १७ नतास्तंशक्नुवंतिस्मव्याहर्तुमपिकिंचन ॥ तेजसाधर्षितास्तस्यलज्जावत्योवरांगनाः १८ अथै नंस्मयमानंतुस्मितपूर्वाभिभाषिणी ॥ दमयंतीनलंवीरमभ्यभाषतविस्मिता १९ कस्त्वंसर्वानवद्यांगममहृच्छयवर्धन ॥ प्राप्तोस्यमरवद्वीरज्ञातुमिच्छामितेऽनघ २० कथमागमनंचेहकथंचासिनलक्षितः ॥ सुरक्षितंहिमेवेश्मराजाचैवोग्रशासनः २१

१ । २ । ३ । ४ । ५ । ६ एकार्थमेकप्रयोजनं यूयमिवाहमपिदमयंतींप्रार्थयामीत्यर्थः ७ । ८ । ९ । १० प्रवेक्ष्यसीति अदृश्यशक्तिस्तुभ्यंदत्तेतिभावः ११ । १२ । १३ । १४ धर्षिताअभिभूताः १५ । १६ । १७ । १८ । १९ । २० । २१

२२ । २३ । २४ । २५ ॥ इत्यारण्यकेप० न० भारतभा० पंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ सेति । यथाश्रद्धंदेवेभ्योनमस्कृत्यप्रणयस्वेतिसंबंधः प्रणयस्वपरिणयस्वमामितिशेषः १ विश्रब्धं

एवमुक्तस्तुवैदर्भ्यानलस्तांप्रत्युवाचह ॥ नलउवाच ॥ नलंमांविद्धिकल्याणिदेवदूतमिहागतम् २२ देवास्त्वांप्राप्तुमिच्छंतिशक्रोऽग्निर्वरुणोयमः ॥ तेषामन्य तमंदेवंपतिंवरयशोभने २३ तेषामेवप्रभावेणप्रविष्टोऽहमलक्षितः ॥ प्रविशंतंनमांकश्चिदपश्यन्नाप्यवारयन् २४ एतदर्थमहंभद्रेप्रेषितःसुरसत्तमैः ॥ एतच्छ्रुत्वाशु भेबुद्धिंप्रकुरुष्वयथेच्छसि २५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिनलस्यदेवदौत्येपंचपंचाशत्तमोऽध्यायः ५५ ॥ ॥ बृहदश्वउवाच ॥ सान मस्कृत्यदेवेभ्यःप्रहस्यनलमब्रवीत् ॥ प्रणयस्वयथाश्रद्धंराजन्किंकरवाणिते १ अहंचैवहियच्चान्यन्ममास्तिवसुकिंचन ॥ तत्सर्वंतवविश्रब्धंकुरुप्रणयमीश्वर २ हं सानांवचनंयत्तुतन्मांदहतिपार्थिव ॥ त्वत्कृतेहिमयावीरराजानःसन्निपातिताः ३ यदित्वंभजमानांमांप्रत्याख्यास्यसिमानद ॥ विषमग्निंजलंरज्जुमास्थास्येतवकारणात् ४ एवमुक्तस्तुवैदर्भ्यानलस्तांप्रत्युवाचह ॥ तिष्ठत्सुलोकपालेषुकथंमानुषमिच्छसि ५ येषामहंलोककृतामीश्वराणांमहात्मनाम् ॥ नपादरजसातुल्योमनस्तेतेषुवर्त्त ताम् ६ विप्रियंह्याचरन्मर्त्योदेवानांमृत्युमृच्छति ॥ त्राहिमामनवद्यांगिवरयस्वसुरोत्तमान् ७ विरजांसिचवासांसिदिव्याश्चित्राःस्रजस्तथा ॥ भूषणानितुमुख्यानि देवान्प्राप्यतुभुंक्ष्ववै ८ यइमांपृथिवींकृत्स्नांसंक्षिप्यग्रसतेपुनः ॥ हुताशमीशंदेवानांकातंनवरयेत्पतिम् ९ यस्यदंडभयात्सर्वेभूतग्रामाःसमागताः ॥ धर्ममेवानुरुध्यं तिकातंनवरयेत्पतिम् १० धर्मात्मानंमहात्मानंदैत्यदानवमर्दनम् ॥ महेंद्रंसर्वदेवानांकातंनवरयेत्पतिम् ११ क्रियतामविशंकेनमनसायदिमन्यसे ॥ वरुणंलोकपा लानांसुहृद्वाक्यमिदंशृणु १२ नैषधेनैवमुक्तासादमयंतीवचोऽब्रवीत् ॥ समाप्लुताभ्यांनेत्राभ्यांशोकजेनाथवारिणा १३ देवेभ्योऽहंनमस्कृत्यसर्वेभ्यःपृथिवीपते ॥ वृणेत्वामेवभर्त्तारंसत्यमेतद्ब्रवीमिते १४ तामुवाचततोराजावेपमानांकृतांजलिम् ॥ दौत्येनागत्यकल्याणितथाभद्रेविधीयताम् १५ कथंह्यहंप्रतिश्रुत्यदेवतानांविशे षतः ॥ परार्थेयत्नमारभ्यकथंस्वार्थमिहोत्सहे १६ एषधर्मोयदिस्वार्थोममापिभवितातततः ॥ एवंस्वार्थंकरिष्यामितथाभद्रेविधीयताम् १७ ततोबाष्पाकुलांवाचंदमयं तीशुचिस्मिता ॥ प्रत्याहरंतीशनकैर्नलंराजानमब्रवीत् १८ उपायोऽयंमयादृष्टोनिरपायोनरेश्वर ॥ येनदोषोनभविताتवराजन्कथंचन १९ त्वंचैवहिनरश्रेष्ठदेवाश्चेंद्र पुरोगमाः ॥ आयांतुसहिताःसर्वेममयत्रस्वयंवरः २० ततोऽहंलोकपालानांसन्निधौत्वांनरेश्वर ॥ वरयिष्येनरव्याघ्रनैवंदोषोभविष्यति २१ एवमुक्तस्तुवैदर्भ्यान लोराजाविशांपते ॥ आजगामपुनस्तत्रयत्रदेवाःसमागताः २२ तमपश्यंस्तथायांतंलोकपालामहेश्वराः ॥ दृष्ट्वाचैनंततोऽपृच्छन्वृत्तांतंसर्वमेवतम् २३ कच्चिद्दृष्टात्व याराजन्दमयंतीशुचिस्मिता ॥ किमब्रवीच्चनःसर्वान्वदभूमिपतेऽनघ २४

सविश्वासंयथास्यात्तथा प्रणयंपरिणयनंविवाहं २ सन्निपातिताःमेलिताः ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

महाकक्षंमहांतंराजद्वारप्रदेशम् २५ । २६ । २७ । २८ । २९ । ३० ३१ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेषट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ अथेति १ । २ । ३ । ४ । ५ । ६ । ७

॥ नलउवाच ॥ भवद्भिरहमादिष्टोदयमंत्यानिवेशनम् ॥ प्रविष्टःसुमहाकक्षंदंडिभिःस्थविरैर्वृतम् २५ प्रविशन्तंचमांतत्रनकश्चिद्दृष्टवान्नरः ॥ ऋतेतांपार्थिवसुतांभव
तामेवतेजसा २६ सख्यश्चास्यामयादृष्टास्ताभिश्चाप्युपलक्षितः ॥ विस्मिताश्चाभवन्सर्वादृष्ट्वामांविबुधेश्वराः २७ वर्ण्यमानेषुचमयाभवत्सुरुचिरानना ॥ मामेवगतसं
कल्पावृणीतेसासुरोत्तमाः २८ अब्रवीच्चैवमांबालाआयांतुसहिताःसुराः ॥ त्वयासहनरव्याघ्रममयत्रस्वयंवरः २९ तेषामहंसंनिधौत्वांवरयिष्यामिनैषध ॥ एवंतव
महाबाहोदोषोनभवितेतिह ३० एतावदेवविबुधायथावृत्तमुपाहृतम् ॥ मयाऽशेषेप्रमाणंतुभवंतस्त्रिदशेश्वराः ३१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्या
नप० नलकर्तृकदेवदूत्येषट्पंचाशत्तमोऽध्यायः ५६ ॥ ॥ बृहदश्वउवाच ॥ अथकालेशुभेप्राप्तेतिथौपुण्येक्षणेतथा ॥ आजुहावमहीपालान्भीमोराजास्वयंवरे
१ तच्छ्रुत्वापृथिवीपालाःसर्वेहृच्छयपीडिताः ॥ त्वरिताःसमुपाजग्मुर्दमयंतीमभीप्सवः २ कनकस्तंभरुचिरंतोरणेनविराजितम् ॥ विविशुस्तेनृपारंगंमहासिंहाइ
वाचलम् ३ तत्रासनेषुविविधेष्वासीनाःपृथिवीक्षितः ॥ सुरभिस्रग्धराःसर्वेप्रमृष्टमणिकुंडलाः ४ तांराजसमितिंपुण्यांनागैर्भोगवतीमिव ॥ संपूर्णांपुरुषव्याघ्रैर्व्याघ्रैर्गि
रिगुहामिव ५ तत्रस्मपीनादृश्यंतेबाहवःपरिघोपमाः ॥ आकारवर्णसुश्लक्ष्णाःपंचशीर्षाइवोरगाः ६ सुकेशांतानिचारूणिसुनासाक्षिभ्रुवाणिच ॥ मुखानिराज्ञांशोभंतेन
क्षत्राणियथादिवि ७ दमयंतीततोरंगंप्रविवेशशुभानना ॥ मुष्णंतीप्रभयाराज्ञांचक्षूंषिचमनांसिच ८ तस्यागात्रेषुपतितातेषांदृष्टिर्महात्मनाम् ॥ तत्रतत्रैवसक्ताऽ
भून्नचचालचपश्यताम् ९ ततःसंकीर्त्यमानेषुराज्ञांनामसुभारत ॥ ददर्शभैमीपुरुषान्पंचतुल्याकृतीनिह १० तान्समीक्ष्यततःसर्वान्निर्विशेषाकृतीन्स्थितान् ॥ संदेहा
दथवैदर्भीनाभ्यजानान्नलंनृपम् ११ यंयंहिददृशेतेषांतंतंमेनेनलंनृपम् ॥ साचिंतयंतीबुद्ध्याऽथतर्कयामासभाविनी १२ कथंहिदेवान्जानीयांकथंविद्यांनलंनृपम् ॥
एवंसंचिंतयंतीसावैदर्भीभृशदुःखिता १३ श्रुतानिदेवलिंगानितर्कयामासभारत ॥ देवानांयानिलिंगानिस्थविरेभ्यःश्रुतानिमे १४ तानीहतिष्ठतांभूमावेकस्यापिन
लक्षये ॥ साविनिश्चित्यबहुधाविचार्यचपुनःपुनः १५ शरणंप्रतिदेवानांप्राप्तकालममन्यत ॥ वाचाचमनसाचैवनमस्कारंप्रयुज्यसा १६ देवेभ्यःप्रांजलिर्भूत्वावेपमाने
दमब्रवीत् ॥ हंसानांवचनंश्रुत्वायथामेनैषधोवृतः ॥ पतित्वेतेनसत्येनदेवास्तंप्रदिशंतुमे १७ मनसावचसाचैवयथानाभिचराम्यहम् ॥ तेनसत्येनविबुधास्तमेवप्रदिश
ंतुमे १८ यथादेवैःसमेभर्त्ताविहितोनिषधाधिपः ॥ तेनसत्येनमेदेवास्तमेवप्रदिशंतुमे १९ यथेदंव्रतमारब्धंनलस्याराधनेमया ॥ तेनसत्येनमेदेवास्तमेवप्रदिशंतुमे २०

मुष्णंतीहरंती ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ मनुष्याःसस्वेदाःसनिमेषाम्लायमानस्रजःसरजस्काभूमिस्पृशः देवास्तद्विपरीताः । हृषितस्रजश्चेतेरजोहीनाश्चेतिसमासः २४ । २५।२६ । २७ । २८ । २९ । ३० यद्यस्मान्मांभजसितस्मात्ते तववचनेरतमित्येनतविद्धि ३१ । ३२ । ३३ । ३४ । ३५ आत्मभवत्वमात्मनआविर्भावम् ३६ अन्नरसंयादृशेतादृशेऽप्यन्नेविशिष्टरसवत्ताम् ३७ भावंसत्तां मिथुनमेकैकेनद्वयंद्वयमपीत्यर्थः ३८ अनुभूयदृष्ट्वा ३९

स्वंचैववरुपंकुर्वंतुलोकपालामहेश्वराः ॥ यथाऽहमभिजानीयांपुण्यश्लोकंनराधिपम् २१ निशम्यदमयंत्यास्तत्करुणंप्रतिदेवितम् ॥ निश्चयंपरमंतथ्यमनुरागंचनैषधे २२ मनोविशुद्धिंबुद्धिंचभक्तिंरागंचनैषधे ॥ यथोक्तंचक्रिरेदेवाःसामर्थ्यंलिंगधारणे २३ साऽपश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ॥ हृषितस्रग्रजोहीनान्स्थितानस्पृशतःक्षितिम् २४ छायाद्वितीयोम्लानस्रग्रजःस्वेदसमन्वितः ॥ भूमिष्ठोनैषधश्चैवनिमेषेणचसूचितः २५ सासमीक्ष्यतुतान्देवान्पुण्यश्लोकंचभारत ॥ नैषधंवरयामासभैमीधर्मेणपांडव २६ विलज्जमानावस्त्रांतंजग्राहायतलोचना ॥ स्कंधदेशेऽसृजत्तस्यस्रजंपरमशोभनाम् २७ वरयामासचैवैनंपतित्वेवरवर्णिनी ॥ ततोहाहेतिसहसामुक्तःशब्दोनराधिपैः २८ देवैर्महर्षिभिस्तत्रसाधुसाध्वितिभारत ॥ विस्मितैरीरितःशब्दःप्रशंसद्भिर्नलंनृपम् २९ दमयंतींतुकौरव्यवीरसेनसुतोनृपः ॥ आश्वासयद्वरारोहांप्रहृष्टेनांतरात्मना ३० यत्त्वंभजसिकल्याणिपुमांसंदेवसन्निधौ ॥ तस्मान्मांविद्धिभर्तारमेतत्तेवचनेरतम् ३१ यावच्चमेधरिष्यंतिप्राणादेहेशुचिस्मिते ॥ तावत्त्वयिभविष्यामिसत्यमेतद्ब्रवीमिते ३२ दमयंतीतथावाग्भिरभिनंद्यकृतांजलिः ॥ तौपरस्परतःप्रीतौदृष्ट्वात्वग्निपुरोगमान् ३३ तानेवशरणंदेवान्जग्मतुर्मनसातदा ॥ वृतेतुनैषधेभैम्यालोकपालामहौजसः ३४ प्रहृष्टमनसःसर्वेनलायाष्टौवरान्ददुः ॥ प्रत्यक्षदर्शनंयज्ञेगतिंचानुत्तमांशुभाम् ३५ नैषधायददौशक्रःप्रीयमाणःशचीपतिः ॥ अग्निरात्मभवंप्रादाद्यत्रवांछतिनैषधः ३६ लोकानात्मप्रभांश्चैवददौतस्मैहुताशनः ॥ यमस्त्वन्नरसंप्रादाद्धर्मेचपरमांस्थितिम् ३७ अपांपतिरपांभावंयत्रवांछतिनैषधः ॥ स्रजश्चोत्तमगंधाढ्याःसर्वेचमिथुनंददुः ३८ वरानेवंप्रदायास्यदेवास्तेत्रिदिवंगताः ॥ पार्थिवाश्चानुभूयास्यविवाहंविस्मयान्विताः ३९ दमयंत्याश्चमुदिताःप्रतिजग्मुर्यथागतम् ॥ गतेषुपार्थिवेंद्रेषुभीमःप्रीतोमहामनाः ४० विवाहंकारयामासदमयंत्यानलस्यच ॥ उष्यतत्रयथाकामंनैषधोद्विपदांवरः ४१ भीमेनसमनुज्ञातोजगामनगरंस्वकम् ॥ अवाप्यनारीरत्नंतुपुण्यश्लोकोऽपिपार्थिवः ४२ रेमेसहतयाराजन्शच्येवबलवृत्रहा ॥ अतीवमुदितोराजाभ्राजमानोंऽशुमानिव ४३ अरंजयत्प्रजावीरोधर्मेणपरिपालयन् ॥ ईजेचाप्यश्वमेधेनययातिरिवनाहुषः ४४ अन्यैश्चबहुभिर्धीमान्क्रतुभिश्चाप्तदक्षिणैः ॥ पुनश्चरमणीयेषुवनेषूपवनेषुच ४५ दमयंत्यासहनलोविजहारामरोपमः ॥ जनयामासचततोदमयंत्यांमहामनाः ॥ इंद्रसेनंसुतंचापिइंद्रसेनांचकन्यकाम् ४६ एवंसयजमानश्चविहरंश्चनराधिपः ॥ ररक्षवसुसंपूर्णांवसुधांवसुधाधिपः ४७ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिदमयंतीस्वयंवरेसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥

४० उष्यवासंकृत्वा ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीये भारतभावदीपे सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ ॥ ॥ ॥

एवंदेवेभ्योलब्धवरस्य रूपौदार्यादिमतो दमयंतीलाभजंसुखमुक्त्वा तस्यैवसंप्रतिदुर्व्यसनजामापदंवक्तुमुपक्रमते वृतेतुनैषधेइत्यादिना १ । २ । ३ निवृत्तःसमाप्तः ४ । ५ ६ । ७ । ८ । ९ यस्मिन्निति । दाक्ष्यं नित्योत्साहः सत्यमितिपाठेयथार्थभाषणं धृतिर्वाङ्मनःकायानामप्रमादःप्राप्तौतदुत्तंभनार्थेयत्नविशेषोमनोधर्मः ज्ञानंशब्दतोऽर्थतश्च तपःस्वधर्मनिष्ठा शौचंबाह्यंमृज्जलादिजमाभ्यंतरंभावशुद्धिः दमोबाह्येंद्रियनिग्रहः शमोमनोनिग्रहः ध्रुवाणिविघ्नैरप्यबाध्यानि १० । ११ । १२ । १३ । १४ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ एवमिति । समयंसंकेतं १ । २ अन्वा

॥ बृहदश्वउवाच ॥ वृतेतुनैषधेभैम्यालोकपालामहौजसः ॥ यांतोददृशुरायांतंद्वापरंकलिनासह १ अथाब्रवीत्कलिंशक्रःसंप्रेक्ष्यबलवृत्रहा ॥ द्वापरेणसहायेनकलेब्रूहिक्वयास्यसि २ ततोऽब्रवीत्कलिःशक्रंदमयंत्याःस्वयंवरम् ॥ गत्वाहिवरयिष्येतांमनोहिममतांगतम् ३ तमब्रवीत्प्रहस्येंद्रोनिर्वृत्तःसस्वयंवरः ॥ वृतस्तयानलोराजापतिरस्मत्समीपतः ४ एवमुक्तस्तुशक्रेणकलिःकोपसमन्वितः ॥ देवानामंत्र्यतान्सर्वानुवाचेदंवचस्तदा ५ देवानांमानुषंमध्येयत्सापतिमविंदत ॥ तत्रतस्याभवेन्न्याय्यंविपुलंदंडधारणम् ६ एवमुक्तेतुकलिनाप्रत्यूचुस्तेदिवौकसः ॥ अस्माभिःसमनुज्ञातेदमयंत्यानलोवृतः ७ काचसर्वगुणोपेतंनाश्रयेतनलंनृपम् ॥ योवेदधर्मानखिलान्यथावच्चरितव्रतः ८ योऽधीतेचतुरोवेदान्सर्वानाख्यानपंचमान् ॥ नित्यंतृप्तागृहेयस्यदेवायज्ञेषुधर्मतः ॥ अहिंसानिरतोयश्चसत्यवादीदृढव्रतः ९ यस्मिन्दाक्ष्यंधृतिर्ज्ञानंतपःशौचंदमःशमः ॥ ध्रुवाणिपुरुषव्याघ्रेलोकपालसमेनृपे १० एवंरूपंनलंयोवैकामयेच्छपितुंकले ॥ आत्मानंसशपेन्मूढोहन्यादात्मानमात्मना ११ एवंगुणंनलंयोवैकामयेच्छपितुंकले ॥ कृच्छ्रेसनरकेमज्जेदगाधेविपुलेह्रदे ॥ एवमुक्त्वाकलिंदेवाद्वापरंचदिवंययुः १२ ततोगतेषुदेवेषुकलिर्द्वापरमब्रवीत् ॥ संहर्तुंनोत्सहेकोपंनलेवत्स्यामिद्वापर १३ भ्रंशयिष्यामितंराज्यान्नभैम्यासहरंस्यते ॥ त्वमप्यक्षान्समाविश्यसाहाय्यंकर्तुमर्हसि १४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिकलिदेवसंवादेअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥

॥ बृहदश्वउवाच ॥ एवंससमयंकृत्वाद्वापरेणकलिःसह ॥ आजगामततस्तत्रयत्रराजासनैषधः १ सनित्यमंतरप्रेप्सुर्निषधेष्ववसच्चिरम् ॥ अथास्यद्वादशेवर्षेददर्शकलिरंतरम् २ कृत्वामूत्रमुपस्पृश्यसंध्यामन्वास्तनैषधः ॥ अकृत्वापादयोःशौचंतत्रैनंकलिराविशत् ३ ससमाविश्यचनलंसमीपंपुष्करस्यच ॥ गत्वापुष्करमाहेदमेहिदीव्यनलेनवै ४ अक्षद्यूतेनलंजेताभवान्हिसहितोमया ॥ निषधान्प्रतिपद्यस्वजित्वाराज्यंनलंनृपम् ५ एवमुक्तस्तुकलिनापुष्करोनलमभ्ययात् ॥ कलिश्चैववृषोभूत्वागवांपुष्करमभ्ययात् ६ आसाद्यतुनलंवीरंपुष्करःपरवीरहा ॥ दीव्यावेत्यब्रवीद्भ्रातावृषेणेतिमुहुर्मुहुः ७

स्तउपासितवान् सोऽस्नेस्मेतिपाठेसउपास्तेस्मेत्यर्थः आर्षःसंधिः ३ सकलिःनलंसमाविश्य रूपांतरेणपुष्करंचाब्रवीत् दीव्यद्यूतंकुरु ४ । ५ साहाय्यमेवाह कलिश्चेति । गवांवृषः अत्र गोशब्दोलक्षितलक्षणयाऽक्षशब्दवाच्येषुपाशेषुवर्तते वृषःश्रेष्ठः पाशश्रेष्ठोभूत्वा ६ वृषेणाक्षमुख्येन ७

॥ पणकालं द्यूतकालम् ८ यानेषुयुग्यंयुगवहंरथादितस्य ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ नायमस्तिनष्टोऽयमित्यर्थः पुण्यःपावनः श्लोकोयशोयस्य अजीयतजितः १८ ॥ इत्यारण्यके ॥

नचक्षमेततोराजासमाह्वानंमहामनाः ॥ वैदर्भ्याःप्रेक्षमाणायाःपणकालममन्यत ८ हिरण्यस्यसुवर्णस्ययानयुग्यस्यवाससाम् ॥ आविष्टःकलिनाद्यूतेजीयतेस्मन लस्तदा ९ तमक्षमदसंमत्तंसुहृदांनतुकश्चन ॥ निवारणेऽभवच्छक्तोदीव्यमानमरिंदमम् १० ततःपौरजनाःसर्वेमंत्रिभिःसहभारत ॥ राजानंद्रष्टुमागच्छन्निवारयितु मातुरम् ११ ततःसूतउपागम्यदमयंत्यैन्यवेदयत् ॥ एषपौरजनोदेविद्वारितिष्ठतिकार्यवान् १२ निवेद्यतांनैषधायसर्वाःप्रकृतयःस्थिताः ॥ अमृष्यमाणाव्यसनं राज्ञोधर्मार्थदर्शिनः १३ ततःसाबाष्पकलयावाचादुःखेनकर्शिता ॥ उवाचनैषधंभैमीशोकोपहतचेतना १४ राजन्पौरजनोद्वारित्वांदिदृक्षुरवस्थितः ॥ मंत्रिभिः सहितःसर्वैराजभक्तिपुरस्कृतः १५ तंद्रष्टुमर्हसीत्येवंपुनःपुनरभाषत ॥ तांतथारुचिरापांगींविलपंतींतथाविधाम् १६ आविष्टःकलिनाराजानाभ्यभाषतकिंचन ॥ ततस्तेमंत्रिणःसर्वेतेचैवपुरवासिनः १७ नायमस्तीतिदुःखार्ताव्रीडिताजग्मुरालयान् ॥ तथातदभवद्द्यूतंपुष्करस्यनलस्यच ॥ युधिष्ठिरबहून्मासान्पुण्यश्लोकस्त्वजी यत १८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिनलद्यूतेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ बृहदश्वउवाच ॥ दमयन्तीततोदृष्ट्वापुण्यश्लोकंनरा धिपम् ॥ उन्मत्तवदनुन्मत्तादेवनेगतचेतसम् १ भयशोकसमाविष्टाराजन्भीमसुताततः ॥ चिंतयामासतत्कार्यंसुमहत्पार्थिवंप्रति २ साशंकमानातत्पापंचिकीर्षंतीच तत्प्रियम् ॥ नलंचहृतसर्वस्वमुपलभ्येदमब्रवीत् ३ बृहत्सेनामतियशांतांधात्रींपरिचारिकाम् ॥ हितांसर्वार्थकुशलामनुरक्तांसुभाषिताम् ४ बृहत्सेनेव्रजामात्यानाना य्यनलशासनात् ॥ आचक्ष्वयद्धृतंदिव्यमवशिष्टंचयद्वसु ५ ततस्तेमंत्रिणःसर्वेविज्ञायनलशासनम् ॥ अपिनोभागधेयंस्यादित्युक्त्वानलमाव्रजन् ६ तास्तुसर्वाःप्रकृत योद्वितीयंसमुपस्थिताः ॥ न्यवेदयद्भीमसुतानचतत्प्रत्यनंदत ७ वाक्यमप्रतिनंदंतंभर्त्तारमभिवीक्ष्यसा ॥ दमयंतीपुनर्वेश्मव्रीडिताप्रविवेशह ८ निशम्यसततंचाक्षान् पुण्यश्लोकपराङ्मुखान् ॥ नलंचहृतसर्वस्वंधात्रींपुनरुवाचह ९ बृहत्सेनेपुनर्गच्छवार्ष्णेयंनलशासनात् ॥ सूतमानयकल्याणिमहत्कार्यमुपस्थितम् १० बृहत्सेनातु साश्रुत्वादमयंत्याःप्रभाषितम् ॥ वार्ष्णेयमानयामासपुरुषैराप्तकारिभिः ११ वार्ष्णेयंतुततोभैमीसांत्वयञ्छ्लक्ष्णयागिरा ॥ उवाचदेशकालज्ञाप्राप्तकालमनिंदिता १२ जानीषेत्वंयथाराजासम्यग्वृत्तःसदात्वयि ॥ तस्यत्वंविषमस्थस्यसाहाय्यंकर्तुमर्हसि १३ यथायथाहिनृपतिःपुष्करेणैवजीयते ॥ तथातथाऽस्यवैद्यूतेरागोभूयोऽभिव र्धते १४ तथाचपुष्करस्याक्षाःपतंतिवशवर्तिनः ॥ तथाविपर्ययश्चापिनलस्याक्षेषुदृश्यते १५ सुहृत्स्वजनवाक्यानियथावन्नशृणोतिच ॥ ममापिचतथा वाक्यंनाभिनंदतिमोहितः १६

पर्वणिनैलकंठीयेभारतभावदीपे एकोनषष्टितमोऽध्यायः ५९ ॥ ॥ दमयंतीति १ । २ । ३ । ४ । ५ । ६ द्वितीयंद्वितीयवारं ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ विनशेद्विनश्येत्नलइतिशेषः १८ मिथुनंकुमारींकुमारंच कुंडिनंभीमस्यनगरम् १९ । २० मुख्यशोमुख्येषुमुख्येषु २१ वाहिनाअश्वरथेन २२ । २३ अटमानोवेतनार्थीपर्यटन् २४भृतिंवेतनम् २५

नूनंमन्येनदोषोऽस्तिनैषधस्यमहात्मनः ॥ यत्तुमेवचनंराजानाभिनंदतिमोहितः १७ शरणंत्वांप्रपन्नास्मिसारथेकुरुमद्वचः ॥ नहिमेशुध्यतेभावःकदाचिद्विनशेदपि १८ नलस्यदयितानश्वान्योजयित्वामनोजवान् ॥ इदमारोप्यमिथुनंकुंडिनंयातुमर्हसि १९ ममज्ञातिषुनिक्षिप्यदारकौस्यंदनंतथा ॥ अश्वांश्चेमान्यथाकामंवसवाऽन्यत्रगच्छवा २० दमयंत्यास्तुतद्वाक्यंवार्ष्णेयोनलसारथिः ॥ न्यवेदयदशेषेणनलामात्येषुमुख्यशः २१ तैःसमेत्यविनिश्चित्यसोनुज्ञातोमहीपते ॥ ययौमिथुनमारोप्यविदर्भांस्तेनवाहिना २२ हयांस्तत्रविनिक्षिप्यसूतोरथवरंचतम् ॥ इंद्रसेनांचतांकन्यामिंद्रसेनंचबालकम् २३ आमंत्र्यभीमंराजानमार्तःशोचन्नलंनृपम् ॥ अटमानस्ततोऽयोध्यांजगामनगरींतदा २४ ऋतुपर्णंसराजानमुपतस्थेसुदुःखितः ॥ भृतिंचोपययौतस्यसारथ्येनमहीपते २५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिकुंडिनंप्रतिकुमारकुमारीप्रस्थापनेषष्टितमोऽध्यायः ६० ॥ ॥ बृहदश्वउवाच ॥ ततस्तुयातेवार्ष्णेयेपुण्यश्लोकस्यदीव्यतः ॥ पुष्करेणहृतंराज्यंयच्चान्यद्वसुकिंचन १ हृतराज्यंनलंराजन्प्रहसन्पुष्करोऽब्रवीत् ॥ द्यूतंप्रवर्ततांभूयःप्रतिपाणोऽस्तिकस्तव २ शिष्टातेदमयंत्येकासर्वमन्यज्जितंमया ॥ दमयंत्याःपणःसाधुवर्त्ततांयदिमन्यसे ३ पुष्करेणैवमुक्तस्यपुण्यश्लोकस्यमन्युना ॥ व्यदीर्यतेवहृदयंनचैनंकिंचिदब्रवीत् ४ ततःपुष्करमालोक्यनलःपरममन्युमान् ॥ उत्सृज्यसर्वगात्रेभ्योभूषणानिमहायशाः ५ एकवासाह्यसंवीतःसुहृच्छोकविवर्धनः ॥ निश्चक्रामततोराजात्यक्त्वासुविपुलांश्रियम् ६ दमयंत्येकवस्त्राऽथगच्छंतंपृष्ठतोऽन्वगात् ॥ सतयाबाह्यतःसार्धंत्रिरात्रंनैषधोऽवसत् ७ पुष्करस्तुमहाराजघोषयामासवैपुरे ॥ नलेयःसम्यगातिष्ठेत्सगच्छेद्वध्यतांमम ८ पुष्करस्यतुवाक्येनतस्यविद्वेषणेनच ॥ पौरानतस्यसत्कारंकृतवंतोयुधिष्ठिर ९ सतथानगराभ्यासेसत्कारार्होनसत्कृतः ॥ त्रिरात्रमुषितोराजाजलमात्रेणवर्तयन् १० पीड्यमानःक्षुधातत्रफलमूलानिकर्षयन् ॥ प्रातिष्ठतततोराजादमयंतीतमन्वगात् ११ क्षुधयापीड्यमानस्तुनलोबहुतिथेऽहनि ॥ अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् १२ सचिंतयामासतदानिषधाधिपतिर्बली ॥ अस्तिभक्ष्योममाद्यायंवसुचेदंभविष्यति १३ ततस्तान्परिधानेनवाससासससमावृणोत् ॥ तस्यतद्वस्त्रमादायसर्वेजग्मुर्विहायसा १४ उत्पतंतःखगावाक्यमेतदाहुस्ततोनलम् ॥ दृष्ट्वादिग्वाससंभूमौस्थितंदीनमधोमुखम् १५ वयमक्षाःसुदुर्बुद्धेतववासोजिहीर्षवः ॥ आगतानहिनःप्रीतिःसवाससिगतेत्वयि १६ तान्समीपगतानक्षानात्मानंचविवाससम् ॥ पुण्यश्लोकस्तदाराजन्दमयंतीमथाब्रवीत् १७ येषांप्रकोपादैश्वर्यात्प्रच्युतोऽहमनिंदिते ॥ प्राणयात्रांनविंदेयंदुःखितःक्षुधयान्वितः १८

॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेषष्टितमोऽध्यायः ॥ ६० ॥ ॥ ॥ ॥ ॥ ततइति १ प्रतिपाणःपणनीयंद्रव्यम् २ । ३ । ४ । ५ । ६ तयासार्धंबाह्यतःबहिः ७ ८ तस्यनलस्य ९ नगराभ्याशे नगरसमीपे १० । ११ । १२ १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० अलमत्यर्थम् ३१ । ३२ अपकृष्टेनकलिकर्षितेन ३३ । ३४ । ३५ यद्यपिपूजयिष्यतितथापित्वंसुखंनोवत्स्यसि



येषांकृतेनसत्कारमकुर्वन्मयिनैषधाः ॥ इमेतेशकुनाभूत्वावासोभीरुहरंतिमे १९ वैषम्यंपरमंप्राप्तोदुःखितोगतचेतनः ॥ भर्त्तातेऽहंनिबोधेदंवचनंहितमात्मनः २० एतेगच्छंतिबहवःपंथानोदक्षिणापथम् ॥ अवंतीमृक्षवंतंचसमतिक्रम्यपर्वतम् २१ एषविंध्योमहाशैलःपयोष्णीचसमुद्रगा ॥ आश्रमाश्वमहर्षीणांबहुमूलफलान्विताः २२ एषपंथाविदर्भाणामसौगच्छतिकोसलान् ॥ अतःपरंचदेशोऽयंदक्षिणेदक्षिणापथः २३ एतद्वाक्यंनलोराजादमयंतींसमाहितः ॥ उवाचासकृदार्तोहिभैमीमुद्दिश्यभारत २४ ततःसाबाष्पकलयावाचादुःखेनकर्षिता ॥ उवाचदमयंतीतंनैषधंकरुणंवचः २५ उद्वेजतेमेहृदयंसीदंत्यंगानिसर्वशः ॥ तवपार्थिवसंकल्पंचिंतयंत्याःपुनःपुनः २६ हृतराज्यंहृतद्रव्यंविवस्त्रंक्षुच्छ्रमान्वितम् ॥ कथमुत्सृज्यगच्छेयमहंत्वांनिर्जनेवने २७ श्रांतस्यतेक्षुधार्त्तस्यचिंतयानस्यतत्सुखम् ॥ वनेघोरेमहाराजनाशयिष्याम्यहंक्लमम् २८ नचभार्यासमंकिंचिद्विद्यतेभिषजांमतम् ॥ औषधंसर्वदुःखेषुसत्यमेतद्ब्रवीमिते २९ ॥ नलउवाच ॥ एवमेतद्यथात्थत्वंदमयंतिसुमध्यमे ॥ नास्तिभार्यासमंमित्रंनरस्यार्त्तस्यभेषजम् ३० नचाहंत्यक्तुकामस्त्वांकिमलंभीरुशंकसे ॥ त्यजेयमहमात्मानंनचैवत्वामनिंदिते ३१ ॥ दमयंत्युवाच ॥ यदिमांत्वंमहाराजनविहातुमिहेच्छसि ॥ तत्किमर्थंविदर्भाणांपंथाःसमुपदिश्यते ३२ अवैमिचाहंनृपतेनतुमांत्यक्तुमर्हसि ॥ चेतसात्वपकृष्टेनमांत्यजेथामहीपते ३३ पंथानंहिममाभीक्ष्णमाख्यासिचनरोत्तम ॥ अतोनिमित्तंशोकंमेवर्धयस्यमरोपम ३४ यदिचायमभिप्रायस्तवज्ञातीन्व्रजेदिति ॥ सहितावेवगच्छावोविदर्भान्यदिमन्यसे ३५ विदर्भराजस्तत्रत्वांपूजयिष्यतिमानद ॥ तेनत्वंपूजितोराजन्सुखंवत्स्यसिनोगृहे ३६ ॥ इ० महाभारतेआरण्यके० नलोपाख्यानप० नलवनयात्रायामेकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ नलउवाच ॥ यथाराज्यंतवपितुस्तथाममनसंशयः ॥ नतुतत्रगमिष्यामिविषमस्थःकथंचन १ कथंसमृद्धोगत्वाऽहंतवहर्षविवर्धनः ॥ परिच्युतोगमिष्यामितवशोकविवर्धनः २ ॥ बृहदश्वउवाच ॥ इतिब्रुवन्नलोराजादमयंतींपुनःपुनः ॥ सांत्वयामासकल्याणींवाससोर्धेनसंवृताम् ३ तावेकवस्त्रसंवीतावटमानावितस्ततः ॥ क्षुत्पिपासापरिश्रांतौसभांकांचिदुपेयतुः ४ तांसभामुपसंप्राप्यतदासनिषधाधिपः ॥ वैदर्भ्यासहितोराजानिषसादमहीतले ५ सवैविवस्त्रोविकटोमलिनःपांसुगुंठितः ॥ दमयंत्यासहश्रांतःसुष्वापधरणीतले ६ दमयंत्यपिकल्याणीनिद्रयाऽपहृताततः ॥ सहसादुःखमासाद्यसुकुमारीतपस्विनी ७ सुप्तायांदमयंत्यांतुनलोराजाविशांपते ॥ शोकोन्मथितचित्तात्मानस्मशेतेयथापुरा ८



नवासंकरिष्यसि श्वशुरगृहवासस्यनीचतावहत्वात् ३६ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेएकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ॥ ॥ एतदेवसमर्थयन्नलउवाच यथेति १ । २ । ३ पाठांतरेउपोषतुः उपेत्यवासंचक्रतुः ४ । ५ विकटः कटस्तृणासनंतद्रहितः अतएवपांसुगुंठितः ६ । ७ । ८

परिध्वंसं कालिनावस्त्रापहरणादिक्लेशम् ९ जनस्यपरिशेषाद्भार्यायाएव १० । ११ । १२ । १३ । १४ दमयंत्यांविषयेन्यवर्त्ततनिवृत्तासतीविसर्जनेऽभूदितिशेषः १५ । १६ । १७ । १८ निवस्यपरिधाय

सतद्राज्यापहरणंसुहृत्त्यागंचसर्वशः ॥ वनेचतंपरिध्वंसंप्रेक्ष्यचिंतामुपेयिवान् ९ किंनुमेस्यादिदंकृत्वाकिंनुमेस्यादकुर्वतः ॥ किंनुमेमरणंश्रेयःपरित्यागोजनस्यवा १० मामियंह्यनुरक्तैवंदुःखमाप्नोतिमत्कृते ॥ मद्विहीनात्वियंगच्छेत्कदाचित्स्वजनंप्रति ११ मयिनिःसंशयंदुःखमियंप्राप्स्यत्यनुव्रता ॥ उत्सर्गेसंशयःस्यात्तुविंदेतापिसुखंक्वचित् १२ सविनिश्चित्यबहुधाविचार्यचपुनःपुनः ॥ उत्सर्गमन्यतेश्रेयोदमयंत्यानराधिप १३ नचैषातेजसाशक्याकैश्चिद्धर्षयितुंपथि ॥ यशस्विनीमहाभागामद्भक्तेयंपतिव्रता १४ एवंतस्यतदाबुद्धिर्दमयंत्यांन्यवर्त्तत ॥ कलिनादुष्टभावेनदमयंत्याविसर्जने १५ सोऽवस्त्रतामात्मनश्चतस्याश्चाप्येकवस्त्रताम् ॥ चिंतयित्वाऽध्यगाद्राजावस्त्रार्धस्यावकर्त्तनम् १६ कथंवासोविकर्तेयंनचबुद्ध्येतमेप्रिया ॥ विचिंत्यैवंनलोराजासभांपर्यचरत्तदा १७ परिधावन्नथनलइतश्चेतश्चभारत ॥ आससादसभोद्देशेविकोशंखड्गमुत्तमम् १८ तेनार्धंवाससश्छित्त्वानिवस्यचपरंतपः ॥ सुप्तामुत्सृज्यवैदर्भींप्राद्रवद्गतचेतनाम् १९ ततोनिवृत्तहृदयःपुनरागम्यतांसभाम् ॥ दमयंतींतदादृष्ट्वारुरोदनिषधाधिपः २० यांनवायुर्नचादित्यःपुरापश्यतिमेप्रियाम् ॥ सेयमद्यसभामध्येशेतेभूमावनाथवत् २१ इयंवस्त्रावकर्तेनसंवीताचारुहासिनी ॥ उन्मत्तेववरारोहाकथंबुद्ध्वाभविष्यति २२ कथमेकासतीभैमीमयाविरहिताशुभा ॥ चरिष्यतिवनेघोरेमृगव्यालनिषेविते २३ आदित्यावसवोरुद्राअश्विनौसमरुद्गणौ ॥ रक्षंतुत्वांमहाभागेधर्मेणासिसमावृता २४ एवमुक्त्वाप्रियांभार्यांरूपेणाप्रतिमांभुवि ॥ कलिनाऽपहृतज्ञानोनलःप्रातिष्ठदुद्यतः २५ गत्वागत्वानलोराजापुनरेतिसभांमुहुः ॥ आकृष्यमाणःकलिनासौहृदेनावकृष्यते २६ द्विधेवहृदयंतस्यदुःखितस्याभवत्तदा ॥ दोलेवमुहुरायातियातिचैवसभांप्रति २७ अवकृष्टस्तुकलिनामोहितःप्राद्रवन्नलः ॥ सुप्तामुत्सृज्यतांभार्यांविलप्यकरुणंबहु २८ नष्टात्माकलिनास्पृष्टस्तत्तद्विगणयन्नृपः ॥ जगामैकांवनेशून्येभार्यामुत्सृज्यदुःखितः २९ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिदमयंतीपरित्यागेद्विषष्टितमोध्यायः ॥ ६२ ॥ ॥ बृहदश्वउवाच ॥ अपक्रांतेनलेराजन्दमयंतीगतक्लमा ॥ अबुध्यतवरारोहासंत्रस्ताविजनेवने १ अपश्यमानाभर्त्तारंशोकदुःखसमन्विता ॥ प्राक्रोशदुच्चैःसंत्रस्तामहाराजेतिनैषधम् २ हानाथहामहाराजहास्वामिन्किंजहासिमाम् ॥ हाहताऽस्मिविनष्टास्मिभीताऽस्मिविजनेवने ३ ननुनाममहाराजधर्मज्ञःसत्यवागसि ॥ कथमुक्तातथासत्यंसुप्तामुत्सृज्यकानने ४ कथमुत्सृज्यगंताऽसिदक्षांभार्यामनुव्रताम् ॥ विशेषतोऽनपकृतेपरेणापकृतेसति ५

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ ॥ ॥ इत्यारण्यकेपर्वणिनै०द्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ अपेति १ । २ । ३ तथासत्यंयत्स्वयंवरेउक्तं त्वांनत्यक्ष्यामीति ४ अनपकृते अपकाराभावे ५

शक्यसेतागिरःसन्त्यक्तुंमयिनरेश्वर ॥ यास्तेषांलोकपालानांसन्निधौकथिताःपुरा ६ नाकालेविहितोमृत्युर्मर्त्यानांपुरुषर्षभ ॥ यत्रकांतात्वयोत्सृष्टामुहूर्त्तमपिजीवति ७ पर्याप्तःपरिहासोऽयमेतावान्पुरुषर्षभ ॥ भीताऽहमतिदुर्धर्षदर्शयात्मानमीश्वर ८ दृश्यसेदृश्यसेराजन्नेषदृष्टोसिनैषध ॥ आवार्यगुल्मैरात्मानंकिंमांनप्रतिभाषसे ९ नृशंसंबतराजेंद्रयन्मामेवंगतामिह ॥ विलपंतींसमागम्यनाश्वासयसिपार्थिव १० नशोचाम्यहमात्मानंनचान्यदपिकिंचन ॥ कथंतुभवितास्येकइतित्वांनृपशोचिमि ११ कथंनुराजंस्तृषितःक्षुधितःश्रमकर्षितः ॥ सायान्हेवृक्षमूलेषुमामपश्यन्भविष्यसि १२ ततःसातीव्रशोकार्त्ताप्रदीप्तेवचमन्युना ॥ इतश्चेतश्चरुदतीपर्यधावतदुःखिता १३ मुहुरुत्पततेबालामुहुःपततिविह्वला ॥ मुहुरालीयतेभीतामुहुःक्रोशतिरोदिति १४ अतीवशोकसंतप्तामुहुर्निःश्वस्यविह्वला ॥ उवाचभैमीनिःश्वस्यरुदत्यथपतिव्रता १५ यस्याभिशापाद्दुःखार्तोदुःखंविंदतिनैषधः ॥ तस्यभूतस्यनोदुःखाद्दुखमप्यधिकंभवेत् १६ अपापचेतसंपापोयएवंकृतवान्नलम् ॥ तस्माद्दुःखतरंप्राप्यजीवत्वसुखजीविकाम् १७ एवंतुविलपंतीसाराज्ञोभार्यामहात्मनः ॥ अन्वेषमाणाभर्तारंवनेश्वापदसेविते १८ उन्मत्तवद्भीमसुताविलपंतीइतस्ततः ॥ हाहाराजन्नितिमुहुरितश्चेतश्चधावति १९ तांक्रंदमानामत्यर्थंकुररीमिववाशतीम् ॥ करुणंबहुशोचंतींविलपंतींमुहुर्मुहुः २० सहसाऽभ्यागतांभैमीमभ्यासपरिवर्तिनीम् ॥ जग्राहाजगरोग्राहोमहाकायःक्षुधान्वितः २१ साग्रस्यमानाग्राहेणशोकेनचपरिप्लुता ॥ नात्मानंशोचतितथायथाशोचतिनैषधम् २२ हानाथमामिहवनेग्रस्यमानामनाथवत् ॥ ग्राहेणानेनविजनेकिमर्थंनानुधावसि २३ कथंभविष्यसिपुनर्मामनुस्मृत्यनैषध ॥ कथंभवान्जगामाद्यमामुत्सृज्यवनेप्रभो २४ पापान्मुक्तःपुनर्लब्ध्वाबुद्धिंचेतोधनानिच ॥ श्रांतस्यतेक्षुधार्तस्यपरिग्लानस्यनैषध ॥ कःश्रमंराजशार्दूलनाशयिष्यतितेऽनघ २५ ततःकश्चिन्मृगव्याधोविचरन्गहनेवने ॥ आक्रंदमानांसंश्रुत्यजवेनाभिससारह २६ तांतुदृष्ट्वातथाग्रस्तामुरगेणायतेक्षणाम् ॥ त्वरमाणोमृगव्याधःसमभिक्रम्यवेगतः २७ मुखतःपाटयामासशस्त्रेणनिशितेनच ॥ निर्विचेष्टंभुजंगंतंविशस्यमृगजीवनः २८ मोक्षयित्वासतांव्याधःप्रक्षाल्यसलिलेनह ॥ समाश्वास्यकृताहारामथपप्रच्छभारत २९ कस्यत्वंमृगशावाक्षिकथंचाभ्यागतावनम् ॥ कथंचेदंमहत्कृच्छ्रंप्राप्तवत्यसिभाविनि ३० दमयंतीतथातेनपृच्छ्यमानाविशांपते ॥ सर्वमेतद्यथावृत्तमाचचक्षेऽस्यभारत ३१ तामर्धवस्त्रसंवीतांपीनश्रोणिपयोधराम् ॥ सुकुमारानवद्यांगींपूर्णचंद्रनिभाननाम् ३२ अरालपक्ष्मनयनांतथामधुरभाषिणीम् ॥ लक्षयित्वामृगव्याधःकामस्यवशमीयिवान् ३३

म. भा. टी. ६ । ७ । ८ । ९ । १० शोचिमिशोचामि ११ । १२ मन्युनाशोकेन १३ । १४ । १५ कलिशपति यस्येति । अभिशापात् वृथाद्वेषात् नोदुःखात् अस्मत्संबंधिदुःखात् १६ । १७ । १८ । १९ वाशतीं क्रोशंतीं २० ग्राहःसर्पः अजगरः तद्वत्स्थूलः २१ । २२ । २३ बुद्धिलाभादूर्ध्वंमांविनाकथंभविष्यसि कथंजीविष्यसि २४ । २५ । २६ । २७ विशस्यविदार्य २८ । २९ । ३० । ३१ । ३२ अरालानि कुटिलानि शोभमानानिवा पक्ष्माणिमयनप्रांतकेशाययोस्ताद्दशेनयनेयस्याइतितथा ३३

३४ मन्युनाक्रोधेन ३५ । ३६ पतिराज्यविनाकृता पत्याराज्येनचरहिता अतीतवाक्पथेवाचाप्यनिवार्येसति कालेधूम्रवर्णेव्याधे ३७ परासुर्गतप्राणः ३८ व्यसुर्विगतप्राणः ३९ ॥ ॥ इत्यारण्यकेपर्वणि

तामेवंश्लक्ष्णयावाचालुब्धकोमृदुपूर्वया ॥ सांत्वयामासकामार्तस्तदबुध्यतभाविनी ३४ दमयंत्यपितंदुष्टमुपलभ्यपतिव्रता ॥ तीव्ररोषसमाविष्टाप्रजज्वालेव मन्युना ३५ सतुपापमतिःक्षुद्रःप्रधर्षयितुमातुरः ॥ दुर्धर्षांतर्कयामासदीप्तामग्निशिखामिव ३६ दमयंतीतुदुःखार्तापतिराज्यविनाकृता ॥ अतीतवाक्पथेकाले शशापैनंरुषाऽन्विता ३७ यद्यहंनैषधादन्यंमनसाऽपिनचिंतये ॥ तथाऽयंपततांक्षुद्रोपरासुर्मृगजीवनः ३८ उक्तमात्रेतुवचनेतथासमृगजीवनः ॥ व्यसुःपपातमेदिन्या मग्निदग्धइवद्रुमः ३९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिअजगरग्रस्तदमयंतीमोचनेत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ बृहदश्वउवाच ॥ सानिहत्यमृगव्याधंप्रतस्थेकमलेक्षणा ॥ वनंप्रतिभयंशून्यंझिल्लिकागणनादितम् १ सिंहद्वीपिरुरुव्याघ्रमहिषर्क्षगणैर्युतम् ॥ नानापक्षिगणाकीर्णंम्लेच्छतस्करसे वितम् २ शालवेणुधवाश्वत्थतिंदुकेंगुदकिंशुकैः ॥ अर्जुनारिष्टसंछन्नंस्यंदनैश्वसशाल्मलैः ३ जंब्वाम्रलोध्रखदिरसालवेत्रसमाकुलम् ॥ पद्मकामलकप्लक्षकदंबो दुंबरावृतम् ४ बदरीबिल्वसंछन्नंन्यग्रोधैश्वसमाकुलम् ॥ प्रियालतालखर्जूरहरीतकिबिभीतकैः ५ नानाधातुशतैर्नद्धान्विविधानपिचाचलान् ॥ निकुंजान्परिसंघु ष्टान्दरीश्चाद्भुतदर्शनाः ६ नदीःसरांसिवापीश्चविविधांश्चमृगद्विजान् ॥ साबहून्भीमरूपांश्चपिशाचोरगराक्षसान् ७ पल्वलानितडागानिगिरिकूटानिसर्वशः ॥ सरितोनिर्झरांश्चैवददर्शाद्भुतदर्शनान् ८ यूथशोददृशेचात्रविदर्भाधिपनंदिनी ॥ महिषांश्चवराहांश्चऋक्षांश्चवनपन्नगान् ९ तेजसायशसालक्ष्म्यास्थित्याचपरयायुता ॥ वैदर्भीविचरत्येकानलमन्वेषतीतदा १० नाबिभ्यत्सानृपसुताभैमीतत्राथकस्यचित् ॥ दारुणामटवींप्राप्यभर्तृव्यसनपीडिता ११ विदर्भतनयाराजन्विललापसु दुःखिता ॥ भर्तृशोकपरीतांगीशिलातलमथाश्रिता १२ ॥ दमयंत्युवाच ॥ व्यूढोरस्कमहाबाहोनैषधानांजनाधिप ॥ क्वनुराजन्गतोऽस्यद्यविसृज्य विजनेवने १३ अश्वमेधादिभिर्वीरक्रतुभिर्भूरिदक्षिणैः ॥ कथमिष्ट्वानरव्याघ्रमयिमिथ्याप्रवर्तसे १४ यत्त्वयोक्तंनरश्रेष्ठमत्समक्षंमहाद्युते ॥ स्मर्तुमर्हसिकल्याण वचनंपार्थिवर्षभ १५ यच्चोक्तंविहगैर्हंसैःसमीपेतवभूमिप ॥ मत्समक्षंयदुक्तंचतदवेक्षितुमर्हसि १६ चत्वारएकतोवेदाःसांगोपांगाःसविस्तराः ॥ स्वधीतामनुज व्याघ्रसत्यमेकंकिलैकतः १७ तस्मादर्हसिशत्रुघ्नसत्यंकर्तुंनरेश्वर ॥ उक्तवानसियद्वीरमत्सकाशेपुरावचः १८ हावीरनलनामाहंनष्टाकिलतवानघ ॥ अस्यामट व्यांघोरायांकिंमांनप्रतिभाषसे १९ कर्षयत्येषमांरौद्रोव्यात्तास्योदारुणाकृतिः ॥ अरण्यराट्क्षुधाविष्टःकिंमांनत्रातुमर्हसि २० नमेत्वदन्याकाचिद्धिप्रियाऽस्ती त्यब्रवीःसदा ॥ तामृतांकुरुकल्याणपुरोक्तांभारतींनृप २१

नैलकंठीयेभारतभावदीपेत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ सेति । प्रतिभयंभीषणं झिल्लिकातीक्ष्णशब्दःपतंगविशेषः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ अरण्यराट्शार्दूलः मांममचित्तंकर्षयतिव्यथयति २० । २१

२२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ परव्यूहाःशत्रुसैन्यानि । परव्यसनेतिपाठेपरेषांदुःखस्यनाशनम् ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

उन्मत्तांविलपंतींमांभार्यामिष्टांनराधिप ॥ इप्सितामीप्सितोऽसित्वंकिंमांनप्रतिभाषसे २२ कृशांदीनांविवर्णांचमलिनांवसुधाधिप ॥ वस्त्रार्धप्रावृतामेकांविलपंतीमनाथवत् २३ यूथभ्रष्टामिवैकांमांहरिणींपृथुलोचन ॥ नमानयसिमामार्यरुदंतीमरिकर्शन २४ महाराजमहारण्येअहमेकाकिनीसती ॥ दमयंत्यभिभाषेत्वांकिंमांनप्रतिभाषसे २५ कुलशीलोपसंपन्नचारुसर्वांगशोभन ॥ नाद्यत्वांप्रतिपश्यामिगिरावस्मिन्नरोत्तम २६ वनेचास्मिन्महाघोरेसिंहव्याघ्रनिषेविते ॥ शयानमुपविष्टंवास्थितंवानिषधाधिप २७ प्रस्थितंवानरश्रेष्ठममशोकविवर्धन ॥ कंनुपृच्छामिदुःखार्तात्वदर्थेशोककर्शिता २८ कच्चिद्दृष्टस्त्वयाऽऽरण्येसंगत्येहनलोनृपः ॥ कोनुमेवाऽथप्रष्टव्योवनेऽस्मिन्प्रस्थितंनलम् २९ अभिरूपंमहात्मानंपरव्यूहविनाशनम् ॥ यमन्वेषसिराजानंनलंपद्मनिभेक्षणम् ३० अयंसइतिकस्याद्यश्रोष्यामिमधुरांगिरम् ॥ अरण्यराडयंश्रीमांश्चतुर्दंष्ट्रोमहाहनुः ३१ शार्दूलोऽभिमुखोऽभ्येतिव्रजाम्येनमशंकिता ॥ भवान्मृगाणामधिपस्त्वमस्मिन्काननेप्रभुः ३२ विदर्भराजतनयांदमयंतीतिविद्धिमाम् ॥ निषधाधिपतेर्भार्यांनलस्यामित्रघातिनः ३३ पतिमन्वेषतीमेकांकृपणांशोककर्षिताम् ॥ आश्वासयमृगेंद्रेहयदिदृष्टस्त्वयानलः ३४ अथवात्वंवनपतेनलंयदिनशंससि ॥ मांखादयमृगश्रेष्ठदुःखादस्माद्विमोचय ३५ श्रुत्वाऽरण्येविलपितंनमामाश्वासयत्ययम् ॥ यामिमांस्वादुसलिलामापगांसागरंगमाम् ३६ इमंशिलोच्चयंपुण्यंशृंगैर्बहुभिरुच्छ्रितैः ॥ विराजद्भिरिवानेकैर्नैकवर्णैर्मनोरमैः ३७ नानाधातुसमाकीर्णंविविधोपलभूषितम् ॥ अस्यारण्यस्यमहतःकेतुभूतमिवोत्थितम् ३८ सिंहशार्दूलमातंगवराहर्क्षमृगायुतम् ॥ पतत्रिभिर्बहुविधैःसमंतादनुनादितम् ३९ किंशुकाशोकबकुलपुन्नागैरुपशोभितम् ॥ कर्णिकारधवप्लक्षैःसुपुष्पैरुपशोभितम् ४० सरिद्भिःसविहंगाभिःशिखरैश्चसमाकुलम् ॥ गिरिराजमिमंतावत्पृच्छामिनृपतिंप्रति ४१ भगवन्नचलश्रेष्ठदिव्यदर्शनविश्रुत १ शरण्यबहुकल्याणनमस्तेऽस्तुमहीधर ४२ प्रणमेत्वाऽभिगम्याहंराजपुत्रींनिबोधमाम् ॥ राज्ञःस्नुषांराजभार्यांदमयंतीतिविश्रुताम् ४३ राजाविदर्भाधिपतिःपितामममहारथः ॥ भीमोनामक्षितिपतिश्चातुर्वर्ण्यस्यरक्षिता ४४ राजसूयाश्वमेधानांक्रतूनांदक्षिणावताम् ॥ आहर्त्तापार्थिवश्रेष्ठःपृथुचार्वंचितेक्षणः ४५ ब्रह्मण्यःसाधुवृत्तश्चसत्यवागनसूयकः ॥ शीलवान्वीर्यसंपन्नःपृथुश्रीर्धर्मविच्छुचिः ४६ सम्यग्गोप्ताविदर्भाणांनिर्जितारिगणःप्रभुः ॥ तस्यमांविद्धितनयांभगवंस्त्वामुपस्थिताम् ४७ निषधेषुमहाराजःश्वशुरोमेनरोत्तमः ॥ गृहीतनामाविख्यातोवीरसेनइतिस्मह ४८ तस्यराज्ञःसुतोवीरःश्रीमान्सत्यपराक्रमः ॥ क्रमप्राप्तंपितुःस्वंयोराज्यंसमनुशास्तिह ४९ नलोनामाऽरिहाश्यामःपुण्यश्लोकइतिश्रुतः ॥ ब्रह्मण्योवेदविद्वाग्मीपुण्यकृत्सोमपोऽग्निमान् ५०

४३ । ४४ । ४५ ब्रह्मण्यः ब्रह्मणि ब्राह्मणजातौ वेदे वैदिककर्मणि परमात्मनिवा साधुः ४६ । ४७ । ४८ । ४९ अग्निमान् । नित्ययोगेमतुप् सर्वदैवाग्निविच्छेदशून्यइत्यर्थः ५०

५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ आम्नायसारिणींवेदानुगांसत्यामित्यर्थः ऋद्धामदीनां आश्वासयतेतिवहुत्वंवक्तुर्वैक्लव्यात्नदोषावहम् ५९ । ६० । ६१ । ६२ अब्भक्षैरिति सर्व

यष्टादाताचयोद्धाचसम्यक्चैवप्रशासिता ॥ तस्यमामबलांश्रेष्ठांविद्धिभार्यामिहागताम् ५१ त्यक्तश्रियंभर्तृहीनामनाथांव्यसनान्विताम् ॥ अन्वेषमाणाभर्तारंत्वंमां पर्वतसत्तम ५२ समुल्लिखद्भिरेतैर्हित्वयाशृंगशतैर्नृपः ॥ कच्चिद्दृष्टोऽचलश्रेष्ठवनेऽस्मिन्दारुणेनलोनृपः ५३ गजेंद्रविक्रमोधीमान्दीर्घबाहुरमर्षणः ॥ विक्रांतःसत्त्ववान्वीरो भर्ताममहायशाः ५४ निषधानामधिपतिःकच्चिद्दृष्टस्त्वयानलः ॥ किंमांविलपतीमेकांपर्वतश्रेष्ठविह्वलाम् ५५ गिरानाश्वासयस्यद्यस्वांसुतामिवदुःखिताम् ॥ वीरविक्रांतधर्मज्ञसत्यसंधमहीपते ५६ यद्यस्यस्मिन्वनेराजन्दर्शयात्मानमात्मना ॥ कदासुस्निग्धगंभीरांजीमूतस्वनसन्निभाम् ५७ श्रोष्यामिनैषधस्याहंवाचं तामनृतोपमाम् ॥ वैदर्भीत्येवविस्पष्टांशुभांराज्ञोमहात्मनः ५८ आम्नायसारिणीमृद्धांममशोकविनाशिनीम् ॥ भीतामाश्वासयतमांनृपतेधर्मवत्सल ५९ इतिसा तंगिरिश्रेष्ठमुक्त्वापार्थिवनंदिनी ॥ दमयंतीततोभूयोजगामदिशमुत्तराम् ६० सागत्वात्रीनहोरात्रान्ददर्शपरमांगना ॥ तापसारण्यमतुलंदिव्यकाननशोभितम् ६१ वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ॥ नियतैःसंयताहारैर्दमशौचसमन्वितैः ६२ अब्भक्षैर्वायुभक्षैश्चपत्राहारैस्तथैवच ॥ जितेंद्रियैर्महाभागैःस्वर्गमार्गदिदृक्षुभिः ६३ वल्कलाजिनसंवीतैर्मुनिभिःसंयतेंद्रियैः ॥ तापसाध्युषितंरम्यंददर्शाश्रममंडलम् ६४ नानामृगगणैर्जुष्टंशाखामृगगणायुतम् ॥ तापसैःसमुपेतंच सादृष्ट्वैवसमाश्वसत् ६५ सुभ्रूःसुकेशीसुश्रोणीसुकुचासुद्विजानना ॥ वर्चस्विनीसुप्रतिष्ठास्वसितायतलोचना ६६ साविवेशाश्रमपदंवीरसेनसुतप्रिया ॥ योषिद्रत्नंमहाभागादमयंतीतपस्विनी ६७ साऽभिवाद्यतपोवृद्धान्विनयावनतास्थिता ॥ स्वागतंतइतिप्रोक्तातैःसर्वैस्तापसोत्तमैः ६८ पूजांचास्याययथान्यायंकृत्वा तत्रतपोधनाः ॥ आस्यतामित्यथोचुस्तेब्रूहिकिंकरवामहे ६९ तानुवाचवरारोहाकच्चिद्भगवतामिह ॥ तपःस्वग्निषुधर्मेषुमृगपक्षिषुचानघाः ७० कुशलंवो महाभागाःस्वधर्माचरणेषुच ॥ तैरुक्ताकुशलंभद्रेसर्वत्रेतियशस्विनी ७१ ब्रूहिसर्वानवद्यांगिकात्वंकिंचचिकीर्षसि ॥ दृष्ट्वैवतेपरंरूपंद्युतिंचपरमामिह ७२ विस्मयोनःसमुत्पन्नःसमाश्वसिहिमाशुचः ॥ अस्यारण्यस्यदेवीत्वमुताहोऽस्यमहीभृतः ७३ अस्याश्चनद्याःकल्याणिवदसत्यमनिंदिते ॥ साऽब्रवीत्तानृषीन्नाहमरण्यस्यास्यदेवता ७४ नचाप्यस्यगिरेर्विप्रानैवनद्याश्चदेवता ॥ मानुषींमांविजानीतयूयंसर्वेतपोधनाः ७५ विस्तरेणाभिधास्यामितन्मेशृणुतसर्वशः ॥ विदर्भेषु महीपालोभीमोनाममहीपतिः ७६ तस्यमांतनयांसर्वेजानीतद्विजसत्तमाः ॥ निषधाधिपतिर्धीमान्नलोनाममहायशाः ७७ वीरःसंग्रामजिद्विद्वान्ममभर्ताविशांपतिः ॥ देवताभ्यर्चनपरोद्विजातिजनवत्सलः ७८

वाक्यंसावधारणमितिन्यायेनअंबुमात्रभक्षैरित्यर्थः ६३ । ६४ । ६५ सुद्विजाननाशोभनदंतयुक्तमुखी वर्चस्विनीधर्मजेनतेजसायुक्ता सुप्रतिष्ठासुजघना प्रतिष्ठत्यस्मिन्निति प्रतिष्ठशब्दोजघनवाची ६६ वीरसेनसुतस्यनलस्यप्रिया ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८

७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ श्रेयसामोक्षेण योक्ष्येयोजयिष्ये योगबलेनदेहंत्यक्त्वामोक्षंप्राप्स्येइत्यर्थः अन्यथाआत्महत्यादोषात्श्रेयोयोगोनसंभवेत् ८९





गोप्तानिषधवंशस्यमहातेजामहाबलः ॥ सत्यवान्धर्मवित्प्राज्ञःसत्यसंधोऽरिमर्दनः ७९ ब्रह्मण्योदैवतपरःश्रीमान्परपुरंजयः ॥ नलोनामनृपश्रेष्ठोदेवराजसमद्युतिः ८० ममभर्त्ताविशालाक्षःपूर्णेंदुवदनोऽरिहा ॥ आहर्त्ताक्रतुमुख्यानांवेदवेदांगपारगः ८१ सपत्नानांमृधेहंताखिसोमसमप्रभः ॥ सकैश्विन्निकृतिप्रज्ञैरनार्यैरकृतात्मभिः ८२ आहूयपृथिवीपालःसत्यधर्मपरायणः ॥ देवनेकुशलैर्जिह्मैर्हृतंराज्यंवसूनिच ८३ तस्यमामवगच्छध्वंभार्यांराजर्षभस्यवै ॥ दमयंतीतिविख्यातांभर्तुर्दर्शनलालसाम् ८४ सावनानिगिरींश्चैवसरांसिसरितस्तथा ॥ पल्वलानिचसर्वाणितथाऽरण्यानिसर्वशः ८५ अन्वेषमाणाभर्त्तारंनलंरणविशारदम् ॥ महात्मानंकृतास्त्रंचविचरामीहदुःखिता ८६ कच्चिद्भगवतांरम्यंतपोवनमिदंनृपः ॥ भवेत्प्राप्तोनलोनामनिषधानांजनाधिपः ८७ यत्कृतेऽहमिदंब्रह्मन्प्रपन्नाभृशदारुणम् ॥ वनंप्रतिभयंघोरंशार्दूलमृगसेवितम् ८८ यदिकैश्चिदहोरात्रैर्नद्रक्ष्यामिनलंनृपम् ॥ आत्मानंश्रेयसायोक्ष्येदेहस्यास्यविमोचनात् ८९ कोनुमेजीवितेनार्थस्तमृतेपुरुषर्षभम् ॥ कथंभविष्याम्यद्याहंभर्तृशोकाभिपीडिता ९० तथाविलपतीमेकामरण्येभीमनंदिनीम् ॥ दमयंतीमथोचुस्तेतापसाःसत्यदर्शिनः ९१ उदर्कस्तवकल्याणिकल्याणोभविताशुभे ॥ वयंपश्यामतपसाक्षिप्रंद्रक्ष्यसिनैषधम् ९२ निषधानामधिपतिंनलंरिपुनिपातिनम् ॥ भैमिधर्मभृतांश्रेष्ठंद्रक्ष्यसेविगतज्वरम् ९३ विमुक्तंसर्वपापेभ्यःसर्वरत्नसमन्वितम् ॥ तदेवनगरंश्रेष्ठंप्रशासतमरिंदमम् ९४ द्विषतांभयकर्त्तारंसुहृदांशोकनाशनम् ॥ पतिंद्रक्ष्यसिकल्याणिकल्याणाभिजनंनृपम् ९५ एवमुक्त्वानलस्येष्टांमहिषींपार्थिवात्मजाम् ॥ तापसांऽतर्हिताःसर्वेसाग्निहोत्राश्रमास्तथा ९६ सादृष्ट्वामहदाश्चर्यंविस्मिताह्यभवत्तदा ॥ दमयंत्यनवद्यांगीवीरसेननृपस्नुषा ९७ किंनुस्वप्नोमयादृष्टःकोऽयंविधिरिहाभवत् ॥ क्वनुतेतापसाःसर्वेक्वतदाश्रममंडलम् ९८ क्वसापुण्यजलारम्यानदीद्विजनिषेविता ॥ क्वनुतेहनगाहृद्याःफलपुष्पोपशोभिताः ९९ ध्यात्वाचिरंभीमसुतादमयंतीशुचिस्मिता ॥ भर्तृशोकपरादीनाविवर्णवदनाऽभवत् १०० सागत्वाऽथापरांभूमिंबाष्पसंदिग्धयागिरा ॥ विललापाश्रुपूर्णाक्षीदृष्ट्वाऽशोकतरुंततः १ उपगम्यतरुश्रेष्ठमशोकंपुष्पितंवने ॥ पल्लवापीडितंहृद्यंविहंगैरनुनादितम् २ अहोबतायमगमःश्रीमानस्मिन्वनांतरे ॥ आपीडैर्बहुभिर्भातिश्रीमान्पर्वतराडिव ३ विशोकांकुरुमांक्षिप्रमशोकप्रियदर्शन ॥ वीतशोकभयाबाधंकच्चित्त्वंदृष्टवान्नृपम् ४ नलंनामारिदमनंदमयंत्याःप्रियंपतिम् ॥ निषधानामधिपतिंदृष्टवानसिमेप्रियम् ५ एकवस्त्रार्धसंवीतंसुकुमारतनुत्वचम् ॥ व्यसनेनार्दितंवीरमरण्यमिदमागतम् १०६

९० । ९१ उदर्कःउत्तरकालः ९२ । ९३ प्रशासतं । जक्षित्यादयःषडितिनुमभावः ९४ । ९५ तापसा इतिच्छेदः संधिरार्षः ९६ । ९७ । ९८ । ९९ । १०० बाष्पोबाष्पवदुष्णउच्छ्वासवायुस्तेनसंदिग्धयाऽस्फुटाक्षरया १०१ पल्लवैरापीडितंभूषितम् २ अगमःवृक्षः आपीडैःपुष्पफलादिरूपैरलंकारैः ३ । ४ । ५ सुकुमारादुःखासहा यतस्तनुर्मृद्वीत्वक्यस्यतम् १०६

अशोकनग हेवीतशोकवृक्ष १०७ । ८ । ९ । १० महासार्थमहांतंजनसमूहम् ११ । १२ । १३ उपसर्पउपसमर्पअभ्यासलोपआर्षः वरारोहाविस्तीर्णजघना १४पांसुयुक्ताःध्वस्ताः मुक्तबंधाश्चशिरोरुहाःकेशाः

यथाविशोकागच्छेयमशोकनगतत्कुरु ॥ सत्यनामाभवाशोकअशोकःशोकनाशनः १०७ एवंसाऽशोकवृक्षंतमार्ताविपरिगम्यह ॥ जगामदारुणतरंदेशंभैमीवरांगना ८
साददर्शनगान्नैकान्नैकाश्चसरितस्तथा ॥ नैकांश्चपर्वतान्रम्यान्नैकांश्चमृगपक्षिणः ९ कंदरांश्चनितंबांश्चनदीश्चाद्भुतदर्शनाः ॥ ददर्शतान्भीमसुतापतिमन्वेषतीतदा १०
गत्वाप्रकृष्टमध्वानंदमयंतीशुचिस्मिता ॥ ददर्शाथमहासार्थंहस्त्यश्वरथसंकुलम् ११ उत्तरंतंनदींरम्यांप्रसन्नसलिलांशुभाम् ॥ सुशीततोयांविस्तीर्णांह्रदिनींवेतसैर्वृ
ताम् १२ प्रोद्घुष्टांक्रौञ्चकुररैश्चक्रवाकोपकूजिताम् ॥ कूर्मग्राहझषाकीर्णांविपुलद्वीपशोभिताम् १३ साद्दृष्ट्वैवमहासार्थंनलपत्नीयशस्विनी ॥ उपसर्पवरारोहाजनमध्यं
विवेशह १४ उन्मत्तरूपाशोकार्त्तातथावस्त्रार्धसंवृता ॥ कृशाविवर्णामलिनापांसुध्वस्तशिरोरुहा १५ तांदृष्ट्वातत्रमनुजाःकेचिद्भीताःप्रदुद्रुवुः ॥ केचिच्चिंतापराजग्मुः
केचित्तत्रविचुक्रुशुः १६ प्रहसंतिस्मतांकेचिदभ्यसूयंतिचापरे ॥ अकुर्वतदयांकेचित्पप्रच्छुश्चापिभारत १७ काऽसिकस्यासिकल्याणिकिंवामृगयसेवने ॥
त्वांदृष्ट्वाव्यथिताःस्मेहकश्चित्त्वमपिमानुषी १८ वदसत्यंवनस्यास्यपर्वतस्याथवादिशः ॥ देवतात्वंहिकल्याणित्वांवयंशरणंगताः १९ यक्षीवाराक्षसीवात्वमुताहोऽ
सिवरांगना ॥ सर्वथाकुरुनःस्वस्तिरक्षवाऽस्माननिंदिते २० यथाऽयंसर्वथासार्थःक्षेमीशीघ्रमितोव्रजेत् ॥ तथाविधत्स्वकल्याणियथाश्रेयोहिनोभवेत् २१ तथोक्ता
तेनसार्थेनदमयंतीनृपात्मजा ॥ प्रत्युवाचततःसाध्वीभर्तृव्यसनपीडिता २२ सार्थवाहंचसार्थंचजनायेचात्रकेचन ॥ युवस्थविरबालाश्चसार्थस्यचपुरोगमाः २३
मानुषींमांविजानीतमनुजाधिपतेःसुताम् ॥ नृपस्नुषांराजभार्यांभर्तृदर्शनलालसाम् २४ विदर्भराण्ममपिताभर्त्ताराजाचनैषधः ॥ नलोनाममहाभागस्तंमार्गाम्य
पराजितम् २५ यदिजानीतनृपतिंक्षिप्रंशंसतमेप्रियम् ॥ नलंपुरुषशार्दूलममित्रगणसूदनम् २६ तामुवाचानवद्यांगींसार्थस्यमहतःप्रभुः ॥ सार्थवाहःशुचिर्नामशृणुक
ल्याणिमद्वचः २७ अहंसार्थस्यनेतावैसार्थवाहःशुचिस्मिते ॥ मनुष्यंनलनामानंनपश्यामियशस्विनि २८ कुंजरद्वीपिमहिषशार्दूलर्क्षमृगानपि ॥ पश्याम्यस्मिन्वने
कृत्स्नेह्यमनुष्यनिषेविते २९ ऋतेत्वांमानुषींमर्त्यंनपश्यामिमहावने ॥ तथानोयक्षराडद्यमणिभद्रःप्रसीदतु ३० साऽब्रवीद्वणिजःसर्वान्सार्थवाहंचतंततः ॥ क्वनुयास्यति
सार्थोऽयमेतदाख्यातुमर्हसि ३१ ॥ ॥ सार्थवाहउवाच ॥ ॥ सार्थोऽयंचेदिराजस्यसुबाहोःसत्यदर्शिनः ॥ क्षिप्रंजनपदंगंतालाभायमनुजात्मजे १३२ ॥
इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिदमयंतीसार्थवाहसंगमेचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

यस्याः १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ मार्गामिअन्वेषयामि २५ । २६ । २७ । २८ । २९ । ३० । ३१ । १३२ ॥ इत्यारण्यकेपर्वणि नैलकंठीयेभारतभावदीपे चतुः
षष्टितमोऽध्यायः ॥ ६४ ॥

सेति १ पद्मैःसौगंधिकैश्चपद्मविशेषैर्युक्तत्वात्पद्मसौगंधिकंनामसरः २ यवसंघासः ३ श्रान्तवाहाः श्रांतवाहनाः निवेशायवासाय ४ पश्चिमांवेलांसंध्यां सरस्तीरभुवं वा ५ । ६ । ७ । ८ । ९



॥ बृहदश्वउवाच ॥ सातच्छ्रुत्वाऽनवद्यांगीसार्थवाहवचस्तदा ॥ जगामसहतेनैवसार्थेनपतिलालसा १ अथकालेबहुतिथेवनेमहतिदारुणे ॥ तडागंसर्वतोभद्रंपद्मसौगं
धिकंमहत् २ ददृशुर्वणिजोरम्यंप्रभूतयवसेंधनम् ॥ बहुपुष्पफलोपेतंनानापक्षिनिषेवितम् ३ निर्मलस्वादुसलिलंमनोहारिसुशीतलम् ॥ सुपरिश्रांतवाहास्तेनिवेशा
यमनोदधुः ४ संमतेसार्थवाहस्यविविशुर्वनमुत्तमम् ॥ उवाससार्थःसुमहान्वेलामासाद्यपश्चिमाम् ५ अथार्धरात्रसमयेनिःशब्दस्तिमितेतदा ॥ सुप्तेसार्थेपरिश्रांते
हस्तियूथमुपागमत् ६ पानीयार्थंगिरिनदींमदप्रस्रवणाविलाम् ॥ अथापश्यतसार्थंतंसार्थजान्सुबहून्गजान् ७ तेतान्ग्राम्यगजान्दृष्ट्वासर्वेवनगजास्तदा ॥ समाद्रवंत
वेगेनजिघांसंतोमदोत्कटाः ८ तेषामापततांवेगःकरिणांदुःसहोऽभवत् ॥ नगाग्रादिवशीर्णानांशृंगाणांपततांक्षितौ ९ स्पंदतामपिनागानांमार्गानष्टावनोद्भवाः ॥
मार्गंसंरुध्यसंसुप्तंपद्मिन्याःसार्थमुत्तमम् १० तेतंममर्दुःसहसाचेष्टमानंमहीतले ॥ हाहाकारंप्रमुंचंतःसार्थिकाःशरणार्थिनः ११ वनगुल्मांश्चधावन्तोनिद्रांधाबहवो
भवन् ॥ केचिद्दंतैःकरैःकेचित्केचित्पद्भ्यांहतागजैः १२ निहतोष्ट्राश्वबहुलाःपदातिजनसंकुलाः ॥ भयादाधावमानाश्चपरस्परहतास्तदा १३ घोरान्नादान्विमुंचंतोनिपे
तुर्धरणीतले ॥ वृक्षेष्वारुह्यसंरब्धाःपतिताविषमेषुच १४ एवंप्रकारैर्बहुभिर्दैवेनाक्रम्यहस्तिभिः ॥ राजन्विनिहतंसर्वंसमृद्धंसार्थमंडलम् १५ आरावःसुमहांश्चासीत्त्रै
लोक्यभयकारकः ॥ एषोऽग्निरुत्थितःकष्टस्त्रायध्वंधावताधुना १६ रत्नराशिर्विशीर्णोऽयंगृह्णीध्वंकिंप्रधावत ॥ सामान्यमेतद्द्रविणंनमिथ्यावचनंमम १७ एवमेवाभि
भाषंतोविद्रवंतिभयात्तदा ॥ पुनरेवाभिधास्यामिचिंतयध्वंसकातराः १८ तस्मिंस्तथावर्त्तमानेदारुणेजनसंक्षये ॥ दमयंतीचबुबुधेभयसंत्रस्तमानसा १९ अपश्य
द्वैशसंतत्रसर्वलोकभयंकरम् ॥ अदृष्टपूर्वंतद्दृष्ट्वाबालापद्मनिभेक्षणा २० संसक्तवदनाश्वासाउत्तस्थौभयविह्वला ॥ येतुतत्रविनिर्मुक्ताःसार्थात्केचिदविक्षताः २१ तेऽब्रु
वन्सहिताःसर्वेकस्येदंकर्मणःफलम् ॥ नूनंनपूजितोऽस्माभिर्मणिभद्रोमहायशाः २२ तथायक्षाधिपःश्रीमान्नवैवैश्रवणःप्रभुः ॥ नपूजाविघ्नकर्तॄणामथवाप्रथमंकृता २३
शकुनानांफलंवाथविपरीतमिदंध्रुवम् ॥ ग्रहानविपरीतास्तुकिमन्यदिदमागतम् २४ अपरेत्वब्रुवन्दीनाज्ञातिद्रव्यविनाकृता ॥ याऽसावद्यमहासार्थेनारीह्युन्मत्तदर्श
ना २५ प्रविष्टाविकृताकाराकृत्वारूपममानुषम् ॥ तयेयंविहितापूर्वंमायापरमदारुणा २६ राक्षसीवाध्रुवंयक्षीपिशाचीवाभयंकरी ॥ तस्याःसर्वमिदंपापंनात्रकार्यावि
चारणा २८ यदिपश्यामतांपापांसार्थघ्नींनैकदुःखदाम् ॥ लोष्टभिःपांसुभिश्चैवतृणैःकाष्ठैश्चमुष्टिभिः २८ अवश्यमेवहन्यामःसार्थस्यकिलकृत्यकाम् ॥ दमयंतीतु
तच्छ्रुत्वावाक्यंतेषांसुदारुणम् २९

पद्मिन्याःपद्मवत्याःसरस्याः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ लोष्टभिरितिप्रयोगादेवलोष्टशब्दोनकारांतोऽप्यस्तीति
ज्ञायते २८ कृत्यैवकृत्यका कुत्सिताकृत्याकृत्यकेतिवाताम् २९

३० । ३१ । ३२ । अपश्चिमामपरावार्तिनीम् ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ पापकृतंपापंकर्म ४० । ४१ । ४२ । ४३ । ४४ । ४५ अमार्जितांधूसरवेणीम् ४६ ४७ । ४८ । ४९

हीताभीताचसंविग्नाप्राद्रवद्यत्रकाननम् ॥ आशंकमानातत्पापमात्मानंपर्यदेवयत् ३० अहोममोपरिविधेःसंरंभोदारुणोमहान् ॥ नानुबध्नातिकुशलंकस्येदंक
र्मणःफलम् ३१ नस्मराम्यशुभंकिंचित्कृतंकस्यचिदण्वपि ॥ कर्मणामनसावाचाकस्येदंकर्मणःफलम् ३२ नूनंजन्मांतरकृतंपापमापतितंमहत् ॥ अपश्चिमा
मिमांकष्टामापदंप्राप्तवत्यहम् ३३ भर्तृराज्यापहरणंस्वजनाच्चपराजयः ॥ भर्त्रासहवियोगश्चतनयाभ्यांचविच्युतिः ३४ निर्नाथतावनेवासोबहुव्यालनिषेविते ॥
अथापरेद्युःसंप्राप्तेहतशिष्टाजनास्तदा ३५ देशात्तस्माद्विनिष्क्रम्यशोचंतेवैशसंकृतम् ॥ भ्रातरंपितरंपुत्रंसखायंचनराधिप ३६ अशोचत्तत्रवैदर्भीकिंनुमेदुष्कृतं
कृतम् ॥ योऽपिमेनिर्जनेऽरण्येसंप्राप्तोऽयंजनार्णवः ३७ सहतोहस्तियूथेनमंदभाग्यान्ममैवतत् ॥ प्राप्तव्यंसुचिरंदुःखंनूनमद्यापिवैमया ३८ नाप्राप्तकालोम्रियते
श्रुतंवृद्धानुशासनम् ॥ यानाहमद्यमृदिताहस्तियूथेनदुःखिता ३९ नह्यदैवकृतंकिंचिन्नराणामिहविद्यते ॥ नचमेबालभावेऽपिकिंचित्पापकृतंकृतम् ४०
कर्मणामनसावाचायदिदंदुःखमागतम् ॥ मन्येस्वयंवरकृतेलोकपालाःसमागताः ४१ प्रत्याख्यातामयातत्रनलस्यार्थायदेवताः ॥ नूनंतेषांप्रभावेनवियोगंप्राप्त
वत्यहम् ४२ एवमादीनिदुःखार्तासाविलप्यवरांगना ॥ प्रलापानितदातानिदमयंतीपतिव्रता ४३ हतशेषैःसहतदाब्राह्मणैर्वेदपारगैः ॥ अगच्छद्राजशार्दू
लचंद्रलेखेवशारदी ४४ गच्छंतीसाऽचिराद्बालापुरमासादयन्महत् ॥ सायाह्नेचेदिराजस्यसुबाहोःसत्यदर्शिनः ४५ अथवस्त्रार्धसंवीताप्रविवेशपुरोत्तमम् ॥
तांविह्वलांकृशांदीनांमुक्तकेशीममार्जिताम् ४६ उन्मत्तामिवगच्छंतींददृशुःपुरवासिनः ॥ प्रविशंतींतुतांदृष्ट्वाचेदिराजपुरींतदा ४७ अनुजग्मुस्तत्रबालाग्रामि
पुत्राःकुतूहलात् ॥ सातैःपरिवृताऽगच्छत्समीपंराजवेश्मनः ४८ तांप्रासादगताऽपश्यद्राजमाताजनैर्वृताम् ॥ धात्रीमुवाचगच्छैनामानयेहममांतिकम् ४९
जनेनक्लिश्यतेबालादुःखिताशरणार्थिनी ॥ तादृग्रूपंचपश्यामिविद्योतयतिमेगृहम् ५० उन्मत्तवेषाकल्याणीश्रीरिवायतलोचना ॥ साजनंवारयित्वातंप्रासाद
तलमुत्तमम् ५१ आरोप्यविस्मिताराजन्दमयंतीमपृच्छत ॥ एवमप्यसुखाविष्टाबिभर्षिपरमंवपुः ५२ भासिविद्युदिवाभ्रेषुशंसमेकासिकस्यवा ॥ नहितेमानु
षंरूपंभूषणैरपिवर्जितम् ५३ असाहायानरेभ्यश्चनोद्विजस्यमरप्रभे ॥ तच्छ्रुत्वावचनंतस्याभैमीवचनमब्रवीत् ५४ मानुषींमांविजानीहिभर्त्तारंसमनुव्रताम् ॥
सैरंध्रींजातिसंपन्नांभुजिष्यांकामवासिनीम् ५५ फलमूलाशनामेकांयत्रसायंप्रतिश्रयाम् ॥ असंख्येयगुणोभर्त्तामांचनित्यमनुव्रतः ५६ भक्ताऽहमपितंवीरंछाये
वानुगतापथि ॥ तस्यदैवात्प्रसंगोऽभूदतिमात्रंसुदेवने ५७

५० प्रासादतलंप्रासादोपरि ५१ । ५२ । ५३ । ५४ सैरन्ध्रीं सीराःप्रतिसीरास्तासांसमूहंसैरं धारयित्रींनेपथ्यधारिणीमंतःपुरचरीमित्यर्थः भुजिष्यांदासीं कामवासिनींयत्रकामइच्छातत्रैव वसंतीम्
५५ यत्रसायंकालस्तत्रैवप्रतिश्रयोगृहंयस्यास्ताम् ५६ । ५७

५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ हेवीरप्रजायिनि वीरानेवप्रजायतेसूतेमावीरप्रजायिनी ६७ । ६८ । ६९ पश्येयंदृष्ट्वाचनान्पृच्छेयमपि ७० । ७१ । ७२ । ७३ । ७४ । ७५



द्यूतेसनिर्जितश्चैववनमेकउपेयिवान् ॥ तमेकवसनंवीरमुन्मत्तमिवविह्वलम् ५८ आश्वासयंतीभर्त्तारमहमप्यगमंवनम् ॥ सकदाचिद्वनेवीरःकस्मिंश्चित्कारणांतरे ५९ क्षुत्परीतस्तुविमनास्तदप्येकंव्यसर्जयत् ॥ तमेकवसनानग्नमुन्मत्तवदचेतसम् ६० अनुव्रजंतीबहुलानस्वपामिनिशास्तदा ॥ ततोबहुतिथेकालेसुप्तामुत्सृज्य मांक्वचित् ६१ वाससोऽर्धंपरिच्छिद्यत्यक्तवान्मामनागसम् ॥ तंमार्गमाणाभर्त्तारंदह्यमानादिवानिशम् ६२ साऽहंकमलगर्भाभमपश्यंतीहृदिप्रियम् ॥ नविंदाम्यमर प्रख्यंप्रियंप्राणेश्वरंप्रभुम् ६३ तामश्रुपरिपूर्णाक्षींविलपंतींतथाबहु ॥ राजमाताऽब्रवीदार्त्तांभैमीमार्तस्वरांस्वयम् ६४ वसस्वमयिकल्याणिप्रीतिर्मेपरमात्वयि ॥ मृगयिष्यंतितेभद्रेभर्त्तारंपुरुषामम ६५ अपिवास्वयमागच्छेत्परिधावन्नितस्ततः ॥ इहैववसतीभद्रेभर्त्तारमुपलप्स्यसे ६६ राजमातुर्वचःश्रुत्वादमयंतीवचोऽब्रवीत् ॥ समयेनोत्सहेवस्तुंत्वयिवीरप्रजायिनि ६७ उच्छिष्टंनैवभुंजीयांनकुर्यांपादधावनम् ॥ नचाहंपुरुषानन्यान्प्रभाषेयंकथंचन ६८ प्रार्थयेद्यदिमांकश्चिद्दंड्यस्तेसपुमान्भवेत् ॥ वध्यश्चतेऽसकृन्मंदइतिमेव्रतमाहितम् ६९ भर्तुरन्वेषणार्थंतुपश्येयंब्राह्मणानहम् ॥ यद्येवमिहवत्स्यामित्वत्सकाशेनसंशयः ७० अतोऽन्यथानमेवासो वर्त्ततेहृदयेक्वचित् ॥ तांप्रहृष्टेनमनसाराजमातेदमब्रवीत् ७१ सर्वमेतत्करिष्यामिदिष्ट्यातेव्रतमीदृशम् ॥ एवमुक्त्वाततोभैमींराजमाताविशांपते ७२ उवाचेदंदुहितरंसुनंदांनामभारत ॥ सैरंध्रीमभिजानीष्वसुनंदेदेवरूपिणीम् ७३ वयसातुल्यतांप्राप्तासखीतवभवत्वियम् ॥ एतयासहमोदस्वनिरुद्विग्नमनाःसदा ७४ ततः परमसंहृष्टासुनंदागृहमागमत् ॥ दमयंतीमुपादायसखीभिःपरिवारिता ७५ सातत्रपूज्यमानावैदमयंतीव्यनंदत ॥ सर्वकामैःसुविहितैर्निरुद्वेगाऽवसत्तदा ७६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिदमयंतीचेदिराजगृहवासेपंचषष्टितमोऽध्यायः ६५ ॥ ॥ बृहदश्व उवाच ॥ उत्सृज्यदमयंतींतुनलोराजाविशांपते ॥ ददर्शदावंदह्यंतंमहांतंगहनेवने १ तत्रशुश्रावशब्दंवैमध्येभूतस्यकस्यचित् ॥ अभिधावनलेत्युच्चैःपुण्यश्लोकेतिचासकृत् २ माभैरितिनलश्चोक्त्वा मध्यमग्नेःप्रविश्यतम् ॥ ददर्शनागराजानंशयानंकुण्डलीकृतम् ३ सनागःप्रांजलिर्भूत्वावेपमानोनलंतदा ॥ उवाचमांविद्धिराजन्नागंकर्कोटकंनृप ४ मयाप्रलब्धो महर्षिर्नारदःसुमहातपाः ॥ तेनमन्युपरीतेनशप्तोऽस्मिमनुजाधिप ५ तिष्ठत्वंस्थावरइवयावदेवनलःक्वचित् ॥ इतोनेताहितत्रत्वंशापान्मोक्ष्यसिमत्कृतात् ६ तस्यशापान्नशक्तोऽस्मिपदाद्विचलितुंपदम् ॥ उपदेक्ष्यामितेश्रेयस्त्रातुमर्हतिमांभवान् ७ सखाचतेभविष्यामिमत्समोनास्तिपन्नगः ॥ लघुश्चतेभविष्यामिशीघ्रमादायगच्छमाम् ८ एवमुक्त्वामनागेंद्रोबभूवांगुष्ठमात्रकः ॥ तंगृहीत्वानलःप्रायाद्देशंदावविवर्जितम् ९

७६ । ७७ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचषष्टितमोऽध्यायः ६५ ॥ ॥ उत्सृज्येति १ । २ । ३ । ४ मयाप्रलब्धोब्रह्मर्षिर्नारद इति पाठांतरम् ५ तत्रकाले ६ । ७ लघुर्गुरुत्वर्गहितः ८ दावविवर्जितंवह्निहीनम् ९

१० । ११ दशइत्युक्तेऽदशत् आज्ञांविनानागोनदशतीतिभावः १२ । १३ । १४ यत्कृतेइति । सकलिः । एतेनयोयच्छरीरेप्रविशतिसतेनशरीरेणसुखंदुःखंवाऽश्नातीतिसूचितं दृष्टंचैतद्ग्रहावेशादौ । इदंदमयंत्यादत्तस्यशापस्यफलंकलिर्भुंक्तेइतिभावः १५ । १६ अनागाःनिरपराधः निकृतोवंचितः मेमया १७ । १८ । १९ । २० अक्षहृदयंद्यूतेजयावहं अश्वहृदयेनविद्ययाविद्यांपरिवर्त्तयेदित्यर्थः २१ । २२

आकाशदेशमासाद्यविमुक्तंकृष्णवर्त्मना ॥ उत्स्रष्टुकामंतंनागःपुनःकर्कोटकोऽब्रवीत् १० पदानिगणयन्गच्छस्वानिनैषधकानिचित ॥ तत्रतेऽहंमहाबाहोश्रेयोधास्यामियत्परम् ११ ततःसंख्यातुमारब्धमदशद्दशमेपदे ॥ तस्यदष्टस्यतद्रूपंक्षिप्रमंतरधीयत १२ सदृष्ट्वाविस्मितस्तस्थावात्मानंविकृतंनलः ॥ स्वरूपधारिणंनागंददर्शसमहीपतिः १३ ततःकर्कोटकोनागःसांत्वयन्नलमब्रवीत ॥ मयातेंऽतर्हितंरूपंनत्वांविद्युर्जनाइति १४ यत्कृतेचासिनिकृतोदुःखेनमहतानल ॥ विषेणसमदीयेनत्वयिदुःखंनिवत्स्यति १५ विषेणसंवृतैर्गात्रैर्यावत्त्वांनविमोक्ष्यति ॥ तावत्त्वयिमहाराजदुःखंवैसनिवत्स्यति १६ अनागायेननिकृतस्त्वमनर्होजनाधिप ॥ क्रोधादसूययित्वातंरक्षामेभवतःकृता १७ नतेभयंनरव्याघ्रदंष्ट्रिभ्यःशत्रुतोऽपिवा ॥ ब्रह्मविद्भ्यश्चभवितामत्प्रसादान्नराधिप १८ राजन्विषनिमित्ताचनतेपीडाभविष्यति ॥ संग्रामेषुचराजेंद्रशश्वज्जयमवाप्स्यसि १९ गच्छराजन्नितःसूतोबाहुकोऽहमितिब्रुवन् ॥ समीपमृतुपर्णस्यसहिचैवाक्षनैपुणः २० अयोध्यांनगरींरम्यामद्यवैनिषधेश्वर ॥ सतेऽक्षहृदयंदाताराजाऽश्वहृदयेनवै २१ इक्ष्वाकुकुलजःश्रीमान्मित्रंचैवभविष्यति ॥ भविष्यसियदाऽक्षज्ञःश्रेयसायोक्ष्यसेतदा २२ सममेष्यसिदारैस्त्वंमास्मशोकेमनःकृथाः ॥ राज्येनतनयाभ्यांचसत्यमेतद्ब्रवीमिते २३ स्वंरूपंचयदाद्रष्टुमिच्छेथास्त्वंनराधिप ॥ संस्मर्त्तव्यस्तदातेऽहंवासश्चेदंनिवासयेः २४ अनेनवाससाच्छन्नःस्वंरूपंप्रतिपत्स्यसे ॥ इत्युक्त्वाप्रददौतस्मैदिव्यंवासोयुगंतदा २५ एवंनलंचसंदिश्यवासोदत्वाचकौरव॥ नागराजस्ततोराजंस्तत्रैवांतरधीयत २६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिनलकर्कोटकसंवादेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ॥ ॥ बृहदश्वउवाच ॥ तस्मिन्नंतर्हितेनागेप्रययौनैषधोनलः ॥ ऋतुपर्णस्यनगरंप्राविशद्दशमेऽहनि १ सराजानमुपातिष्ठद्बाहुकोऽहमितिब्रुवन् ॥ अश्वानांवाहनेयुक्तःपृथिव्यांनास्तिमत्समः २ अर्थकृच्छ्रेषुचैवाहंप्रष्टव्योनैपुणेषुच ॥ अन्नसंस्कारमपिचजानाम्यन्यैर्विशेषतः ३ यानिशिल्पानिलोकेऽस्मिन्यच्चैवान्यत्सुदुष्करम् ॥ सर्वंयतिष्येतत्कर्तुमृतुपर्णभरस्वमाम् ४ ॥ ऋतुपर्णउवाच ॥ वसबाहुकभद्रंतेसर्वमेतत्करिष्यसि ॥ शीघ्रयानेसदाबुद्धिर्ध्रियतेमेविशेषतः ५ सत्वमातिष्ठयोगंतंयेनशीघ्राहयाममम ॥ भवेयुरश्वाध्यक्षोऽसिवेतनंतेशतंशता ६ त्वामुपस्थास्यतश्चेवनित्यंवार्ष्णेयजीवलौ ॥ एताभ्यांरंस्यसेसार्धंवसवैमयिबाहुक ७ ॥ बृहदश्वउवाच ॥ एवमुक्तोनलस्तेनन्यवसत्तत्रपूजितः ॥ ऋतुपर्णस्यनगरेसहवार्ष्णेयजीवलः ८

२३ निवासयेःपरिधेहि २४ । २५ । २६ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षट्षष्टितमोऽध्यायः ॥ ६६ ॥ तस्मिन्निति १ । २ । ३ । ४ । ५ शतंशता शतानि मासिकंतेतनंदशसहस्रंसुवर्णाइत्यर्थः ६ । ७ । ८

९ तस्यमंदस्य तंमंदंउपतिष्ठतिजीवनार्थमितिशेषः १० । ११ । १२ अद्दढतरंदमयंत्यांमिथ्याप्रतिज्ञात्वंस्वस्यानुसंधायेयमुक्तिः व्ययुज्यतवियुक्तः १३ । १४ । १५ । १६ । १७ । १८ मारिष आर्य १९ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ हृतेति । प्रेष्यतांदासताम् १ । २ । ३ अग्रब्राह्मणभोजनंतदर्थंहियंतेराजधनात्पृथक्क्रियंतेतेअग्रहाराः

सर्वेतत्रावसद्राजावैदर्भीमनुचिंतयन् ॥ सायंसायंसदाचेमंश्लोकमेकंजगादह ९ क्वनुसाक्षुत्पिपासार्त्ताश्रांताशेतेतपस्विनी ॥ स्मरंतीतस्यमन्दस्यकंवासाऽद्योपतिष्ठति १० एवंब्रुवंतंराजानंनिशायांजीवलोऽब्रवीत् ॥ कामेनांशोचसेनित्यंश्रोतुमिच्छामिबाहुक ११ आयुष्मन्कस्यवानारीयामेवमनुशोचसि ॥ तमुवाचनलोराजामंदप्रज्ञस्य कस्यचित् १२ आसीद्बहुमतानारीतस्याद्दढतरंवचः ॥ सवैकेनचिदर्थेनतयामंदोव्ययुज्यत १३ विप्रयुक्तःसमंदात्माभ्रमत्यसुखपीडितः ॥ दह्यमानःसशोकेनदिवा रात्रमतंद्रितः १४ निशाकालेस्मरंस्तस्याःश्लोकमेकंस्मगायति ॥ सविभ्रमन्महींसर्वांक्वचिदासाद्यकिंचन १५ वसत्यनर्हस्तद्दुःखंभूयएवानुसंस्मरन् ॥ सातुतंपुरुषं नारीकृच्छ्रेऽप्यनुगतावने १६ त्यक्तातेनाल्पपुण्येनदुष्करंयदिजीवति ॥ एकाबालाऽनभिज्ञाचमार्गाणामतथोचिता १७ क्षुत्पिपासापरीतांगीदुष्करंयदिजीवति ॥ श्वापदाचरितेनित्यंवनेमहतिदारुणे १८ त्यक्तातेनाल्पभाग्येनमंदप्रज्ञेनमारिष ॥ इत्येवंनैषधोराजादमयंतीमनुस्मरन् ॥ अज्ञातवासंन्यवसद्राज्ञस्तस्यनिवेशने १९

॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिनलविलापेसप्तषष्टितमोऽध्यायः॥ ६७ ॥

॥ बृहदश्वउवाच॥ हृतराज्येनलेभीमःसभार्येप्रेष्यतांगते ॥ द्विजान्प्रस्थापयामासनलदर्शनकांक्षया १ संदिदेशचतान्भीमोवसुदत्वाचपुष्कलम् ॥ मृगयध्वंनलंचैवदमयंतींचमेसुताम् २ अस्मिन्कर्मणिसंपन्नेविज्ञातेनि षधाधिपे ॥ गवांसहस्रंदास्यामियोवस्तावानयिष्यति ३ अग्रहारांश्चदास्यामिग्रामंनगरसंमितम् ॥ नचेच्छक्याविहानेतुंदमयंतीनलोऽपिवा ४ ज्ञातमात्रेऽपिदास्या मिगवांदशशतंधनम् ॥ इत्युक्तास्तेययुर्हृष्टाब्राह्मणाःसर्वतोदिशम् ५ पुरराष्ट्राणिचिन्वंतोनैषधंसहभार्यया ॥ नैवक्वापिप्रपश्यंतिनलंवाभीमपुत्रिकाम् ६ ततश्चेदिपुरीं रम्यांसुदेवोनामवैद्विजः ॥ विचिन्वानोऽथवैदर्भीमपश्यद्राजवेश्मनि ७ पुण्याहवाचनेराज्ञःसुनंदासहितांस्थिताम् ॥ मंदंप्रख्यायमानेनरूपेणाप्रतिमेनताम् ८ निब द्धांधूमजालेनप्रभामिवविभावसोः ॥ तांसमीक्ष्यविशालाक्षीमधिकंमलिनांकृशाम् ॥ तर्कयामासभैमीतिकारणैरुपपादयन् ९ ॥ सुदेवउवाच ॥ यथेयंमेपुराद्दष्टा तथारूपेयमंगना ॥ कृतार्थोऽस्म्यद्यदृष्ट्वेमांलोककांतामिवश्रियम् १० पूर्णचंद्रनिभांश्यामांचारुवृत्तपयोधराम् ॥ कुर्वतींप्रभयादेवींसर्वावितिमिरादिशः ११ चारुपद्म विशालाक्षींमन्मथस्यरतीमिव ॥ इष्टांसमस्तलोकस्यपूर्णचंद्रप्रभामिव १२ विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ॥ मलपंकानुलिप्तांगींमृणालीमिवचोद्धृताम् १३ पौर्णमासीमिवनिशांराहुग्रस्तनिशाकराम् ॥ पतिशोकाकुलांदीनांशुष्कस्रोतांनदीमिव १४

क्षेत्रादयः ४ । ५ । ६ । ७ । ८ कारणैर्लिंगैः उपपादयन् इयमेवदमयंतीतिनिश्चिन्वन् ९ । १० श्यामांसदाषोडशवार्षिकीम् । ‘ शीतेचैवोष्णलानित्यंग्रीष्मेचातीवशीतला । मध्यःक्षीणस्तुयस्यास्तुसाश्यामेत्य भिधीयते ’ इत्यन्ये ११ । १२ । १३ शुष्कस्रोतांशुष्कप्रवाहां । छांदसंटाबंतत्वम् १४

पद्मिनींसरसीं १५ सुजातांगींअन्यूनानधिकांगीम् १६ । १७ । १८ । १९ । २० । २१ । २२ लब्धाचलब्ध्वेव २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ सुनंदाकथयामासेतिसंबंधः

विध्वस्तपर्णकमलांवित्रासितविहंगमाम् ॥ हस्तिहस्तपरामृष्टांव्याकुलामिवपद्मिनीम् १५ सुकुमारींसुजातांगींरत्नगर्भगृहोचिताम् ॥ दह्यमानामिवार्केणमृणाली
मिवचोद्धृताम् १६ रूपौदार्यगुणोपेतांमण्डनार्हाममंडिताम् ॥ चंद्रलेखामिवनवांव्योम्निनीलाभ्रसंवृताम् १७ कामभोगैःप्रियैर्हीनांहीनांबंधुजनेनच ॥ देहंधारयतींदी
नंभर्तृदर्शनकांक्षया १८ भर्त्तानामपरंनार्याभूषणंभूषणैर्विना ॥ एषाहिरहितातेनशोभमानानशोभते १९ दुष्करंकुरुतेऽत्यंतंहीनोयदनयानलः ॥ धारयत्यात्मनोदेहंनशो
केनापिसीदति २० इमामसितकेशांतांशतपत्रायतेक्षणाम् ॥ सुखार्हांदुःखितांदृष्ट्वाममापिव्यथतेमनः २१ कदानुखलुदुःखस्यपारंयास्यतिवैशुभा ॥ भर्तुःसमागमा
त्साध्वीरोहिणीशशिनोयथा २२ अस्यानूनंपुनर्लाभान्नैषधःप्रीतिमेष्यति ॥ राजाराज्यपरिभ्रष्टःपुनर्लब्ध्वाचमेदिनीम् २३ तुल्यशीलवयोयुक्तांतुल्याभिजनसंवृ
ताम् ॥ नैषधोऽर्हतिवैदर्भींतंचेयमसितेक्षणा २४ युक्तंतस्याप्रमेयस्यवीर्यसत्ववतोमया ॥ समाश्वासयितुंभार्यांपतिदर्शनलालसाम् २५ अहमाश्वासयाम्येनां
पूर्णचंद्रनिभाननाम् ॥ अदृष्टपूर्वांदुःखस्यदुःखार्तांध्यानतत्पराम् २६ ॥ बृहदश्वउवाच ॥ एवंविमृश्यविविधैःकारणैर्लक्षणैश्चताम् ॥ उपागम्यततोभैमींसुदेवो
ब्राह्मणोऽब्रवीत् २७ अहंसुदेवोवैदर्भिभ्रातुस्तेदयितःसखा ॥ भीमस्यवचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः २८ कुशलीतेपिताराज्ञिजननीभ्रातरश्चते ॥ आयुष्मंतौकुश
लिनौतत्रस्थौदारकौचतौ २९ त्वत्कृतेबंधुवर्गाश्चगतसत्वाइवासते ॥ अन्वेष्टारोब्राह्मणाश्चभ्रमंतिशतशोमहीम् ३० ॥ बृहदश्वउवाच ॥ अभिज्ञायसुदेवंतंदमयंती
युधिष्ठिर ॥ पर्यपृच्छततान्सर्वान्क्रमेणसुहृदःस्वकान् ३१ रुरोदचभृशंराजन्वैदर्भीशोककर्शिता ॥ दृष्ट्वासुदेवंसहसाभ्रातुरिष्टंद्विजोत्तमम् ३२ ततोरुदंतींतांदृष्ट्वासुनंदा
शोककर्शिता ॥ सुदेवेनसहैकांतेकथयंतींचभारत ३३ जनित्र्याःकथयामाससैरंध्रीरुदतेभृशम् ॥ ब्राह्मणेनसहागम्यतांवेदयदिमन्यसे ३४ अथचेदिपतेर्माताराज्ञ
श्चांतःपुरात्तदा ॥ जगामयत्रसाबालाब्राह्मणेनसहाभवत् ३५ ततःसुदेवमानाय्यराजमाताविशांपते ॥ प्रपच्छभार्याकस्येयंसुतावाकस्यभाविनी ३६ कथंचनष्टाज्ज्ञा
तिभ्योभर्तुर्वावामलोचना ॥ त्वयाचविदिताविप्रकथमेवंगतासती ३७ एतदिच्छाम्यहंश्रोतुंत्वत्तःसर्वमशेषतः ॥ तत्त्वेनहिममाचक्ष्वपृच्छंत्यादेवरूपिणीम् ३८ एव
मुक्तस्तयाराजन्सुदेवोद्विजसत्तमः ॥ सुखोपविष्टआचष्टदमयंत्यायथातथम् ३९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिदमयंतीसुदेवसंवादेअष्ट
षष्टितमोऽध्यायः ॥ ६८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

३३ वेदविचारय । वेदयतेरिदंरूपं णिजभावआर्षः ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ ॥ ॥

॥ विदर्भराज इति १ । २ । ३ । ४ पिप्लुः रक्ततिलकाकृतिर्लांछनं महाराष्ट्राणां 'मस' इति प्रसिद्धम् ५ । ६ । ७ । ८ । ९ । १० अपकृष्टेन दूरीकृतेन ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ ॥





सुदेवउवाच ॥ विदर्भराजोधर्मात्माभीमोनाममहाद्युतिः ॥ सुतेयंतस्यकल्याणीदमयंतीतिविश्रुता १ राजातुनैषधोनामवीरसेनसुतोनलः ॥ भार्येयंतस्यकल्याणी पुण्यश्लोकस्यधीमतः २ सद्यूतेनजितोभ्रात्राहृतराज्योमहीपतिः ॥ दमयंत्यागतःसार्धंनप्राज्ञायतकस्यचित् ३ तेवयंदमयंत्यर्थेचरामःपृथिवीमिमाम् ॥ सेयमासादि ताबालातवपुत्रनिवेशने ४ अस्यारूपेणसदृशीमानुषीनहिविद्यते ॥ अस्याह्येषभ्रुवोर्मध्येसहजःपिप्लुरुत्तमः ५ श्यामायाःपद्मसंकाशोलक्षितोंऽतर्हितोमया ॥ मलेन संवृतोह्यस्याश्छन्नोऽभ्रेणेवचंद्रमाः ६ चिह्नभूतोविभूत्यर्थमयंधात्राविनिर्मितः ॥ प्रतिपत्कलुषस्येंदोर्लेखानातिविराजते ७ नचास्यानश्यतेरूपंवपुर्मलसमाचितम् ॥ असंस्कृतमभिव्यक्तंभातिकांचनसन्निभम् ८ अनेनवपुषाबालापिप्लुनाऽनेनसूचिता ॥ लक्षितेयंमयादेवीनिभृतोऽग्निरिवोष्मणा ९ तच्छ्रुत्वावचनंतस्यसुदेवस्यविशां पते ॥ सुनंदाशोधयामासपिप्लुप्रच्छादनंमलम् १० समलेनापकृष्टेनपिप्लुस्तस्याव्यरोचत ॥ दमयंत्यायथाव्यभ्रेनभसीवनिशाकरः ११ पिप्लुंदृष्ट्वासुनंदाचराजमाताच भारत ॥ रुदत्यौतांपरिष्वज्यमुहूर्तमिवतस्थतुः १२ उत्सृज्यबाष्पंशनकैराजमातेदमब्रवीत् ॥ भगिन्यादुहितामेऽसिपिप्लुनाऽनेनसूचिता १३ अहंचतवमाताचरा ज्ञस्तस्यमहात्मनः ॥ सुतेदशार्णाधिपतेःसुदाम्नश्चारुदर्शने १४ भीमस्यराज्ञःसादत्तावीरबाहोरहंपुनः ॥ त्वंतुजातामयादृष्टादशार्णेषुपितुर्गृहे १५ यथैवतेपितुर्गेहंत थैवममभाविनि ॥ यथैवचममैश्वर्यंदमयंतितथातव १६ तांप्रहृष्टेनमनसादमयंतीविशांपते ॥ प्रणम्यमातुर्भगिनीमिदंवचनमब्रवीत् १७ अज्ञायमानाऽपिसतीसुखम स्म्युषितात्वयि ॥ सर्वकामैःसुविहितारक्ष्यमाणासदात्वया १८ सुखात्सुखतरोवासोभविष्यतिनसंशयः ॥ चिरविप्रोषितांमातर्मामनुज्ञातुमर्हसि १९ दारकौचहि मेनीतौवसतस्तत्रबालकौ ॥ पित्राविहीनौशोकार्तौमयाचैवकथंनुतौ २० यदिचापिप्रियंकिंचिन्मयिकर्तुमिहेच्छसि ॥ विदर्भान्यातुमिच्छामिशीघ्रंमेयानमादिश २१ बाढमित्येवतामुक्त्वाहृष्टामातृष्वसानृप ॥ गुप्तांबलेनमहतापुत्रस्यानुमतेततः २२ प्रास्थापयद्राजमाताश्रीमतींनरवाहिना ॥ यानेनभरतश्रेष्ठस्वन्नपानपरिच्छदाम् २३ ततःसानचिरादेवविदर्भानगमत्पुनः ॥ तांतुबंधुजनःसर्वःप्रहृष्टःसमपूजयत् २४ सर्वान्कुशलिनोदृष्ट्वाबांधवान्दारकौचतौ ॥ मातरंपितरंचोभौसर्वंचैवसखीजनम् २५ देवताःपूजयामासब्राह्मणांश्चयशस्विनी ॥ परेणविधिनादेवीदमयंतीविशांपते २६ अतर्पयत्सुदेवंचगोसहस्रेणपार्थिवः ॥ प्रीतोदृष्ट्वैवतनयांग्रामेणद्रविणेनच ॥ २७ साव्युष्टारजनींतत्रपितुर्वेश्मनिभाविनी ॥ विश्रांतामातरंराजन्निदंवचनमब्रवीत् २८

दारकौसुतःसुताच । बालकौअल्पवयस्कौ २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ व्युष्टावासंकृतवती २८

यतयत्नंकुरु । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यचक्षिङोङित्करणेनानित्यत्वज्ञापनात २९ । ३० । ३१ । ३२ । ३३ प्रदेशितःप्रकर्षेणप्रेरितः ३४ मृत्वागत्वा तेतथाप्रस्थिताःसंतःअब्रुवन्नलान्वेषणाय प्रस्थिताःस्मेतीतिशेषः ३५ ब्रूयास्तवदत । ब्रुवध्वमितिपाठेत्वार्षस्तङ् ३६ । ३७ । ३८ वदस्व । भासनेोपसंभाषेत्यादिनावदेस्तङ् ३९ वायुनेति । शोकाग्निःकालवायुनादिनेदिनेवर्धमानोदमयंतीशरीरवनंधक्ष्यतीतिरूपकेणोक्तं । दहतीतिलट्प्रयोगस्तुवर्त्तमानसामीप्ये ४० भर्त्तव्याऽन्नादिना रक्षणीयादस्युप्रभृतिभ्यः पतिनेतिपत्या । असमासेऽपिघिसंज्ञाकार्यमार्षं उभयंरक्षणभरणात्मकम ४१ मानुक्रोशः

॥ दमयंत्युवाच ॥ मांचेदिच्छसिजीवंतींमातःसत्यंब्रवीमिते ॥ नरवीरस्यचैतस्यनलस्यानयनेयत २९ दमयंत्यातथोक्तातुसादेवीभृशदुःखिता ॥ बाष्पेणापिहिताराज्ञीनोत्तरंकिंचिदब्रवीत् ३० तदवस्थांतुतांदृष्ट्वासर्वमंतःपुरंतदा ॥ हाहाभूतमतीवासीद्भृशंचप्ररुरोदह ३१ ततोभीमंमहाराजंभार्यावचनमब्रवीत् ॥ दमयंतीतवसुताभर्तारमनुशोचति ३२ अपकृष्यचलज्जांसास्वयमुक्तवतीनृप ॥ प्रयतन्तुतवप्रेष्याःपुण्यश्लोकस्यमार्गणे ३३ तयाप्रदेशितोराजाब्राह्मणान्वशवर्तिनः ॥ प्रास्थापयद्दिशःसर्वायतध्वंनलमार्गणे ३४ ततोविदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ॥ दमयंतीमथोस्मृत्वाप्रस्थितास्तेतथाब्रुवन् ३५ अथतानब्रवीद्भैमीसर्वराष्ट्रेष्विदंवचः ॥ ब्रूयास्तजनसंसत्सुतत्रतत्रपुनःपुनः ३६ क्वनुत्वंकितवच्छित्वावस्त्रार्धंप्रस्थितोमम ॥ उत्सृज्यविपिनेसुप्तामनुरक्तांप्रियांप्रिय ३७ सावैयथात्वयादृष्टातथाऽऽस्तेत्वत्प्रतीक्षिणी ॥ दह्यमानाभृशंबालावस्त्रार्धेनाभिसंवृता ३८ तस्यारुदत्याःसततंतेनशोकेनपार्थिव ॥ प्रसादंकुरुवैवीरप्रतिवाक्यंवदस्वच ३९ एवमन्यच्चवक्तव्यंकृपांकुर्याद्यथामयि ॥ वायुनाधूयमानोहिवनंदहतिपावकः ४० भर्तव्यारक्षणीयाचपत्नीहिपतिनासदा ॥ तन्नष्टमुभयंकस्माद्धर्मज्ञस्यसतस्तव ४१ ख्यातःप्राज्ञःकुलीनश्चसानुक्रोशोभवान्सदा ॥ संवृत्तोनिरनुक्रोशःशंकेमद्भाग्यसंक्षयात् ४२ तत्कुरुष्वनरव्याघ्रदयांमयिनरर्षभ ॥ आनृशंस्यंपरोधर्मस्त्वत्तएवहिमेश्रुतः ४३ एवंब्रुवाणान्यदिवःप्रतिब्रूयात्कथंचन ॥ सनरःसर्वथाज्ञेयःकश्चासौक्वनुवर्तते ४४ यश्चैवंवचनंश्रुत्वाब्रूयात्प्रतिवचोनरः ॥ तदादायवचस्तस्यममावेद्यंद्विजोत्तमाः ४५ यथाचवोनजानीयाद्ब्रुवतोममशासनात् ॥ पुनरागमनंचैवतथाकार्यमतंद्रितैः ४६ यदिवासौसमृद्धःस्याद्यदिवाऽप्यधनोभवेत् ॥ यदिवाऽप्यसमर्थःस्याज्ज्ञेयमस्यचिकीर्षितम् ४७ एवमुक्तास्त्वगच्छंस्तेब्राह्मणाःसर्वतोदिशम् ॥ नलंमृगयितुंराजंस्तदाव्यसनिनंतथा ४८ तेपुराणिसराष्ट्राणिग्रामान्घोषांस्तथाऽऽश्रमान् ॥ अन्वेषंतोनलंराजन्नाधिजग्मुर्द्विजातयः ४९ तच्चवाक्यंतथासर्वेतत्रतत्रविशांपते ॥ श्रावयांचक्रिरेविप्रादमयंत्यायथेरितम् ॥ ॥ ५० ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलान्वेषणेएकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ बृहदश्वउवाच ॥ अथदीर्घस्यकालस्यपर्णादोनामवैद्विजः ॥ प्रत्येत्यनगरंभैमीमिदंवचनमब्रवीत् १

सदयः ४२ । ४३ । ४४ । ४५ ममशासनात् ब्रुवतोवःयुष्मान् । यथावचइतिपाठे ब्रुवतोभवत्समुदायस्यवचोनजानीयादितियोज्यम ४६ । ४७ । ४८ । ४९ । ५० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकोनसप्ततितमोऽध्यायः॥ ६९ ॥ ॥ अथेति १

भांगासुरिमृतुपर्णम् २ । ३ । ४ । ५ । ६ । ७ गोपायंतिपालयंति । जितःस्वर्गस्तामिरिति शेषः ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३





नैषधंमृगयाणेनदमयंतिमयानलम् ॥ अयोध्यांनगरींगत्वाभांगासुरिमुपस्थितः २ श्रावितश्चमयावाक्यंत्वदीयंसमहाजने ॥ ऋतुपर्णोमहाभागोयथोक्तंवरवर्णिनि ३ तच्छ्रुत्वानाब्रवीत्किंचिदृतुपर्णोनराधिपः ॥ नचपारिषदःकश्चिद्भाष्यमाणोमयाऽसकृत् ४ अनुज्ञातंतुमांराज्ञाविजनेकश्चिदब्रवीत् ॥ ऋतुपर्णस्यपुरुषोबाहुकोनामनामतः ५ सूतस्तस्यनरेंद्रस्यविरूपोह्रस्वबाहुकः ॥ शीघ्रयानेषुकुशलोमृष्टकर्त्ताचभोजने ६ सविनिःश्वस्यबहुशोरुदित्वाचपुनःपुनः ॥ कुशलंचैवमांपृष्ट्वापश्चादिदमभाषत ७ वैषम्यमपिसंप्राप्तागोपायंतिकुलस्त्रियः ॥ आत्मानमात्मनासत्योजितःस्वर्गोनसंशयः ८ रहिताभर्तृभिश्चैवनकुप्यंतिकदाचन ॥ प्राणांश्चारित्रकवचान्धारयंतिवरस्त्रियः ९ विषमस्थेनमूढेनपरिभ्रष्टसुखेनच ॥ यत्सातेनपरित्यक्तातत्रनक्रोद्धुमर्हति १० प्राणयात्रांपरिप्रेप्सोःशकुनैर्हृतवाससः ॥ आधिभिर्दह्यमानस्यश्यामानक्रोद्धुमर्हति ११ सत्कृताऽसत्कृतावाऽपिपतिंदृष्ट्वातथागतम् ॥ भ्रष्टराज्यंश्रियाहीनंक्षुधितंव्यसनाप्लुतम् १२ तस्यतद्वचनंश्रुत्वात्वरितोऽहमिहागतः ॥ श्रुत्वाप्रमाणंभवतीराज्ञश्चैवनिवेदय १३ एतच्छ्रुत्वाऽश्रुपूर्णाक्षीपर्णादस्यविशांपते ॥ दमयंतीरहोऽभ्येत्यमातरंप्रत्यभाषत १४ अयमर्थोनसंवेद्योभीमेमातःकदाचन ॥ त्वत्सन्निधौनियोक्ष्येऽहंसुदेवंद्विजसत्तमम् १५ यथानन्नृपतिर्भीमःप्रतिपद्येतमेमतम् ॥ तथात्वयाप्रकर्तव्यंममचेत्प्रियमिच्छसि १६ यथाचाहंसमानीतासुदेवेनाशुबांधवान् ॥ तेनैवमंगलेनाशुसुदेवोयातुमाचिरम् १७ समानेतुंनलंमातरयोध्यांनगरीमितः ॥ विश्रांतंतुततःपश्चात्पर्णादंद्विजसत्तमम् १८ अर्चयामासवैदर्भीधनेनातीवभाविनी ॥ नलेचेहागतेतत्रभूयोदास्यामितेवसु १९ त्वयाहिमेबहुकृतंयदन्योनकरिष्यति ॥ यद्भर्त्राऽहंसमेष्यामिशीघ्रमेवद्विजोत्तम २० सएवमुक्तोऽथाश्वास्यआशीर्वादैःसुमंगलैः ॥ गृहानुपययौचापिकृतार्थःसुमहामनाः २१ ततःसुदेवमाभाष्यदमयंतीयुधिष्ठिर ॥ अब्रवीत्सन्निधौमातुर्दुःखशोकसमन्विता २२ गत्वासुदेवनगरीमयोध्यावासिनंनृपम् ॥ ऋतुपर्णंवचोब्रूहिसंपतन्निवकामगः २३ आस्थास्यतिपुनर्भैमीदमयंतीस्वयंवरम् ॥ तत्रगच्छंतिराजानोराजपुत्राश्चसर्वशः २४ तथाचगणितःकालःश्वोभूतेसभविष्यति ॥ यदिसंभाविनीयंतेगच्छशीघ्रमरिंदम २५ सूर्योदयेद्वितीयंसाभर्त्तारंवरयिष्यति ॥ नहिसज्ञायतेवीरोनलोजीवतिवानवा २६ एवंतयायथोक्तोवैगत्वाराजानमब्रवीत् ॥ ऋतुपर्णंमहाराजसुदेवोब्राह्मणस्तदा ॥ २७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिदमयंतीपुनःस्वयंवरकथनेसप्ततितमोऽध्यायः ॥ ७० ॥ ॥ बृहदश्वउवाच ॥ श्रुत्वावचःसुदेवस्यऋतुपर्णोनराधिपः ॥ सांत्वयन्श्लक्ष्णयावाचाबाहुकंप्रत्यभाषत १

२४ संभाविनी संभावितास्यंगतिरितिशेषः २५ । २६ । २७ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ श्रुत्वेति १

२। ३।४।५।६ सापत्याअपत्यसहिता ७।८।९।१०।११।१२ तेजः कांतिविशेषः। बलंशक्तिः । कुलंजातिविशेषः । शीलंसादिचित्तानुसारिता । हीनैर्लक्षणैःशतपदीप्रभृतिभिर्व र्जितान्। प्रोथंनासिका। हनुरधरंमुखफलकं १३ शुद्धान्हृदावर्त्तादिदुष्टावर्त्तहीनान् सिंधुजान्सिंधुदेशजान् १४ तेत्वयानविप्रलब्धव्यानवंचनीयाः बलंभारसहिष्णुता प्राणोवेगवत्ता वक्ष्यंतिवहनंकरिष्यंति

विदर्भान्यातुमिच्छामिदमयंत्याःस्वयंवरम् ॥ एकाह्नाहयतत्त्वज्ञमन्यसेयदिबाहुक २ एवमुक्तस्यकौंतेयतेनराज्ञानलस्यह ॥ व्यदीर्यतमनोदुःखात्प्रदध्यौचमहामनाः ३ दमयंतीवदेदेतत्कुर्याद्दुःखेनमोहिता ॥ अस्मदर्थेभवेद्वाऽयमुपायश्चिंतितोमहान् ४ नृशंसंबतवैदर्भीभर्त्तृकामातपस्विनी ॥ मयाक्षुद्रेणनिकृताकृपणापापबुद्धिना ५ स्त्रीस्वभावश्चलोलोकेममदोषश्चदारुणः ॥ स्यादेवमपिकुर्यात्साविवासाद्गतसौहृदा ६ ममशोकेनसंविग्नानैराश्यात्तनुमध्यमा ॥ नैवंसाकर्हिचित्कुर्यात्सापत्याचविशेषतः ७ यदत्रसत्यंवाऽसत्यंगत्वावेत्स्यामिनिश्चयम् ॥ ऋतुपर्णस्यवैकाममात्मार्थंचकरोम्यहम् ८ इतिनिश्चित्यमनसाबाहुकोदीनमानसः ॥ कृतांजलिरुवाचेदमृतुपर्णं जनाधिपम् ९ प्रतिजानामितेवाक्यंगमिष्यामिनराधिप ॥ एकाह्नापुरुषव्याघ्रविदर्भनगरींनृप १० ततःपरीक्षामश्वानांचक्रेराजन्सबाहुकः ॥ अश्वशालामुपागम्य भांगासुरिर्नृपाज्ञया ११ सत्वर्यमाणोबहुशऋतुपर्णेनबाहुकः ॥ अश्वान्जिज्ञासमानोवैविचार्यचपुनःपुनः ॥ अध्यगच्छत्कृशानश्वान्समर्थानध्वनिक्षमान् १२ तेजो बलसमायुक्तान्कुलशीलसमन्वितान् ॥ वर्जितान्लक्षणैर्हीनैःपृथुप्रोथान्महाहनून् १३ शुद्धान्दशभिरावर्तैःसिंधुजान्वातरंहसः ॥ दृष्ट्वातानब्रवीद्राजाकिंचित्कोपसम न्वितः १४ किमिदंप्रार्थितंकर्तुंप्रलब्धव्यानतेवयम् ॥ कथमल्पबलप्राणावक्ष्यंतीमेहयामम ॥ महदध्वानमपिचमन्तव्यंकथमीदृशैः १५ ॥ बाहुकउवाच ॥ एको ललाटेद्वेमूर्ध्निद्वौद्वौपार्श्वोपपार्श्वयोः ॥ द्वौद्वौवक्षसिविज्ञेयौप्रयाणेचैकएवतु १६ एतेहयागमिष्यंतिविदर्भान्नात्रसंशयः ॥ यानन्यान्मन्यसेराजन्ब्रूहितान्योजया मिते १७ ॥ ऋतुपर्णउवाच ॥ त्वमेवहयतत्त्वज्ञःकुशलोह्यसिबाहुक ॥ यान्मन्यसेसमर्थांस्त्वंक्षिप्रंतानेवयोजय १८ ततःसदश्वांश्चतुरःकुलशीलसमन्वितान् ॥ योजयामासकुशलोजवयुक्तान्रथेनलः १९ ततोयुक्तंरथंराजासमारोहत्त्वरान्वितः ॥ अथपर्यपतन्भूमौजानुभिस्तेहयोत्तमाः २० ततोनरवरःश्रीमान्नलोराजाविशां पते ॥ सांत्वयामासतानश्वांस्तेजोबलसमन्वितान् २१ रश्मिभिश्चसमुद्यम्यनलोयातुमियेषसः ॥ सूतमारोप्यवार्ष्णेयंजवमास्थायवैपरम् २२

अध्वानंनिःशब्दं महदतिदूरे दमयंत्याःपुनर्भूत्वात्तद्वरणेमहतीलज्जा तयाचअवृतेमहत्तरालज्जेतिप्रच्छन्नतयैवतत्रगतमपिवेगवशादगतमिवयथाभवतितथागंतव्यमितिभावः १५ 'एकोललाटेद्वौमूर्ध्निद्वौद्वौ पार्श्वोपपार्श्वयोः। द्वौद्वौवक्षसिविज्ञेयौ प्रयाणेचैकएवतु' इतिश्लोकः क्वचिन्नदृश्यते। तदर्थस्तुवक्षसिद्वौपुरस्ताद्वौ पश्चादिति प्रयाणेपृष्ठभागेएवंद्वादश आवर्तपदमनुषज्ययोज्यम् १६ एतेइति। एतेषुस्थलेष्वावर्त वंतइतिशेषः १७।१८।१९।२०।२१ सूतमिति। आरोप्यसूतस्थानादुपर्युपवेश्य स्वयमेवसूतत्वंचकारेत्यर्थः २२

२३ । २४ । २५ । २६ शालिहोत्रः अश्वशास्त्रप्रणेता आचार्यः २७ । २८ । २९ । ३० । ३१ । ३२ अंततः निर्णयेन ३३ । ३४ । ३५ । ३६ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदी

तेचोद्यमानाविधिवद्बाहुकेनहयोत्तमाः ॥ समुत्पेतुरथाकाशंरथिनंमोहयन्निव २३ तथातुदृष्ट्वातानश्वान्वहतोवातरंहसः ॥ अयोध्याधिपतिःश्रीमान्विस्मयंपरमंययौ २४ रथघोषंतुतंश्रुत्वाहयसंग्रहणंचतत् ॥ वार्ष्णेयश्चिंतयामासबाहुकस्यहयज्ञताम् २५ किंनुस्यान्मातलिरयंदेवराजस्यसारथिः ॥ तथातल्लक्षणंवीरेबाहुकेदृश्यते महत् २६ शालिहोत्रोऽथकिंनुस्याद्धयानांकुलतत्त्ववित् ॥ मानुषंसमनुप्राप्तोवपुःपरमशोभनम् २७ उताहोस्विद्भवेद्राजानलःपरपुरंजयः ॥ सोऽयंनृपतिरायात इत्येवंसमचिंतयत् २८ अथचेहनलोविद्यांवेत्तितामेवबाहुकः ॥ तुल्यंहिलक्षयेज्ञानंबाहुकस्यनलस्यच २९ अपिचेदंवयस्तुल्यंबाहुकस्यनलस्यच ॥ नायंनलोमहावीर्यस्तद्विद्यश्चभविष्यति ३० प्रच्छन्नाहिमहात्मानश्चरंतिपृथिवीमिमाम् ॥ दैवेनविधिनायुक्ताःशास्त्रोक्तैश्चनिरूपणैः ३१ भवेन्नमतिभेदोमेगात्रवैरूप्यतांप्रति ॥ प्रमाणात्परिहीनस्तुभवेदितिमतिर्मम ३२ वयःप्रमाणंतत्तुल्यंरूपेणतुविपर्ययः ॥ नलंसर्वगुणैर्युक्तंमन्येबाहुकमंततः ३३ एवंविचार्यबहुशोवार्ष्णेयःपर्यचिंतयत् ॥ हृदयेनमहाराजपुण्यश्लोकस्यसारथिः ३४ ऋतुपर्णश्चराजेंद्रोबाहुकस्यहयज्ञताम् ॥ चिंतयन्मुमुदेराजासहवार्ष्णेयसारथिः ३५ ऐकाग्र्यंचतथोत्साहंहयसंग्रहणंचतत् ॥ परंयत्नंचसंप्रेक्ष्यपरांमुदमवापह ३६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिऋतुपर्णविदर्भगमनेएकसप्ततितमोऽध्यायः ॥ ७१ ॥ बृहदश्वउवाच ॥ सनदीःपर्वतांश्चैववनानिचसरांसिच ॥ अचिरेणातिचक्रामखेचरःखेचरन्निव १ तथाप्रयातेतुरथेतदाभांगासुरिर्नृपः ॥ उत्तरीयमधोऽपश्यद्भ्रष्टंपरपुरंजयः २ ततः सत्वरमाणस्तुपटेनिपतितेतदा ॥ ग्रहीष्यामीतितंराजानलमाहमहामनाः ३ निगृह्णीष्वमहाबुद्धेहयानेतान्महाजवान् ॥ वार्ष्णेयोयावदेनंमेपटमानयतामिह ४ नलस्तंप्रत्युवाचाथदूरेभ्रष्टःपटस्तव ॥ योजनंसमतिक्रांतोनाहर्तुंशक्यतेपुनः ५ एवमुक्तेनलेनाथतदाभांगासुरिर्नृपः ॥ आससादवनेराजन्फलवंतंबिभीतकम् ६ तंदृष्ट्वाबाहुकंराजात्वरमाणोऽभ्यभाषत ॥ ममापिसूतपश्यत्वंसंख्यानेपरमंबलम् ७ सर्वःसर्वंनजानातिसर्वज्ञोनास्तिकश्चन ॥ नैकत्रपरिनिष्ठाऽस्तिज्ञानस्यपुरुषेक्वचित् ८ वृक्षेऽस्मिन्यानिपर्णानिफलान्यपिचबाहुक ॥ पतितान्यपियान्यत्रतत्रैकमधिकंशतम् ९ एकपत्राधिकंचात्रफलमेकंचबाहुक ॥ पंचकोट्योऽथपत्राणां द्वयोरपिचशाखयोः १० प्रचिनुह्यस्यशाखेद्वेयाश्चाप्यन्याःप्रशाखिकाः ॥ आभ्यांफलसहस्रेद्वेपंचोनंशतमेवच ११ ततोरथमवस्थाप्यराजानंबाहुकोऽब्रवीत् ॥ परोक्षमिवमेराजन्कत्थसेशत्रुकर्शन १२ प्रत्यक्षमेतत्कर्ताऽस्मिशातयित्वाबिभीतकम् ॥ अथात्रगणितेराजन्विद्यतेनपरोक्षता १३ प्रत्यक्षंतेमहाराजशातयिष्येबिभीतकम् ॥ अहंहिनाभिजानामिभवेदेवंनवेतिवा १४

पेएकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ सइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ अक्षहृदयज्ञं अक्षाणामक्षाभिमानिदेवतायाहृदयवद्वशीकरणार्थोमंत्रःअक्षहृदयं येनज्ञातेनद्यूतेऽक्षाअनुकूलाभवंति । संख्यानेराशीकृतानांपत्रपुष्पफलधान्यादीनां राश्यायामविस्तारोच्छ्रायाद्यालोचनेनपाटीगणितरीत्याझटितितत्संख्याकथने २६ । २७ । २८ अनयोर्मध्येऽक्षाणांहृदयंपरंश्रेष्ठंइतरत्तुत्वयाऽपिज्ञायतइतिभावः ऋतुःकालःतद्वच्छीघ्रगामि पर्णं भ्रियंतेव्याभ्रियतेव्यायच्छतेदेशांतरमनेनेतिपर्णंवाहनंयस्येतिऋतुपर्णनामनिरुक्तिः अन्येतु ऋतानिसत्यानिगणितानिपर्णानियस्येतिपाठांतरंविप्रकल्प्यव्याकुर्वते २९ तस्याक्षहृदयज्ञस्ये

संख्यास्यामिफलान्यस्यपश्यतस्तेजनाधिप ॥ मुहूर्तमपिवार्ष्णेयोरश्मीन्यच्छतुवाजिनाम् १५ तमब्रवीन्नृपःसूतंनायंकालोविलंबितुम् ॥ बाहुकस्त्वब्रवीदेनंपरंयत्नंसमास्थितः १६ प्रतीक्षस्वमुहूर्तंत्वमथवात्वरतेभवान् ॥ एषयातिशिवःपंथायाहिवार्ष्णेयसारथिः १७ अब्रवीदृतुपर्णस्तुसांत्वयन्कुरुनंदन ॥ त्वमेवयंतानान्योऽस्तिपृथिव्यामपिबाहुक १८ त्वत्कृतेयातुमिच्छामिविदर्भान्हयकोविद ॥ शरणंत्वांप्रपन्नोऽस्मिनविघ्नंकर्तुमर्हसि १९ कामंचतेकरिष्यामियन्मांवक्ष्यसिबाहुक ॥ विदर्भान्यदियात्वाद्यसूर्यंदर्शयिताऽसिमे २० अथाब्रवीद्बाहुकस्तंसंख्यायचबिभीतकम् ॥ ततोविदर्भान्यास्यामिकुरुष्वैवंवचोमम २१ अकामइवतंराजागणयस्वेत्युवाचह ॥ एकदेशंचशाखायाःसमादिष्टंमयाऽनघ २२ गणयस्वाश्वतत्त्वज्ञततस्त्वंप्रीतिमावह ॥ सोऽवतीर्यरथात्तूर्णंशातयामासतंद्रुमम् २३ ततःसविस्मयाविष्टोराजानमिदमब्रवीत् ॥ गणयित्वायथोक्तानितावंत्येवफलानितु २४ अत्यद्भुतमिदंराजन्दृष्टवानस्मितेबलम् ॥ श्रोतुमिच्छामितांविद्यांययैतज्ज्ञायतेनृप २५ तमुवाचततोराजात्वरितोगमनेनृप ॥ विद्ध्यक्षहृदयज्ञंमांसंख्यानेचविशादरम् २६ बाहुकस्तमुवाचाथदेहिविद्यामिमांमम ॥ मत्तोपिचाश्वहृदयंगृहाणपुरुषर्षभ २७ ऋतुपर्णस्ततोराजाबाहुकंकार्यगौरवात् ॥ हयज्ञानस्यलोभाच्चतंतथेत्यब्रवीद्वचः २८ यथोक्तंत्वंगृहाणेदमक्षाणांहृदयंपरम् ॥ निक्षेपोमेऽश्वहृदयंत्वयितिष्ठतुबाहुक ॥ एवमुक्त्वाददौविद्यामृतुपर्णोनलायवै २९ तस्याक्षहृदयज्ञस्यशरीरान्निःसृतःकलिः ॥ कर्कोटकविषंतीक्ष्णंमुखात्सततमुद्वमन् ३० कलेस्तस्यतदार्तस्यशापाग्निःसविनिःसृतः ॥ सतेनकर्शितोराजादीर्घकालमनात्मवान् ३१ ततोविषविमुक्तात्मास्वंरूपमकरोत्कलिः ॥ तंशप्तुमैच्छत्कुपितोनिषधाधिपतिर्नलः ३२ तमुवाचकलिर्भीतोवेपमानःकृतांजलिः ॥ कोपंसंयच्छनृपतेकीर्तिंदास्यामितेपराम् ३३ इंद्रसेनस्यजननीकुपितामाऽशपत्पुरा ॥ यदात्वयापरित्यक्ताततोऽहंभृशपीडितः ३४ अवसंस्त्वयिराजेंद्रसुदुःखमपराजित ॥ विषेणनागराजस्यदह्यमानोदिवानिशम् ॥ शरणंत्वांप्रपन्नोऽस्मिशृणुचेदंवचोमम ३५ येचत्वांमनुजालोकेकीर्तयिष्यंत्यतंद्रिताः ॥ मत्प्रसूतंभयंतेषांनकदाचिद्भविष्यति ३६ भयार्तंशरणंयातंयदिमांत्वंनशप्स्यसे ॥ एवमुक्तोनलोराजान्ययच्छत्कोपमात्मनः ३७

तिमर्त्येषांमंत्राणांतत्त्वं मनोमयकोशाख्यःसूत्रात्माऽतएवतंप्रकृत्यश्रूयते । 'तस्ययजुरेवशिरःऋग्दक्षिणःपक्षःसामोत्तरःपक्षः' इत्यादि तमजानंतंहिअत्यंतंधर्मिष्ठमपिकलिर्बाधते नतुमंत्रज्ञमितिभावः ३० शापाग्निर्दमयंतीनिसृष्टःसविषरूपः अनात्मवान हृदयशून्योमूढइत्यर्थः ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

अदृश्यइतिच्छेदः कथयन्कथांकुर्वन् ३८ फलानिसंख्यायअक्षविद्यासामर्थ्याद्वराशेरायामादिकमनालोच्यैवेतिभावः ३९ । ४० द्विजानिवपक्षिणइव ४१ । ४२ ; ४३ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्विसप्ततितमोध्यायः ॥ ७२ ॥ ॥ ॥ ॥ ततइति १ । २ नलाश्वाःविदर्भनगरेयेदमयंत्याऽपत्याभ्यांसहप्रेषिताः ३ । ४ । ५ । ६ शिखिनोमयूराःमेघध्वनितभ्रमाच्चुकुशुः



ततोभीतःकलिःक्षिप्रंप्रविवेशबिभीतकम् ॥ कलिस्त्वन्यैस्तदाऽदृश्यःकथयन्नैषधेनवै ३८ ततोगतज्वरोराजानैषधःपरवीरहा ॥ संप्रनष्टेकलौराजासंख्यायास्य फलान्युत ३९ मुदापरमयायुक्तस्तेजसाऽथपरेणवै ॥ रथमारुह्यतेजस्वीप्रययौजवनैर्हयैः ४० बिभीतकश्चाप्रशस्तःसंवृत्तःकलिसंश्रयात् ॥ हयोत्तमानुत्पततो द्विजानिवपुनःपुनः ४१ नलःसंनोदयामासप्रविष्टेनांतरात्मना ॥ विदर्भाभिमुखोराजाप्रययौसमहायशाः ४२ नलेतुसमतिक्रांतेकलिरप्यगमद्गृहम् ॥ ततोगतज्वरो राजानलोऽभूत्पृथिवीपतिः ॥ विमुक्तःकलिनाराजन्रूपमात्रवियोजितः ४३ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिकलिनिर्गमेद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ बृहदश्वउवाच ॥ ततोविदर्भान्संप्राप्तंसायाह्नेसत्यविक्रमम् ॥ ऋतुपर्णंजनाराज्ञेभीमायप्रत्यवेदयन् १ सभीमवचनाद्राजाकुंडिनंप्राविशत्पुरम् ॥ नादयन्रथघोषेणसर्वाःसविदिशोदिशः २ ततस्तंरथनिर्घोषंनलाश्वास्तत्रशुश्रुवुः ॥ श्रुत्वातुसमहृष्यंतपुरेवनलसन्निधौ ३ दमयंतीतुशुश्रावरथघोषंनलस्यतम् ॥ यथा मेघस्यनदतोगंभीरंजलदागमे ४ परंविस्मयमापन्नाश्रुत्वानादंमहास्वनम् ॥ नलेनसंगृहीतेषुपुरेवनलवाजिषु ॥ सदृशंरथनिर्घोषंमेनेभैमीतथाहयाः ५ प्रासादस्थाश्च शिखिनःशालास्थाश्चैववारणाः ॥ हयाश्चशुश्रुवुस्तस्यरथघोषंमहीपतेः ६ तच्छ्रुत्वारथनिर्घोषंवारणाःशिखिनस्तथा ॥ प्रणेदुरुन्मुखाराजन्मेघनादइवोत्सुकाः ७ दमयंत्युवाच ॥ यथाऽसौरथनिर्घोषःपूरयन्निवमेदिनीम् ॥ ममाल्हादयतेचेतोनलएषमहीपतिः ८ अथचंद्राभवक्त्रंतंनपश्यामिनलंयदि ॥ असंख्येयगुणंवीरंविनंक्ष्यामिन संशयः ९ यदिवैतस्यवीरस्यबाह्वोर्नाद्याहमंतरम् ॥ प्रविशामिसुखस्पर्शंनभविष्याम्यसंशयम् १० यदिमांमेघनिर्घोषोनोपगच्छतिनैषधः ॥ अद्यचामीकरप्रख्यंप्रवेक्ष्यामिहुताशनम् ११ यदिमांसिंहविक्रांतोमत्तवारणविक्रमः ॥ नाभिगच्छतिराजेंद्रोविनंक्ष्यामिनसंशयः १२ नस्मराम्यनृतंकिंचिन्नस्मराम्यपकारताम् ॥ नचपर्युषितं वाक्यंस्वैरेष्वपिकदाचन १३ प्रभुःक्षमावान्वीरश्चदाताचाप्यधिकोनृपैः ॥ रहोऽनीचानुवर्तीचक्लीबवन्ममनैषधः १४ गुणांस्तस्यस्मरंत्यामेतत्परायादिवानिशम् ॥ हृदयंदीर्यतइदंशोकात्प्रियविनाकृतम् १५ एवंविलपमानासानष्टसंज्ञेवभारत ॥ आरुरोहमहद्वेश्मपुण्यश्लोकदिदृक्षया १६ ततोमध्यमकक्षायांददर्शरथमास्थितम् ॥ ऋतुपर्णंमहीपालंसहवार्ष्णेयबाहुकम् १७ ततोवतीर्यवार्ष्णेयोबाहुकश्चरथोत्तमात् ॥ हयांस्तानवमुच्याथस्थापयामासवैरथम् १८ सोऽवतीर्यरथोपस्थादृतुपर्णो नराधिपः ॥ उपतस्थेमहाराजंभीमंभीमपराक्रमम् १९

७ । ८ । ९ । १० । ११ । १२ पर्युषितंप्रतिज्ञातकालातिलंघि १३ जितेंद्रियत्वमेवाह रहइति । रहसिकर्तव्येसुरतविषये नीचकर्मपारदार्यादितदनुवर्ततेइतितदन्यःअनीचानुवर्ती परस्त्रीपुक्लीबइत्यर्थः १४ १५ । १६ । १७ । १८ । १९

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ नैतदेवं एतत्एतस्मिन्काले एवंविचार्यनव्यसर्जयत् किंतुविश्राम्यतामित्येवोवाचेत्युत्तरेणान्वयः २८ । २९ दिष्टं निर्दिष्टम् ३० । ३१ । ३२ । ३३

तंभीमःप्रतिजग्राहपूजयापरयाततः ॥ सतेनपूजितोराज्ञाऋतुपर्णोनराधिपः २० सतत्रकुंडिनेरम्येवसमानोमहीपतिः ॥ नचकिंचित्तदाऽपश्यत्प्रेक्षमाणोमुहुर्मुहुः ॥ सतुराज्ञासमागम्यविदर्भपतिनातदा २१ अकस्मात्सहसाप्राप्तंस्त्रीमंत्रंनस्मविंदति ॥ किंकार्यस्वागतंतेऽस्तुराज्ञापृष्टःसभारत २२ नाभिजज्ञेसनृपतिर्दुहित्रर्थे समागतम् ॥ ऋतुपर्णोऽपिराजासधीमान्सत्यपराक्रमः २३ राजानंराजपुत्रंवानस्मपश्यतिकंचन ॥ नैवस्वयंवरकथांनचविप्रसमागमम् २४ ततोऽविगणयद्राजामनसाकोसलाधिपः ॥ आगतोऽस्मीत्युवाचैनंभवंतमभिवादकः २५ राजाऽपिचस्मयन्भीमोमनसासमचिंतयत् ॥ अधिकंयोजनशतंतस्यागमनकारणम् २६ ग्रामान्बहूनतिक्रम्यनाध्यगच्छद्यथातथम् ॥ अल्पकार्यैर्विनिर्दिष्टंतस्यागमनकारणम् २७ पश्चादुदर्केज्ञास्यामिकारणंयद्भविष्यति ॥ नैतदेवंसनृपतिस्तंसत्कृत्यव्यसर्जयत् २८ विश्राम्यतामित्युवाचक्लांतोऽसीतिपुनःपुनः ॥ ससत्कृतःप्रहृष्टात्माप्रीतःप्रीतेनपार्थिवः २९ राजप्रेष्यैरनुगतोदिष्टंवेश्मसमाविशत् ॥ ऋतुपर्णेगतेराजन्वार्ष्णेयसहितेनृपे ३० बाहुकोरथमादायरथशालामुपागमत् ॥ समोचयित्वातानश्वानुपचर्यचशास्त्रतः ३१ स्वयंचैतान्समाश्वास्यरथोपस्थउपाविशत् ॥ दमयंत्यपिशोकार्तादृष्ट्वाभांगासुरिंनृपम् ३२ सूतपुत्रंचवार्ष्णेयंबाहुकंचतथाविधम् ॥ चिंतयामासवैदर्भीकस्यैषरथनिःस्वनः ३३ नलस्येवमहानासीन्नवपश्यामिनैषधम् ॥ वार्ष्णेयेनभवेन्नूनंविद्यासैवोपशिक्षिता ३४ तेनाद्यरथनिर्घोषोनलस्येवमहानभूत् ॥ आहोस्विदृतुपर्णोऽपियथाराजानलस्तथा ॥ यथाऽयंरथनिर्घोषोनैषधस्येवलक्ष्यते ३५ एवंसातर्कयित्वातुदमयंतीविशांपते ॥ दूतींप्रस्थापयामासनैषधान्वेषणेशुभा ३६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनलोपाख्यानपर्वणिभीमपुरप्रवेशेत्रिसप्ततितमोऽध्यायः ७३ ॥

॥ दमयन्त्युवाच ॥ गच्छकेशिनिजानीहिकएषरथवाहकः ॥ उपविष्टोरथोपस्थेविकृतोह्रस्वबाहुकः १ अभ्येत्यकुशलंभद्रेमृदुपूर्वंसमाहिता ॥ पृच्छेथाःपुरुषंह्येनंयथातत्त्वमनिंदिते २ अत्रमेमहतीशंकाभवेदेषनलोनृपः ॥ यथाचमनसस्तुष्टिर्हृदयस्यचनिर्वृत्तिः ३ ब्रूयाश्चैनंकथांतेत्वंपर्णादवचनंयथा ॥ प्रतिवाक्यंचसुश्रोणिबुद्ध्येथास्त्वमनिंदिते ४ ततःसमाहितागत्वादूतीबाहुकमब्रवीत् ॥ दमयंत्यपिकल्याणीप्रासादस्थाह्युपैक्षत ५ ॥ ॥ केशिन्युवाच ॥ ॥ स्वागतंतेमनुष्येंद्रकुशलंतेब्रवीम्यहम् ॥ दमयंत्यावचःसाधुनिबोधपुरुषर्षभ ६ कदावैप्रस्थितायूयंकिमर्थमिहचागताः ॥ तत्त्वंब्रूहियथान्यायंवैदर्भीश्रोतुमिच्छति ७ ॥ बाहुकउवाच ॥ श्रुतःस्वयंवरोराज्ञाकोसलेनमहात्मना ॥ द्वितीयोदमयंत्यावैभविताश्वइतिद्विजात् ८ श्रुत्वैतत्प्रस्थितोराजाशतयोजनयायिभिः ॥ हयैर्वातजवैर्मुख्यैरहमस्यचसारथिः ९

३४ आहोस्विदित्याश्चर्यार्थे अतएवसमानार्थकंवाक्यमावर्तितं ३५ । ३६ ॥ इत्यारण्यके नै० भा० त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ गच्छेति १ । २ । ३ पर्णादवचनं कनुत्वंकितवच्छित्वावस्त्रार्धंप्रस्थितोममेत्यादिश्रुत्वा विरूपोऽह्रस्वबाहुकःकश्चित्प्रत्युत्तरंदत्तवांस्तल्लक्षणएवायमितिभावः ४ । ५ । ६ । ७ । ८ । ९

७ । ८ । ९ । १० । ११ समंत्रंप्रयोगादौमंत्रसहितं । संहारस्त्यक्तस्याकर्षणं । प्रायश्चित्तं अस्त्राग्निनानिरपराधानांदाहेयोदोषस्तस्यशोधनं । मंगलं दग्धानामेवारामादीनांपुनर्विकसनं । वज्रंवज्रवदप्रतीकार्यं रौद्रमेव १२ । १३ गीतंगांधर्विककंगानं सामकस्तुगानं १४ अनुजस्यभीमस्यानुजः १५ । १६ । १७ सुरकार्यंनिवातकवचादीनांवधः । दिवौकसैरितिबहुलंछंदसीत्यम् १८ । १९ सत्यसंधं सत्यप्रतिज्ञम् २० वरवर्णिनमतिसुंदरम् २१ महेश्वरसुतप्रख्यं स्कंदतुल्यं अतिस्कंधमुन्नतांसं । ज्ञानगतिस्कंधमितिपाठेयोगिश्रेष्ठम् २२ । २३ अपहरिष्यामिकवचकुंडलापहरणेइंद्रेण कृतेसति तदपींद्रस्यांतःप्रविश्यसंपादयिष्यामि

आसीत्पुरुषशार्दूलदृष्ट्वापार्थंतथागतम् ॥ आहमांतत्रदेवेशोगच्छपांडुसुतान्प्रति ७ सोऽहमभ्यागतःक्षिप्रंदिदृक्षुस्त्वांसहानुजम् ॥ वचनात्पुरुहूतस्यपार्थस्यचमहात्मनः ८ आख्यास्येतेप्रियंतातमहत्पांडवनंदन ॥ ऋषिभिःसहितोराजन्कृष्णयाचैवतच्छृणु ९ यत्त्वयोक्तोमहाबाहुरस्त्रार्थंभरतर्षभ ॥ तदस्त्रमाप्तंपार्थेनरुद्रादप्रतिमंविभो १० यत्तद्ब्रह्मशिरोनामतपसारुद्रमागमत् ॥ अमृतादुत्थितंरौद्रंतल्लब्धंसव्यसाचिना ११ तत्समंत्रंससंहारंसप्रायश्चित्तमंगलम् ॥ वज्रमस्त्राणिचान्यानिदंडादीनियुधिष्ठिर १२ यमात्कुबेराद्वरुणादिंद्राच्चकुरुनंदन ॥ अस्त्राण्यधीतवान्पार्थोदिव्यान्यमितविक्रमः १३ विश्वावसोस्तुतनयाद्गीतंनृत्यंचसामच ॥ वादित्रंचयथान्यायंप्रत्यविंदद्यथाविधि १४ एवंकृतास्त्रःकौंतेयोगांधर्ववेदमाप्तवान् ॥ सुखंवसतिबीभत्सुरनुजस्यानुजस्तव १५ यदर्थंमांसुरश्रेष्ठइदंवचनमब्रवीत् ॥ तच्चतेकथयिष्यामियुधिष्ठिरनिबोधमे १६ भवान्मनुष्यलोकेऽपिगमिष्यतिनसंशयः ॥ ब्रूयाद्युधिष्ठिरंतत्रवचनान्मेद्विजोत्तम १७ आगमिष्यतितेभ्राताकृतास्त्रःक्षिप्रमर्जुनः ॥ सुरकार्यंमहत्कृत्वायदशक्यंदिवौकसैः १८ तपसाऽपित्वमात्मानंयोजयभ्रातृभिःसह ॥ तपसोहिपरंनास्तितपसाविंदतेमहत् १९ अहंचकर्णंजानामियथावद्भरतर्षभ ॥ सत्यसंधंमहोत्साहंमहावीर्यंमहाबलम् २० महाहवेष्वप्रतिमंमहायुद्धविशारदम् ॥ महाधनुर्धरंवीरंमहास्त्रंवरवर्णिनम् २१ महेश्वरसुतप्रख्यमादित्यतनयंप्रभुम् ॥ तथार्जुनमतिस्कंधंसहजोल्बणपौरुषम् २२ नसपार्थस्यसंग्रामेकलामर्हतिषोडशीम् ॥ यच्चापितेभयंकर्णान्मनसिस्थमरिंदम २३ तच्चाप्यपहरिष्यामिसव्यसाचिन्युपागते ॥ यच्चतेमानसंवीरतीर्थयात्रामिमांप्रति ॥ समहर्षिर्लोमशस्तेकथयिष्यत्यसंशयम् २४ यच्चकिंचित्तपोयुक्तंफलंतीर्थेषुभारत ॥ ब्रह्मर्षिरेषब्रूयात्तेनतच्छ्रद्धेयमन्यथा २५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशसंवादेएकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ लोमशउवाच ॥ ॥ धनंजयेनचाप्युक्तंयत्तच्छृणुयुधिष्ठिर ॥ युधिष्ठिरंभ्रातरंमेयोजयेर्धर्म्ययाश्रिया १ त्वंहिधर्मान्परान्वेत्थतपांसिचतपोधन ॥ श्रीमतांचापिजानासिधर्मंराज्ञांसनातनम् २ सभवान्परमंवेदपावनंपुरुषंप्रति ॥ तेनसंयोजयेथास्त्वंतीर्थपुण्येनपांडवान् ३ यथातीर्थानिगच्छेतगाश्चदद्यात्सपार्थिवः ॥ तथासर्वात्मनाकार्यमितिमामर्जुनोऽब्रवीत् ४



आर्षेणाभेददर्शनेनाहंमनुरभवमित्यादिवदहमेवेन्द्ररूपीकरिष्यामीति २४ ततश्रद्धेयंनत्वन्यथागृहीतव्यमित्यर्थः २५ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ धनंजयेनेति । योजयेः योजय धर्म्ययाधर्मादनपेतया १ । २ पुरुषंप्रतिपुरुषस्येत्यर्थः ३ । ४

५ । ६ । ७ । ८ द्विःद्विवारं तृतीयंतृतीयवारं ९ । १० । ११ सत्यसंगरःसत्ययज्ञः यान्येवसंग्रामनामानितानियज्ञनामानीतियास्कवचनात् १२ । १३ । १४ । १५ । १६ । १७ लघुरल्पपरिवारः १८

भवताचानुगुप्तोऽसौचरेत्तीर्थानिसर्वशः ॥ रक्षोभ्योरक्षितव्यश्चदुर्गेषुविषमेषुच ५ दधीचइवदेवेंद्रयथाचाप्यंगिरारविम् ॥ तथारक्षस्वकौंतेयान्राक्षसेभ्योद्विजोत्तम ६ यातुधानाहिबहवोराक्षसाःपर्वतोपमाः ॥ त्वयाऽभिगुप्तंकौंतेयंनविवर्तेयुरंतिकम् ७ सोऽहमिंद्रस्यवचनान्नियोगादर्जुनस्यच ॥ रक्षमाणोभयेभ्यस्त्वांचरिष्यामित्वयासह ८ द्विस्तीर्थानिमयापूर्वंदृष्टानिकुरुनंदन ॥ इदंतृतीयंद्रक्ष्यामितान्येवभवतासह ९ इयंराजर्षिभिर्यातापुण्यकृद्भिर्युधिष्ठिर ॥ मन्वादिभिर्महाराजतीर्थयात्राभयापहा १० नानृजुर्नाकृतात्माचनाविद्योनचपापकृत् ॥ स्नातितीर्थेषुकौरव्यनचवक्रमतिर्नरः ११ त्वंतुधर्ममतिर्नित्यंधर्मज्ञःसत्यसंगरः ॥ विमुक्तःसर्वसंगेभ्योभूयएवभविष्यसि १२ यथाभगीरथोराजाराजानश्चगयादयः ॥ यथाययातिःकौंतेयतथात्वमपिपांडव १३ ॥ युधिष्ठिरउवाच ॥ नहर्षात्संप्रपश्यामिवाक्यस्यास्योत्तरंक्वचित् ॥ स्मरेद्धिदेवराजोयंकोनामाभ्यधिकस्ततः १४ भवतासंगमोयस्यभ्राताचैवधनंजयः ॥ वासवःस्मरतेयस्यकोनामाभ्यधिकस्ततः १५ यच्चमांभगवानाहतीर्थानांदर्शनंप्रति ॥ धौम्यस्यवचनादेषाबुद्धिःपूर्वकृतैवमे १६ तद्यदामन्यसेब्रह्मन्गमनंतीर्थदर्शने ॥ तदैवगंतास्मितीर्थान्येषमेनिश्चयःपरः १७ ॥ वैशंपायनउवाच ॥ गमनेकृतबुद्धिंतुपांडवंलोमशोऽब्रवीत् ॥ लघुर्भवमहाराजलघुःस्वैरंगमिष्यसि १८ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ भिक्षाभुजोनिवर्तंतांब्राह्मणायतयश्चये ॥ क्षुत्तड्ध्वश्रमायासशीतार्तिमसहिष्णवः १९ तेसर्वेविनिवर्तंतांयेचमिष्टभुजोद्विजाः ॥ पक्वान्नलेह्यपानानांमांसानांचविकल्पकाः २० तेऽपिसर्वेनिवर्तंतांयेचसूदानुयायिनः ॥ मयायथोचिताजीव्यैःसंविभक्ताश्चवृत्तिभिः २१ येचाप्यनुगताःपौराराजभक्तिपुरःसराः ॥ धृतराष्ट्रंमहाराजमभिगच्छंतुतेचवै २२ सदास्यतियथाकालमुचितायस्ययावृत्तिः ॥ सचेद्यथोचितांवृत्तिंनदद्यान्मनुजेश्वरः २३ अस्मत्प्रियहितार्थायपांचाल्योवःप्रदास्यति २४ ॥ वैशंपायनउवाच ॥ ततोभूयिष्ठशःपौरागुरुभारप्रपीडिताः ॥ विप्राश्चयतयोमुख्याजग्मुर्नागपुरंप्रति २५ तान्सर्वान्धर्मराजस्यप्रेम्णाराजांऽबिकासुतः ॥ प्रतिजग्राहविधिवद्धनैश्चसमतर्पयत् २६ ततःकुंतीसुतोराजालघुभिर्ब्राह्मणैःसह ॥ लोमशेनचसुप्रीतस्त्रिरात्रंकाम्यकेऽवसत् २७ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांद्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रयांतंकौंतेयंब्राह्मणावनवासिनः ॥ अभिगम्यतदाराजन्निदंवचनमब्रुवन् १ राजंस्तीर्थानिगंतासिपुण्यानिभ्रातृभिःसह ॥ ऋषिणाचैवसहितोलोमशेनमहात्मना २ अस्मानपिमहाराजनेतुमर्हसिपांडव ॥ अस्माभिर्हिनशक्यानित्वदृतेतानिकौरव ३

१९ विकल्पकाः मृष्टामृष्टविभाजकाः २० आजीव्यैर्भृत्यादिभिः वृत्तिभिर्जीवनहेतुभिरन्नादिभिः २१ । २२ । २३ पांचल्योद्रुपदः । वःयुष्मभ्यं २४ । २५ । २६ । २७ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ ॥ ॥ ततइति १ । २ । ३

दुर्गाणिकंटकाद्याक्रांतत्वात् विषमाणिहिंस्रव्याघ्राद्यावृतत्वात् ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ अनुकीर्णानिव्याप्तानि । नोऽस्मान् १३ । १४ । १५ । १६ । १७ । १८ । १९ आर्जवमृजुबुद्धिश्रद्धामित्यर्थः २० । २१ । २२ । २३ । २४ । २५ । २६ कठिनानियष्टीः 'काठी' इतिमहाराष्ट्रप्रसिद्धेः । अन्येतुशिक्यानिकरंडानिवेतिव्याचख्युः २७ परिचतुर्दशैःपंचदशभिः चतुर्दशभ्यः

श्वापदैरुपसृष्टानिदुर्गाणिविषमाणिच ॥ अगम्यानिनरैरल्पैस्तीर्थानिमनुजेश्वर ४ भवतोभ्रातरःशूराधनुर्धरवराःसदा ॥ भवद्भिःपालिताःशूरैर्गच्छामोवयमप्युत ५ भवत्प्रसादाद्धिवयंप्राप्नुयामःसुखंफलम् ॥ तीर्थानांपृथिवीपालवनानांचविशांपते ६ तववीर्यपरित्राताःशुद्धास्तीर्थपरिप्लुताः ॥ भवेमधूतपाप्मानस्तीर्थसंदर्शनान्नृप ७ भवानपिनरेंद्रस्यकार्तवीर्यस्यभारत ॥ अष्टकस्यचराजर्षेर्लोमपादस्यचैवह ८ भरतस्यचवीरस्यसार्वभौमस्यपार्थिव ॥ ध्रुवंप्राप्स्यतिदुष्प्रापान्लोकांस्तीर्थपरिप्लुतः ९ प्रभासादीनितीर्थानिमहेंद्रादींश्चपर्वतान् ॥ गंगाद्याःसरितश्चैवप्लक्षादींश्चवनस्पतीन् १० त्वयासहमहीपालद्रष्टुमिच्छामहेवयम् ॥ यदितेब्राह्मणेष्वस्तिकाचित्प्रीतिर्जनाधिप ११ कुरुक्षिप्रंवचोऽस्माकंततःश्रेयोऽभिपत्स्यसे ॥ तीर्थानिहिमहाबाहोतपोविघ्नकरैःसदा १२ अनुकीर्णानिरक्षोभिस्तेभ्योनस्त्रातुमर्हसि ॥ तीर्थान्युक्तानिधौम्येननारदेनचधीमता १३ यान्युवाचचदेवर्षिर्लोमशःसुमहातपाः ॥ विधिवत्तानिसर्वाणिपर्यटस्वनराधिप १४ धूतपाप्मासहास्माभिर्लोमशेनाभिपालितः ॥ सराजापूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः १५ भीमसेनादिभिर्वीरैर्भ्रातृभिःपरिवारितः ॥ बाढमित्यब्रवीत्सर्वांस्तानृषीन्पांडवर्षभः १६ लोमशंसमनुज्ञाप्यधौम्यंचैवपुरोहितम् ॥ ततःसपांडवश्रेष्ठोभ्रातृभिःसहितोवशी १७ द्रौपद्याचानवद्यांग्यागमनायमनोदधे ॥ अथव्यासोमहाभागस्तथापर्वतनारदौ १८ काम्यकेपांडवंद्रष्टुंसमाजग्मुर्मनीषिणः ॥ तेषांयुधिष्ठिरोराजापूजांचक्रेयथाविधि ॥ सत्कृतास्तेमहाभागायुधिष्ठिरमथाब्रुवन् १९ ऋषयऊचुः ॥ युधिष्ठिरयमौभीममनसाकुरुतार्जवम् ॥ मनसाकृतशौचावैशुद्धास्तीर्थानियास्यथ २० शरीरनियमंप्राहुर्ब्राह्मणामानुषंव्रतम् ॥ मनोविशुद्धांबुद्धिंचदैवमाहुर्व्रतंद्विजाः २१ मनोह्यदुष्टंशौचायपर्याप्तंवैनराधिप ॥ मैत्रींबुद्धिंसमास्थायशुद्धास्तीर्थानिद्रक्ष्यथ २२ तेयूयंमानसैःशुद्धाःशरीरनियमव्रतैः ॥ दैवंव्रतंसमास्थाययथोक्तंफलमाप्स्यथ २३ तेतथेतिप्रतिज्ञायकृष्णयासहपांडवाः ॥ कृतस्वस्त्ययनाःसर्वेमुनिभिर्दिव्यमानुषैः २४ लोमशस्योपसंगृह्यपादौद्वैपायनस्यच ॥ नारदस्यचराजेंद्रदेवर्षेःपर्वतस्यच २५ धौम्येनसहितावीरास्तथातैर्वनवासिभिः ॥ मार्गशीर्ष्यामतीतायांपुष्येणप्रययुस्ततः २६ कठिनानिसमादायचीराजिनजटाधराः ॥ अभेद्यैःकवचैर्युक्तास्तीर्थान्यन्वचरंस्ततः २७ इंद्रसेनादिभिर्भृत्यैरथैःपरिचतुर्दशैः ॥ महानसव्यापृतैश्चतथान्यैःपरिचारिकैः २८ सायुधाबद्धनिस्त्रिंशास्तूणवंतःसमार्गणाः ॥ प्राङ्मुखाःप्रययुर्वीराःपांडवाजनमेजय २९ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थ०लोमशतीर्थयात्रायांत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ ॥

परिउपरीतिव्युत्पत्तेः संख्ययाव्ययासन्नेतिसमासः बहुव्रीहौसंख्येयेडजितिडच् २८ । २९ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ ॥ ॥ ॥

नवाइति । निर्गुणमुत्तमगुणहीनं १ परानशत्रून् २ । ३ समूलः पुत्रपौत्रादिवंशवृद्धिमूलंतत्सहितः ४ । ५ । ६ विविशुःस्नानार्थमितिशेषः अधर्मस्तीर्थयात्राऽप्रवेशजस्तत्कर्तॄन् अधर्मकृतः । अधर्मेण कृत उत्पादितोवादर्पोगर्वः ततोमानः पूज्योऽस्मीतिबुद्धिः ७ ततःपूजायाअलाभेप्रतिघातेवाक्रोधः ततःअह्रीःअकार्येप्रवृत्तिः ततःअलज्जा लज्जानिघ्नतादोषाद्धयं तस्यनाशः ८ नचिरात्शीघ्रमेव ९ । १०

युधिष्ठिरउवाच ॥ नवैनिर्गुणमात्मानंमन्येदेवर्षिसत्तम ॥ तथाऽस्मिदुःखसंतप्तोयथानान्योमहीपतिः १ परांश्चनिर्गुणान्मन्येनचधर्मगतानपि ॥ तेचलोमश लोकेऽस्मिन्नृध्यंतेकेनहेतुना २ ॥ लोमशउवाच ॥ नात्रदुःखंत्वयाराजन्कार्यंपार्थकथंचन ॥ यदधर्मेणवर्धेयुरधर्मरुचयोजनाः ३ वर्धत्यधर्मेणनरस्ततोभद्रा णिपश्यति ॥ ततःसपत्नान्जयतिसमूलस्तुविनश्यति ४ मयाहिदृष्टादैतेयादानवाश्चमहीपते ॥ वर्धमानाह्यधर्मेणक्षयंचोपगताःपुनः ५ पुरादेवयुगेचैवदृष्टं सर्वंमयाविभो ॥ अरोचयन्सुराधर्मंधर्मंतत्यजिरेऽसुराः ६ तीर्थानिदेवाविविशुर्नाविशन्भारतासुराः ॥ तानधर्मकृतोदर्पःपूर्वमेवसमाविशत् ७ दर्पान्मानःसम भवन्मानात्क्रोधोव्यजायत ॥ क्रोधादह्रीस्ततोऽलज्जावृत्तंतेषांततोऽनशत् ८ तानलज्जान्गतह्रीकान्हीनवृत्तान्वृथाव्रतान् ॥ क्षमालक्ष्मीःस्वधर्मश्चनचिरात्प्र जहुस्ततः ९ लक्ष्मीस्तुदेवानगमदलक्ष्मीरसुरान्नृप ॥ तानलक्ष्मीसमाविष्टान्दर्पोपहतचेतसः १० दैतेयान्दानवांश्चैवकलिरप्याविशत्ततः ॥ तानलक्ष्मीसमा विष्टान्दानवान्कलिनाहतान् ११ दर्पाभिभूतान्कौंतेयक्रियाहीनानचेतसः ॥ मानाभिभूतानचिराद्विनाशःसमपद्यत १२ निर्यशस्कास्तथादैत्याःकृत्स्नशोवि लयंगताः ॥ देवास्तुसागरांश्चैवसरितश्चसरांसिच १३ अभ्यगच्छन्धर्मशीलाःपुण्यान्यायतनानिच ॥ तपोभिःक्रतुभिर्दानैराशीर्वादैश्चपांडव १४ प्रजहुःसर्व पापानिश्रेयश्चप्रतिपेदिरे ॥ एवमादानवंतश्चनिरादानाश्चसर्वशः १५ तीर्थान्यगच्छन्विबुधास्तेनापुर्भूतिमुत्तमाम् ॥ तथात्वमपिराजेंद्रस्नात्वातीर्थेषुसानुजः १६ पुनर्वेत्स्यसितांलक्ष्मीमेषपंथाःसनातनः ॥ यथैवहिनृगोराजाशिबिरौशीनरोयथा १७ भगीरथोवसुमनागयःपूरुःपुरूरवाः ॥ चरमाणास्तपोनित्यंस्पर्श नाद्ंभसश्चते १८ तीर्थाभिगमनात्पूतादर्शनाच्चमहात्मनाम् ॥ अलभंतयशःपुण्यंधनानिचविशांपते १९ तथात्वमपिराजेंद्रलब्धासुविपुलांश्रियम् ॥ यथा चेक्ष्वाकुरभवत्सपुत्रजनबांधवः २० मुचुकुंदोऽथमांधातामरुत्तश्चमहीपतिः ॥ कीर्तिंपुण्यामविंदन्तयथादेवास्तपोबलात् २१ देवर्षयश्चकात्स्न्येनतथात्वमपि वेत्स्यसि ॥ धार्तराष्ट्रास्त्वधर्मेणमोहेनचवशीकृताः ॥ नचिराद्वैविनंक्ष्यंतिदैत्याइवनसंशयः २२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्राप० लोमशतीर्थयात्रा यांचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ तेतथासहितावीरावसंतस्तत्रतत्रह ॥ क्रमेणपृथिवीपालनैमिषारण्यमागताः १ ततस्तीर्थेषुपुण्येषुगोमत्याःपांडवान्नृप ॥ कृताभिषेकाःप्रददुर्गाश्चवित्तंचभारत २

११ । १२ । १३ । १४ आदानवंतः आर्जवादिनियमग्रहणवंतः निरादानाअप्रतिबद्धाः सर्वशः देवादिभिरपि १५ । १६ वेत्स्यसिलप्स्यसे १७ । १८ । १९ । २० । २१ । २२ ॥ ॥ इत्यारण्यके पर्वणिनैलकंठीये भारतभावदीपे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ ॥ ॥ तेतथेति १ । २

॥ ३ । ४ । ५ । ६ । ७ । ८ । ९ वानीरमालिनी वेत्रपंक्तियुक्ता १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ब्रह्मशब्देनवेदध्वनिना २२ । २३ । २४ । २५ । २६ ॥

तत्रदेवान्पितृन्विप्रांस्तर्पयित्वापुनःपुनः ॥ कन्यातीर्थेऽश्वतीर्थेचगवांतीर्थेचभारत ॥ कालकोटयांविषप्रस्थेगिरावुष्यचकौरवाः ३ बाहुदायांमहीपालचक्रुः सर्वेऽभिषेचनम् ॥ प्रयागेदेवयजनेदेवानांपृथिवीपते ४ ऊपुराप्लुत्यगात्राणितपश्चातस्थुरुत्तमम् ॥ गंगायमुनयोश्चैवसंगमेसत्यसंगराः ५ विपाप्मानोमहात्मानोविप्रेभ्यःप्रददुर्वसु ॥ तपस्विजनजुष्टांचततोवेदींप्रजापतेः ६ जग्मुःपांडुसुताराजन्ब्राह्मणैःसहभारत ॥ तत्रतेन्यवसन्वीरास्तपश्चातस्थुरुत्तमम् ७ संतर्पयंतःसततंवन्येनहविषाद्विजान् ॥ ततोमहीधरंजग्मुर्धर्मज्ञेनाभिसंस्कृतम् ८ राजर्षिणापुण्यकृतागयेनानुपमद्युते ॥ नगोगयशिरोयत्रपुण्याचैवमहानदी ९ वानीरमालिनीरम्यानदीपुलिनशोभिता ॥ दिव्यंपवित्रकूटंचपवित्रंधरणीधरम् १० ऋषिजुष्टंसुपुण्यंतत्तीर्थंब्रह्मसरोत्तमम् ॥ अगस्त्योभगवान्यत्रगतोवैवस्वतंप्रति ११ उवासचस्वयंतत्रधर्मराजःसनातनः ॥ सर्वासांसरितांचैवसमुद्भेदोविशांपते १२ यत्रसंनिहितोनित्यंमहादेवःपिनाकधृक् ॥ तत्रतेपांडवावीराश्चातुर्मास्यैस्तदेजिरे १३ ऋषियज्ञेनमहतायत्राक्षयवटोमहान् ॥ अक्षयेदेवयजनेअक्षयंयत्रवैफलम् १४ तेतुतत्रोपवासांस्तुचक्रुर्निश्चितमानसाः ॥ ब्राह्मणास्तत्रशतशःसमाजग्मुस्तपोधनाः १५ चातुर्मास्येनायजंतआर्षेणविधिनातदा ॥ तत्रविद्यातपोवृद्धाब्राह्मणावेदपारगाः ॥ कथांप्रचक्रिरेपुण्यांसदसिस्थामहात्मनाम् १६ तत्रविद्याव्रतस्नातःकौमारंव्रतमास्थितः ॥ शमठोऽकथयद्राजन्नामूर्तरयसंगयम् १७ ॥ शमठउवाच ॥ अमूर्तरयसःपुत्रोगयोराजर्षिसत्तमः ॥ पुण्यानियस्यकर्माणितानिमेशृणुभारत १८ यस्ययज्ञोबभूवेहबह्वन्नोबहुदक्षिणः ॥ यत्रान्नपर्वताराजन्शतशोऽथसहस्रशः १९ घृतकुल्याश्चदध्नश्चनद्योबहुशतास्तथा ॥ व्यंजनानांप्रवाहाश्चमहार्हाणांसहस्रशः २० अहन्यहनिचाप्येवंयाचतांसंप्रदीयते ॥ अन्येचब्राह्मणाराजन्भुंजतेऽन्नंसुसंस्कृतम् २१ तत्रवैदक्षिणाकालेब्रह्मघोषोदिवंगतः ॥ नचप्रज्ञायतेकिंचिद्ब्रह्मशब्देनभारत २२ पुण्येनचरताराजन्भूर्दिशःस्वंनभस्तथा ॥ आपूर्णमासीच्छब्देनतदप्यासीन्महाद्भुतम् २३ यत्रस्मगाथागायंतिमनुष्याभरतर्षभ ॥ अन्नपानैःशुभैस्तृप्तादेशेदेशेसुवर्चसः २४ गयस्ययज्ञेकेत्वद्यप्राणिनोभोक्तुमीप्सवः ॥ तत्रभोजनशिष्टस्यपर्वताःपंचविंशतिः २५ नतत्पूर्वेजनाश्चक्रुर्नकरिष्यंतिचापरे ॥ गयोयदकरोद्यज्ञेराजर्षिरमितद्युतिः २६ कथंतुदेवाहविषागयेनपरितर्पिताः ॥ पुनःशक्ष्यंत्युपादातुमन्यैर्दत्तानिकानिचित् २७ सिकतावायथालोकेयथावादिवितारकाः ॥ यथावावर्षतोधाराअसंख्येयाःस्मकेनचित् ॥ तथागणयितुंशक्यागययज्ञेनदक्षिणाः २८ एवंविधाःसुबहवस्तस्ययज्ञामहीपतेः ॥ बभूवुरस्यसरसःसमीपेकुरुनंदन २९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्राप० लोमशतीर्थयात्रायांगययज्ञकथनेपंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ ॥

२७ सिकतादिवद्यज्ञेदक्षिणानगणयितुशक्याइत्यन्वयः २८ । २९ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ ॥ ॥ ॥

तनईति । दुर्जयायांवातापिपुर्यांमणिमतीसंज्ञायाम् १ । २ । ३ । ४ । ५ नादात् नदत्तवान् ६ । ७ कामरूपी यथाकामंरूपाणिकर्तुंसमर्थः संस्कृत्यपक्त्वा ८ सचइल्वलश्च ९ । १० । ११
१२ । १३ । १४ सोऽपृच्छदिति । तान् भवंलंबमानेनरूपेणतेपामुद्धवं पृच्छत् । पृच्छतिर्द्विकर्मा किमर्थयूयंलंबध्वमित्यपृच्छदित्यर्थः । तेऋषयःकंपिताइवसंतस्तेतवसंतानहेतोरयमस्माकंभव
इतिमन्युचुरितिसंबंधः १५ एतस्यैवविवरणंतेतस्माइति १६ । १७ वःयुष्माकंकामंईप्सितंकरिष्ये १८ प्रसवसंतानंसंततेरविच्छेदम् १९ तस्यतस्यासिंहमृगादेःअंगं कटिदृष्ट्यादिसर्वगुणवती

वैशंपायनउवाच ॥ ततःसंप्रस्थितोराजाकौंतेयोभूरिदक्षिणः ॥ अगस्त्याश्रममासाद्यदुर्जयायामुवासह १ तत्रैवलोमशंराजापप्रच्छवदतांवरः ॥ अगस्त्येनेहवातापिः
किमर्थमुपशामितः २ आसीद्वाकिंप्रभावश्चसदैत्योमानवांतकः ॥ किमर्थंचोदितोमन्युरगस्त्यस्यमहात्मनः ३ ॥ लोमशउवाच ॥ इल्वलोनामदैतेयआसीत्कौरव
नंदन ॥ मणिमत्यांपुरिपुरावातापिस्तस्यचानुजः ४ सब्राह्मणंतपोयुक्तमुवाचदितिनंदनः ॥ पुत्रंमेभगवानेकमिंद्रतुल्यंप्रयच्छतु ५ तस्मैसब्राह्मणोनादात्पुत्रंवासवसं
मितम् ॥ चुक्रोधसोऽसुरस्तस्यब्राह्मणस्यततोभृशम् ६ तदाप्रभृतिराजेंद्रइल्वलोब्रह्महाऽसुरः ॥ मन्युमान्भ्रातरंछागंमायावीह्यकरोत्ततः ७ मेषरूपीचवातापिःकामरू
प्यभवत्क्षणात् ॥ संस्कृत्यचभोजयतिततोविप्रंजिघांसति ८ सचाह्वयतियंवाचागतंवैवस्वतक्षयम् ॥ सपुनर्देहमास्थायजीवन्स्मप्रत्यदृश्यत ९ ततोवातापिमसुरंछागंकृ
त्वासुसंस्कृतम् ॥ तंब्राह्मणंभोजयित्वापुनरेवसमाह्वयत् १० तामिल्वलेनमहतास्वरेणवाचमीरिताम् ॥ श्रुत्वाऽतिमायोबलवान्क्षिप्रंब्राह्मणकंटकः ११ तस्यपार्श्वंवि
निर्भिद्यब्राह्मणस्यमहासुरः ॥ वातापिःप्रहसन्राजन्निश्चक्रामविशांपते १२ एवंसब्राह्मणान्राजन्भोजयित्वापुनःपुनः ॥ हिंसयामासदैतेयइल्वलोदुष्टचेतनः १३
अगस्त्यश्चापिभगवानेतस्मिन्कालएवतु ॥ पितॄन्ददर्शगर्तेवैलंबमानानधोमुखान् १४ सोऽपृच्छल्लंबमानांस्तान्भवंतइवकंपिताः ॥ संतानहेतोरितितेप्रत्यूचुर्ब्रह्म
वादिनः १५ तेतस्मैकथयामासुर्वयंतेपितरःस्वकाः ॥ गर्तमेतमनुप्राप्तालंबामप्रसवार्थिनः १६ यदिनोजनयेथास्त्वमगस्त्यापत्यमुत्तमम् ॥ स्यान्नोऽस्मान्निरयान्मो
क्षस्त्वंचपुत्राप्नुयागतिम् १७ सतानुवाचतेजस्वीसत्यधर्मपरायणः ॥ करिष्येपितरःकामंव्येतुवोमानसोज्वरः १८ ततःप्रसवसंतानंचिंतयन्भगवानृषिः ॥ आत्म
नःप्रसवस्यार्थेनापश्यत्सदृशींस्त्रियम् १९ सतस्यतस्यसत्वस्यतत्तदंगमनुत्तमम् ॥ संगृह्यतत्समैरंगैर्निर्ममेस्त्रियमुत्तमाम् २० सतांविदर्भराजस्यपुत्रार्थंतप्यतस्तपः ॥
निर्मितामात्मनोऽर्थायमुनिःप्रादान्महातपाः २१ सातत्रजज्ञेसुभगाविद्युत्सौदामनीयथा ॥ विभ्राजमानावपुषाव्यवर्धतशुभानना २२ जातमात्रांचतांदृष्ट्वावैदर्भःपृथिवी
पतिः ॥ प्रहर्षेणद्विजातिभ्योन्यवेदयतभारत २३ अभ्यनन्दन्ततांसर्वेब्राह्मणावसुधाधिप ॥ लोपामुद्रेतितस्याश्चचक्रिरेनामतेद्विजाः २४

मित्यर्थः २० । २१ जज्ञेजाता सौदामनीतिविशेष्यं विद्युदितिविशेषणंद्युतिविशेषोपपादनार्थं 'कुर्यांहरस्यापिपिनाकपाणेर्धैर्यच्युतिंकेममधन्विनोऽन्ये' इत्यादौपिनाकपाणिपदंऊर्जितचा
पवत्त्वद्योतनार्थमुपक्षीणंतत्रविशेष्यसमर्पणायालमितिहरस्येतिपृथक्प्रत्युक्तं तद्वदिहापिध्येयम् २२ । २३ मुद्राणांतत्तन्मृगादिजातिगतानामसाधारणानांचिन्हानांकमनीयचक्षुरादीनांलोपइवलोपस्तिर–

स्कारोययासालोपामुद्रा । आहिताग्न्यादिवत्पूर्वनिपातः । अन्येष्वपिदृश्यतइतिदीर्घः । प्रकारांतरेणयोगेतुवेदेपदपाठलोपआमुद्रेत्यवग्रहःस्यात्सचनदृश्यतेऽतउक्तविधैवव्युत्पत्तिर्युक्ता २४ । २५ वशानुगाः

वव्र्धेसामहाराजबिभ्रतीरूपमुत्तमम् ॥ अप्स्विवोत्पलिनीशीघ्रमग्नेरिवशिखाशुभा २५ तांयौवनस्थांराजेंद्रशतंकन्याःस्वलंकृताः ॥ दास्यःशतंचकल्याणीमुपात स्थुर्वशानुगाः २६ सास्मदासीशतवृतामध्येकन्याशतस्यच ॥ आस्तेतेजस्विनीकन्यारोहिणीवदिविप्रभा २७ यौवनस्थामपिचतांशीलाचारसमन्विताम् ॥ नवव्रे पुरुषःकश्चिद्भयात्तस्यमहात्मनः २८ सातुसत्यवतीकन्यारूपेणाप्सरसोऽप्यति ॥ तोषयामासपितरंशीलेनस्वजनंतथा २९ वैदर्भींतुतथायुक्तांयुवतींप्रेक्ष्यवैपिता ॥ मनसाचिंतयामासकस्मैदद्यामिमांसुताम् ३० ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांअगस्त्योपाख्यानेषण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ लोमशउवाच ॥ यदात्वमन्यतागस्त्योगार्हस्थ्येतांक्षमामिति ॥ तदाऽभिगम्यप्रोवाचवैदर्भंपृथिवीपतिम् १ राजन्निवेशेबुद्धिर्मेवर्ततेपुत्रकारणात् ॥ वरयेत्वांमहीपाललोपामुद्रांप्रयच्छमे २ एवमुक्तःसमुनिनामहीपालोविचेतनः ॥ प्रत्याख्यानायचाशक्तःप्रदातुंचैवनैच्छत ३ ततःसभार्यामभ्येत्यप्रोवाचपृथिवीपतिः ॥ महर्षिर्वीर्यवानेषक्रुद्धःशापाग्निनादहेत् ४ तंतथादुःखितंदृष्ट्वासभार्यंपृथिवीपतिम् ॥ लोपामुद्राभिगम्येदंकालेवचनमब्रवीत् ५ नमत्कृतेमहीपालपीडामभ्येतुमर्हसि ॥ प्रयच्छमामगस्त्यायत्राह्यात्मानंमयापितः ६ दुहितुर्वचनाद्राजासोऽगस्त्यायमहात्मने ॥ लोपामुद्रांततःप्रादाद्विधिपूर्वंविशांपते ७ प्राप्यभार्यामगस्त्यस्तुलोपामु द्रामभाषत ॥ महार्हाण्युत्सृजैतानिवासांस्याभरणानिच ८ ततःसादर्शनीयानिमहार्हाणितनूनिच ॥ समुत्ससर्जरंभोरुर्वसनान्यायतेक्षणा ९ ततश्चीराणिजग्राहवल्क लान्यजिनानिच ॥ समानव्रतचर्याचबभूवायतलोचना १० गंगाद्वारमथागम्यभगवानृषिसत्तमः ॥ उग्रमातिष्ठततपःसहपत्न्याऽनुकूलया ११ साप्रीताबहुमानाच्चपतिं पर्यचरत्तदा ॥ अगस्त्यश्चपरांप्रीतिंभार्यायामचरत्प्रभुः १२ ततोबहुतिथेकालेलोपामुद्रांविशांपते ॥ तपसाद्योतितांस्नातांददर्शभगवानृषिः १३ सतस्याःपरिचारेण शौचेनचदमेनच ॥ श्रियारूपेणचप्रीतोमैथुनायाजुहावताम् १४ ततःसाप्रांजलिर्भूत्वालज्जमानेवभाविनी ॥ तदासप्रणयंवाक्यंभगवंतमथाब्रवीत् १५ असंशयंप्रजा हेतोर्भार्यांपतिरविन्दत ॥ यातुत्वयिममप्रीतिस्तामृषेकर्तुमर्हसि १६ यथापितुर्गृहेविप्रप्रासादेशयनंमम ॥ तथाविधेत्वंशयनेमामुपैतुमिहार्हसि १७ इच्छामित्वांस्र ग्विणंचभूषणैश्चविभूषितम् ॥ उपसर्तुंयथाकामंदिव्याभरणभूषिता १८

इच्छानुरूपाः २६ । २७ । २८ । २९ । ३० ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ यदेति १ निवेशेविवाहे २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ १० । ११ । १२ स्नातांऋतावितिशेषः १३ परिचारेणसेवया १४ । १५ । १६ । १७ । १८

भूषणोऽयं चीरकाषायादिस्तपस्विनांश्लाघ्योऽयंसामग्रीकलापो भोगसंपर्केणापवित्रोनैवभवत्वितिशेषः १९ । २० । २१ । २२ ऋतोः कालःषोडशदिनानितेष्वल्पोऽवशिष्टः २३ । २४ । २५ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ ॥ ततइति । यंवेदवेत्ति १ विषयांतेदेशसीमांते २ आगमनेनिमित्तभूतामर्थितां किमिच्छन्नागतोऽसीतिपप्रच्छेत्यर्थः

अन्यथानोपतिष्ठेयंचीरकाषायवासिनी ॥ नैवापवित्रोविप्रर्षेभूषणोऽयंकथंचन १९ ॥ अगस्त्यउवाच ॥ नतेधनानिविद्यंतेलोपामुद्रेतथामम ॥ यथाविधानिकल्याणिपितुस्तवसुमध्यमे २० ॥ लोपामुद्रोवाच ॥ ईशोऽसितपसासर्वंसमाहर्तुंतपोधन ॥ क्षणेनजीवलोकेयद्वसुकिंचनविद्यते २१ ॥ अगस्त्यउवाच ॥ एवमेतद्यथात्थत्वंतपोव्ययकरंतुतत् ॥ यथातुमेननश्येततपस्तन्मांप्रचोदय २२ ॥ लोपामुद्रोवाच ॥ अल्पावशिष्टःकालोऽयमृतोर्ममतपोधन ॥ नचान्यथाऽहमिच्छामित्वामुपैतुंकथंचन २३ नचापिधर्ममिच्छामिविलोप्तुंतेकथंचन ॥ एवंतुमेयथाकामंसंपादयितुमर्हसि २४ ॥ अगस्त्यउवाच ॥ यद्येषकामःसुभगेतवबुद्ध्याविनिश्चितः ॥ हर्तुंगच्छाम्यहंभद्रेचरकाममिहस्थिता २५ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामगस्त्योपाख्यानेसप्तनवतितमोऽध्यायः ॥ ९७ ॥ लोमशउवाच ॥ ततोजगामकौरव्यसोऽगस्त्योभिक्षितुंवसु ॥ श्रुतर्वाणंमहीपालंयंवेदाभ्यधिकंनृपैः १ सविदित्वातुनृपतिःकुंभयोनिमुपागतम् ॥ विषयांतेसहामात्यःप्रत्यगृह्णात्सुसत्कृतम् २ तस्मैचार्घ्यंयथान्यायमानीयपृथिवीपतिः ॥ प्रांजलिःप्रयतोभूत्वापप्रच्छागमनेऽर्थिताम् ३ ॥ अगस्त्यउवाच ॥ वित्तार्थिनमनुप्राप्तंविद्धिमांपृथिवीपते ॥ यथाशक्त्यविहिंस्यान्यान्संविभागंप्रयच्छमे ४ ॥ लोमशउवाच ॥ ततआयव्ययौपूर्णौतस्मैराजान्यवेदयत् ॥ अतोविद्वन्नुपादत्स्वयदत्रवसुमन्यसे ५ ततआयव्ययौदृष्ट्वासमौसममतिर्द्विजः ॥ सर्वथाप्राणिनांपीडामुपादानादमन्यत ६ सश्रुतर्वाणमादायव्रध्नश्वमगमत्ततः ॥ सचतौविषयस्यांतेप्रत्यगृह्णाद्यथाविधि ७ तयोरर्घ्यंचपाद्यंचव्रध्नश्वःप्रत्यवेदयत् ॥ अनुज्ञाप्यचपप्रच्छप्रयोजनमुपक्रमे ८ ॥ अगस्त्यउवाच ॥ वित्तकामाविहप्राप्तौविद्ध्यावांपृथिवीपते ॥ यथाशक्त्यविहिंस्यान्यान्संविभागंप्रयच्छनौ ९ ॥ लोमशउवाच ॥ ततआयव्ययौपूर्णौताभ्यांराजान्यवेदयत् ॥ अतोज्ञात्वातुगृह्णीतंयदत्रव्यतिरिच्यते १० ततआयव्ययौदृष्ट्वासमौसममतिर्द्विजः ॥ सर्वथाप्राणिनांपीडामुपादानादमन्यत ११ पौरुकुत्संततोजग्मुस्त्रसदस्युंमहाधनम् ॥ अगस्त्यश्वश्रुतर्वाचव्रध्नश्वश्चमहीपतिः १२ त्रसदस्युस्तुतान्दृष्ट्वाप्रत्यगृह्णाद्यथाविधि ॥ अभिगम्यमहाराजविषयांतेमहामनाः १३ अर्चयित्वायथान्यायमिक्ष्वाकूराजसत्तमः ॥ समस्तांश्चततोऽपृच्छत्प्रयोजनमुपक्रमे १४ ॥ अगस्त्यउवाच ॥ वित्तकामानिहप्राप्तान्विद्धिनःपृथिवीपते ॥ यथाशक्त्यविहिंस्यान्यान्संविभागंप्रयच्छनः १५ ॥ लोमशउवाच ॥ ततआयव्ययौपूर्णौतेषांराजान्यवेदयत् ॥ एतज्ज्ञात्वह्युपादध्वंयदत्रव्यतिरिच्यते १६

३ । ४ । ५ उपादानात् धनग्रहणात् ६ । ७ उपक्रमेआगमने ८ नौआवाभ्याम् ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ वसुमान् धनवान् १९ अध्यायतात्पर्यंब्राह्मणेनापिहिंसापूर्वकंभिक्षानकर्तव्येति २० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टनवतितमोऽध्यायः ॥ ९८ ॥ इल्वलइति १ । २ । ३ । ४



ततआयव्ययौदृष्ट्वासमौसममतिर्द्विजः ॥ सर्वथाप्राणिनांपीडामुपादानादमन्यत १७ ततःसर्वेसमेत्याथतेनृपास्तंमहामुनिम् ॥ इदमूचुर्महाराजसमवेक्ष्यपरस्परम् १८ अयंवैदानवोब्रह्मन्निल्वलोवसुमान्भुवि ॥ तमतिक्रम्यसर्वेऽद्यवयंचार्थामहेवसु १९ ॥ लोमशउवाच ॥ तेषांतदाऽऽसीदुचितमिल्वलस्यैवभिक्षणम् ॥ ततस्तेसहिता राजन्निल्वलंसमुपाद्रवन् ॥ २० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामगस्त्योपाख्यानेअष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ लोमशउवाच ॥ इल्वलस्तान्विदित्वातुमहर्षिसहितान्नृपान् ॥ उपस्थितान्सहामात्योविषयांतेह्यपूजयत् १ तेषांततोऽसुरश्रेष्ठस्त्वातिथ्यमकरोत्तदा ॥ सुसंस्कृतेनकौरव्यभ्रात्रावातापिनायदा २ ततोराजर्षयःसर्वेविषण्णागतचेतसः ॥ वातापिंसंस्कृतंदृष्ट्वामेषभूतंमहासुरम् ३ अथाब्रवीदगस्त्यस्तान्राजर्षीनृषिसत्तमः ॥ विषादोवोनकर्तव्योह्यहंभोक्ष्येमहासुरम् ४ धुर्यासनमथासाद्यनिषसादमहानृषिः ॥ तंपर्यवेषद्दैत्येंद्रइल्वलःप्रहसन्निव ५ अगस्त्यएवकृत्स्नंतुवातापिंबुभुजेततः ॥ भुक्तवत्यसुरोऽऽह्वानमकरोत्तस्यचेल्वलः ६ ततोवायुःप्रादुरभूदधस्तस्यमहात्मनः ॥ शब्देनमहतातातगर्जन्निवयथाघनः ७ वातापेनिष्क्रमस्वेतिपुनःपुनरुवाचह ॥ तंप्रहस्याब्रवीद्राजन्नगस्त्योमुनिसत्तमः ८ कुतोनिष्क्रमितुंशक्तोमयाजीर्णस्तुसोऽसुरः ॥ इल्वलस्तुविषण्णोऽभूद्दृष्ट्वाजीर्णंमहासुरम् ९ प्रांजलिश्चसहामात्यैरिदंवचनमब्रवीत् ॥ किमर्थमुपयाताःस्थब्रूतकिंकरवाणिवः १० प्रत्युवाचततोऽगस्त्यःप्रहसन्निल्वलंतदा ॥ ईशंह्यसुरविद्मस्त्वांवयंसर्वेधनेश्वरम् ११ एतेचनातिधनिनोधनार्थश्चमहान्मम ॥ यथाशक्त्यविहिंस्यान्यान्संविभागंप्रयच्छनः १२ ततोऽभिवाद्यतमृषिमिल्वलोवाक्यमब्रवीत् ॥ दित्सितंयदिवेत्सित्वंततोदास्यामितेवसु १३ ॥ अगस्त्यउवाच ॥ गवांदशसहस्राणिराज्ञामेकैकशोऽसुर ॥ तावदेवसुवर्णस्यदित्सितंतेमहासुर १४ मह्यंततोवैद्विगुणंरथश्चैवहिरण्मयः ॥ मनोजवौवाजिनौचदित्सितंतेमहासुर १५ जिज्ञास्यतांरथःसद्योव्यक्तएषहिरण्मयः ॥ ततःप्रव्यथितोदैत्योददावभ्यधिकंवसु १६ विरावश्चसुरावश्चतस्मिन्युक्तौरथेहयौ ॥ ऊहतुःसवसून्याशुतावगस्त्याश्रमंप्रति १७ सर्वान्राज्ञःसहागस्त्यान्निमेषादिवभारत ॥ अगस्त्येनाभ्यनुज्ञाताजग्मूराजर्षयस्तदा ॥ कृतवांश्चमुनिःसर्वंलोपामुद्राचिकीर्षितम् १८ ॥ लोपामुद्रोवाच ॥ कृतवानसितत्सर्वंभगवन्ममकांक्षितम् ॥ उत्पादयसकृन्मह्यमपत्यंवीर्यवत्तरम् १९ ॥ अगस्त्यउवाच ॥ तुष्टोहमस्मिकल्याणितववृत्तेनशोभने ॥ विचारणामपत्येतुतववक्ष्यामितांशृणु २० सहस्रंतेऽस्तुपुत्राणांशतंवादशसंमितम् ॥ दशवाशततुल्याःस्युरेकोवाऽपिसहस्रजित् २१

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ दित्सितंमयायुष्मभ्यंदातुमिष्टं एतेनपरचित्ताभिज्ञत्वमगस्त्यस्यपरीक्षितम् १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० दशसंमितं दशशतसंमितम् २१

२२ ममभवत्संगमंचकार २३ शारदान्शरदाऋतुनायुक्तान्संवत्सरानित्यर्थः २४ प्राच्यवदुदरान्निर्गतोऽभवदित्यर्थः २५ । २६ । २७ युक्तमध्ययनेध्मवाहनादौ २८ । २९ प्राह्रादिःप्रह्रादगोत्रोद्भवः ३० ३१ शिलानांतलेष्वधोभागेषुसंत्रस्तालीना तेनपातालगामित्वमुक्तं शेषेणस्वर्गभूगतत्वमितित्रिपथगात्वमुक्तंगंगायाः ३२ । ३३ । ३४ रामोजामदग्न्यः हृतंदाशरथिरामेण ३५ । ३६ । ३७ तस्य

॥ लोपामुद्रोवाच ॥ सहस्रसंमितःपुत्रएकोऽप्यस्तुतपोधन ॥ एकोहिबहुभिःश्रेयान्विद्वान्साधुरसाधुभिः २२ ॥ लोमशउवाच ॥ सतथेतिप्रतिज्ञायतयासमभवन्मुनिः ॥ समयेसमशीलिन्याश्रद्धावान्श्रद्दधानया २३ ततआधायगर्भंतमगमद्वनमेवसः ॥ तस्मिन्वनगतेगर्भोववृधेसप्तशारदान् २४ सप्तमेऽब्देगतेचापिप्राच्यवत्समहाकविः ॥ ज्वलन्निवप्रभावेणदृढस्युर्नामभारत २५ सांगोपनिषदान्वेदान्जपन्निवमहातपाः ॥ तस्यपुत्रोऽभवदृषेःसतेजस्वीमहाद्विजः २६ सबालएवतेजस्वीपितुस्तस्यनिवेशने ॥ इध्मानांभारमाजह्रेइध्मवाहस्ततोऽभवत् २७ तथायुक्तंतुतंदृष्ट्वामुमुदेसमुनिस्तदा ॥ एवंसजनयामासभारतापत्यमुत्तमम् २८ लेभिरेपितरश्चास्यलोकान्राजन्यथेप्सितान् ॥ ततऊर्ध्वमयंख्यातस्त्वगस्त्यस्याश्रमोभुवि २९ प्राह्रादिरेवंवातापिरगस्त्येनोपशामितः ॥ तस्यायमाश्रमोराजन्रमणीयैर्गुणैर्युतः ३० एषाभागीरथीपुण्यादेवगंधर्वसेविता ॥ वातेरितापताकेवविराजतिनभस्तले ३१ प्रतार्यमाणाकूटेषुयथानिम्नेषुनित्यशः ॥ शिलातलेषुसंत्रस्तापन्नगेंद्रवधूरिव ३२ दक्षिणान्वैदिशंसर्वांप्लावयंतीचमातृवत् ॥ पूर्वंशंभोर्जटाभ्रष्टासमुद्रमहिषीप्रिया ॥ अस्यांनद्यांसुपुण्यायांयथेष्टमवगाह्यताम् ३३ युधिष्ठिरनिबोधेदंत्रिषुलोकेविश्रुतम् ॥ भृगोस्तीर्थंमहाराजमहर्षिगणसेवितम् ३४ यत्रोपस्पृष्टवान्रामोहृतंतेजस्तदाप्तवान् ॥ अत्रत्वंभ्रातृभिःसार्धंकृष्णयाचैवपांडव ३५ दुर्योधनहृतंतेजःपुनरादातुमर्हसि ॥ कृतवैरेणरामेणयथाचोपहृतंपुनः ३६ ॥ ॥ वैशंपायनउवाच ॥ ॥ सतत्रभ्रातृभिश्चैवकृष्णयाचैवपांडवः ॥ स्नात्वादेवान्पितॄंश्चैवतर्पयामासभारत ३७ तस्यतीर्थस्यरूपंवैदीप्तादीप्ततरंबभौ ॥ अप्रधृष्यतरश्चासीच्छात्रवाणांनरर्षभ ३८ अपृच्छच्चैवराजेंद्रलोमशंपांडुनंदनः ॥ भगवन्किमर्थंरामस्यहृतमासीद्वपुःप्रभो ॥ कथंप्रत्याहृतंचैवएतदाचक्ष्वपृच्छतः ३९ ॥ ॥ लोमशउवाच ॥ ॥ शृणुरामस्यराजेंद्रभार्गवस्यचधीमतः ॥ जातोदशरथस्यासीत्पुत्रोरामोमहात्मनः ४० विष्णुःस्वेनशरीरेणरावणस्यवधायवै ॥ पश्यामस्तमयोध्यायांजातंदाशरथिंततः ४१ ऋचीकनन्दनोरामोभार्गवोरेणुकासुतः ॥ तस्यदाशरथेःश्रुत्वारामस्याक्लिष्टकर्मणः ४२ कौतूहलान्वितोरामस्त्वयोध्यामगत्पुनः ॥ धनुरादायतद्दिव्यंक्षत्रियाणांनिबर्हणम् ४३ जिज्ञासमानोरामस्यवीर्यंदाशरथेस्तदा ॥ तंवैदशरथःश्रुत्वाविषयांतमुपागतम् ४४ प्रेषयामासरामस्यरामंपुत्रंपुरस्कृतम् ॥ सतमभ्यागतंदृष्ट्वाउद्यतास्त्रमवस्थितम् ४५ प्रहसन्निवकौंतेयरामोवचनमब्रवीत् ॥ कृतकालंहिराजेंद्रधनुरेतन्मयाविभो ४६

युधिष्ठिरस्य तीर्थस्यतीर्थेस्नानस्य ३८ वपुरोजः ३९ । ४० । ४१ दाशरथेःश्रुत्वा धनुर्भंजनादिपराक्रममितिशेषः कर्मणिवाषष्ठी ४२ । ४३ । ४४ । ४५ कृतकालं कृताःहिंसिताःकालतुल्याः क्षत्रियायेनतद्धनुः । कृहिंसायांस्वार्थेण्यिद्रूपम् ४६

४७ बाहुवीर्यविषये नकत्थनंश्लाघनंनास्ति ४८ व्यपदेशेनउक्त्या ४९ । ५० । ५१ । ५२ । ५३ श्रूयतेचकाराद्दृश्यतेच तवदर्पयुक्तत्वमितिशेषः अथापिक्षम्यते ५४ क्षत्रियेभ्यः क्षत्रियान्जित्वा ५५

समारोपययत्नेनयदिशक्तोऽसिपार्थिव ॥ इत्युक्तस्त्वाहभगवंस्त्वंनाधिक्षेप्तुमर्हसि ४७ नाहमप्यधमोधर्मेक्षत्रियाणांद्विजातिषु ॥ इक्ष्वाकूणांविशेषेणबाहुवीर्येणकत्थनम् ४८ तमेवंवादिनंतत्ररामोवचनमब्रवीत् ॥ अलंवैव्यपदेशेनधनुरायच्छराघव ४९ ततोजग्राहरोषेणक्षत्रियर्षभसूदनम् ॥ रामोदशरथिर्दिव्यंहस्ताद्रामस्यकार्मुकम् ५० धनुरारोपयामाससलीलइवभारत ॥ ज्याशब्दमकरोच्चैवस्मयमानःसवीर्यवान् ५१ तस्यशब्दस्यभूतानिवित्रसंत्यशनेरिव ॥ अथाब्रवीत्तदारामोरामंदाशरथिस्तदा ५२ इदमारोपितंब्रह्मन्किमन्यत्करवाणिते ॥ तस्यरामोददौदिव्यंजामदग्न्योमहात्मनः ॥ शरमाकर्णदेशांतमयमाकृष्यतामिति ५३ ॥ लोमशउवाच ॥ एतच्छ्रुत्वाऽब्रवीद्रामःप्रदीप्तइवमन्युना ॥ श्रूयतेक्षम्यतेचैवदर्पपूर्णोऽसिभार्गव ५४ त्वयाह्यधिगतंतेजःक्षत्रियेभ्योविशेषतः ॥ पितामहप्रसादेनतेनमांक्षिपसिध्रुवम् ५५ पश्यमांस्वेनरूपेणचक्षुस्तेवितराम्यहम् ॥ ततोरामशरीरेवैरामःपश्यतिभार्गवः ५६ आदित्यान्सवसून्रुद्रान्साध्यांश्चसमरुद्गणान् ॥ पितरोहुताशनश्चैवनक्षत्राणिग्रहास्तथा ५७ गन्धर्वाराक्षसायक्षानद्यस्तीर्थानियानिच ॥ ऋषयोवालखिल्याश्चब्रह्मभूताःसनातनाः ५८ देवर्षयश्चकात्स्न्र्येनसमुद्राःपर्वतास्तथा ॥ वेदाश्चसोपनिषदोवषट्कारैःसहाध्वरैः ५९ चेतोमंतिचसामानिधनुर्वेदश्चभारत ॥ मेघवृंदानिवर्षाणिविद्युतश्चयुधिष्ठिर ६० ततःसभगवान्विष्णुस्तंवैबाणंमुमोचह ॥ शुष्काशनिसमाकीर्णमहोल्काभिश्चभारत ६१ पांसुवर्षेणमहतामेघवर्षैश्चभूतलम् ॥ भूमिकंपैश्चनिर्घातैर्नादैश्चविपुलैरपि ६२ सरामंविह्वलंकृत्वातेजश्चाक्षिप्यकेवलम् ॥ आगच्छज्ज्वलितोबाणोरामबाहुप्रचोदितः ६३ सतुविह्वलतांगत्वाप्रतिलभ्यचचेतनाम् ॥ रामःप्रत्यागतप्राणःप्राणमद्विष्णुतेजसम् ६४ विष्णुनासोऽभ्यनुज्ञातोमहेंद्रमगमत्पुनः ॥ भीतस्तुतत्रन्यवसद्व्रीडितस्तुमहातपाः ६५ ततःसंवत्सरेऽतीतेहृतौजसमवस्थितम् ॥ निर्मदंदुःखितंदृष्ट्वापितरोराममब्रुवन् ६६ ॥ पितरऊचुः ॥ नवैसम्यगिदंपुत्रविष्णुमासाद्यवैकृतम् ॥ सहिपूज्यश्चमान्यश्चत्रिषुलोकेषुसर्वदा ६७ गच्छपुत्रनदींपुण्यांवधूसरकृताभयाम् ॥ तत्रोपस्पृश्यतीर्थेषुपुनर्वपुरवाप्स्यसि ६८ दीप्तोदंनामतत्तीर्थयत्रतेप्रपितामहः ॥ भृगुर्देवयुगेरामतप्तवानुत्तमंतपः ६९ तत्तथाकृतवान्रामःकौन्तेयवचनात्पितुः ॥ प्राप्तवांश्चपुनस्तेजस्तीर्थेऽस्मिन्पांडुनंदन ७० एतदीदृशकंतातरामेणाक्लिष्टकर्मणा ॥ प्राप्तमासीन्महाराजविष्णुमासाद्यवैपुरा ७१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांजामदग्न्यतेजोहानिकथनेएकोनशततमोऽध्यायः ॥ ९९ ॥ ॥ ॥ युधिष्ठिरउवाच ॥ भूयएवाहमिच्छामिमहर्षेस्तस्यधीमतः ॥ कर्मणांविस्तरंश्रोतुमगस्त्यस्यद्विजोत्तम १

५६ । ५७ । ५८ । ५९ चेतोमंति चेतनावंति आर्षपदत्वप्रयुक्तंरूपं चेतस्वंतीत्यपेक्षितम ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ ७० । ७१ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेएकोनशततमोऽध्यायः ॥ ९९ ॥ ॥ भूयइति १

२ । ३ । ४ । ५ । ६ । ७ सवोदास्यतिईप्सितमितिशेषः ८ । ९ । १० षडस्त्रिषट्कोणम् ११ । १२ । १३ जीवंजीववदिवेतिलुप्तोपमा यतोजीवकैःक्षुद्रजीवैःपश्वादिभिर्नादितमतश्चेतनमिवेत्यर्थः १४
१५ करेणुभिर्हस्तिनीभिः । प्रभिन्नंमदस्रावि । करटामदोद्भेदस्थानंगंडस्थलैकदेशस्तस्यमुखमुपरिभागोयेषांतैः १६ । १७ त्रिविष्टपसमप्रख्यंस्वर्गतुल्यप्रकाशम् १८ । १९ । २० । २१ परासोःगतप्राणस्य

॥ लोमशउवाच ॥ शृणुराजन्कथांदिव्यामद्भुतामतिमानुषीम् ॥ अगस्त्यस्यमहाराजप्रभावममितौजसः २ आसन्कृतयुगेघोरादानवायुद्धदुर्मदाः ॥ कालकेयाइतिख्यातागणाःपरमदारुणाः ३ तेतुवृत्रंसमाश्रित्यनानाप्रहरणोद्यताः ॥ समंतात्पर्यधावन्तमहेंद्रप्रमुखान्सुरान् ४ ततोवृत्रवधेयत्नमकुर्वंस्त्रिदशाःपुरा ॥ पुरंदरंपुरस्कृत्यब्रह्माणमुपतस्थिरे ५ कृतांजलींस्तुतान्सर्वान्परमेष्ठीत्युवाचह ॥ विदितंमेसुराःसर्वंयद्वःकार्यंचिकीर्षितम् ६ तमुपायंप्रवक्ष्यामियथावृत्रंवधिष्यथ ॥ दधीचइतिविख्यातोमहानृषिरुदारधीः ७ तंगत्वासहिताःसर्वेवरंवैसंप्रयाचत ॥ सवोदास्यतिधर्मात्मासुप्रीतेनांतरात्मना ८ सवाच्यःसहितैःसर्वैर्भवद्भिर्जयकांक्षिभिः ॥ स्वान्यस्थीनिप्रयच्छेतित्रैलोक्यस्यहितायवै ९ सशरीरंसमुत्सृज्यस्वान्यस्थीनिप्रदास्यति ॥ तस्यास्थिभिर्महाघोरंवज्रंसंस्क्रियतांदृढम् १० महच्छत्रुहणंघोरंषडस्त्रिभीमनिःस्वनम् ॥ तेनवज्रेणवैवृत्रंवधिष्यतिशतक्रतुः ११ एतद्वःसर्वमाख्यातंतस्माच्छीघ्रंविधीयताम् ॥ एवमुक्तास्ततोदेवाअनुज्ञाप्यपितामहम् १२ नारायणंपुरस्कृत्यदधीचस्याश्रमंययुः ॥ सरस्वत्याःपरेपारेनानाद्रुमलतावृतम् १३ षट्पदोद्गीतनिनदैर्विघुष्टंसामगैरिव ॥ पुंस्कोकिलरवोन्मिश्रंजीवंजीवकनादितम् १४ महिषैश्चवराहैश्चसृमरैश्चमरैरपि ॥ तत्रतत्रानुचरितंशार्दूलभयवर्जितैः १५ करेणुभिर्वारणैश्चप्रभिन्नकरटामुखैः ॥ सरोवगाढैःक्रीडद्भिःसमंतादनुनादितम् १६ सिंहव्याघ्रैर्महानादान्नदद्भिरनुनादितम् ॥ अपरैश्चापिसंलीनैर्गुहाकंदरशायिभिः १७ तेषुतेष्ववकाशेषुशोभितंसुमनोरमम् ॥ त्रिविष्टपसमप्रख्यंदधीचाश्रममागमन् १८ तत्रापश्यन्दधीचंतेदिवाकरसमद्युतिम् ॥ जाज्वल्यमानंवपुषायथालक्ष्म्यापितामहम् १९ तस्यपादौसुराराजन्नभिवाद्यप्रणम्यच ॥ अयाचंतवरंसर्वेयथोक्तंपरमेष्ठिना २० ततोदधीचःपरमप्रतीतःसुरोत्तमांस्तानिदमभ्युवाच ॥ करोमियद्वोहितमद्यदेवाःस्वंचापिदेहंस्वयमुत्सृजामि २१ सएवमुक्त्वाद्विपदांवरिष्ठःप्राणान्वशीस्वान्सहसोत्ससर्ज ॥ ततःसुरास्तेजगृहुःपरासोरस्थीनितस्याथयथोपदेशम् २२ प्रहृष्टरूपाश्चजयायदेवास्त्वष्टारमागम्यतमर्थमूचुः ॥ त्वष्टातुतेषांवचनंनिशम्यप्रहृष्टरूपःप्रयतःप्रयत्नात् २३ चकारवज्रंभृशमुग्ररूपंकृत्वाचशक्रंसउवाचहृष्टः ॥ अनेनवज्रप्रवरेणदेवभस्मीकुरुष्वाद्यसुरारिमुग्रम् २४ ततोहतारिःसगणःसुखंवैप्रशाधिकृत्स्नंत्रिदिवंदिविष्ठः ॥ त्वष्ट्रातथोक्तस्तुपुरंदरस्तद्वज्रंप्रहृष्टःप्रयतोह्यगृह्णात् २५ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांवज्रनिर्माणकथनेशततमोऽध्यायः ॥ १०० ॥

॥ लोमशउवाच ॥ ॥ ततःसवज्रीबलिभिर्दैवतैरभिरक्षितः ॥ आससादततोवृत्रंस्थितमावृत्यरोदसी १ कालकेयैर्महाकायैःसमंतादभिरक्षितम् ॥ समुद्यतप्रहरणैःसशृंगैरिवपर्वतैः २

२२ । २३ । २४ । २५ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे शततमोऽध्यायः ॥ १०० ॥ ॥ ॥ ततइति । रोदसीद्यावापृथिव्यौ १ । २

३ वीरबाहुभिःसार्धमादावुद्यताःपश्चादन्यैःप्रतिपिष्टास्तेषाम् ४ तालैस्तालफलैः ५ । ६ । ७ । ८ । ९ व्यदधद्विनिहितवान् १० । ११ । १२ बलस्थंबलवंतम् १३ । १४ माल्यधारीमालाधारी १५

ततोयुद्धंसमभवद्देवानांदानवैःसह ॥ मुहूर्तंभरतश्रेष्ठलोकत्रासकरंमहत् ३ उद्यतप्रतिपिष्टानांखड्गानांवीरबाहुभिः ॥ आसीत्सुतुमुलःशब्दःशरीरेष्वभिपात्य ताम् ४ शिरोभिःप्रपतद्भिश्चाप्यंतरिक्षान्महीतलम् ॥ तालैरिवमहाराजवृंताद्भ्रष्टैरदृश्यत ५ तेहेमकवचाभूत्वाकालेयाःपरिघायुधाः ॥ त्रिदशानभ्यवर्तंत दावदग्धाइवाद्रयः ६ तेषांवेगवतांवेगंसाभिमानंप्रधावताम् ॥ नशेकुस्त्रिदशाःसोढुंतेभग्नाःप्राद्रवन्भयात् ७ तान्दृष्ट्वाद्रवतोभीतान्सहस्राक्षःपुरंदरः ॥ वृत्रेविव र्धमानेचकश्मलंमहदाविशत् ८ कालेयभयसंत्रस्तोदेवःसाक्षात्पुरंदरः ॥ जगामशरणंशीघ्रंतंतुनारायणंप्रभुम् ९ तंशक्रंकश्मलाविष्टंदृष्ट्वाविष्णुःसनातनः ॥ स्व तेजोव्यदधच्छक्रेबलमस्यविवर्धयन् १० विष्णुनागोपितंशक्रंदृष्ट्वादेवगणास्ततः ॥ सर्वेतेजःसमादध्युस्तथाब्रह्मर्षयोऽमलाः ११ ससमाप्यायितःशक्रोविष्णु नादैवतैःसह ॥ ऋषिभिश्चमहाभागैर्बलवान्समपद्यत १२ ज्ञात्वाबलस्थंत्रिदशाधिपंतुननादवृत्रोमहतोनिनादान् ॥ तस्यप्रणादेनधरादिशश्चखंद्यौर्नगाश्चापि चचालसर्वम् १३ ततोमहेंद्रःपरमाभितप्तःश्रुत्वारवंघोररूपंमहांतम् ॥ भयेनिमग्नस्त्वरितोमुमोचवज्रंमहत्तस्यवधायराजन् १४ सशक्रवज्राभिहतःपपातमहासुरःकांचन माल्यधारी ॥ यथामहाशैलवरःपुरस्तात्समंदरोविष्णुकराद्विमुक्तः १५ तस्मिन्हतेदैत्यवरेभयार्तःशक्रःप्रदुद्रावसरःप्रवेष्टुम् ॥ वज्रंसमेनेनकराद्विमुक्तंवृत्रंभयाच्चापिहतं नमेने १६ सर्वेचदेवामुदिताःप्रहृष्टामहर्षयश्चेंद्रमभिष्टुवंतः ॥ सर्वांश्चदैत्यांस्त्वरिताःसमेत्यजघ्नुःसुरावृत्रवधाभितप्तान् १७ तेत्रास्यमानास्त्रिदशैःसमेतैःसमुद्रमेवावि विशुर्भयार्ताः ॥ प्रविश्यचैवोदधिमप्रमेयंझषाकुलंनक्रसमाकुलंच १८ तदास्ममंत्रंसहिताःप्रचक्रुस्त्रैलोक्यनाशार्थमभिस्मयंतः ॥ तत्रस्मकेचिन्मतिनिश्चयज्ञास्तांस्ता नुपायाननुपवर्णयंति १९ तेषांतुतत्रक्रमकालयोगाद्घोरामतिश्चिंतयतांबभूव ॥ येसंतिविद्यातपसोपपन्नास्तेषांविनाशःप्रथमंतुकार्यः २० लोकाहिसर्वेतपसाध्रियंतेतस्मा त्त्वरध्वंतपसःक्षयाय ॥ येसंतिकेचिद्धिवसुन्धरायांतपस्विनोधर्मविदश्चतज्ज्ञाः २१ तेषांवधःक्रियतांक्षिप्रमेवतेषुप्रनष्टेषुजगत्प्रनष्टम् ॥ एवंहिसर्वेगतबुद्धिभावाजगद्वि नाशेपरमप्रहृष्टाः २२ दुर्गंसमाश्रित्यमहोर्मिमंतंरत्नाकरंवरुणस्यालयंस्म २३ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्राप० लोमशतीर्थयात्रायांवृत्रवधोपा ख्यानेएकाधिकशततमोध्यायः ॥ १०१ ॥ ॥ लोमशउवाच ॥ समुद्रंतेसमाश्रित्यवरुणंनिधिमंभसः ॥ कालेयाःसंप्रवर्ततत्रैलोक्यस्यविनाशने १ तेरात्रौस मभिक्रुद्धाभक्षयंतिसदामुनीन् ॥ आश्रमेषुचयेसंतिपुण्येष्वायतनेषुच २ वसिष्ठस्याश्रमेविप्राभक्षितास्तैर्दुरात्मभिः ॥ अशीतिःशतमष्टौचनवचान्येतपस्विनः ३

हतमपिवृत्रंभयात्नहतमितिमेने १६ । १७ । १८ । १९ । २० ध्रियंतेजीवंति २१ गतबुद्धिभावाःप्राप्तधीनिश्चयाः २२ वरुणस्यालयंसमुद्रम् २३ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकाधिक शततमोऽध्यायः ॥ १०१ ॥ ॥ ॥ समुद्रमिति । कालेयाःकालायाःकश्यपभार्यायाःसुताः १ । २ । ३

४ । ५ । ६ कालोपसृष्टाः मृत्युनाग्रस्ताः ७ तापसेषुप्रवृत्तान्दैत्यांस्तापसाएवतपसाकुतोनवारयंतिइत्याशंक्याह तपस्विष्विति तपसैवधनवत्सु देहनाशेऽपितपोनाशोमाभूदितिभावः ८ शरीरैर्मांसा दिरहितत्वादस्थिमात्रैरित्यर्थः ९ अतएवशंखराशितुल्यैः १० कलशैः शिरोघटैः ११ । १२ । १३ । १४ दानवानांवधायेतिशेषः १५ क्षयंगृहंनाशंवा १६ । १७ । १८ । १९ इंगतिचलतीतिइंगंपचा

च्यवनस्याश्रमंगत्वापुण्यंद्विजनिषेवितम् ॥ फलमूलाशनानांहिमुनीनांभक्षितंशतम् ४ एवंरात्रौस्मकुर्वंतिविविशुश्चार्णवंदिवा ॥ भरद्वाजाश्रमेचैवनियताब्रह्मचारिणः ५ वाय्वाहारांबुभक्षाश्चविंशतिःसंनिषूदिताः ॥ एवंक्रमेणसर्वांस्तानाश्रमान्दानवास्तदा ६ निशायांपरिबाधंतेमत्ताभुजबलाश्रयात् ॥ कालोपसृष्टाःकालेयाघ्नंतो द्विजगणान्बहून ७ नचैनानन्वबुध्यंतमनुजामनुजोत्तम ॥ एवंप्रवृत्तान्दैत्यांस्तांस्तापसेषुतपस्विषु ८ प्रभातेसमदृश्यंतनियताहारकर्शिताः ॥ महीतलस्थामु नयःशरीरैर्गतजीवितैः ९ क्षीणमांसैर्विरुधिरैर्विमज्जांत्रैर्विसंधिभिः ॥ आकीर्णैराबभौभूमिःशंखानामिवराशिभिः १० कलशैर्विप्रविद्धैश्चस्रुवैर्भग्नैस्तथैवच ॥ विकी र्णैरग्निहोत्रैश्चभूर्बभूवसमावृता ११ निःस्वाध्यायवषट्कारंनष्टयज्ञोत्सवक्रियम् ॥ जगदासीन्निरुत्साहंकालेयभयपीडितम् १२ एवंसंक्षीयमाणाश्चमानवामनुजेश्वर ॥ आत्मत्राणपराभीताःप्राद्रवंतदिशोभयात् १३ केचिद्गुहाःप्रविविशुर्निर्झरांश्चापरेतथा ॥ अपरेमरणोद्विग्नाभयात्प्राणान्समुत्सृजन् १३ केचिदत्रमहेष्वासाःशूराः परमहर्षिताः ॥ मार्गमाणाःपरंयत्नंदानवानांप्रचक्रिरे १५ नचैतानधिजग्मुस्तेसमुद्रंसमुपाश्रितान् ॥ श्रमंजग्मुश्चपरममाजग्मुःक्षयमेवच १६ जगत्युपशमंयातेनष्ट यज्ञोत्सवक्रिये ॥ आजग्मुःपरमामार्तिंत्रिदशामनुजेश्वर १७ समेत्यसमहेंद्राश्चभयान्मंत्रंप्रचक्रिरे ॥ शरण्यंशरणंदेवंनारायणमजंविभुम् १८ तेऽभिगम्यनम स्कृत्यवैकुंठमपराजितम् ॥ ततोदेवाःसमस्तास्तेतदोचुर्मधुसूदनम् १९ त्वंनःस्रष्टाचभर्ताचहर्ताचजगतःप्रभो ॥ त्वयासृष्टमिदंविश्वंयच्चेंगंयच्चनेंगति २० त्वयाभूमिः पुरानष्टासमुद्रात्पुष्करेक्षण ॥ वाराहंवपुराश्रित्यजगदर्थेसमुद्धृता २१ आदिदैत्योमहावीर्योहिरण्यकशिपुःपुरा ॥ नारसिंहंवपुःकृत्वासूदितःपुरुषोत्तम २२ अवध्यः सर्वभूतानांबलिश्चापिमहासुरः ॥ वामनंवपुराश्रित्यत्रैलोक्याद्भ्रंशितस्त्वया २३ असुरश्चमहेष्वासोजंभइत्यभिविश्रुतः ॥ यज्ञक्षोभकरःक्रूरस्त्वयैवविनिपातितः २४ एवमादीनिकर्माणियेषांसंख्यानविद्यते ॥ अस्माकंभयभीतानांत्वंगतिर्मधुसूदन २५ तस्मात्त्वांदेवदेवेशलोकार्थंज्ञापयामहे ॥ रक्षलोकांश्चदेवांश्चशक्रंचमहतो भयात् २६ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांविष्णुस्तवेद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ ॥

॥ देवाऊचुः ॥ ॥ तवप्रसादाद्वर्धंतेप्रजाःसर्वाश्चतुर्विधाः ॥ ताभाविताभावयंतिहव्यकव्यैर्दिवौकसः १ लोकाह्येवंविवर्धंतेह्यन्योन्यंसमुपाश्रिताः ॥ त्वत्प्रसादान्निरु द्विग्नास्त्वयैवपरिरक्षिताः २

यच्चजंगमं नेंगतिस्थावरम् २० । २१ । २२ । २३ । २४ । २५ । २६ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ तवेति । चतुर्विधाःसुरनरतिर्यक्स्थावराः दिवौकसोदेवान् १ । २

३ । ४ । ५ । ६ । ७ । ८ । ९ १० ११ । १२ वारुणिंमैत्रावरुणपुत्रम् १३ अभिष्टुवन्अस्तुवन् अड्भावआर्षः १४ । १५ नगोत्तमःपर्वतेषुश्रेष्ठःविंध्योनाम्ना १६ तमसाविंध्यवृद्ध्याआवृते प्रस्तालोके



इदंचसमनुप्राप्तंलोकानांभयमुत्तमम् ॥ नवजानीमकेनेमेरात्रौवध्यंतिब्राह्मणाः ३ क्षीणेषुचब्राह्मणेषुपृथिवीक्षयमेष्यति ॥ ततःपृथिव्यांक्षीणायांत्रिदिवंक्षयमेष्यति ४ त्वत्प्रसादान्महाबाहोलोकाःसर्वेजगत्पते ॥ विनाशंनाधिगच्छेयुस्त्वयावैपरिरक्षिताः ५ ॥ विष्णुरुवाच ॥ विदितंमेसुराःसर्वंप्रजानांक्षयकारणम् ॥ भवतांचापिवक्ष्यामिशृणुध्वंविगतज्वराः ६ कालेयइतिविख्यातोगणःपरमदारुणः ॥ तैश्चवृत्रंसमाश्रित्यजगत्सर्वंप्रमाथितम् ७ तेवृत्रंनिहतंदृष्ट्वासहस्राक्षेणधीमता ॥ जीवितंपरिरक्षंतःप्रविष्टावरुणालयम् ८ तेप्रविश्योदधिंघोरंनक्रग्राहसमाकुलम् ॥ उत्सादनार्थंलोकानांरात्रौघ्नंतिऋषीनिह ९ नतुशक्याःक्षयंनेतुंसमुद्राश्रयगाहिते ॥ समुद्रस्यक्षयेबुद्धिर्भवद्भिःसंप्रधार्यताम् १० अगस्त्येनविनाकोहिशक्तोऽन्योऽर्णवशोषणे ॥ अन्यथाहिनशक्यास्तेविनासागरशोषणम् ११ एतच्छ्रुत्वातदादेवाविष्णुनासमुदाहृतम् ॥ परमेष्ठिनमाज्ञाप्यअगस्त्यस्याश्रमंययुः १२ तत्रापश्यन्महात्मानंवारुणिंदीप्ततेजसम् ॥ उपास्यमानमृषिभिर्देवैरिवपितामहम् १३ तेऽभिगम्यमहात्मानंमैत्रावरुणिमच्युतम् ॥ आश्रमस्थंतपोराशिंकर्मभिःस्वैरभिष्टुवन् १४ ॥ देवाऊचुः ॥ नाहुषेणाभितप्तानांत्वंलोकानांगतिःपुरा ॥ भ्रंशितश्चसुरैश्वर्यात्स्वर्लोकाल्लोककंटकः १५ क्रोधात्प्रवृद्धःसहसाभास्करस्यनगोत्तमः ॥ वचस्तवानतिक्रामन्विंध्यःशैलोनवर्धते १६ तमसाचावृतेलोकेमृत्युनाभ्यर्दिताःप्रजाः ॥ त्वामेवनाथमासाद्यनिर्वृतिंपरमांगताः १७ अस्माकंभयभीतानांनित्यशोभगवान्गतिः ॥ ततस्त्वार्ताःप्रयाचामोवरंत्वांवरदोह्यसि १८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामगस्त्यमाहात्म्यकथनेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ युधिष्ठिरउवाच ॥ किमर्थंसहसाविंध्यःप्रवृद्धःक्रोधमूर्च्छितः ॥ एतदिच्छाम्यहंश्रोतुंविस्तरेणमहामुने १ ॥ लोमशउवाच ॥ अद्रिराजंमहाशैलंमेरुंकनकपर्वतम् ॥ उदयास्तमनेभानुःप्रदक्षिणमवर्त्तत २ तंतुदृष्ट्वातथाविंध्यःशैलःसूर्यमथाब्रवीत् ॥ यथाहिमेरुर्भवतानित्यशःपरिगम्यते ३ प्रदक्षिणश्चक्रियतेमामेवंकुरुभास्कर ॥ एवमुक्तस्ततःसूर्यःशैलेंद्रंप्रत्यभाषत ४ नाहमात्मेच्छयाशैलंकरोम्येनंप्रदक्षिणम् ॥ एषमार्गःप्रदिष्टोमेयैरिदंनिर्मितंजगत् ५ एवमुक्तस्ततःक्रोधात्प्रवृद्धःसहसाऽचलः ॥ सूर्याचंद्रमसोर्मार्गंरोद्धुमिच्छन्परंतप ६ ततोदेवाःसहिताःसर्वएवविंध्यंसमागम्यमहाद्रिराजम् ॥ निवारयामासुरुपायतस्तंनचस्मतेषांवचनंचकार ७ अथाभिजग्मुर्मुनिमाश्रमस्थंतपस्विनंधर्मभृतांवरिष्ठम् ॥ अगस्त्यमत्यद्भुतवीर्यवंतंतंचार्थमूचुःसहिताःसुरास्ते ८ ॥ देवाऊचुः ॥ सूर्याचंद्रमसोर्मार्गंनक्षत्राणांगतिंतथा ॥ शैलराजोऽवृणोत्येषविंध्यःक्रोधवशानुगः ९ तंनिवारयितुंशक्तोनान्यःकश्चिद्द्विजोत्तम ॥ ऋतेत्वांहिमहाभागतस्मादेनंनिवारय १०



लोकेजगतिसति १७ । १८ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ किमर्थमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

तच्छ्रुत्वावचनंविप्रः सुराणांशैलमभ्यगात् ॥ सोऽभिगम्याब्रवीद्विंध्यंसदारः समुपस्थितम् ११ मार्गमिच्छाम्यहंदत्तंभवतापर्वतोत्तम ॥ दक्षिणामभिगंताऽस्मिदिशंका
र्येणकेनचित् १२ यावदागमनंमह्यंतावत्त्वंप्रतिपालय ॥ निवृत्तेमयिशैलेंद्रततोवर्धस्वकामतः १३ एवंससमयंकृत्वाविंध्येनामित्रकर्शन ॥ अद्यापिदक्षिणाद्देशाद्वारुणिर्न
निवर्तते १४ एतत्तेसर्वमाख्यातंयथाविंध्योनवर्धते ॥ अगस्त्यस्यप्रभावेणयन्मांत्वंपरिपृच्छसि १५ कालेयास्तुयथाराजन्सुरैःसर्वैर्निषूदिताः ॥ अगस्त्याद्वरमासाद्यत
न्मेनिगदतःशृणु १६ त्रिदशानांवचःश्रुत्वामैत्रावरुणिरब्रवीत् ॥ किमर्थमभियाताःस्थवरंमत्तःकमिच्छथ ॥ एवमुक्तास्ततस्तेनदेवतामुनिमब्रुवन् १७ एवंत्वयेच्छा
मकृतंहिकार्यंमहार्णवंपीयमानंमहात्मन् ॥ ततोवधिष्यामसहानुबंधान्कालेयसंज्ञान्सुरविद्विषस्तान् १८ त्रिदशानांवचःश्रुत्वातथेतिमुनिरब्रवीत् ॥ करिष्येभवतांका
मंलोकानांचमहत्सुखम् १९ एवमुक्त्वाततोऽगच्छत्समुद्रंसरितांपतिम् ॥ ऋषिभिश्चतपःसिद्धैःसार्धंदेवैश्चसुव्रत २० मनुष्योरगगंधर्वयक्षकिंपुरुषास्तथा ॥ अनुज
ग्मुर्महात्मानंद्रष्टुकामास्तदद्भुतम् २१ ततोऽभ्यगच्छन्सहिताःसमुद्रंभीमनिःस्वनम् ॥ नृत्यंतमिवचोर्मीभिर्वल्गंतमिववायुना २२ हसंतमिवफेनौघैःस्खलंतंकंदरेषुच ॥
नानाग्राहसमाकीर्णंनानाद्विजगणान्वितम् २३ अगस्त्यसहितादेवाःसगंधर्वमहोरगाः ॥ ऋषयश्चमहाभागाःसमासेदुर्महोदधिम् २४ ॥ इतिश्रीमहाभारतेआरण्यके
पर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामगस्त्योदधिगमनेचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ लोमशउवाच ॥ ॥ समुद्रंससमासाद्यवारुणिर्भगवानृषिः ॥
उवाचसहितान्देवानृषींश्चैवसमागतान् १ अहंलोकहितार्थंवैपिबामिवरुणालयम् ॥ भवद्भिर्यदनुष्ठेयंतच्छीघ्रंसंविधीयताम् २ एतावदुक्त्वावचनंमैत्रावरुणिरच्युतः ॥ समु
द्रमपिबत्क्रुद्धःसर्वलोकस्यपश्यतः ३ पीयमानंसमुद्रंतंदृष्ट्वासेंद्रास्तदामराः ॥ विस्मयंपरमंजग्मुःस्तुतिभिश्चाप्यपूजयन् ४ त्वंनस्त्राताविधाताचलोकानांलोकभावन ॥
त्वत्प्रसादात्समुच्छेदंनगच्छेत्सामरंजगत् ५ सपूज्यमानस्त्रिदशैर्महात्मागंधर्वतूर्येषुनदत्सुसर्वशः ॥ दिव्यैश्चपुष्पैरवकीर्यमाणोमहार्णवंनिःसलिलंचकार ६ दृष्ट्वाकृतंनिःस
लिलंमहार्णवंसुराःसमस्ताःपरमप्रहृष्टाः ॥ प्रगृह्यदिव्यानिवरायुधानितान्दानवान्जघ्नुरदीनसत्वाः ७ तेवध्यमानास्त्रिदशैर्महात्मभिर्महाबलैर्वेगिभिरुन्नदद्भिः ॥ नसे
हिरेवेगवतांमहात्मनांवेगंतदाधारयितुंदिवौकसाम् ८ तेवध्यमानास्त्रिदशैर्दानवाभीमनिःस्वनाः ॥ चक्रुःसुतुमुलंयुद्धंमुहूर्तमिवभारत ९ तेपूर्वंतपसादग्धामुनिभिर्भावि
तात्मभिः ॥ यतमानाःपरंशक्त्यात्रिदशैर्विनिषूदिताः १० तेहेमनिष्काभरणाःकुंडलांगदधारिणः ॥ निहताबह्वशोभंतपुष्पिताइवकिंशुकाः ११ हतशेषास्ततःकेचि
त्कालेयामनुजोत्तम ॥ विदार्यवसुधांदेवींपातालतलमास्थिताः १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ तानिति १ । २ । ३ । ४ । ५ । ६



निहतान्दानवान्दृष्ट्वात्रिदशामुनिपुंगवम् ॥ तुष्टुवुर्विविधैर्वाक्यैरिदंवचनमब्रुवन् १३ त्वत्प्रसादान्महाबाहोलोकैःप्राप्तंमहत्सुखम् ॥ त्वत्तेजसाचनिहताःकालेयाःक्रूरविक्रमाः १४ पूरयस्वमहाबाहोसमुद्रंलोकभावन ॥ यत्त्वयासलिलंपीतंतदस्मिन्पुनरुत्सृज १५ एवमुक्तःप्रत्युवाचभगवान्मुनिपुंगवः ॥ जीर्णंतद्धिमयातोयमुपायोऽन्यःप्रचिंत्यताम् १६ पूरणार्थंसमुद्रस्यभवद्भिर्यत्नमास्थितैः ॥ एतच्छ्रुत्वातुवचनंमहर्षेर्भावितात्मनः १७ विस्मिताश्वविषण्णाश्वबभूवुःसहिताःसुराः ॥ परस्परमनुज्ञाप्यप्रणम्यमुनिपुंगवम् १८ प्रजाःसर्वामहाराजविप्रजग्मुर्यथागतम् ॥ त्रिदशाविष्णुनासार्धमुपजग्मुःपितामहम् १९ पूरणार्थंसमुद्रस्यमंत्रयित्वापुनःपुनः ॥ ऊचुःप्रांजलयःसर्वेसागरस्याभिपूरणम् २० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामगस्त्योपाख्यानेपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ लोमशउवाच ॥ तानुवाचसमेतांस्तुब्रह्मालोकपितामहः ॥ गच्छध्वंविबुधाःसर्वेयथाकामंयथेप्सितम् १ महताकालयोगेनप्रकृतिंयास्यतेऽर्णवः ॥ ज्ञातींश्वकारणंकृत्वामहाराज्ञोभगीरथात् २ पितामहवचःश्रुत्वासर्वेविबुधसत्तमाः ॥ कालयोगंप्रतीक्षंतोजग्मुश्वापियथागतम् ३ ॥ युधिष्ठिरउवाच ॥ ॥ कथंवैज्ञातयोब्रह्मन्कारणंचात्रकिंमुने ॥ कथंसमुद्रःपूर्णश्वभगीरथप्रतिश्रयात् ४ एतदिच्छाम्यहंश्रोतुंविस्तरेणतपोधन ॥ कथ्यमानंत्वयाविप्रराज्ञांचरितमुत्तमम् ५ वैशंपायनउवाच ॥ ॥ एवमुक्तस्तुविप्रेंद्रोधर्मराज्ञामहात्मना ॥ कथयामासमाहात्म्यंसगरस्यमहात्मनः ६ ॥ लोमशउवाच ॥ इक्ष्वाकूणांकुलेजातःसगरोनामपार्थिवः ॥ रूपसत्वबलोपेतःसचापुत्रःप्रतापवान् ७ सहैहयान्समुत्साद्यतालजंवांश्वभारत ॥ वशेचकृत्वाराजन्यान्स्वराज्यमन्वशासत ८ तस्यभार्येत्वभवतांरूपयौवनदर्पिते ॥ वैदर्भीभरतश्रेष्ठशैब्याचभरतर्षभ ९ सपुत्रकामोनृपतिस्तप्यतेस्ममहत्तपः ॥ पत्नीभ्यांसहराजेंद्रकैलासंगिरिमाश्रितः १० सतप्यमानःसुमहत्तपोयोगसमन्वितः ॥ आससादमहात्मानंत्र्यक्षंत्रिपुरमर्दनम् ११ शंकरंभवमीशानंपिनाकिंशूलपाणिनम् ॥ त्र्यम्बकंशिवमुग्रेशंबहुरूपमुमापतिम् १२ सतंदृष्ट्वैववरदंपत्नीभ्यांसहितोनृपः ॥ प्रणिपत्यमहाबाहुःपुत्रार्थेसमयाचत १३ तंप्रीतिमान्हरःप्राहसभार्यंनृपसत्तमम् ॥ यस्मिन्वृतोमुहूर्तेऽहंत्वयेहनृपतेवरम् १४ षष्टिःपुत्रसहस्राणिशूराःपरमदर्पिताः ॥ एकस्यांसंभविष्यंतिपत्न्यांनरवरोत्तम १५ तेचैवसर्वेसहिताःक्षयंयास्यंतिपार्थिव ॥ एकोवंशधरःशूरएकस्यांसंभविष्यति १६ एवमुक्त्वातुतंरुद्रस्तत्रैवांतरधीयत ॥ सचापिसगरोराजाजगामस्वंनिवेशनम् १७ पत्नीभ्यांसहितस्तत्रसोऽतिहृष्टमनास्तदा ॥ तस्यतेमनुजश्रेष्ठभार्येकमललोचने १८ वैदर्भीचैवशैब्याचगर्भिण्यौसंबभूवतुः ॥ ततःकालेनवैदर्भीगर्भालाबुंव्यजायत १९



७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

२० । २१ । २२ । २३ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेषडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ एतच्छ्रुत्वेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

शैब्याचसुषुवेपुत्रंकुमारंदेवरूपिणम् ॥ तदालाबुंसमुत्स्रष्टुंमनश्चक्रेसपार्थिवः २० अथांतरिक्षाच्छुश्रावबाचंगम्भीरनिःस्वनाम् ॥ राजन्मासाहसंकार्षीःपुत्रान्नत्यक्तु
मर्हसि २१ अलाबुमध्यान्निष्कृष्यबीजंयत्नेनगोप्यताम् ॥ सोपस्वेदेषुपात्रेषुघृतपूर्णेषुभागशः २२ ततःपुत्रसहस्राणिषष्टिंप्राप्स्यसिभारत ॥ महादेवेनदिष्टंतेपुत्र
जन्मनराधिप ॥ अनेनक्रमयोगेनमातेबुद्धिरतोऽन्यथा २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसगरसंततिकथनेषडधिक
शततमोऽध्यायः ॥ १०६ ॥ ॥ लोमशउवाच ॥ एतच्छ्रुत्वांऽतरिक्षाच्चसराजाराजसत्तमः ॥ यथोक्तंतच्चकाराथश्रद्दधद्भरतर्षभ १ एकैकशस्ततःकृत्वाबीजंबीजं
नराधिपः ॥ घृतपूर्णेषुकुंभेषुतान्भागान्विदधेततः २ धात्रीश्चैकैकशःप्रादात्पुत्ररक्षणतत्परः ॥ ततःकालेनमहतासमुत्तस्थुर्महाबलाः ३ षष्टिःपुत्रसहस्राणितस्याप्रति
मतेजसः ॥ रुद्रप्रसादाद्राजर्षेःसमजायंतपार्थिव ४ तेघोराःक्रूरकर्माणआकाशपरिसर्पिणः ॥ बहुत्वाच्चावजानंतःसर्वाँल्लोकान्सहामरान् ५ त्रिदशांश्चाप्यबाधंतत
थागंधर्वराक्षसान् ॥ सर्वाणिचैवभूतानिशूराःसमरशालिनः ६ वध्यमानास्ततोलोकाःसागरैर्मंदबुद्धिभिः ॥ ब्रह्माणंशरणंजग्मुःसहिताःसर्वदैवतैः ७ तानुवाच
महाभागःसर्वलोकपितामहः ॥ गच्छध्वंत्रिदशाःसर्वेलोकैःसार्धंयथागतम् ८ नातिदीर्घेणकालेनसागराणांक्षयोमहान् ॥ भविष्यतिमहाघोरःस्वकृतैःकर्मभिःसुराः
९ एवमुक्तास्तुतेदेवालोकाश्चमनुजेश्वर ॥ पितामहमनुज्ञाप्यविप्रजग्मुर्यथागतम् १० ततःकालेबहुतिथेव्यतीतेभरतर्षभ ॥ दीक्षितःसगरोराजाहयमेधेनवीर्यवान्
११ तस्याश्वोव्यचरद्भूमिंपुत्रैःसपरिरक्षितः ॥ समुद्रंससमासाद्यनिस्तोयंभीमदर्शनम् १२ रक्ष्यमाणःप्रयत्नेनतत्रैवांतरधीयत ॥ ततस्तेसागरास्तातहृतंमत्वाहयो
त्तमम् १३ आगम्यपितुराचख्युरदृश्यंतुरगंहृतम् ॥ तेनोक्तादिक्षुसर्वासुसर्वेऽमार्गतवाजिनम् १४ ततस्तेपितुराज्ञायदिक्षुसर्वासुतंहयम् ॥ अमार्गंतमहाराजसर्वं
चपृथिवीतलम् १५ ततस्तेसागराःसर्वेसमुपेत्यपरस्परम् ॥ नाध्यगच्छंततुरगमश्वहर्तारमेवच १६ आगम्यपितरंचोचुस्ततःप्रांजलयोग्रतः ॥ ससमुद्रवनद्वीपासनदी
नदकंदरा १७ सपर्वतवनोद्देशानिखिलेनमहीनृप ॥ अस्माभिर्विचिताराजन्शासनात्तवपार्थिव १८ नचाश्वमधिगच्छामोनाश्वहर्तारमेवच ॥ श्रुत्वातुवचनंतेषांसरा
जाक्रोधमूर्च्छितः १९ उवाचवचनंसर्वांस्तदादैववशान्नृप ॥ अनागमायगच्छध्वंभूयोमार्गतवाजिनम् २० यज्ञियंतंविनाह्यश्वंनागंतव्यंहिपुत्रकाः ॥ प्रतिगृह्यतुसंदेशं
पितुस्तेसगरात्मजाः २१ भूयएवमहींकृत्स्नांविचेतुमुपचक्रमुः ॥ अथापश्यंततेवीराःपृथिवीमवदारिताम् २२ समासाद्यबिलंतच्चाप्यखनन्सगरात्मजाः ॥
कुद्दालैर्हेषुकैश्चैवसमुद्रंयत्नमास्थिताः २३

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ हेषुकैः हेषयतिसर्पयत्येभिरिति मृत्तिकोत्क्षेपणैःमंदंडैर्लोहपत्रैः । हेषृप्रसर्पणेऽस्यरूपम् २३

सागरैःसगरसप्रूहैः २४ । २५ । २६ । २७ पूर्वोत्तरेऐशान्याम् २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६

सखन्यमानःसहितैःसागरैर्वरुणालयः ॥ अगच्छत्परमामार्तिंदीर्यमाणःसमंततः २४ असुरोरगरक्षांसिसत्वानिविविधानिच ॥ आर्तनादमकुर्वन्तवध्यमानानि सागरैः २५ छिन्नशीर्षाविदेहाश्चभिन्नत्वगस्थिसंधयः ॥ प्राणिनःसमदृश्यंतशतशोऽथसहस्रशः २६ एवंहिखनतांतेषांसमुद्रंवरुणालयम् ॥ व्यतीतःसुमहान्कालेनचाश्वःसमदृश्यत २७ ततःपूर्वोत्तरेदेशेसमुद्रस्यमहीपते ॥ विदार्यपातालमथसंक्रुद्धाःसगरात्मजाः २८ अपश्यंतहयंतत्रविचरंतंमहीतले ॥ कपिलंचमहात्मानंतेजोराशिमनुत्तमम् ॥ तेजसादीप्यमानंतुज्वालाभिरिवपावकम् २९ तेतंदृष्ट्वाहयंराजन्संप्रहृष्टतनूरुहाः ॥ अनादृत्यमहात्मानंकपिलंकालचोदिताः ॥ ३० संक्रुद्धाःसंप्रधावंतअश्वग्रहणकांक्षिणः ॥ ततःक्रुद्धोमहाराजकपिलोमुनिसत्तमः ३१ वासुदेवेतियंप्राहुःकपिलंमुनिपुंगवम् ॥ सचक्षुर्विकृतंकृत्वातेजस्तेषुसमुत्सृजन् ३२ ददाहसुमहातेजामंदबुद्धीन्ससागरान् ॥ तान्दृष्ट्वाभस्मसाद्भूतान्नारदःसुमहातपाः ३३ सगरांतिकमागच्छत्तच्चतस्मैन्यवेदयत् ॥ सतच्छ्रुत्वावचोघोरंराजामुनिमुखोद्गतम् ३४ मुहूर्तंविमनाभूत्वास्थाणोर्वाक्यमचिंतयत् ॥ अंशुमंतंसमाहूयअसमंजःसुतंतदा ३५ पौत्रंभरतशार्दूलइदंवचनमब्रवीत् ॥ षष्टिस्तानिसहस्राणिपुत्राणाममितौजसाम् ३६ कापिलंतेजआसाद्यमत्कृतेनिधनंगताः ॥ तवचापिपितातातपरित्यक्तोमयाऽनघ ॥ धर्मंसंरक्षमाणेनपौराणांहितमिच्छता ३७ ॥ युधिष्ठिरउवाच ॥ किमर्थंराजशार्दूलःसगरःपुत्रमात्मजम् ॥ त्यक्तवान्दुस्त्यजंवीरंतन्मेब्रूहितपोधन ३८ ॥ लोमशउवाच ॥ असमंजाइतिख्यातःसगरस्यसुतोह्यभूत् ॥ यंशैब्याजनयामासपौराणांसहिदारकान् ३९ गलेषुक्रोशतोगृह्यनद्यांचिक्षेपदुर्बलान् ॥ ततःपौराःसमाजग्मुर्भयशोकपरिप्लुताः ४० सगरंचाभ्यभाषंतसर्वेप्रांजलयःस्थिताः ॥ त्वंनस्त्रातामहाराजपरचक्रादिभिर्भयात् ४१ असमंजोभयाद्घोरात्ततोनस्त्रातुमर्हसि ॥ पौराणांवचनंश्रुत्वाघोरंनृपतिसत्तमः ४२ मुहूर्तंविमनाभूत्वासचिवानिदमब्रवीत् ॥ असमंजाःपुरादद्यसुतोमेविप्रवास्यताम् ४३ यदिवोमत्प्रियंकार्यमेतच्छीघ्रंविधीयताम् ॥ एवमुक्तानरेन्द्रेणसचिवास्तेनराधिप ४४ यथोक्तंत्वरिताश्चक्रुर्यथाऽऽज्ञापितवान्नृपः ॥ एतत्तेसर्वमाख्यातंयथापुत्रोमहात्मना ४५ पौराणांहितकामेनसगरेणविवासितः ॥ अंशुमांस्तुमहेष्वासोयदुक्तःसगरेणहि ॥ तत्तेसर्वंप्रवक्ष्यामिकीर्त्यमानंनिबोधमे ४६ ॥ सगरउवाच ॥ पितुश्चतेऽहंत्यागेनपुत्राणांनिधनेनच ॥ अलाभेनतथाऽश्वस्यपरितप्यामिपुत्रक ४७ तस्माद्दुःखाभिसंतप्तंयज्ञविघ्नाच्चमोहितम् ॥ हयस्यानयनात्पौत्रनरकान्मांसमुद्धर ४८ अंशुमानेवमुक्तस्तुसगरेणमहात्मना ॥ जगामदुःखात्तंदेशंयत्रवैदारितामही ४९ सतुतेनैवमार्गेणसमुद्रंप्रविवेशह ॥ अपश्यच्चमहात्मानंकपिलंतुरगंचतम् ५० सदृष्ट्वातेजसोराशिंपुराणमृषिसत्तमम् ॥ प्रणम्यशिरसाभूमौकार्यमस्मैन्यवेदयत् ५१

४७ । ४८ । ४९ । ५० । ५१

ततःप्रीतोमहाराजकपिलोंऽशुमतोऽभवत् ॥ उवाचचैनंधर्मात्मावरदोस्मीतिभारत ५२ सवव्रेतुरगंतत्रप्रथमंयज्ञकारणात् ॥ द्वितीयंवरकंवव्रेपितॄणांपावनेच्छया ५३ तमुवाचमहातेजाःकपिलोमुनिपुंगवः ॥ ददानितवभद्रंतेयद्यत्प्रार्थयसेऽनघ ५४ त्वयिक्षमाचधर्मश्चसत्यंचापिप्रतिष्ठितम् ॥ त्वयाकृतार्थःसगरःपुत्रवांश्चत्वयापिता ५५ तवचैवप्रभावेनस्वर्गंयास्यंतिसागराः ॥ पौत्रश्चतेत्रिपथगांत्रिदिवादानयिष्यति ५६ पावनार्थंसागराणांतोषयित्वामहेश्वरम् ॥ हयंनयस्वभद्रंतेयज्ञियंनरपुंगव ५७ यज्ञःसमाप्यतांतातसगरस्यमहात्मनः ॥ अंशुमानेवमुक्तस्तुकपिलेनमहात्मना ५८ आजगामहयंगृह्ययज्ञवाटंमहात्मनः ॥ सोऽभिवाद्यततःपादौसगरस्यमहात्मनः ५९ मूर्ध्नितेनाप्युपाघ्रातस्तस्मैसर्वंन्यवेदयत् ॥ यथादृष्टंश्रुतंचापिसागराणांक्षयंतथा ६० तंचास्मैहयमाचष्टयज्ञवाटमुपागतम् ॥ तच्छ्रुत्वासगरोराजापुत्रजंदुःखमत्यजत् ६१ अंशुमंतंचसंपूज्यसमापयततंक्रतुम् ॥ समाप्तयज्ञःसगरोदेवैःसर्वैःसभाजितः ६२ पुत्रत्वेकल्पयामाससमुद्रंवरुणालयम् ॥ प्रशास्यसुचिरंकालंराज्यंराजीवलोचनः ६३ पौत्रेभारंसमावेश्यजगामत्रिदिवंतदा ॥ अंशुमानपिधर्मात्मामहींसागरमेखलाम् ६४ प्रशशासमहाराजयथैवास्यपितामहः ॥ तस्यपुत्रःसमभवद्दिलीपोनामधर्मवित् ६५ तस्मैराज्यंसमाधायअंशुमानपिसंस्थितः ॥ दिलीपस्तुततःश्रुत्वापितॄणांनिधनंमहत् ६६ पर्यतप्यतदुःखेनतेषांगतिमचिंतयत् ॥ गंगावतरणेयत्नंसुमहच्चाकरोन्नृपः ६७ नचावतारयामासचेष्टमानोयथाबलम् ॥ तस्यपुत्रःसमभवच्छ्रीमान्धर्मपरायणः ६८ भगीरथइतिख्यातःसत्यवागनसूयकः ॥ अभिषिच्यतुतंराज्येदिलीपोवनमाश्रितः ६९ तपःसिद्धिसमायोगात्सराजाभरतर्षभ ॥ वनाज्जगामत्रिदिवंकालयोगेनभारत ॥ ७० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामगस्त्यमाहात्म्यकथनेसप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥ ॥ ॥ लोमशउवाच ॥ सतुराजामहेष्वासश्चक्रवर्तीमहारथः ॥ बभूवसर्वलोकस्यमनोनयननंदनः १ सशुश्रावमहाबाहुःकपिलेनमहात्मना ॥ पितॄणांनिधनंघोरमप्राप्तिंत्रिदिवस्यच २ सराज्यंसचिवेन्यस्यहृदयेनविदूयता ॥ जगामहिमवत्पार्श्वंतपस्तप्तुंनरेश्वर ३ आरिराधयिषुर्गंगांतपसादग्धकिल्बिषः ॥ सोऽपश्यतनरश्रेष्ठहिमवंतंनगोत्तमम् ४ शृंगैर्बहुविधाकारैर्धातुमद्भिरलंकृतम् ॥ पवनालंबिभिर्मेघैःपरिषिक्तंसमंततः ५ नदीकुंजनितंबैश्चप्रासादैरुपशोभितम् ॥ गुहाकंदरसंलीनैःसिंहव्याघ्रनिषेवितम् ६ शकुनैश्चविचित्रांगैःकूजद्भिर्विविधागिरः ॥ भृंगराजैस्तथाहंसैर्दात्यूहैर्जलकुक्कुटैः ७ मयूरैःशतपत्रैश्चजीवंजीवककोकिलैः ॥ चकोरैरसितापांगैस्तथापुत्रप्रियैरपि ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टाधिकशततमोऽ

जलस्थानेषुरम्येषुपद्मिनीभिश्वसंकुलम् ॥ सारसानांचमधुरैर्व्याहृतैःसमलंकृतम् ९ किन्नरैरप्सरोभिश्वनिषेवितशिलातलम् ॥ दिग्वारणविषाणाग्रैःसमंताद्घृष्टपादपम् १० विद्याधरानुचरितंनानारत्नसमाकुलम् ॥ विषोल्बणभुजंगैश्वदीप्तजिह्वैर्निषेवितम् ११ क्वचित्कनकसंकाशंक्वचिद्रजतसन्निभम् ॥ क्वचिदंजनपुंजाभंहिमवंतमुपागमत् १२ सतुतत्रनरश्रेष्ठस्तपोघोरंसमाश्रितः ॥ फलमूलांबुसंभक्षःसहस्रंपरिवत्सरान् १३ संवत्सरसहस्रेतुगतेदिव्येमहानदी ॥ दर्शयामासतंगंगातदामूर्तिमतीस्वयम् १४ ॥ गंगोवाच ॥ किमिच्छसिमहाराजमत्तःकिंचददानिते ॥ तद्ब्रवीहिनरश्रेष्ठकरिष्यामिवचस्तव १५ एवमुक्तःप्रत्युवाचराजाहैमवतींतदा ॥ पितामहामेवरदेकपिलेनमहानदि १६ अन्वेषमाणास्तुरगंनीतावैवस्वतक्षयम् ॥ षष्टिस्तानिसहस्राणिसागराणांमहात्मनाम् १७ कपिलंदेवमासाद्यक्षणेननिधनंगताः ॥ तेषामेवंविनष्टानांस्वर्गेवासोनविद्यते १८ यावत्तानिशरीराणित्वंजलैर्नाभिषिंचसि ॥ तावत्तेषांगतिर्नास्तिसागराणांमहानदि १९ स्वर्गंनयमहाभागेमत्पितॄन्सगरात्मजान् ॥ तेषामर्थेनयाचामित्वामहंवैमहानदि २० ॥ लोमशउवाच ॥ ॥ एतच्छ्रुत्वावचोराज्ञोगंगालोकनमस्कृता ॥ भगीरथमिदंवाक्यंसुप्रीतासमभाषत २१ करिष्यामिमहाराजवचस्तेनात्रसंशयः ॥ वेगंतुममदुर्धार्यंपतंत्यागगनाद्भुवम् २२ नशक्तस्त्रिषुलोकेषुकश्चिद्धारयितुंनृप ॥ अन्यत्रविबुधश्रेष्ठान्नीलकंठान्महेश्वरात् २३ तंतोषयमहाबाहोतपसावरदंहरम् ॥ सतुमांप्रच्युतांदेवःशिरसाधारयिष्यति २४ सकरिष्यतितेकामंपितॄणांहितकाम्यया ॥ एतच्छ्रुत्वाततोराजन्महाराजोभगीरथः २५ कैलासंपर्वतंगत्वातोषयामासशंकरम् ॥ तपस्तीव्रमुपागम्यकालयोगेनकेनचित् २६ अगृह्णाच्चवरंतस्माद्गंगायाधारणेनृप ॥ स्वर्गेवासंसमुद्दिश्यपितॄणांसनरोत्तमः २७ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामगस्त्योपाख्यानेअष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ लोमशउवाच ॥ भगीरथवचःश्रुत्वाप्रियार्थंचदिवौकसाम् ॥ एवमस्त्वितिराजानंभगवान्प्रत्यभाषत १ धारयिष्येमहाभागगगनात्प्रच्युतांशिवाम् ॥ दिव्यांदेवनदींपुण्यांत्वत्कृतेनृपसत्तम २ एवमुक्त्वामहाबाहोहिमवंतमुपागमत् ॥ वृतःपारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ३ तत्रस्थित्वानरश्रेष्ठंभगीरथमुवाचह ॥ प्रयाचस्वमहाबाहोशैलराजसुतांनदीम् ४ पतमानांसरिच्छ्रेष्ठांधारयिष्येत्रिविष्टपात् ॥ एतच्छ्रुत्वावचोराजाशर्वेणसमुदाहृतम् ५ प्रयतःप्रणतोभूत्वागंगांसमनुचिंतयत् ॥ ततःपुण्यजलारम्याराज्ञासमनुचिंतिता ६ ईशानंचस्थितंदृष्ट्वागगनात्सहसाच्युता ॥ तांप्रच्युतामथोदृष्ट्वादेवाःसार्धंमहर्षिभिः ७ गंधर्वोरगयक्षाश्चसमाजग्मुर्दिदृक्षवः ॥ ततःपपातगगनाद्गंगाहिमवतःसुता ८ समुद्भूतमहावर्तामीनग्राहसमाकुला ॥ तांदधारहरोराजन्गंगांगगनमेखलाम् ९

ध्यायः ॥ १०८ ॥ ॥ भगीरथवच इति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेनवाधिकशततमोऽध्यायः ॥ १०९ ॥ ततइति १ भावान्पदार्थान् २ वाताबद्धावाते नाबद्धामेघाउपलाश्चभवन् वातंविनैवसहसामेघाःशिलाश्चप्रयुज्यंतेइत्यर्थः । भवन्नित्यडभावआर्षः । वाचायत्रभवन्नितिपाठेशब्दोवारणेनैवयत्रमेघाउपलाश्च हेभरत भासमानआविर्भवंतीतिशेषः ३ नचदृश्य

ललाटदेशेपतितांमालांमुक्तामयीमिव ॥ साबभूवविसर्पंतीत्रिधाराजन्समुद्रगा १० फेनपुंजाकुलजलाहंसानामिवपंक्तयः ॥ क्वचिदाभोगकुटिलाप्रस्खलंतीक्वचित्क्वचित् ११ साफेनपटसंवीतामत्तेवप्रमदाऽव्रजत् ॥ क्वचित्सातोयनिनदैर्नदंतीनादमुत्तमम् १२ एवंप्रकारान्सुबहून्कुर्वतीगगनाच्च्युता ॥ पृथिवीतलमासाद्यभगीरथमथाब्रवीत् १३ दर्शयस्वमहाराजमार्गंकेनव्रजाम्यहम् ॥ त्वदर्थमवतीर्णाऽस्मिपृथिवींपृथिवीपते १४ एतच्छ्रुत्वावचोराजाप्रातिष्ठतभगीरथः ॥ यत्रतानिशरीराणिसागराणांमहात्मनाम् १५ प्लावनार्थंनरश्रेष्ठपुण्येनसलिलेनच ॥ गंगायाधारणंकृत्वाहरोलोकनमस्कृतः १६ कैलासंपर्वतश्रेष्ठंजगामत्रिदशैःसह ॥ समासाद्यसमुद्रंचगंगयासहितोनृपः १७ पूरयामासवेगेनसमुद्रंवरुणालयम् ॥ दुहितृत्वेचनृपतिर्गंगांसमनुकल्पयत् १८ पितृणांचोदकंतत्रददौपूर्णमनोरथः ॥ एतत्तेसर्वमाख्यातंगंगात्रिपथगायथा १९ पूरणार्थंसमुद्रस्यपृथिवीमवतारिता ॥ समुद्रश्चयथापीतःकारणार्थंमहात्मना २० वातापिश्चयथानीतःक्षयंसब्रह्महाप्रभो ॥ अगस्त्येनमहाराजयन्मांत्वंपरिपृच्छसि २१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्राप० लोमशतीर्थयात्रायामगस्त्यमाहात्म्यकथनेनवाधिकशततमोऽध्यायः॥ १०९ ॥

वैशंपायनउवाच ॥ ॥ ततःप्रयातःकौन्तेयःक्रमेणभरतर्षभ ॥ नंदामपरनंदांचनद्यौपापभयापहे १ पर्वतंससमासाद्यहेमकूटमनामयम् ॥ अचिंत्यानद्भुतान्भावान्ददर्शसुबहून्नृपः २ वाताबद्धाभवन्मेघाउपलाश्चसहस्रशः ॥ नाशक्नुवंस्तमारोढुंविषण्णमनसोजनाः ३ वायुर्नित्यंववौतत्रनित्यंदेवश्चवर्षति ॥ स्वाध्यायघोषश्चतथाश्रूयतेनचदृश्यते४ सायंप्रातश्चभगवान्दृश्यतेहव्यवाहनः ॥ मक्षिकाश्चादशंस्तत्रतपसःप्रतिघातिकाः ५ निर्वेदोजायतेतत्रगृहाणिस्मरतेजनः ॥ एवंबहुविधान्भावानद्भुतान्वीक्ष्यपांडवः ॥ लोमशंपुनरेवाथपर्यपृच्छत्तदद्भुतम् ६ ॥ लोमशउवाच ॥ यथाश्रुतमिदंपूर्वमस्माभिररिकर्शन ॥ तदेकाग्रमनाराजन्निबोधगदतोमम ७ अस्मिन्नृषभकूटेऽभूदृषभोनामतापसः ॥ अनेकशतवर्षायुस्तपस्वीकोपनोभृशम् ८ सवैसंभाष्यमाणोऽन्यैःकोपाद्गिरिमुवाचह ॥ यइहव्याहरेत्कश्चिदुपलानुत्सृजेस्तथा ९ वातंचाहूयमाशब्दमित्युवाचसतापसः ॥ व्याहरंश्चेहपुरुषोमेघशब्देनवार्यते १० एवमेतानिकर्माणिराजंस्तेनमहर्षिणा ॥ कृतानिकानिचित्क्रोधात्प्रतिषिद्धानिकानिचित् ११ नंदांत्वभिगतादेवाःपुराराजन्नितिश्रुतिः ॥ अन्वपद्यंतसहसापुरुषादेवदर्शिनः १२ तेदर्शनंत्वनिच्छंतोदेवाःशक्रपुरोगमाः ॥ दुर्गंचक्रुरिमंदेशंगिरिंप्रत्यूहरूपकम् १३

तेऽध्येता ४ । ५ निर्वेदोगिरिदर्शनेवैराग्यं गृहाणिस्त्र्यादीनि ६ पृष्टश्चलोमशउवाच यथाश्रुतमिति ७ ऋषभकूटेऋषभाश्रितेशैलशृंगे ८ । ९ । माशब्दंकुर्वितिशेषः १० । ११ अन्वपद्यंतअनुगतवंतः देवदर्शिनो देवदर्शनार्थिनः १२ प्रत्यूहरूपकं दर्शनेविघ्नरूपं १३

१४ नियतवाङ्मौनवान् १५ । १६ । १७ । १८ हेकुरुश्रेष्ठ १९ । २० । २१ । २२ काश्यपस्यविभांडकस्य ऋश्येतितालव्यादिः । मूर्धन्यादिपाठःप्रामादिकः । ऋश्योमृगस्तस्यैवशृंगमस्यास्तीतिऋश्यशृंगः

तदाप्रभृतिकौन्तेयनरागिरिमिमंसदा ॥ नाशक्नुवन्नभिद्रष्टुंकुतएवाधिरोहितुम् १४ नातप्ततपसाशक्योद्रष्टुमेषमहागिरिः ॥ आरोढुंवापिकौन्तेयतस्मान्नियत वाग्भव १५ इहदेवास्तदासर्वेयज्ञानाजन्हुरुत्तमान् ॥ तेषामेतानिलिंगानिदृश्यंतेऽद्यापिभारत १६ कुशाकारवदूर्वेयंसंस्तीर्णेवचभूरियम् ॥ यूपप्रकाराबहवो वृक्षाश्चेमेविशांपते १७ देवाश्चऋषयश्चैवन्वसंत्यद्यापिभारत ॥ तेषांसायंतथाप्रातर्दृश्यतेहव्यवाहनः १८ इहाप्लुतानांकौंतेयसद्यःपाप्माऽभिहन्यते ॥ कुरुश्रे ष्ठाभिषेकंवैतस्मात्कुरुसहानुजः १९ ततोनंदाप्लुतांगस्त्वंकौशिकीमभियास्यसि ॥ विश्वामित्रेणयत्रोग्रंतपस्तप्तमनुत्तमम् २० ॥ वैशंपायनउवाच ॥ ततस्त त्रसमाप्लुत्यगात्राणिसगणोनृपः ॥ जगामकौशिकींपुण्यांरम्यांशीतजलांशुभाम् २१ ॥ लोमशउवाच ॥ एषादेवनदीपुण्याकौशिकीभरतर्षभ ॥ विश्वामि त्राश्रमोरम्यएषचात्रप्रकाशते २२ आश्रमश्चैवपुण्याख्यःकाश्यपस्यमहात्मनः ॥ ऋश्यशृंगःसुतोयस्यतपस्वीसंयतेंद्रियः २३ तपसोयःप्रभावेणवर्षयामास वासवम् ॥ अनावृष्ट्यांभयाद्यस्यववर्षबलवृत्रहा ॥ २४ मृग्यांजातःसतेजस्वीकाश्यपस्यसुतःप्रभुः ॥ विषयेलोमपादस्ययश्चकाराद्भुतंमहत् २५ निर्वर्तिते षुसस्येषुयस्मैशांतांददौनृपः ॥ लोमपादोदुहितरंसावित्रींसवितायथा २६ ॥ युधिष्ठिरउवाच ॥ ऋश्यशृंगःकथंमृग्यामुत्पन्नःकाश्यपात्मजः ॥ विरुद्धेयो निसंसर्गेकथंचतपसायुतः २७ किमर्थंचभयाच्छक्रस्तस्यबालस्यधीमतः ॥ अनावृष्ट्यांप्रवृत्तायांववर्षबलवृत्रहा २८ कथंरूपाचसाशांताराजपुत्रीयतव्रता ॥ लोभयामासयाचेतोमृगभूतस्यतस्यवै २९ लोमपादश्चराजर्षिर्यदाश्रूयतधार्मिकः ॥ कथंवैविषयेतस्यनावर्षत्पाकशासनः ३० एतन्मेभगवन्सर्वंविस्तरेणय थातथम् ॥ वक्तुमर्हसिशुश्रूषोर्ऋश्यशृंगस्यचेष्टितम् ३१ ॥ लोमशउवाच ॥ विभांडकस्यविप्रर्षेस्तपसाभावितात्मनः ॥ अमोघवीर्यस्यसतःप्रजापतिसम द्युतेः ३२ शृणुपुत्रोयथाजातऋश्यशृंगःप्रतापवान् ॥ महाह्रदेस्यमहातेजाबालःस्थविरसंमतः ३३ महाह्रदंसमासाद्यकाश्यपस्तपसिस्थितः ॥ दीर्घकालंपरि श्रांतऋषिःसदेवसम्मितः ३४ तस्यरेतःप्रचस्कंददृष्ट्वाऽप्सरसमुर्वशीम् ॥ अप्सूपस्पृशतोराजन्मृगीतच्चापिबत्तदा ३५ सहतोयेनतृषितागर्भिणीचाभवत्ततः ॥ सापुरोक्ताभगवताब्रह्मणालोककर्तृणा ३६ देवकन्यामृगीभूत्वामुनिंसूयविमोक्ष्यसे ॥ अमोघत्वाद्विधेश्चैवभावित्वाद्दैवनिर्मितात् ३७ तस्यांमृग्यांसमभवत्तस्य पुत्रोमहानृषिः ॥ ऋश्यशृंगस्तपोनित्योवनएवाभ्यवर्तत ३८ तस्यर्षेःशृंगंशिरसिराजन्नासीन्महात्मनः ॥ तेनर्श्यशृंगइत्येवंतदासप्रथितोऽभवत् ३९ नतेनदृष्ट पूर्वोऽन्यःपितुरन्यत्रमानुषः ॥ तस्मात्तस्यमनोनित्यंब्रह्मचर्येऽभवन्नृप ४०

ऋश्योनतुर्ष्यश्चितिमंत्रवर्णात् २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० शुश्रूषोर्मे इतिसंबंधः ३१ । ३२ महार्हस्यातिपूज्यस्य ३३ । ३४ । ३५ तोयेनमहाऽपिबदित्यन्वयः ३६ सूयमसूयत्रिर्वेति विधाकस्य दैवनिर्मिताद्वैतोर्भावित्वात् अपरिहार्यत्वाच्च ३७ । ३८ । ३९ । ४०

अंगानांदेशानाम ४१ तेनकामात्बुद्धिपूर्वंब्राह्मणस्यप्रतिश्रुत्येतिशेषः मिथ्याकृतं । मयातुभ्यंदातुंकिमपिनप्रतिश्रुतमित्यपलापंकृतवानित्यर्थः ४२ तत्रहेतुःपुरोहितस्यापचारोदोषः सोऽपि यदृच्छया ब्राह्मणापराधाभावेऽपिस्वेच्छयाकृतः ४३ । ४४ । ४५ निष्कृतिंप्रायश्चित्तम ४६ वानेयंवनभवम ४७ । ४८ । ४९ । ५० । ५१ । ५२ सर्वत्रपरवंचनादौ । निष्णाताःकुशलाः ५३

एतस्मिन्नेवकालेतुसखादशरथस्यवै ॥ लोमपादइतिख्यातोह्यंगानामीश्वरोऽभवत् ४१ तेनकामात्कृतंमिथ्याब्राह्मणस्येतिनःश्रुतिः ॥ सब्राह्मणैःपरित्यक्तस्ततोवैजगतःपतिः ४२ पुरोहितापचाराच्चतस्यराज्ञोयदृच्छया ॥ नववर्षसहस्राक्षस्ततोऽपीडयंतवैप्रजाः ४३ सब्राह्मणान्पर्यपृच्छत्तपोयुक्तान्मनीषिणः ॥ प्रवर्षणेसुरेंद्रस्यसमर्थान्पृथिवीपते ४४ कथंप्रवर्षेत्पर्जन्यउपायःपरिदृश्यताम् ॥ तमूचुश्चोदितास्तेतुस्वमतानिमनीषिणः ४५ तत्रत्वेकोमुनिवरस्तंराजानमुवाचह ॥ कुपितास्तवराजेंद्रब्राह्मणानिष्कृतिंचर ४६ ऋश्यशृंगंमुनिसुतमानयस्वचपार्थिव ॥ वानेयमनभिज्ञंचनारीणामार्जवेरतम् ४७ सचेदवतरेद्राजन्विषयंतेमहातपाः ॥ सद्यःप्रवर्षेत्पर्जन्यइतिमेनात्रसंशयः ४८ एतच्छ्रुत्वावचोराजन्कृत्वानिष्कृतिमात्मनः ॥ सगत्वापुनरागच्छत्प्रसन्नेषुद्विजातिषु ४९ राजानमागतंश्रुत्वाप्रतिसंजहृषुःप्रजाः ॥ ततोंऽगपतिराहूयसचिवान्मंत्रकोविदान् ५० ऋश्यशृंगागमेयत्नमकरोन्मंत्रनिश्चये ॥ सोऽध्यगच्छदुपायंतुतैरमात्यैःसहाच्युतः ५१ शास्त्रज्ञैरलमर्थज्ञैर्नीत्यांचपरिनिष्ठितैः ॥ ततश्चानाययामासवारमुख्यामहीपतिः ५२ वेश्याःसर्वत्रनिष्णातास्ताउवाचसपार्थिवः ॥ ऋश्यशृंगमृषेःपुत्रमानयध्वमुपायतः ५३ लोभयित्वाऽभिविश्वास्यविषयंममशोभनाः ॥ ताराजभयभीताश्चशापभीताश्चयोषितः ५४ अशक्यमूचुस्तत्कार्यंविवर्णागतचेतसः ॥ तत्रत्वेकाजरद्योषाराजानमिदमब्रवीत् ५५ प्रयतिष्येमहाराजतमानेतुंतपोधनम् ॥ अभिप्रेतांस्तुमेकामांस्त्वमनुज्ञातुमर्हसि ५६ ततःशक्ष्याम्यानयितुमृश्यशृंगमृषेःसुतम् ॥ तस्याःसर्वमभिप्रेतमन्वजानात्सपार्थिवः ५७ धनंचप्रददौभूरिरत्नानिविविधानिच ॥ ततोरूपेणसंपन्नावयसाचमहीपते ॥ स्त्रियआदायकाश्चित्साजगामवनमंजसा ५८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामृश्यशृंगोपाख्यानेदशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥ लोमशउवाच ॥ सातुनाव्याश्रमंचक्रेराजकार्यार्थसिद्धये ॥ संदेशाच्चैवनृपतेःस्वबुद्ध्याचैवभारत १ नानापुष्पफलैर्वृक्षैःकृत्रिमैरुपशोभितैः ॥ नानागुल्मलतोपेतैःस्वादुकामफलप्रदैः २ अतीवरमणीयंतदतीवचमनोहरम् ॥ चक्रेनाव्याश्रमंरम्यमद्भुतोपमदर्शनम् ३ ततोनिबध्यतांनावमदूरेकाश्यपाश्रमात् ॥ चारयामासपुरुषैर्विहारंतस्यवैमुनेः ४ ततोदुहितरंवेश्यांसमाधायेतिकार्यताम् ॥ दृष्ट्वांतरंकाश्यपस्यप्राहिणोद्बुद्धिसंमताम् ५ सातत्रगत्वाकुशलातपोनित्यस्यसंनिधौ ॥ आश्रमंतंसमासाद्यददर्शतमृषेःसुतम् ६ ॥ वेश्योवाच ॥ ॥ कच्चिन्मुनेकुशलंतापसानांकच्चिच्चवोमूलफलंप्रभूतम् ॥ कच्चिद्भवान्रमतेचाश्रमेऽस्मिंस्त्वांवैद्रष्टुंसांप्रतमागतोऽस्मि ७

५४ जरद्योषावृद्धास्त्री ५५ । ५६ अन्वजानादनुज्ञातवान् ५७ । ५८ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे दशाधिकशततमोऽध्यायः ॥ ११० ॥ ॥ ॥ सात्विति । नाव्याश्रमंनावातार्यमाश्रमं १ । २ । ३ मुनेर्विभांडकस्य । विहारंबहिर्गमनं । चारयामासचारैरधिगतवती ४ समाधायबोधयित्वा । इतिकार्यतामितिकर्तव्यतां । अंतरमसान्निध्यम् ५ । ६ । ७

८ । ९ कौश्यांबृस्यामास्वकुशासनेउपविश । यथोपजोषंयथासुखं । सुखायांसुखकर्याम् १० । ११ । १२ । १३ अनर्हाण्यत्युत्तमत्वादमूल्यानि १४ । १५ मूलेसमीपेविभज्यमानाअंगमोटनादी निकुर्वाणा । निषेवमाणास्वीवदभ्यंतरंप्रविशंती । षिवुतंतुसंतानेइति धातुः १६ । १७ कायंदेहंपीड्यआलिंगनेननिपीड्य । अपदेशंछलम् १८ भावेनाभिप्रायेण १९ प्रवेष्टितोव्याप्तः २० । २१

कच्चित्तपोवर्द्धतेतापसानांपिताचतेकच्चिदहीनतेजाः ॥ कच्चित्त्वयाप्रीयतेचैवविप्रकच्चित्स्वाध्यायःक्रियतेचर्श्यशृंग ८ ॥ ऋश्यशृंगउवाच ॥ ऋद्धयाभवान् ज्योतिरिवप्रकाशतेमन्येचाहंत्वामभिवादनीयम् ॥ पाद्यंवैतेसंप्रदास्यामिकामाद्यथाधर्मंफलमूलानिचैव ९ कौश्यांबृस्यामास्वयथोपजोषंकृष्णाजिनेनावृतायां सुखायाम् ॥ क्वचाश्रमस्तवकिंनामचेदंव्रतंब्रह्मंश्चरसिदेववत्त्वम् १० ॥ वेश्योवाच ॥ ममाश्रमःकाश्यपपुत्ररम्यस्त्रियोजनंशैलमिमंपरेण ॥ तत्रस्वधर्मो नाभिवादनंमेनचोदकंपाद्यमुपस्पृशामि ११ भवतानाभिवाद्योऽहमभिवाद्योभवान्मया ॥ व्रतमेतादृशंब्रह्मन्परिष्वज्योभवान्मया १२ ॥ ऋश्यशृंगउवाच ॥ फलानिपक्वानिददामितेऽहंभल्लातकान्यामलकानिचैव ॥ करूषकानींगुदधन्वनानिपिप्पलानांकामकारंकुरुष्व १३ ॥ लोमशउवाच ॥ सातानिसर्वाणिविवर्ज यित्वाभक्ष्याण्यनर्हाणिददौततोऽस्य ॥ तान्यृश्यशृंगस्यमहारसानिभृशंसुरूपाणिरुचिंददुर्हि १४ ददौचमाल्यानिसुगंधवंतिचित्राणिवासांसिचभानुमंति ॥ पेयानिचाग्र्याणिततोमुमोदचिक्रीडचैवप्रजहासचैव १५ साकंदुकेनारमतास्यमूलेविभज्यमानाफलितालतेव ॥ गात्रैश्चगात्राणिनिषेवमाणासमाश्लिषच्चासकृदृ श्यशृंगम् १६ सर्जानशोकांस्तिलकांश्चवृक्षान्सुपुष्पितानवनाम्यावभज्य ॥ विलज्जमानेवमदाभिभूताप्रलोभयामामसुतंमहर्षेः १७ अथर्श्यशृंगंविकृतंसमीक्ष्य पुनःपुनःपीड्यचकायमस्य ॥ अवेक्ष्यमाणाशनकैर्जगामकृत्वाऽग्निहोत्रस्यतदाऽपदेशम् १८ तस्यांगतायांमदनेनमत्तोविचेतनश्चाभवदृश्यशृंगः ॥ तामेवभावेनगते नशून्येविनिःश्वसन्नार्तरूपोबभूव १९ ततोमुहूर्त्ताद्धरिपिंगलाक्षःप्रवेष्टितोरोमभिरानखाग्रात् ॥ स्वाध्यायवान्वृत्तसमाधियुक्तोविभांडकःकाश्यपःप्रादुरासीत् २० सो पश्यदासीनमुपेत्यपुत्रंध्यायंतमेकंविपरीतचित्तम् ॥ विनिःश्वसंतंमुहुरूर्ध्वदृष्टिंविभांडकःपुत्रमुवाचदीनम् २१ नकल्प्यंतेसमिधःकिन्नुतातकच्चिद्धुतंचाग्निहोत्रंत्वयाऽद्य ॥ सुनिर्णिक्तंस्रुक्स्रुवंहोमधेनुःकच्चित्सवत्साऽद्यकृतात्वयाच २२ नवैयथापूर्वमिवासिपुत्रचिंतापरश्चासिविचेतनश्च ॥ दीनोतिमात्रंत्वमिहाद्यकिंनुपृच्छामित्वांकइहाद्यागतोऽभूत् २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामृश्यशृंगोपाख्यानेएकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ॥

॥ ऋश्यशृंगउवाच ॥ इहागतोजटिलोब्रह्मचारीनवैह्रस्वोनातिदीर्घोमनस्वी ॥ सुवर्णवर्णःकमलायताक्षःस्वतःसुराणामिवशोभमानः १ समृद्धरूपःसवितेवदीप्तःसुश्ल क्ष्णकृष्णाक्षिरतीवगौरः ॥ नीलाःप्रसन्नाश्चजटाःसुगंधाहिरण्यरज्जुग्रथिताःसुदीर्घाः २

कल्प्यंतेसिद्धाःक्रियंते । निर्णिक्तंप्रक्षालितं । सवत्साकृतादोहनायेतिशेषः २२ । २३ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥ ॥ ॥

इहागतइति । स्वतएवनालंकारादिना १ । २

आधाररूपाआलवालसदृशी कंठाभरणविशेषः । ' आधारश्चाधिकरणेऽप्यालवालेऽम्बुधारणे ' इतिविश्वः ३ विलग्नइवेतिकृशत्वंलक्ष्यते अतिकृतप्रमाणातिकृशा ४ कलापकौभूषणविशेषौस्वार्थेकः । ' कलापः संहतेबर्हेतूणीरेभूषणेहरे ' इतिविश्वः । कंकणावित्यर्थः ५ । ६ । ७ । ८ । ९ तथाफलंफलसदृशंकंदुकम् १० प्रीतिराह्लादः । रतिरासक्तिः ११ । १२ । १३ । १४ मूश्वलितेवेतिमधुपानजाभ्रांतिःसूचिता

आधाररूपापुनरस्यकंठेविभ्राजतेविद्युदिवांतरिक्षे ॥ द्वौचास्यपिंडावधरेणकंठादजातरोमौसुमनोहरौच ३ विलग्नमध्यश्चसनाभिदेशेकटिश्चतस्यातिकृतप्रमाणा ॥ तथाऽस्यचीरांतरतःप्रभातिहिरण्मयीमेखलामेयथेयम् ४ अन्यच्चतस्याद्भुतदर्शनीयंविकूजितंपादयोःसंप्रभाति ॥ पाण्योश्चतद्वत्स्वनवन्निबद्धौकलापकावक्षमाला यथेयम् ५ विचेष्टमानस्यचतस्यतानिकूजंतिहंसाःसरसीवमत्ताः ॥ चीराणितस्याद्भुतदर्शनानिनेमानितद्वन्ममरूपवंति ६ वक्रंचतस्याद्भुतदर्शनीयंप्रव्याहृतं ह्लादयतीवचेतः ॥ पुंस्कोकिलस्येवचतस्यवाणीतांशृण्वतोमेव्यथितोंऽतरात्मा ७ यथावनंमाधवमासिमध्येसमीरितंश्वसनेनेवभाति ॥ तथासभात्युत्तमपुण्य गंधीनिषेव्यमाणःपवनेनतात ८ सुसंयताश्चापिजटाविषक्ताद्वैधीकृतानातिसमाललाटे ॥ कर्णौचचित्रैरिवचक्रवाकैःसमावृतौतस्यसुरूपवद्भिः ९ तथाफलंवृ त्तमथोविचित्रंसमाहरत्पाणिनादक्षिणेन ॥ तद्भूमिमासाद्यपुनःपुनश्चसमुत्पतत्यद्भुतरूपमुच्चैः १० तच्चाभिहत्वापरिवर्त्ततेऽसौवातेरितोवृक्षइवावघूर्णन् ॥ तंप्रेक्षतः पुत्रमिवामराणांप्रीतिःपरातातरतिश्चजाता ११ समेसमाश्लिष्यपुनःशरीरंजटासुगृह्याभ्यवनाम्यवक्रम् ॥ वक्रेणवक्रंप्रणिधायशब्दंचकारतन्मेऽजनयत्प्रहर्षम् १२ नचापिपाद्यंबहुमन्यतेऽसौफलानिचेमानिमयाऽऽहृतानि ॥ एवंव्रतोऽस्मीतिचमामवोचत्फलानिचान्यानिसमाददन्मे १३ मयोपयुक्तानिफलानियानिने मानितुल्यानिरसेनतेषाम् ॥ नचापितेषांत्वगियंयथैषांसाराणिनैषामिवसंतितेषाम् १४ तोयानिचैवातिरसानिमह्यंप्रादान्सवैपातुमुदाररूपः ॥ पीत्वैवयान्य भ्यधिकःप्रहर्षोममाभवद्भूश्चलितेवचासीत् १५ इमानिचित्राणिचगंधवंतिमाल्यानितस्योद्ग्रथितानिपट्टैः ॥ यानिप्रकीर्येहगतःस्वमेवसआश्रमंतपसाद्योतमानः १६ गतेनतेनास्मिकृतोविचेतागात्रंचमेसंपरिदह्यतीव ॥ इच्छामितस्यांतिकमाशुगंतुंतंचेहनित्यंपरिवर्तमानम् १७ गच्छामितस्यांतिकमेवतातकानामसाब्रह्म चर्याचतस्य ॥ इच्छाम्यहंचरितुंतेनसार्धंयथातपःसचरत्यार्यधर्मा १८ चर्तुंतथेच्छाहृदयेममास्तिदुनोतिचित्तंयदितंनपश्ये १९ ॥ इतिश्रीमहाभारतेआर ण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामृश्यशृंगोपाख्यानेद्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ ॥ विभांडकउवाच ॥ रक्षांसिचैतानिचरं तिपुत्ररूपेणतेनाद्भुतदर्शनेन ॥ अतुल्यवीर्याण्यभिरूपवंतिविघ्नंसदातपसश्चिंतयंति १ सुरूपरूपाणिचतानितातप्रलोभयंतेविविधैरुपायैः ॥ सुखाच्चलोकाच्च निपातयंतितान्युग्ररूपाणिमुनीन्वनेषु २ नतानिसेवेतमुनिर्यतात्मासतांलोकान्प्रार्थयानःकथंचित् ॥ कृत्वाविघ्नंतापसानांरमंतेपापाचारास्तापसस्तान्नपश्येत् ३

१५ । १६ । १७ । १८ । १९ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ रक्षांसीति १ । २ । ३

४ श्रमाय आश्रमाय ५ अश्रावणेन अपाखंडेन वैदिकेन । 'श्रावणोमासिपाखंडे' इतिविश्वः । आश्रावणेनेतिप्रश्लेषेतुइष्ट्याद्यर्थं तत्राश्रयावयेत्यादिशब्दप्रयोगात् । वेशयोपावेश्या ६ । ७ । ८ आश्रमोयत्रस्थै

असज्जनेनाचरितानिपुत्रपापान्यपेयानिमधूनितानि ॥ माल्यानिचैतानिनवैमुनीनांस्मृतानिचित्रोज्ज्वलगंधवंति ४ रक्षांसितानीतिनिवार्यपुत्रंविभांडकस्तांमृगयां बभूव ॥ नासादयामासयदात्र्यहेणतदासपर्यावर्ततेश्रमाय ५ यदापुनःकाश्यपोवैजगामफलान्याहर्तुंविधिनाऽश्रावणेन ॥ तदापुनर्लोभयितुंजगामसावेशयोषामुनिमृश्यशृंगम् ६ दृष्ट्वैवतामृश्यशृंगःप्रहृष्टःसंभ्रांतरूपोऽभ्यपतत्तदानीम् ॥ प्रोवाचचैनांभवतोश्रमायगच्छावयावन्नपितामममैति ७ ततोराजन्काश्यपस्यैकपुत्रंप्रवेश्ययोगेनविमुच्यनावम् ॥ प्रमोदयंत्योविविधैरुपायैराजग्मुरंगाधिपतेःसमीपम् ८ संस्थाप्यतामाश्रमदर्शनेतुसंतारितांनावमथातिशुभ्राम् ॥ नीरादुपादायतथैवचक्रेनाव्याश्रमंनामवनंविचित्रम् ९ अंतःपुरेतंतुनिवेश्यराजाविभांडकस्यात्मजमेकपुत्रम् ॥ ददर्शदेवंसहसाप्रविष्टमापूर्यमाणंचजगज्जलेन १० सलोमपादःपरिपूर्णकामःसुतांददावृश्यशृंगायशांताम् ॥ क्रोधप्रतीकारकरंचचक्रेगाश्चैवमार्गेषुचकर्षणानि ११ विभांडकस्याव्रजतःसराजापशून्प्रभूतान्पशुपांश्चवीरान् ॥ समादिशत्पुत्रगृद्धीमहर्षिर्विभांडकःपरिपृच्छेद्यदावः १२ सवक्तव्यःप्रांजलिभिर्भवद्भिःपुत्रस्यतेपशवःकर्षणंच ॥ किंतेप्रियंवैक्रियतांमहर्षेदासाःस्मसर्वेतववाचिबद्धाः १३ अथोपायात्समुनिश्चंडकोपःस्वमाश्रमंमूलफलंगृहीत्वा ॥ अन्वेषमाणश्चनतत्रपुत्रंददर्शचुक्रोधततोभृशंसः १४ ततःसकोपेनविदीर्यमाणआशंकमानोनृपतेर्विधानम् ॥ जगामचंपांप्रतिधक्ष्यमाणस्तमंगराजंसपुरंसराष्ट्रम् १५ सवैश्रांतःक्षुधितःकाश्यपस्तान्घोषान्समासादितवान्समृद्धान् ॥ गोपैश्चतैर्विधिवत्पूज्यमानोराजेवतांरात्रिमुवासतत्र १६ अवाप्यसत्कारमतीवतेभ्यःप्रोवाचकस्यप्रथिताःस्थगोपाः ॥ ऊचुस्ततस्तेऽभ्युपगम्यसर्वेधनंतवेदंविहितंसुतस्य १७ देशेपुदेशेपुसपूज्यमानस्तांश्चैवशृण्वन्मधुरान्प्रलापान् ॥ प्रशांतभूयिष्ठरजाःप्रहृष्टःसमाससादांगपतिंपुरस्थम् १८ सपूजितस्तेननरर्षभेणददर्शपुत्रंदिविदेवंयथेंद्रम् ॥ शांतांस्नुषांचैवददर्शतत्रसौदामनीमुच्चरंतींयथैव १९ ग्रामांश्चघोषांश्चसुतस्यदृष्ट्वाशांतांचशांतोऽस्यपरःसकोपः ॥ चकारतस्यैवपरंप्रसादंविभांडकोभूमिपतेर्नरेंद्र २० सतत्रनिक्षिप्यसुतंमहर्षिरुवाचसूर्याग्निसमप्रभावः ॥ जातेचपुत्रेवनमेवाव्रजेथाराज्ञःप्रियाण्यस्यसर्वाणिकृत्वा २१ सतद्वचःकृतवानृश्यशृंगोययौचयत्रास्यपिताबभूव ॥ शांताचैनंपर्यचरन्नरेंद्रखेरोहिणीसोममिवानुकूला २२ अरुंधतीवासुभगावसिष्ठंलोपामुद्रावायथाह्यगस्त्यम् ॥ नलस्यवैदमयंतीयथाऽभूद्यथाशचीवज्रधरस्यचैव २३ नारायणीचेंद्रसेनाबभूववश्यानित्यंमुद्गलस्याजमीढ ॥ तथाशांताऋश्यशृंगंवनस्थंप्रीत्यायुक्तापर्यचरन्नरेन्द्र २४

ईड्यतेतावतिदेशेआश्रमदर्शने ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

२५ ॥ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ ॥ ॥ ॥ ततइति १ । २ । ३ । ४ उत्तरंतीरंवैतरण्याः ५ । ६ । ७ मापरस्त्वम
भिद्रोग्धा परभागस्यनाशंमाकुर्वित्यर्थः धर्मान्मावशीः धर्मसाधनान्यज्ञभागान्सर्वान्कामयेथाः । वशकांतौअस्यलुङिरूपम् ८ । ९ । १० अयातयामंतात्कालिकम् ११ । १२ । १३ । १४ । १५ । १६

तस्याश्रमःपुण्यएषोऽवभातिमहाह्रदंशोभयन्पुण्यकीर्तिः ॥ अत्रस्नातःकृतकृत्योविशुद्धस्तीर्थान्यन्यान्यनुसंयाहिराजन् २५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणि
तीर्थयात्रापर्वणिलोमशतीर्थयात्रायामृश्यशृंगोपाख्यानेत्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ वैशंपायनउवाच ॥ ततःप्रयातःकौशिक्याःपांडवोजनमे
जय ॥ आनुपूर्व्येणसर्वाणिजगामायतनान्यथ १ ससागरंसमासाद्यगंगायाःसंगमेनृप ॥ नदीशतानांपंचानांमध्येचक्रेसमाप्लवम् २ ततःसमुद्रतीरेणजगामवसुधाधि
पः ॥ भ्रातृभिःसहितोवीरःकलिंगान्प्रतिभारत ३ ॥ लोमशउवाच ॥ एतेकलिंगाःकौंतेयतत्रवैतरणीनदी ॥ यत्रायजतधर्मोऽपिदेवाञ्शरणमेत्यवै ४ ऋषिभिःसमु
पायुक्तंयज्ञियंगिरिशोभितम् ॥ उत्तरंतीरमेतद्धिसततंद्विजसेवितम् ५ समानंदेवयानेनपथास्वर्गमुपेयुषः ॥ अत्रवैऋषयोऽन्येऽपिपुराक्रतुभिरीजिरे ६ अत्रैवरुद्रोराजें
द्रपशुमादत्तवान्मखे ॥ पशुमादायराजेंद्रभागोऽयमितिचाब्रवीत् ७ हृतेपशौतदादेवास्तमूचुर्भरतर्षभ ॥ मापरस्वमभिद्रोग्धामाधर्मान्सकलान्वशीः ८ ततःकल्याण
रूपाभिर्वाग्भिस्तेरुद्रमस्तुवन् ॥ इष्ट्याचैनंतर्पयित्वामानयांचक्रिरेतदा ९ ततःसपशुमुत्सृज्यदेवयानेनजग्मिवान् ॥ तत्रानुवंशोरुद्रस्यतंनिबोधयुधिष्ठिर १० अया
तयामंसर्वेभ्योभागेभ्योभागमुत्तमम् ॥ देवाःसंकल्पयामासुर्भयाद्रुद्रस्यशाश्वतम् ११ इमांगाथामत्रगायन्नपःस्पृशतियोनरः ॥ देवयानोऽस्यपंथाश्चचक्षुषाऽभिप्र
काशते १२ ॥ वैशंपायनउवाच ॥ ततोवैतरणींसर्वेपांडवाद्रौपदीतथा ॥ अवतीर्यमहाभागास्तर्पयांचक्रिरेपितॄन् १३ ॥ युधिष्ठिरउवाच ॥ उपस्पृश्येहविधिवदस्यां
नद्यांतपोबलात् ॥ मानुषादस्मिविषयादपेतःपश्यलोमश १४ सर्वाँल्लोकान्प्रपश्यामिप्रसादात्तवसुव्रत ॥ वैखानसानांजपतामेषशब्दोमहात्मनाम् १५ ॥ लोमशउ
वाच ॥ त्रिशतंवैसहस्राणियोजनानांयुधिष्ठिर ॥ यत्रध्वनिंशृणोष्येनंतूष्णीमास्वविशांपते १६ एतत्स्वयंभुवोराजन्वनंदिव्यंप्रकाशते ॥ यत्रायजतराजेंद्रविश्वकर्माप्र
तापवान् १७ यस्मिन्यज्ञेहिभूर्दत्ताकश्यपायमहात्मने ॥ सपर्वतवनोद्देशादक्षिणार्थेस्वयंभुवा १८ अवासीदच्चकौंतेयदत्तमात्रामहीतदा ॥ उवाचचापिकुपितालोके
श्वरमिदंप्रभुम् १९ नमांमर्त्यायभगवन्कस्मैचिद्दातुमर्हसि ॥ प्रदानंमोघमेतत्तेयास्याम्येषारसातलम् २० विषीदंतींतुतांदृष्ट्वाकश्यपोभगवानृषिः ॥ प्रसादयांबभू
वाथततोभूमिंविशांपते २१ ततःप्रसन्नापृथिवीतपसातस्यपांडव ॥ पुनरुन्मज्यसलिलाद्वेदीरूपास्थितावभौ २२ सैषाप्रकाशतेराजन्वेदीसंस्थानलक्षणा ॥
आरुह्यात्रमहाराजवीर्यवान्वैभविष्यसि २३

'भूमिर्ईजगावित्युदाहरंतिनमामर्त्यःकश्चनदातुमर्हतिविश्वकर्मन्भौवनमांदिदासिथनिमंक्ष्येऽहंसलिलस्यमध्येमोघस्तएषकश्यापायासस्संगरः' इतिश्रुतेरर्थंसंगृण्हाति यत्रायजतराजेंद्रेत्यादिना १७ । १८ । १९
२० । २१ । २२ । २३

२४ । २५ स्नानाद्यर्थमसुद्रप्रार्थनामंत्रमाह ओंनमइति । विश्वंगुप्तंलीनमस्मिन्प्रलयेऽस्तीतिविश्वगुप्तः विश्वस्मात्परायश्रेष्ठायविष्णवेइत्यर्थः । लवणांभसिक्षारोदके २६ अग्निर्मित्रश्चतेजस्त्वादग्निवत्सूर्योऽप्यपांयोनिः अपामितिशेषः । विष्णोर्व्यापकस्यात्मनोरेतःशरीराकारपरिणतमभिव्यक्तिस्थानंत्वं हेसमुद्र अमृतस्यनाभिःसुधायागर्भस्थानम् २७ इडायज्ञः विष्णोरेतोधाःविष्णोरेतःजीवःसधीयतेऽस्मिन्देहे अमृतस्य

सैषासागरमासाद्यराजन्वेदीसमाश्रिता ॥ एतामारुह्यभद्रंतेत्वमेकस्तरसागरम् २४ अहंचतेस्वस्त्ययनंप्रयोक्ष्येयथात्वमेनामधिरोहसेऽद्य ॥ स्पृष्टाहिमर्त्येनततःसमुद्रमेषावेदीप्रविशत्याजमीढ २५ ओंनमोविश्वगुप्तायनमोविश्वपरायते ॥ सान्निध्यंकुरुदेवेशसागरेलवणांभसि २६ अग्निर्मित्रोयोनिरापोऽथदेव्योविष्णोरेतस्त्वममृतस्यनाभिः ॥ एवंब्रुवन्पांडवसत्यवाक्यंवेदीमिमांत्वंतरसाऽधिरोह २७ अग्निश्चतेयोनिरिडाचदेहोरेतोधाविष्णोरमृतस्यनाभिः ॥ एवंजपन्पांडवसत्यवाक्यंततोवगाहेतपतिंनदीनाम् २८ अन्यथाहिकुरुश्रेष्ठदेवयोनिरपांपतिः ॥ कुशाग्रेणापिकौंतेयनस्प्रष्टव्योमहोदधिः २९ ॥ वैशंपायनउवाच ॥ ततःकृतस्वस्त्ययनोमहात्मायुधिष्ठिरःसागरमभ्यगच्छत् ॥ कृत्वाचतच्छासनमस्यसर्वंमहेंद्रमासाद्यनिशामुवास ३० ॥ इतिश्रीमहाभारतेआरण्यके० तीर्थयात्रा० लोमशतीर्थयात्रायांमहेंद्राचलगमनेचतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

॥ वैशंपायनउवाच ॥ सतत्रतामुषित्वैकांरजनींपृथिवीपतिः ॥ तापसानांपरंचक्रेसत्कारंभ्रातृभिःसह १ लोमशस्तस्यतान्सर्वानाचख्यौतत्रतापसान् ॥ भृगूनंगिरसश्चैववसिष्ठानथकाश्यपान् २ तान्समेत्यसराजर्षिरभिवाद्यकृतांजलिः ॥ रामस्यानुचरंवीरमपृच्छदकृतव्रणम् ३ कदातुरामोभगवांस्तापसान्दर्शयिष्यति ॥ तेनैवाहंप्रसंगेनद्रष्टुमिच्छामिभार्गवम् ४ ॥ अकृतव्रणउवाच ॥ आयानेवासिविदितोरामस्यविदितात्मनः ॥ प्रीतिस्त्वयिचरामस्यक्षिप्रंत्वांदर्शयिष्यति ५ चतुर्दशीमष्टमींचरामंपश्यंतितापसाः ॥ अस्यांरात्र्यांव्यतीतायांभवित्रीश्वश्चतुर्दशी ६ ॥ युधिष्ठिरउवाच ॥ भवाननुगतोरामंजामदग्न्यंमहाबलम् ॥ प्रत्यक्षदर्शीसर्वस्यपूर्ववृत्तस्यकर्मणः ७ सभवान्कथयत्वद्ययथारामेणनिर्जिताः ॥ आहवेक्षत्रियाःसर्वेकथंकेनचहेतुना ८ ॥ अकृतव्रणउवाच ॥ हंततेकथयिष्यामिमहदाख्यानमुत्तमम् ॥ भृगूणांराजशार्दूलवंशेजातस्यभारत ९ रामस्यजामदग्न्यस्यचरितंदेवसंमितम् ॥ हैहयाधिपतेश्चैवकार्तवीर्यस्यभारत १० रामेणचार्जुनोनामहैहयाधिपतिर्हतः ॥ तस्यबाहुशतान्यासंस्त्रीणिसप्तचपांडव ११ दत्तात्रेयप्रसादेनविमानंकांचनंतथा ॥ ऐश्वर्यंसर्वभूतेषुपृथिव्यांपृथिवीपते १२ अव्याहतगतिश्चैवरथस्तस्यमहात्मनः ॥ रथेनतेनतुसदावरदानेनवीर्यवान् १३ ममर्ददेवान्यक्षांश्चऋषींश्चैवसमंततः ॥ भूतांश्चैवससर्वांस्तुपीडयामाससर्वतः १४ ततोदेवाःसमेत्याहुर्ऋषयश्चमहाव्रताः ॥ देवदेवंसुरारिघ्नंविष्णुंसत्यपराक्रमम् १५ भगवन्भूतरक्षार्थमर्जुनंजहिवैप्रभो ॥ विमानेनचदिव्येनहैहयाधिपतिःप्रभुः १६

नाभिःमोक्षस्यसाधनम् २८ देवयोनिःदेवस्थानम् २९ । ३० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ सइति १ । २ । ३ । ४ आयान्आगच्छन् ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ । २२ । २३ । २४ एकतइति । बहिःश्यामाअंतरारक्ता ःकर्णायेषांते एकतःश्यामकर्णास्तेषाम् २५ । २६ । २७ । २८ जन्याःवरपक्षीयाः २९ । ३० अवलोककोऽवलोक

शचीसहायंक्रीडंतंधर्षयामासवासवम् ॥ ततस्तुभगवान्देवःशक्रेणसहितस्तदा ॥ कार्तवीर्यविनाशार्थंमंत्रयामासभारत १७ यत्तद्भूतहितंकार्यंसुरेंद्रेणनिवेदितम् ॥ संप्रतिश्रुत्यतत्सर्वंभगवाँल्लोकपूजितः १८ जगामबदरींरम्यांस्वमेवाश्रममंडलम् ॥ एतस्मिन्नेवकालेतुपृथिव्यांपृथिवीपतिः १९ कान्यकुब्जेमहानासीत्पार्थिवः सुमहाबलः ॥ गाधीतिविश्रुतोलोकेवनवासंजगामह २० वनेतुतस्यवसतःकन्याजज्ञेऽप्सरःसमा ॥ ऋचीकोभार्गवस्तांचवरयामासभारत २१ तमुवाचततो गाधिर्ब्राह्मणंसंशितव्रतम् ॥ उचितंनःकुलेकिंचित्पूर्वैर्यत्संप्रवर्तितम् २२ एकतःश्यामकर्णानांपांडुराणांतरस्विनाम् ॥ सहस्रंवाजिनांशुल्कमितिविद्धिद्विजोत्तम २३ नचापिभगवान्वाच्योदीयतामितिभार्गव ॥ देयामेदुहिताचैवत्वद्विधायमहात्मने २४ ॥ ऋचीकउवाच ॥ एकतःश्यामकर्णानांपांडुराणांतरस्विनाम् ॥ दास्याम्यश्वसहस्रंतेममभार्यासुताऽस्तुते २५ ॥ अकृतव्रणउवाच ॥ सतथेतिप्रतिज्ञायराजन्वरुणमब्रवीत् ॥ एकतःश्यामकर्णानांपांडुराणांतरस्विनाम् २६ सहस्रंवाजिनामेकंशुल्कार्थंप्रतिदीयताम् ॥ तस्मैप्रादात्सहस्रंवैवाजिनांवरुणस्तदा २७ तदश्वतीर्थंविख्यातमुत्थितायत्रतेहयाः ॥ गंगायांकान्यकुब्जेवैददौसत्यवतींतदा २८ ततोगाधिःसुतांचास्मैजन्याश्चासन्सुरास्तदा ॥ लब्ध्वाहयसहस्रंतुतांश्चदृष्ट्वादिवौकसः २९ धर्मेणलब्ध्वातांभार्यामृचीकोद्विजसत्तमः ॥ यथाकामंयथाजोषंतयारेमेसुमध्यया ३० तंविवाहेकृतेराजन्सभार्यमवलोककः ॥ आजगामभृगुश्रेष्ठःपुत्रंदृष्ट्वाननंदह ३१ भार्यापतीतमासीनंगुरुंसुरगणार्चितम् ॥ अर्चित्वापर्युपासीनौप्रांजलीतस्थतुस्तदा ३२ ततःस्नुषांसभगवान्प्रहृष्टोभृगुरब्रवीत् ॥ वरंवृणीष्वसुभगेदाताह्यस्मितवेप्सितम् ३३ सावैप्रसादयामासतंगुरुंपुत्रकारणात् ॥ आत्मनश्चैवमातुश्चप्रसादंचचकारसः ३४ ॥ भृगुरुवाच ॥ ऋतौत्वंचैवमाताचस्नातेपुंसवनायवै ॥ आलिंगेतांपृथग्वृक्षौसाश्वत्थंत्वमुदुंबरम् ३५ चरुद्वयमिदंभद्रेजनन्याश्चतवैवच ॥ विश्वमावर्तयित्वातुमयायत्नेनसाधितम् ३६ प्राशितव्यंप्रयत्नेनेत्युक्त्वाऽदर्शनंगतः ॥ आलिंगनेचरौचैवचक्रतुस्तेविपर्ययम् ३७ ततः पुनःसभगवान्कालेबहुतिथेगते ॥ दिव्यज्ञानाद्विदित्वातुभगवानागतःपुनः ३८ अथोवाचमहातेजाभृगुःसत्यवतींस्नुषाम् ॥ उपयुक्तश्चरुर्भद्रेवृक्षेचालिंगनंकृतम् ३९ विपरीतेनतेसुभ्रूर्मात्राचैवासिवंचिता ॥ ब्राह्मणःक्षत्रवृत्तिर्वैतवपुत्रोभविष्यति ४० क्षत्रियोब्राह्मणाचारोमातुस्तवसुतोमहान् ॥ भविष्यतिमहावीर्यःसाधूनांमार्गमास्थितः ४१ ततःप्रसादयामासश्वशुरंसापुनःपुनः ॥ नमेपुत्रोभवेदीदृक्कामंपौत्रोभवेदिति ४२ एवमस्त्वितिसातेनपांडवप्रतिनंदिता ॥ जमदग्निंततःपुत्रंजज्ञेसाकालआगते ४३

नार्थी ३१ । ३२ । ३३ । ३४ । ३५ विश्वंविराट्पुरुषमावर्तयित्वामुहुर्मुहुरनुसंधाय एतयोश्चर्वोर्भक्षणेनविश्वस्रष्टृतुल्यौपुत्रौभविष्यतइतिभावः ३६ तेउभेप्रतीत्युक्तेतीकारलोपः संधिर्वाआर्षः । आलिंगने अश्वत्थोदुंबरयोः ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३

४४ । ४५ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ सवेदेति १ । २ । ३ । ४ । ५ । ६ ततस्तस्यस्पृहयामासतमैच्छत् ७ अंभसिसरस्येवक्लिन्ना

तेजसावर्चसाचैवयुक्तंभार्गवनंदनम् ॥ सवर्धमानस्तेजस्वीवेदस्याध्ययनेनच ४४ बहूनृषीन्महातेजाःपांडवेयात्यवर्तत ॥ तंतुकृत्स्नोधनुर्वेदःप्रत्यभाद्भरतर्षभ ॥ चतुर्विधानिचास्त्राणिभास्करोपमवर्चसम् ४५ ॥ इतिश्रीमहाभारतेआरण्यके० लोमशतीर्थयात्रायांकार्तवीर्योपाख्यानेपंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ ॥ अकृतव्रणउवाच ॥ सवेदाध्ययनेयुक्तोजमदग्निर्महातपाः ॥ तपस्तेपेततोवेदान्नियमाद्वशमानयत् १ सप्रसेनजितंराजन्नधिगम्यनराधिपम् ॥ रेणुकांवरयामास सचतस्मैददौनृपः २ रेणुकांत्वथसंप्राप्यभार्यांभार्गवनंदनः ॥ आश्रमस्थस्तयासार्धंतपस्तेपेऽनुकूलया ३ तस्याःकुमाराश्चत्वारोजज्ञिरेरामपंचमाः ॥ सर्वेषामज घन्यस्तुरामआसीज्जघन्यजः ४ फलाहारेषुसर्वेषुगतेष्वथसुतेषुवै ॥ रेणुकास्नातुमगत्कदाचिन्नियतव्रता ५ सातुचित्ररथंनाममार्तिकावतकंनृपम् ॥ ददर्शरेणुकाराजन्ना गच्छंतीयदृच्छया ६ क्रीडंतंसलिलेदृष्ट्वासभार्यंपद्ममालिनम् ॥ ऋद्धिमंतंततस्तस्यस्पृहयामासरेणुका ७ व्यभिचाराच्चतस्मात्साक्लिन्नांभसिविचेतना ॥ प्रविवेशा श्रमंत्रस्तांवैभर्ताऽन्वबुध्यत ८ सतांदृष्ट्वाच्युतांधैर्याद्ब्राह्म्यालक्ष्म्याविवर्जिताम् ॥ धिक्शब्देनमहातेजागर्हयामासवीर्यवान् ९ ततोज्येष्ठोजामदग्न्योरुमण्वान्नाम नामतः ॥ आजगामसुषेणश्चवसुर्विश्वावसुस्तथा १० तानानुपूर्व्याद्भगवान्वधेमातुरचोदयत् ॥ नचतेजातसंस्नेहाःकिंचिदूचुर्विचेतसः ११ ततःशशापतान्क्रोधा त्तेशप्ताश्चेतनांजहुः ॥ मृगपक्षिसधर्माणःक्षिप्रमासन्जडोपमाः १२ ततोरामोऽभ्ययात्पश्चादाश्रमंपरवीरहा ॥ तमुवाचमहाबाहुर्जमदग्निर्महातपाः १३ जहीमां मातरंपापांमाचपुत्रव्यथांकृथाः ॥ ततआदायपरशुंरामोमातुःशिरोऽहरत् १४ ततस्तस्यमहाराजजमदग्नेर्महात्मनः ॥ कोपोऽभ्यगच्छत्सहसाप्रसन्नश्चाब्रवीदि दम् १५ ममेदंवचनात्तातकृतंतेकर्मदुष्करम् ॥ वृणीष्वकामान्धर्मज्ञयावतोवांछसेहृदा १६ सवव्रेमातुरुत्थानमस्मृतिंचवधस्यवै ॥ पापेनतेनचास्पर्शंभ्रातॄणांप्र कृतिंतथा १७ अप्रतिद्वंद्वतांयुद्धेदीर्घमायुश्चभारत ॥ ददौचसर्वान्कामांस्तान्जमदग्निर्महातपाः १८ कदाचित्तुतथैवास्यविनिष्क्रांताःसुताःप्रभो ॥ अथानूपपति र्वीरःकार्तवीर्योऽभ्यवर्तत १९ तमाश्रमपदंप्राप्तमृषेर्भार्यासमार्चयत् ॥ सयुद्धमदसंमत्तोनाभ्यनंदत्तथार्चनम् २० प्रमथ्यचाश्रमात्तस्माद्धोमधेनोस्तथाबलात् ॥ जहारवत्संक्रोशंत्याबभंजचमहाद्रुमान् २१ आगतायचरामायतदाऽचष्टपितास्वयम् ॥ गांचरोरुदतींदृष्ट्वाकोपोरामंसमाविशत् २२ समृत्युवशमापन्नंकार्तवीर्यमु पाद्रवत् ॥ तस्याथयुधिविक्रम्यभार्गवःपरवीरहा २३ चिच्छेदनिशितैर्भल्लैर्बाहून्परिघसन्निभान् ॥ सहस्रसंमितान्राजन्प्रगृह्यरुचिरंधनुः २४ अभिभूतःसरामेणसं युक्तःकालधर्मणा ॥ अर्जुनस्याथदायादारामेणकृतमन्यवः २५

द्रुता । तथाचोक्तं 'सुंदरंपुरुषंदृष्ट्वाभ्रातरंपितरंसुतम् । योनिर्द्रवतिनारीणांसत्यंसत्यंजनार्दन' इति ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । कालधर्मणामृत्युना २५

२६ । २७ । २८ भार्यावधदोषात्स्वयमपिताद्दशमेवमरणंप्रापेत्याशयः २९ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षोडशाऽधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ ममेति १ । २ । ३ । ४ ५ । ६ । ७ । ८ । ९ । १० । ११ दशव्यामायतां व्यामोहस्तचतुष्टयं चत्वारिंशद्धस्तायामविस्तारां नवोत्सेधां षट्त्रिंशद्धस्तोच्छ्रायांचेत्यर्थः व्यायामेतिप्रमादपाठः १२ खंडशःखंडानिखंडानिकृत्वाव्यभ

आश्रमस्थंविनारामंजमदग्निमुपाद्रवन् ॥ तेतंजघ्नुर्महावीर्यमयुध्यंतंतपस्विनम् २६ असकृद्रामरामेतिविक्रोशंतमनाथवत् ॥ कार्तवीर्यस्यपुत्रास्तुजमदग्निंयुधिष्ठिर २७ पीडयित्वाशरैर्जग्मुर्यथागतमरिंदमाः ॥ अपक्रांतेषुवैतेषुजमदग्नौतथागते २८ समित्पाणिरुपागच्छदाश्रमंभृगुनंदनः ॥ सदृष्ट्वापितरंवीरस्तथामृत्युवशंगतम् ॥ अनर्हंतंतथाभूतंविललापसुदुःखितः २९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांकार्तवीर्योपाख्यानेजमदग्निवधे षोडशाधिकशततमोऽध्यायः ११६ ॥ ॥ रामउवाच ॥ ॥ ममापराधात्तैःक्षुद्रैर्हतस्त्वंतातबालिशैः ॥ कार्तवीर्यस्यदायादैर्वनेमृगइवेषुभिः १ धर्मज्ञस्यकथंतात तवर्तमानस्यसत्पथे ॥ मृत्युरेवंविधोयुक्तःसर्वभूतेष्वनागसः २ किंनुतैर्नकृतंपापंयैर्भवांस्तपसिस्थितः ॥ अयुध्यमानोवृद्धःसन्हतःशरशतैःशितैः ३ किंनुतेतत्रवक्ष्यंतिसचिवेषुसुहृत्सुच ॥ अयुध्यमानंधर्मज्ञमेकंहत्वाऽनपत्रपाः ४ लालप्यैवंसकरुणंबहुनानाविधंनृप ॥ प्रेतकार्याणिसर्वाणिपितुश्चक्रेमहातपाः ५ ददाह पितरंचाग्नौरामःपरपुरंजयः ॥ प्रतिजज्ञेवधंचापिसर्वक्षत्रस्यभारत ६ संक्रुद्धोऽतिबलःसंख्येशस्त्रमादायवीर्यवान् ॥ जघ्निवान्कार्तवीर्यस्यसुतानेकोऽन्तकोपमः ७ तेषांचानुगतायेचक्षत्रियाःक्षत्रियर्षभ ॥ तांश्चसर्वानवामृद्नाद्रामःप्रहरतांवरः ८ त्रिःसप्तकृत्वःपृथिवींकृत्वानिःक्षत्रियांप्रभुः ॥ समंतपंचकेपंचचकाररुधिरह्रदान् ९ सतेषुतर्पयामासभृगून्भृकुगुलोद्वहः ॥ साक्षाद्ददर्शचर्चीकंसचरामंन्यवारयत् १० ततोयज्ञेनमहताजामदग्न्यःप्रतापवान् ॥ तर्पयामासदेवेन्द्रमृत्विग्भ्यःप्रददौमहीम् ११ वेदींचाप्यददद्धैमींकश्यपायमहात्मने ॥ दशव्यामायतांकृत्वानवोत्सेधांविशांपते १२ तांकश्यपस्यानुमतेब्राह्मणाःखंडशस्तदा ॥ व्यभजंस्तेतदाराजन्प्रख्याताःखांडवायनाः १३ सप्रदायमहींतस्मैकश्यपायमहात्मने ॥ अस्मिन्महेंद्रेशैलेंद्रेवसत्यमितविक्रमः १४ एवंवैरमभूत्तस्यक्षत्रियैर्लोकवासिभिः ॥ पृथिवीचापिविजितारामेणामिततेजसा १५ ॥ वैशंपायनउवाच ॥ ततश्चतुर्दशींरामःसमयेनमहामनाः ॥ दर्शयामासतान्विप्रान्धर्मराजंचसानुजम् १६ सतमानर्चराजेंद्रभ्रातृभिःसहितःप्रभुः ॥ द्विजानांचपरांपूजांचक्रेनृपतिसत्तमः १७ अर्चित्वाजामदग्न्यंसपूजितस्तेनचोदितः ॥ महेंद्रउष्यतांरात्रिंप्रययौदक्षिणामुखः १८ ॥ इतिश्रीमहाभारते आरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांकार्तवीर्योपाख्यानेसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ वैशंपायनउवाच ॥ गच्छन्सतीर्थानिमहानुभावःपुण्यानिरम्याणिददर्शराजा ॥ सर्वाणिविप्रैरुपशोभितानिक्वचित्क्वचिद्भारतसागरस्य १

जन् १३ । १४ । १५ । १६ आनर्चअर्चितवान् १७ तेनचउदितइतिच्छेदः उष्यउषित्वा १८ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ गच्छन्निति १

वृत्तवानसद्वृत्तः पार्थिवःपृथ्वीपतिःकश्यपस्तस्यपुत्रःसूर्यस्तस्यपौत्रोयुधिष्ठिरः तत्पितुर्धर्मस्यसूर्यपुत्रत्वात् प्रशस्तांनामनदीम् २ । ३ नारीतीर्थानि ग्राहरूपाःपंचाप्सरसोमुनिशापवशाद्यत्रस्थिताअर्जुनेनचशापान्मोचितास्तानि नारीतीर्थानि ४ । ५ । ६ अंबुवरोत्तमस्यसमुद्रस्य ७ । ८ । ९ । १० । ११ । १२ । १३ तेषुतीर्थेषुउपवासान्समीपवासिनोविबुधान्पंडितानुपोष्यवस्त्रावास्यरत्नानिचते





सवृत्तवांस्तेषुकृताभिषेकःसहानुजःपार्थिवपुत्रपौत्रः ॥ समुद्रगांपुण्यतमांप्रशस्तांजगामपारीक्षितपांडुपुत्रः २ तत्रापिचाप्लुत्यमहानुभावःसंतर्पयामासपितृन्सुरांश्च ॥ द्विजातिमुख्येषुधनंविसृज्यगोदावरींसागरगामगच्छत् ३ ततोविपाप्माद्रविडेषुराजन्समुद्रमासाद्यचलोकपुण्यम् ॥ अगस्त्यतीर्थंचमहापवित्रंनारीतीर्थान्यथवीरोददर्श ४ तत्रार्जुनस्याग्र्यधनुर्धरस्यनिशम्यतत्कर्मनरैरशक्यम् ॥ संपूज्यमानःपरमर्षिसंघैःपरांमुदंपांडुसुतःसलेभे ५ सतेषुतीर्थेष्वभिषिक्तगात्रःकृष्णासहायःसहितोऽनुजैश्च ॥ संपूजयन्विक्रममर्जुनस्यरेमेमहीपालपतिःपृथिव्याः ६ ततःसहस्राणिगवांप्रदायतीर्थेषुतेष्वंबुधरोत्तमस्य ॥ हृष्टःसहभ्रातृभिरर्जुनस्यसंकीर्तयामासगवांप्रदानम् ७ सतानितीर्थानिचसागरस्यपुण्यानिचान्यानिबहूनिराजन् ॥ क्रमेणगच्छन्परिपूर्णकामःशूर्पारकंपुण्यतमंददर्श ८ तत्रोदधेःकंचिदतीत्यदेशंख्यातंपृथिव्यांवनमाससाद ॥ तप्तंसुरैरत्रतपःपुरस्तादिष्टंतथापुण्यपरैर्नरेन्द्रैः ९ सतत्रतामग्र्यधनुर्धरस्यवेदींददर्शायतपीनबाहुः ॥ ऋचीकपुत्रस्यतपस्विसंघैःसमावृतांपुण्यकृदर्चनीयाम् १० ततोवसूनांवसुधाधिपःसमरुद्गणानांचतथाऽश्विनोश्च ॥ वैवस्वतादित्यधनेश्वराणामिंद्रस्यविष्णोःसवितुर्विभोश्च ११ भवस्यचंद्रस्यदिवाकरस्यपतेरपांसाध्यगणस्यचैव ॥ धातुःपितॄणांचतथामहात्मारुद्रस्यराजन्सगणस्यचैव १२ सरस्वत्याःसिद्धगणस्यचैवपुण्याश्चयेचाप्यमरास्तथाऽन्ये ॥ पुण्यानिचाप्यायतनानितेषांददर्शराजासुमनोहराणि १३ तेषूपवासान्विबुधानुपोष्यदत्वाचरत्नानिमहांतिराजा ॥ तीर्थेषुसर्वेषुपरिप्लुतांगःपुनःसशूर्पारकमाजगाम १४ सतेनतीर्थेनतुसागरस्यपुनःप्रयातःसहसोदरीयैः ॥ द्विजैःपृथिव्यांप्रथितंमहद्भिस्तीर्थंप्रभासंसमुपाजगाम १५ तत्राभिषिक्तःपृथुलोहिताक्षःसहानुजैर्देवगणान्पितॄंश्च ॥ संतर्पयामासतथैवकृष्णातेचापिविप्राःसहलोमशेन १६ सद्वादशाहंजलवायुभक्षःकुर्वन्क्षपाहःसुतदाभिषेकम् ॥ समंततोऽग्नीनुपदीपयित्वातेपेतपोधर्मभृतांवरिष्ठः १७ तमुग्रमास्थायतपश्चरंतंशुश्रावरामश्चजनार्दनश्च ॥ तौसर्ववृष्णिप्रवरौससैन्यौयुधिष्ठिरंजग्मतुराजमीढम् १८ तेवृष्णयःपांडुसुतान्समीक्ष्यभूमौशयानान्मलदिग्धगात्रान् ॥ अनर्हतींद्रौपदींचापिदृष्ट्वासुदुःखिताश्चुक्रुशुरार्तनादम् १९ ततःसरामंचजनार्दनंचकार्ष्णिंचसांबंचशिनेश्चपौत्रम् ॥ अन्यांश्चवृष्णीनुपगम्यपूजांचक्रेयथाधर्ममहीनसत्वः २० तेचापिसर्वान्प्रतिपूज्यपार्थांस्तैःसत्कृताःपांडुसुतैस्तथैव ॥ युधिष्ठिरंसंपरिवार्यराजन्नुपाविशन्देवगणायथेंद्रम् २१ तेषांससर्वंचरितंपरेषांवनेचवासंपरमप्रतीतः ॥ अस्त्रार्थमिंद्रस्यगतंचपार्थंनिवेशनंहृष्टमनाःशशंस २२

भ्यएवदत्वा १४ तेनतीर्थेनसिंधुतीरमार्गेण १५ । १६ । १७ । १८ । १९ कार्ष्णिंप्रद्युम्नं पौत्रंसात्यकिम् २० । २१ । २२

२३ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ प्रभासेति १ । २ । ३ हलीति । हलधरत्वाद्धर्मस्यापिनिंदांकरिष्यतीतिध्वनितम् ४ भवायअभ्युदयाय ५ विवरंशरीरंगूहनायनददातीत्यर्थः ६ मिथःशंकाधर्माधर्मयोः किंबलीयइतिशास्त्रानुभवयोर्विरोधात्संशयः ७ राज्याच्चसुखाच्चचलेन्नतुधर्मादितिशेषः तत्रहेतुःधर्मादिति । कथमित्युपहासार्थम् ८ । ९ अवनिप्रधानोधृतराष्ट्रः १० नासाविति । किंनामपापंकृत्वाऽहमचक्षुर्जातः कौन्तेयंप्रव्राज्यकीदृशोभविष्यामीतिधियानासौपश्यतीत्यध्याहृत्ययोज्यम् ११ चामीकराभान् कनकप्रभान् एतन्मरणचिन्हं

श्रुत्वातुतेतस्यवचःप्रतीतास्तांश्चापिदृष्ट्वासुकृशानतीव ॥ नेत्रोद्भवंसंमुमुचुर्महार्हादुःखार्तिजंवारिमहानुभावाः २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांप्रभासेयादवपांडवसमागमेअष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ ॥ जनमेजयउवाच ॥ प्रभासतीर्थमासाद्यपांडवावृष्णयस्तथा ॥ किमकुर्वन्कथाश्चैषांकारुस्तत्रासंस्तपोधन १ तेहिसर्वेमहात्मानःसर्वशास्त्रविशारदाः ॥ वृष्णयःपांडवाश्चैवसुहृदश्चपरस्परम् २ ॥ वैशंपायनउवाच ॥ प्रभासतीर्थंसंप्राप्यपुण्यंतीर्थंमहोदधेः ॥ वृष्णयःपांडवान्वीराःपरिवार्योपतस्थिरे ३ ततोगोक्षीरकुंदेंदुमृणालरजतप्रभः ॥ वनमालीहलीरामोबभाषेपुष्करेक्षणम् ४ ॥ बलदेवउवाच ॥ नकृष्णधर्मश्चरितोभवायजंतोरधर्मश्चपराभवाय ॥ युधिष्ठिरोयत्रजटीमहात्मावनाश्रयःक्लिश्यतिचीरवासाः ५ दुर्योधनश्चापिमहींप्रशास्तिनचास्यभूमिर्विवरंददाति ॥ धर्मादधर्मश्चरितोवरीयानितीवमन्येतनरोऽल्पबुद्धिः ६ दुर्योधनेचापिविवर्धमानेयुधिष्ठिरेचासुखमात्तराज्ये ॥ किंत्वत्रकर्तव्यमितिप्रजाभिःशंकामिथःसंजनितानराणाम् ७ अयंसधर्मप्रभवोनरेंद्रोधर्मेधृतःसत्यधृतिःप्रदाता ॥ चलेद्धिराज्याच्चसुखाच्चपार्थोधर्मादपेतस्तुकथंविवर्धेत् ८ कथंनुभीष्मश्चकृपश्चविप्रोद्रोणश्चराजाचकुलस्यवृद्धः ॥ प्रव्राज्यपार्थान्सुखमाप्नुवंतिधिक्पापबुद्धीन्भरतप्रधानान् ९ किंनामवक्ष्यत्यवनिप्रधानःपितॄन्समागम्यपरत्रपापः ॥ पुत्रेषुसम्यक्चरितंमयेतिपुत्रानपापान्व्यपरोप्यराज्यात् १० नासौधियासंप्रतिपश्यतिस्मकिंनामकृत्वाऽहमचक्षुरेवम् ॥ जातःपृथिव्यामितिपार्थिवेषुप्रव्राज्यकौंतेयमिति स्मराज्यात् ११ नूनंसमृद्धान्पितृलोकभूमौचामीकराभान्क्षितिजान्प्रफुल्लान् ॥ विचित्रवीर्यस्यसुतःसपुत्रःकृत्वानृशंसंबतपश्यतिस्म १२ व्यूढोत्तरांसान्पृथुलोहिताक्षानिमान्स्मपृच्छन्सशृणातिनूनम् ॥ प्रास्थापयद्यत्सवनंसशंकोयुधिष्ठिरंसानुजमात्तशस्त्रम् १३ योऽयंपरेषांपृतनांसमृद्धांनिरायुधोदीर्घभुजोनिहन्यात् ॥ श्रुत्वैवशब्दंहिवृकोदरस्यमुंचंतिसैन्यानिशकृत्समूत्रम् १४ सक्षुत्पिपासाध्वकृशस्तरस्वीसमेत्यनानायुधबाणपाणिः ॥ वनेस्मरन्वासमिमंसुघोरंशेषंनकुर्यादितिनिश्चितंमे १५ नह्यस्यवीर्येणबलेनकश्चित्समःपृथिव्यामपिविद्यतेऽन्यः ॥ सशीतवातातपकर्शितांगोनशेषमाजावसुहृत्सकुर्यात् १६

नृशंसंनिंद्यंकर्म १२ इमान्भीष्मादीन् शृणातिहिनस्ति शृणोतीतिलेखकप्रमादः नशृणोति इति गौडपाठेतु 'अयमग्निर्वैश्वानरोयोऽयमंतःपुरुषेयेनेदमन्नंपच्यतेयदिदमद्यतेतस्यैषघोषोभवति । यमेतत्कर्णावपिधायशृणोतिमयदोत्क्रमिष्यन्भवतिनैनंघोषंशृणोति' इति श्रुत्यर्थोऽनुसंधेयः १३ । १४ शेषंनकुर्यान्निःशेषमेवनाशयेदित्यर्थः १५ । १६

स्वस्तिक्षेमेण आगमत् आगतः १७ । १८ सोऽयंवनेकुलः १९ राज्ञोद्रुपदस्य २० त्रिवर्गमुख्यस्यधर्मस्य । त्रिवर्गोधर्मकामार्थैरित्यमरः । वनेअचरन्नहिअस्तसुखाइतिच्छेदः २१ । २२ इत्यारण्यकेप र्वणि नैलकंठीयेभारतभावदीपे ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥ ॥ ॥ नरामेति १ नाथवंतःऐश्वर्यवंतः । भावेघञ् नात्मनानस्वयं नाथाःकार्यसाधकाः शिष्यादयइत्ये



प्राच्यांनृपानेकरथेनजित्वावृकोदरःसानुचरान्रणेषु ॥ स्वस्त्यागमद्योऽतिरथस्तरस्वीसोऽयंवनेक्लिश्यतिचीरवासाः १७ यःसिंधुकूलेऽभ्यजयन्नृदेवान्समागता न्दाक्षिणात्यान्महीपान् ॥ तंपश्यतेमंसहदेवमद्यतरस्विनंतापसवेषरूपम् १८ यःपार्थिवानेकरथेनजिग्ये दिशंप्रतीचींप्रतियुद्धशौंडः ॥ सोऽयंवनेमूलफलेन जीवन्जटीचरत्यद्यमलाचितांगः १९ सत्रेसमृद्धेतिरथस्यराज्ञोवेदीतलादुत्पतितासुताया ॥ सेयंवनेवासमिमंसुदुःखंकथंसहत्यद्यसतीसुखार्हा २० त्रिवर्गमु ख्यस्यसमीरणस्यदेवेश्वरस्याप्यथवाऽश्विनोश्च ॥ एषांसुराणांतनयाःकथंनुवनेऽचरन्ह्यस्तसुखाःसुखार्हाः २१ जितेहिधर्मस्यसुतेसभार्येसभ्रातृकेसानुचरेनि रस्ते ॥ दुर्योधनेचापिविवर्धमानेकथंनसीदत्यवनिःसशैला २२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांबलरामवाक्येऊन विंशाधिकशततमोऽध्यायः ॥ ११९ ॥ ॥ सात्यकिरुवाच ॥ नरामकालःपरिदेवनाययदुत्तरंत्वत्रतदेवसर्वे ॥ समाचरामोह्यनतीतकालंयुधिष्ठिरोयद्यपि नाहकिंचित् १ येनाथवंतोऽद्यभवंतिलोकेतेनात्मनाकर्मसमारभंते ॥ तेषांतुकार्येषुभवंतिनाथाःशिब्यादयोरामयथाययातेः २ येषांतथारामसमारभंतेकार्याणि नाथाःस्वमतेनलोके ॥ तेनाथवंतःपुरुषप्रवीरानानाथवत्कृच्छ्रमवाप्नुवंति ३ कस्मादिमौरामजनार्दनौचप्रद्युम्नसांबौचमयासमेतौ ॥ वसंत्यरण्येसहसोदरीयैस्त्रै लोक्यनाथानभिगम्यपार्थाः ४ निर्यातुसाध्वद्यदशार्हसेनाप्रभूतनानायुधचित्रवर्मा ॥ यमक्षयंगच्छतुधार्तराष्ट्रःसबांधवोवृष्णिबलाभिभूतः ५ त्वंह्येवकोपात्पृ थिवीमपीमांसंवेष्टयेस्तिष्ठतुशार्ङ्गधन्वा ॥ सधार्तराष्ट्रंजहिसानुबंधंवृत्रंयथादेवपतिर्महेंद्रः ६ भ्राताचमेयःससखागुरुश्चजनार्दनस्यात्मसमश्चपार्थः ॥ यदर्थमै च्छन्मनुजाःसुपुत्रंशिष्यंगुरुंचाप्रतिकूलवादम् ७ यदर्थमभ्युद्यतमुत्तमंतत्करोतिकर्माग्र्यमपारणीयम् ॥ तस्यास्त्रवर्षाण्यहमुत्तमास्त्रैर्विहत्यसर्वाणिरणेऽभिभूय ८ कायाच्छिरःसर्पविषाग्निकल्पैःशरोत्तमैरुन्मथितास्मिराम ॥ खड्गेनचाहंनिशितेनसंख्येकायाच्छिरस्तस्यबलात्प्रमथ्य ९ ततोस्यसर्वाननुगान्हनिष्येदुर्योध नंचापिकुरूंश्चसर्वान् ॥ आत्तायुधंमामिहरौहिणेयपश्यंतुभौमायुधिजातहर्षाः १० निघ्नंतमेकंकुरुयोधमुख्यानग्निंमहाकक्षमिवांतकाले ॥ प्रद्युम्नमुक्तान्निशिता न्नशक्ताःसोढुंकृपद्रोणविकर्णकर्णाः ११ जानामिवीर्यंचजयात्मजस्यकार्ष्णिर्भवत्येवयथारणस्थः ॥ सांबःससूतंसरथंभुजाभ्यांदुःशासनंशास्तुबलात्प्रमथ्य १२ नविद्यतेजांबवतीसुतस्यरणेविषह्यंहिरणोत्कटस्य ॥ एतेनबालेनहिशंबरस्यदैत्यस्यसैन्यंसहसाप्रणुन्नम् १३

वपाठः शैब्यादयइतिपाठेतुस्वार्थेष्यञ् २ । ३ । ४ । ५ । ६ सपार्थोऽपितिष्ठत्वितिपूर्वेणान्वयः यदर्थंशत्रुवधार्थं ७ ततसुपुत्रादिकंअस्माकमस्तीतिशेषः ८ । ९ भैमाभीमकर्मकर्तारो भीमवंशजावा १० ११ जयात्मजस्याभिमन्योः १२ । १३

१४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ माधवमधुदेशोमथुरामदेशस्तत्रजात २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । सुतेनअभिषुतेनयज्ञेसोमपानतुल्यंतज्जलपान

वृत्तोरुरत्यायतपीनबाहुरेतेनसंख्येनिहतोऽश्वचक्रः ॥ कोनामसांबस्यमहारथस्यरणेसमक्षंरथमभ्युदीयात् १४ यथाप्रविश्यांतरमंतकस्यकालेमनुष्योनविनिष्क्रमेत ॥ तथाप्रविश्यांतरमस्यसंख्येकोनामजीवन्पुनराव्रजेच्च १५ द्रोणंचभीष्मंचमहारथौतौसुतैर्वृतंचाप्यथसोमदत्तम् ॥ सर्वाणिसैन्यानिचवासुदेवःप्रधक्ष्यतेसायकवह्निजालैः १६ किंनामलोकेषुविषह्यमस्तिकृष्णस्यसर्वेषुसदेवकेषु ॥ आत्तायुधस्योत्तमबाणपाणेश्चक्रायुधस्याप्रतिमस्ययुद्धे १७ ततोऽनिरुद्धोप्यसिचर्मपाणिर्महीमिमांधार्त्तराष्ट्रैर्विसंज्ञैः ॥ हृतोत्तमांगैर्निहतैःकरोतुकीर्णांकुशैर्वेदिमिवाध्वरेषु १८ गदोल्मुकौबाहुकभानुनीथाःशूरश्चसंख्येनिशठःकुमारः ॥ रणोत्कटौसारणचारुदेष्णौकुलोचितंविप्रथयंतुकर्म १९ सवृष्णिभोजांधकयोधमुख्यासमागतासात्वतशूरसेना ॥ हत्वारणेतान्धृतराष्ट्रपुत्रान्लोकेयशस्फीतमुपाकरोतु २० ततोऽभिमन्युःपृथिवींप्रशास्तुयावद्व्रतंधर्मभृतांवरिष्ठः ॥ युधिष्ठिरःपारयतेमहात्माद्यूतेयथोक्तंकुरुसत्तमेन २१ अस्मत्प्रमुक्तैर्विशिखैर्जितारिस्ततोमहींभोक्ष्यति धर्मराजः ॥ निर्धार्तराष्ट्रांहतसूतपुत्रामेतद्धिनःकृत्यतमंयशस्यम् २२ ॥ वासुदेवउवाच ॥ असंशयंमाधवसत्यमेतद्गृह्णीमतेवाक्यमदीनसत्व ॥ स्वाभ्यांभुजाभ्यामजितांतुभूमिंनेच्छेत्कुरूणामृषभःकथंचित् २३ नह्येषकामान्नभयान्नलोभाद्युधिष्ठिरोजातुजह्यात्स्वधर्मम् ॥ भीमार्जुनौचातिरथौयमौचतथैवकृष्णाद्रुपदात्मजेयम् २४ उभौहियुद्धेऽप्रतिमौपृथिव्यांवृकोदरश्चैवधनंजयश्च ॥ कस्मान्नकृत्स्नांपृथिवींप्रशासेन्माद्रीसुताभ्यांचपुरस्कृतोऽयम् २५ यदातुपंचालपतिर्महात्मासकेकयश्चेदिपतिर्वयंच ॥ युध्येमविक्रम्यरणेसमेतास्तदैवसर्वेरिपवोहिनस्युः २६ ॥ युधिष्ठिरउवाच ॥ नेदंचित्रंमाधवयद्ब्रवीषिसत्यंतुमेरक्ष्यतमंनराज्यम् ॥ कृष्णस्तुमांवेदयथावदेकःकृष्णंचवेदाहमथोयथावत् २७ यदैवकालंपुरुषप्रवीरोवेत्स्यत्ययंमाधवविक्रमस्य ॥ तदारणेत्वंचशिनिप्रवीरसुयोधनंजेष्यसिकेशवश्च २८ प्रतिप्रयांत्वद्यदशार्हवीराद्दृष्टोऽस्मिनाथैर्नरलोकनाथैः ॥ धर्मेऽप्रमादंकुरुताप्रमेयाद्रष्टास्मिभूयःसुखिनःसमेतान् २९ तेन्योन्यमामंत्र्यतथाभिवाद्यवृद्धान्परिष्वज्यशिशूंश्चसर्वान् ॥ यदुप्रवीराःस्वगृहाणिजग्मुस्तेचापितीर्थान्यनुसंविचेरुः ३० विसृज्यकृष्णंत्वथधर्मराजोविदर्भराजोपचितांसुतीर्थाम् ॥ जगामपुण्यांसरितंपयोष्णींसभ्रातृभृत्यःसहलोमशेन ३१ सुतेनसोमेनविमिश्रतोयांपयःपयोष्णींप्रतिसोऽध्युवास ॥ द्विजातिमुख्यैर्मुदितैर्महात्मासंस्तूयमानःस्तुतिभिर्वराभिः ३२ ॥ इतिश्रीमहाभारते आरण्यकेपर्वणितीर्थयात्रायांयादवगमनेविंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ लोमशउवाच ॥ नृगेणयजमानेनसोमेनेहपुरंदरः ॥ तर्पितः श्रूयतेराजन्सतृप्तोमुदमभ्यगात् १

मित्यर्थः । पयोष्णींप्रतिपयोष्ण्यां पयोमात्रमध्युवासभक्षितवान् ३२ ॥ इत्यारण्य० नैलकंठीये भा० विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ ॥ ॥ नृगेणेति १

२ आमूर्तरयसोगयनामा ३ वानस्पत्यंवृक्षजंचषालादि भौमंमृन्मयंस्थाल्यादि ४ चषालेयूपकटकः । यूपोयज्ञस्तंभः । चमसाःसोमपानपात्राणि । पात्र्योहविःस्थापनार्थानिमृन्मयानिपात्राणि । स्रुचः हविःप्रदानार्थाः स्रुवाःहविरवदानार्थाः ५ । ६ । ७ प्रसंख्यानान् एकयत्नेनभूयःस्वर्णमुद्रादेर्मापकान्खारीद्रोणादीन् ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

इष्टंदेवैःसहेंद्रैश्चप्रजापतिभिरेवच ॥ इष्टंबहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः २ आमूर्तरयसश्चेहराजावज्रधरंप्रभुः ॥ तर्पयामाससोमेनहयमेधेषुसप्तसु ३ तस्यसप्तसुयज्ञेषुसर्वमासीद्धिरण्मयम् ॥ वानस्पत्यंचभौमंचयद्द्रव्यंनियतंमखे ४ चषालयूपचमसाःस्थाल्यःपात्र्यःस्रुचःस्रुवाः ॥ तेष्वेवचास्ययज्ञेषुप्रयोगाःसप्तविश्रुताः ५ सप्तैकैकस्ययूपस्यचषालाश्चोपरिस्थिताः ॥ तस्यस्मयूपान्यज्ञेषुभ्राजमानान्हिरण्मयान् ६ स्वयमुत्थापयामासुर्देवाःसेंद्रायुधिष्ठिर ॥ तेषुतस्यमखाग्र्येषुगयस्यपृथिवीपतेः ७ अमाद्यदिंद्रःसोमेनदक्षिणाभिर्द्विजातयः ॥ प्रसंख्यानानसंख्येयान्प्रत्यगृह्णन्द्विजातयः ८ सिकतावायथालोकेयथावादिवितारकाः ॥ यथावावर्षतोधाराअसंख्येयाःस्मकेनचित् ९ तथैवतदसंख्येयंधनंयत्प्रददौगयः ॥ सदस्येभ्योमहाराजतेषुयज्ञेषुसप्तसु १० भवेत्संख्येयमेतद्धियदेतत्परिकीर्तितम् ॥ नतस्यशक्याःसंख्यातुंदक्षिणादक्षिणावतः ११ हिरण्मयीभिर्गोभिश्चकृताभिर्विश्वकर्मणा ॥ ब्राह्मणांस्तर्पयामासनानादिग्भ्यःसमागतान् १२ अल्पावशेषापृथिवीचैत्यैरासीन्महात्मनः ॥ गयस्ययजमानस्यतत्रतत्रविशांपते १३ सलोकान्प्राप्तवानैंद्रान्कर्मणातेनभारत ॥ सलोकतांतस्यगच्छेत्पयोष्ण्यांयउपस्पृशेत् १४ तस्मात्त्वमत्रराजेंद्रभ्रातृभिःसहितोऽच्युत ॥ उपस्पृश्यमहीपालधूतपाप्माभविष्यसि १५ ॥ वैशंपायनउवाच ॥ सपयोष्ण्यांनरश्रेष्ठःस्नात्वावैभ्रातृभिःसह ॥ वैदूर्यपर्वतंचैवनर्मदांचमहानदीम् १६ समागमततेजस्वीभ्रातृभिःसहितोऽनघ ॥ तत्रास्यसर्वाण्याचख्यौलोमशोभगवानृषिः १७ तीर्थानिरमणीयानिपुण्यान्यायतनानिच ॥ यथायोगंयथाप्रीतिप्रययौभ्रातृभिःसह ॥ तत्रतत्राददद्वित्तंब्राह्मणेभ्यःसहस्रशः १८ ॥ लोमशउवाच ॥ देवानामेतिकौंतेयतथाराज्ञांसलोकताम् ॥ वैदूर्यपर्वतंदृष्ट्वानर्मदामवतीर्यच १९ संधिरेषनरश्रेष्ठत्रेतायाद्वापरस्यच ॥ एनमासाद्यकौंतेयसर्वपापैःप्रमुच्यते २० एषशर्यातियज्ञस्यदेशस्तातप्रकाशते ॥ साक्षाद्यत्रापिबत्सोममश्विभ्यांसहकौशिकः २१ चुकोपभार्गवश्चापिमहेंद्रस्यमहातपाः ॥ संस्तंभयामासचतंवासवंच्यवनःप्रभुः ॥ सुकन्यांचापिभार्यांसराजपुत्रीमवाप्तवान् २२ ॥ युधिष्ठिरउवाच ॥ कथंविष्टंभितस्तेनभगवान्पाकशासनः ॥ किमर्थंभार्गवश्चापिकोपंचक्रेमहातपाः २३ नासत्यौचकथंब्रह्मन्कृतवान्सोमपीथिनौ ॥ एतत्सर्वंयथावृत्तमाख्यातुभगवान्मम २४ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौकन्येएकविंशाधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

२१ । २२ । २३ । २४ सोमस्यपीथःपानंतद्वंतौसोमपीथिनौ २५ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकविंशाधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ ॥ ॥

भृगोरिति १ वीरस्थानेनवीरासनेन २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० क्षामकंठः क्षीणध्वनिः ११ अतएवसातद्वचनंनशृणोति १२ । १३ । १४ । आनाहो मलविष्टंभः १५ । १६

॥ लोमशउवाच ॥ भृगोर्महर्षेः पुत्रोऽभूच्च्यवनोनामभारत ॥ समीपेसरसस्त्वस्यतपस्तेपेमहाद्युतिः १ स्थाणुभूतोमहातेजावीरस्थानेनपांडव ॥ अतिष्ठतचिरंकालमेकदेशेविशांपते २ सवल्मीकोऽभवदृषिर्लताभिरिवसंवृतः ॥ कालेनमहताराजन्समाकीर्णः पिपीलिकैः ३ तथाससंवृतोधीमान्मृत्पिंडइवसर्वशः ॥ तप्यतेस्मतपोघोरंवल्मीकेनसमावृतः ४ अथदीर्घस्यकालस्यशर्यातिर्नामपार्थिवः ॥ आजगामसरोरम्यंविहर्तुमिदमुत्तमम् ५ तस्यस्त्रीणांसहस्राणिचत्वार्यासन्परिग्रहः ॥ एकैवचसुतासुभ्रूः सुकन्यानामभारत ६ सासखीभिः परिवृतादिव्याभरणभूषिता ॥ चंक्रम्यमाणावल्मीकंभार्गवस्यसमासदत् ७ सावैवसुमतींतत्रपश्यंतीसुमनोरमाम् ॥ वनस्पतीन्विचिन्वंतीविजहारसखीवृता ८ रूपेणवयसाचैवमदनेनमदेनच ॥ बभंजवनवृक्षाणांशाखाः परमपुष्पिताः ९ तांसखीरहितामेकामेकवस्त्रामलंकृताम् ॥ ददर्शभार्गवोधीमांश्चरंतीमिवविद्युतम् १० तांपश्यमानोविजनेसरेमेपरमद्युतिः ॥ क्षामकंठश्चविप्रर्षिस्तपोबलसमन्वितः ११ तामाबभाषेकल्याणींसाचास्यनशृणोतिवै ॥ ततः सुकन्यावल्मीकेदृष्ट्वाभार्गवचक्षुषी १२ कौतूहलात्कंटकेनबुद्धिमोहबलात्कृता ॥ किंनुखल्विदमित्युक्त्वानिर्बिभेदास्यलोचने १३ अक्रुद्ध्यत्ससतयाविद्धेनेत्रेपरममन्युमान् ॥ ततः शर्यातिसैन्यस्यशकृन्मूत्रेसमावृणोत् १४ ततोरुद्धेशकृन्मूत्रेसैन्यमानाहदुःखितम् ॥ तथागतमभिप्रेक्ष्यपर्यपृच्छत्सपार्थिवः १५ तपोनित्यस्यवृद्धस्यरोषणस्यविशेषतः ॥ केनापकृतमद्येहभार्गवस्यमहात्मनः १६ ज्ञातंवायदिवाऽज्ञातंतद्रुतंब्रूतमाचिरम् ॥ तमूचुः सैनिकाः सर्वेनविद्मोऽपकृतंवयम् १७ सर्वोपायैर्यथाकामंभवांस्तदधिगच्छतु ॥ ततः सपृथिवीपालः साम्नाचोग्रेणचस्वयम् १८ पर्यपृच्छत्सुहृद्वर्गंपर्यजानन्नचैवते ॥ आनाहार्तंततोदृष्ट्वातत्सैन्यमसुखार्दितम् १९ पितरंदुःखितंदृष्ट्वासुकन्येदमथाब्रवीत् ॥ मयाऽटंत्येहवल्मीकेदृष्टंसत्वमभिज्वलत् २० खद्योतवदभिज्ञातंतन्मयाविद्धमंतिकात् ॥ एतच्छ्रुत्वातुवल्मीकंशर्यातिस्तूर्णमभ्ययात् २१ तत्रापश्यत्तपोवृद्धंवयोवृद्धंचभार्गवम् ॥ अयाचदथसैन्यार्थंप्रांजलिः पृथिवीपतिः २२ अज्ञानाद्बालयायत्तेकृतंतत्क्षंतुमर्हसि ॥ ततोऽब्रवीन्महीपालंच्यवनोभार्गवस्तदा २३ अपमानादहंविद्धोह्यनयादर्पपूर्णया ॥ रूपौदार्यसमायुक्तांलोभमोहबलात्कृताम् २४ तामेवप्रतिगृह्याहंराजन्दुहितरंतव ॥ क्षंस्यामीतिमहीपालसत्यमेतद्ब्रवीमिते २५ ॥ ॥ लोमशउवाच ॥ ऋषेर्वचनमाज्ञायशर्यातिरविचारयन् ॥ ददौदुहितरंतस्मैच्यवनायमहात्मने २६ प्रतिगृह्यचतांकन्यांभगवान्प्रससादह ॥ प्राप्तप्रसादोराजावैससैन्यः पुरमाव्रजत् २७ सुकन्याऽपिपतिंलब्ध्वातपस्विनमनिंदिता ॥ नित्यंपर्यचरत्प्रीत्यातपसानियमेनच २८

१७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

२९ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥ ॥ ॥ ॥ कस्यचिदिति । विवृतामनाच्छादिताम् १ । २ । ३ । ४ गताध्वनेअंतीतवय



अग्नीनामतिथीनांचशुश्रूषुरनसूयिका ॥ समाराधयतक्षिप्रंच्यवनंसाशुभानना २९ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थ यात्रायांसौकन्येद्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥ ॥ लोमशउवाच ॥ कस्यचित्त्वथकालस्यत्रिदशावश्विनौनृप ॥ कृताभिषेकांविवृतांसुक न्यांतामपश्यताम् १ तांदृष्ट्वादर्शनीयांगींदेवराजसुतामिव ॥ ऊचतुःसमभिद्रुत्यनासत्यावश्विनाविदम् २ कस्यत्वमसिवामोरुवनेऽस्मिन्किंकरोषिच ॥ इच्छाव भद्रेज्ञातुंत्वांतत्त्वमाख्याहिशोभने ३ ततःसुकन्यासव्रीडातावुवाचसुरोत्तमौ ॥ शर्यातितनयांवित्तंभार्यांमांच्यवनस्यच ४ अथाश्विनौप्रहस्यैतामब्रूतांपुनरे वतु ॥ कथंत्वमसिकल्याणिपित्रादत्तागताध्वने ५ भ्राजसेऽस्मिन्वनेभीरुविद्युत्सौदामनीयथा ॥ नदेवेष्वपितुल्यांहित्वयापश्यावभाविनि ६ अनाभरणसंपन्ना परमांबरवर्जिता ॥ शोभयस्यधिकंभद्रेवनमप्यनलंकृता ७ सर्वाभरणसंपन्नापरमांबरधारिणी ॥ शोभसेत्वनवद्यांगिनत्वेवंमलपंकिनी ८ कस्मादेवंविधाभूत्वा जराजर्जरितंपतिम् ॥ त्वमुपास्सेहकल्याणिकामभोगबहिष्कृतम् ९ असमर्थंपरित्राणेपोषणेतुशुचिस्मिते ॥ सात्वंच्यवनमुत्सृज्यवरयस्वैकमावयोः १० पत्य र्थंदेवगर्भाभेमावृथायौवनंकृथाः ॥ एवमुक्तासुकन्याऽपिसुरौताविदमब्रवीत् ११ रताऽहंच्यवनेपत्यौमैवंमांपर्यशंकतम् ॥ तावब्रूतांपुनस्त्वेनामावांदेवभिषग्वरौ १२ युवानंरूपसंपन्नंकरिष्यावःपतिंतव ॥ ततस्तस्यावयोश्चैववृणीष्वान्यतमंपतिम् १३ एतेनसमयेनैनमामंत्रयपतिंशुभे ॥ सातयोर्वचनाद्राजन्नुपसंगम्य भार्गवम् १४ उवाचवाक्यंयत्ताभ्यामुक्तंभृगुसुतंप्रति ॥ तच्छ्रुत्वाच्यवनोभार्यामुवाचक्रियतामिति १५ ऊचतूराजपुत्रींतांपतिस्तवविशत्वपः ॥ ततोऽभश्च्य वनःशीघ्रंरूपार्थीप्रविवेशह १६ अश्विनावपितद्राजन्सरःप्राविशतांतदा ॥ ततोमुहूर्त्तादुत्तीर्णाःसर्वेतेसरसस्तदा १७ दिव्यरूपधराःसर्वेयुवानोमृष्टकुंडलाः ॥ तुल्यवे षधराश्चैवमनसःप्रीतिवर्धनाः १८ तेऽब्रुवन्सहिताःसर्वेवृणीष्वान्यतमंशुभे ॥ अस्माकमीप्सितंभद्रेपतित्वेवरवर्णिनि १९ यत्रवाऽप्यभिकामाऽसितंवृणीष्वसुशोभने ॥ सासमीक्ष्यतुतान्सर्वांस्तुल्यरूपधरान्स्थितान् २० निश्चित्यमनसाबुद्ध्यादेवीवव्रेस्वकंपतिम् ॥ लब्ध्वातुच्यवनोभार्यांवयोरूपंचवांछितम् २१ हृष्टोऽब्रवीन्महाते जास्तौनासत्याविदंवचः ॥ यथाऽहंरूपसंपन्नोवयसाचसमन्वितः २२ कृतोभवद्भ्यांवृद्धःसन्भार्यांचप्राप्तवानिमाम् ॥ तस्माद्युवांकरिष्यामिप्रीत्याऽहंसोमपीथिनौ ॥ मिषतोदेवराजस्यसत्यमेतद्ब्रवीमिवाम् २३

सेइत्यर्थः ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ 'अश्विनौवैदेवानामसोमपावास्ताम्' इतिश्रुतंतस्यैतदुपबृंहणंतस्माद्युवामिति । युवयो रसोमपत्वं मिषतःपश्यतः दूरीकरिष्यामीत्यर्थः २३

२४ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रयोविंशाधिकशततमोऽध्यायः ॥ १२३ ॥ ॥ तत इति । वयस्थंयुवानं 'युवंच्यवानमश्विनाजरंतंपुनर्युवानंचरथायचक्रथुः' इतिमंत्रलिंगात्

तच्छ्रुत्वाहृष्टमनसौदिवंतौप्रतिजग्मतुः ॥ च्यवनश्चसुकन्याचसुराविवविजह्रतुः २४ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौकन्येत्रयोविंशाधिकशततमोऽध्यायः ॥ १२३ ॥ ॥ लोमशउवाच ॥ ततःशुश्रावशर्यातिर्वयस्थंच्यवनंकृतम् ॥ सुहृष्टःसेनयासार्धमुपायाद्भार्गवाश्रमम् १ च्यवनंचसुकन्यांचदृष्ट्वादेवसुताविव ॥ रेमेसभार्यःशर्यातिःकृत्स्नांप्राप्यमहीमिव २ ऋषिणासत्कृतस्तेनसभार्यःपृथिवीपतिः ॥ उपोपविष्टःकल्याणीःकथाश्चक्रेमनोरमाः ३ अथैनंभार्गवोराजन्नुवाचपरिसांत्वयन् ॥ याजयिष्यामिराजंस्त्वांसंभारानवकल्पय ४ ततःपरमसंहृष्टःशर्यातिरवनीपतिः ॥ च्यवनस्यमहाराजतद्वाक्यंप्रत्यपूजयत् ५ प्रशस्तेऽहनियज्ञीयेसर्वकामसमृद्धिमत् ॥ कारयामासशर्यातिर्यज्ञायतनमुत्तमम् ६ तत्रैनंच्यवनोराजन्याजयामासभार्गवः ॥ अद्भुतानिचतत्रासन्यानितानिनिबोधमे ७ अगृह्णाच्च्यवनःसोममश्विनोर्देवयोस्तदा ॥ तमिंद्रोवारयामासगृह्णानंसतयोर्ग्रहम् ८ ॥ इंद्रउवाच ॥ उभावेतौनसोमार्हौनासत्यावितिमेमतिः ॥ भिषजौदिविदेवानांकर्मणातेननार्हतः ९ ॥ ॥ च्यवनउवाच ॥ ॥ महोत्साहौमहात्मानौरूपद्रविणवत्तरौ ॥ यौचक्रतुर्मांमघवन्वृंदारकमिवाजरम् १० ऋतेत्वांविबुधांश्चान्यान्कथंवैनार्हतःसवम् ॥ अश्विनावपिदेवेंद्रदेवौविद्धिपुरंदर ११ ॥ ॥ इंद्रउवाच ॥ ॥ चिकित्सकौकर्मकरौकामरूपसमन्वितौ ॥ लोकेचरंतौमर्त्यानांकथंसोममिहार्हतः १२ ॥ ॥ लोमशउवाच ॥ ॥ एतदेवयदावाक्यमाम्रेडयतिदेवराट् ॥ अनादृत्यततःशक्रंग्रहंजग्राहभार्गवः १३ ग्रहीष्यंतंतुतंसोममश्विनोरुत्तमंतदा ॥ समीक्ष्यबलभिद्देवइदंवचनमब्रवीत् १४ आभ्यामर्थायसोमंत्वंग्रहीष्यसियदिस्वयम् ॥ वज्रंतेप्रहरिष्यामिघोररूपमनुत्तमम् १५ एवमुक्तःस्मयन्निंद्रमभिवीक्ष्यसभार्गवः ॥ जग्राहविधिवत्सोममश्विभ्यामुत्तमंग्रहम् १६ ततोऽस्मैप्राहरद्वज्रंघोररूपंशचीपतिः ॥ तस्यप्रहरतोबाहुंस्तंभयामासभार्गवः ॥ १७ तंस्तंभयित्वाच्यवनोजुहुवेमंत्रतोऽनलम् ॥ कृत्यार्थीसुमहातेजादेवंहिंसितुमुद्यतः १८ ततःकृत्याऽथसंजज्ञेमुनेस्तस्यतपोबलात् ॥ मदोनाममहावीर्योबृहत्कायोमहासुरः १९ शरीरंयस्यनिर्देष्टुमशक्यंतुसुरासुरैः ॥ तस्यास्यमभवद्घोरंतीक्ष्णाग्रदशनंमहत् २० हनुरेकास्थितात्वस्यभूमावेकादिवंगता ॥ चतस्रश्चायतादंष्ट्रायोजनानांशतंशतम् २१ इतरेतस्यदशनाबभूवुर्दशयोजनाः ॥ प्रासादशिखराकाराःशूलाग्रसमदर्शनाः २२ बाहूपर्वतसंकाशावायतावयुतंसमौ ॥ नेत्रेरविशशिप्रख्येवक्त्रंकालाग्निसंनिभम् २३ लेलिहन्जिह्वयावक्त्रंविद्युच्चपललोलया ॥ व्यात्ताननोघोरदृष्टिर्ग्रसन्निवजगद्बलात् २४

च्यवानंच्यवनंचरथाय धर्माचरणार्थम् १ । २।३ संभारान् यज्ञोपकरणानि ४ । ५ । ६ । ७ ग्रहंसोमस्यगृण्हानंतयोरर्थे ८ । ९ । १० सर्वंसोमम ११ । १२ आम्रेडयतिपुनःपुनरावर्तयति १३ । १४ । १५ १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

२५ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ ॥ तंदृष्ट्वेति १ सृक्किणीगल्लगर्भौ २ । ३ । ४ । ५ । ६ । ७ मदंचेति । सुरापानस्त्रीद्यूतमृगयाव्यसनानि मदकरत्वात्त्याज्यानीतिभावः ८ । ९ । १० । ११ । १२ । १३ संधिर्द्वयोरिति । संप्रतिकलिद्वापरसंधावप्यत्रतीर्थेत्रेताद्वापरसंधितुल्यःकालोऽस्ति अत्रस्नातानांकलिस्पर्शोनास्तीतिभावः १४ । १५ सदास्रोतःसदाप्रवाहयुक्तम् १६ पावकाइवदीप्यमानाःपावकाः १७ त्रीणिशृंगाणीति । प्रागव्याख्यातरीत्यात्रिकोणंवाराणसीक्षेत्रं त्रीणिप्रस्रवणानीतिचप्रयागम् ।



समभक्षयिष्यन्संक्रुद्धःशतक्रतुमुपाद्रवत् ॥ महताघोररूपेणलोकाञ्शब्देननादयन् २५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौकन्येचतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ लोमशउवाच ॥ तंदृष्ट्वाघोरवदनंमदंदेवःशतक्रतुः ॥ आयांतंभक्षयिष्यंतंव्यात्ताननमिवांतकम् १ भयात्संस्तंभितभुजःसृक्किणीलेलिहन्मुहुः ॥ ततोऽब्रवीद्देवराजश्च्यवनंभयपीडितः २ सोमार्हावश्विनावेतावद्यप्रभृतिभार्गव ॥ भविष्यतःसत्यमेतद्वचोविप्रप्रसीदमे ३ नतेमिथ्यासमारंभोभवत्वेषपरोविधिः ॥ जानामिचाहंविप्रर्षेनमिथ्यात्वंकरिष्यसि ४ सोमार्हावश्विनावेतौयथावाऽद्यकृतौत्वया ॥ भूयएवतुतेवीर्यंप्रकाशेदिति भार्गव ५ सुकन्यायाःपितुश्चास्यलोकेकीर्तिःप्रथेदिति ॥ अतोमयैतद्विहितंतववीर्यप्रकाशनम् ६ तस्मात्प्रसादंकुरुमेभवत्वेवंयथेच्छसि ॥ एवमुक्तस्यशक्रेण भार्गवस्यमहात्मनः ७ समन्युर्व्यगमच्छीघ्रंमुमोचचपुरंदरम् ॥ मदंचव्यभजद्राजन्पानेस्त्रीषुचवीर्यवान् ८ अक्षेषुमृगयायांचपूर्वसृष्टंपुनःपुनः ॥ तदामदंविनिक्षिप्यशक्रंसंतर्प्यचेंदुना ९ अश्विभ्यांसहितान्देवान्याजयित्वाचतंनृपम् ॥ विख्याप्यवीर्यंलोकेषुसर्वेषुवदतांवरः १० सुकन्ययासहारण्येविजहारानुकूलया ॥ तस्यैतद्द्विजसंघुष्टंसरोराजन्प्रकाशते ११ अत्रत्वंसहसोदर्यैःपितॄन्देवांश्चतर्पय ॥ एतद्दृष्ट्वामहीपालसिकताक्षंचभारत १२ सैंधवारण्यमासाद्यकुल्यानांकुरुदर्शनम् ॥ पुष्करेषुमहाराजसर्वेषुचजलंस्पृश १३ स्थाणोर्मंत्राणिचजपन्सिद्धिंप्राप्स्यसिभारत ॥ संधिर्द्वयोर्नरश्रेष्ठत्रेतायाद्वापरस्यच १४ अयंहिदृश्यतेपार्थसर्वपापप्रणाशनः ॥ अत्रोपस्पृशचैवत्वंसर्वपापप्रणाशने १५ आर्चीकपर्वतश्चैवनिवासोवैमनीषिणाम् ॥ सदाफलःसदास्रोतोमरुतांस्थानमुत्तमम् १६ चैत्याश्चैते बहुविधास्त्रिदशानांयुधिष्ठिर ॥ एतच्चंद्रमसस्तीर्थमृषयःपर्युपासते ॥ वैखानसावालखिल्याःपावकावायुभोजनाः १७ शृंगाणित्रीणिपुण्यानित्रीणिप्रस्रवणानि च ॥ सर्वाण्यनुपरिक्रम्ययथाकाममुपस्पृश १८ शान्तनुश्चात्रराजेंद्रशुनकश्चनराधिपः ॥ नरनारायणौचोभौस्थानंप्राप्ताःसनातनम् १९ इहनित्यशयादेवाःपितरश्चमहर्षिभिः ॥ आर्चीकपर्वतेतेपुस्तान्यजस्वयुधिष्ठिर २०

एतानिसर्वाण्यनुपरिक्रम्यप्रदक्षिणीकृत्ययथाकाममिहस्नाहि । यथाकाममित्यस्यकाशीप्रयागसेविनां चंद्रतीर्थसेवनमैच्छिकमितरेषामत्यावश्यकमितिभावः । गौडास्तु त्रीणिशृंगाणिशुभ्राणित्रीणिप्रस्रवणानिच ॥ पुष्कराण्यादिसिद्धानिनविद्मस्तत्रकारणम् इतिश्लोकमत्रापिपठंति सचप्रागेवव्याख्यातः । अत्रपाठस्तुकाश्यादिस्तुत्यापूर्वोक्तार्थस्यदृढीकारार्थः १८ । १९ नित्यशयानित्यंशयानाः सन्निहिताइत्यर्थः तेपुस्तपश्चक्रुः २०

२१ । २२ । २३ । २४ । २५ । साहदेविःसृंजयपुत्रस्यपुत्रः २६ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ ॥ ॥

इहतेवैचरून्प्राश्नन्नृषयश्चविशांपते ॥ यमुनाचाक्षयस्रोताकृष्णश्चेहतपोरतः २१ यमौचभीमसेनश्चकृष्णाचामित्रकर्शन ॥ सर्वेचात्रगमिष्यामस्त्वयैवसह पांडव २२ एतत्प्रस्रवणंपुण्यमिंद्रस्यमनुजेश्वर ॥ यत्रधाताविधाताचवरुणश्चोर्ध्वमागताः २३ इहतेऽप्यवसन्राजन्क्षांताःपरमधर्मिणः ॥ मैत्राणामृजुबुद्धीनामयंगिरिवरःशुभः २४ एषासायमुनाराजन्महर्षिगणसेविता ॥ नानायज्ञचिताराजन्पुण्यापापभयापहा २५ अत्रराजामहेष्वासोमांधाताऽयजतस्वयम् ॥ साहदेविश्चकौन्तेयसोमकोददतांवरः २६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौकन्येपंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ युधिष्ठिरउवाच ॥ मांधाताराजशार्दूलस्त्रिषुलोकेषुविश्रुतः ॥ कथंजातोमहाब्रह्मन्यौवनाश्वोनृपोत्तमः १ कथंचैनांपरांकाष्ठांप्राप्तवानमितद्युतिः ॥ यस्यलोकास्त्रयोवश्याविष्णोरिवमहात्मनः २ एतदिच्छाम्यहंश्रोतुंचरितंतस्यधीमतः ॥ यथामांधातृशब्दश्चतस्यशक्रसमद्युतेः ॥ जन्मचाप्रतिवीर्यस्यकुशलोह्यसिभाषितुम् ३ ॥ लोमशउवाच ॥ शृणुष्वावहितोराजन्राज्ञस्तस्यमहात्मनः ॥ यथामांधातृशब्दोवैलोकेषुपरिगीयते ४ इक्ष्वाकुवंशप्रभवोयुवनाश्वोमहीपतिः ॥ सोऽयजत्पृथिवीपालःक्रतुभिर्भूरिदक्षिणैः ५ अश्वमेधसहस्रंचप्राप्यधर्मभृतांवरः ॥ अन्यैश्चक्रतुभिर्मुख्यैरयजत्स्वाप्तदक्षिणैः ६ अनपत्यस्तुराजर्षिःसमहात्मामहाव्रतः ॥ मंत्रिष्वाधायतद्राज्यंवननित्योबभूवह ७ शास्त्रदृष्टेनविधिनासंयोज्यात्मानमात्मवान् ॥ सकदाचिन्नृपोराजन्नुपवासेनदुःखितः ८ पिपासाशुष्कहृदयःप्रविवेशाश्रमंभृगोः ॥ तामेवरात्रिंराजेंद्रमहात्माभृगुनंदनः ९ इष्टिंचकारसौद्युम्नेर्महर्षिःपुत्रकारणात् ॥ संभृतोमंत्रपूतेनवारिणाकलशोमहान् १० तत्रातिष्ठतराजेंद्रपूर्वमेवसमाहितः ॥ यत्प्राश्यप्रसवेत्तस्यपत्नीशक्रसमंसुतम् ११ तंन्यस्यवेद्यांकलशंसुषुपुस्तेमहर्षयः ॥ रात्रिजागरणाच्छ्रांतान्सौद्युम्निःसमतीत्यतान् १२ शुष्ककंठःपिपासार्तःपानीयार्थीभृशंनृपः ॥ तंप्रविश्याश्रमंश्रांतःपानीयंसोऽभ्ययाचत १३ तस्यश्रांतस्यशुष्केणकंठेनक्रोशतस्तदा ॥ नाश्रौषीत्कश्चनतदाशकुनेरिववाशतः १४ ततस्तंकलशंदृष्ट्वाजलपूर्णंसपार्थिवः ॥ अभ्यद्रवतवेगेनपीत्वाचांभोव्यवासृजत् १५ सपीत्वाशीतलंतोयंपिपासार्तोमहीपतिः ॥ निर्वाणमगमद्धीमान्सुसुखीचाभवत्तदा १६ ततस्तेप्रत्यबुध्यंतमुनयःसतपोधनाः ॥ निस्तोयंतंचकलशंददृशुःसर्वएवते १७ कस्यकर्मेदमितितेपर्यपृच्छन्समागताः ॥ युवनाश्वोममेत्येवंसत्यंसमभिपद्यत १८ नयुक्तमितितंप्राहभगवान्भार्गवस्तदा ॥ सुतार्थंस्थापिताह्यापस्तपसाचैवसंभृताः १९ मयाह्यत्राहितंब्रह्मतपआस्थायदारुणम् ॥ पुत्रार्थंतवराजर्षेमहाबलपराक्रम २०

यौवनाश्वोयुवनाश्वपुत्रः १ परांकाष्ठांस्वर्गिष्वेवश्रेष्ठंस्थानम् २ । ३ । ४ । ५ । ६ । ७ आत्मानंचित्तं आत्मवान्जितचित्तः संयोज्येष्टदेवतयाऐक्यंनीत्वा ८ । ९ सौद्युम्नेः युवनाश्वस्य १० । ११ । १२ । १३ वाशतः शब्दंकुर्वतः १४ । १५ निर्वाणं तपःफलम् १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ इष्टमिच्छितम् २५ । २६ । २७ । २८ किंधास्यतिपास्यतिस्तन्याभावात् २९ मांधास्यतिमांधाता धातेतिलुडंतस्यव्याख्यानंधास्यतीति प्रदेशिनीं तर्जनीम् ३० । ३१ किष्कून्हस्तान्वितस्तीन्वा । किष्कुर्हस्तेवितस्तौचेत्यमरः ३२ ध्यातमात्रस्यइंद्रेणायमेवंविधोभवत्वितिसंकल्पितस्य ३३ शृंगोद्भवाः स्वर्गजाः । शृंगंप्रभुत्वेशिखरेइत्या

महाबलोमहावीर्यस्तपोबलसमन्वितः ॥ यःशक्रमपिवीर्येणगमयेद्यमसादनम् २१ अनेनविधिनाराजन्मयैतदुपपादितम् ॥ अब्भक्षणंत्वयाराजन्नयुक्तंकृतमद्यवै २२ नत्वद्यशक्यमस्माभिरेतत्कर्तुमतोऽन्यथा ॥ नूनंदैवकृतंह्येतद्यदेवंकृतवानसि २३ पिपासितेनयाःपीताविधिमंत्रपुरस्कृताः ॥ आपस्त्वयामहाराजमत्तपोवीर्यसंभृताः २४ ताभ्यस्त्वमात्मनापुत्रमीदृशंजनयिष्यसि ॥ विधास्यामोवयंतत्रतवेष्टिंपरमाद्भुताम् २५ यथाशक्रसमंपुत्रंजनयिष्यसिवीर्यवान् ॥ गर्भधारणजंवाऽपिनखेदंसमवाप्स्यसि २६ ततोवर्षशतेपूर्णेतस्यराज्ञोमहात्मनः ॥ वामंपार्श्वंविनिर्भिद्यसुतःसूर्यइवस्थितः २७ निश्चक्राममहातेजानचतंमृत्युराविशत् ॥ युवनाश्वंनरपतिंतदद्भुतमिवाभवत् २८ ततःशक्रोमहातेजास्तंदिदृक्षुरुपागमत् ॥ ततोदेवामहेंद्रंतमपृच्छन्धास्यतीतिकिम् २९ प्रदेशिनींततोऽस्यास्येशक्रःसमभिसंदधे ॥ मामयंधास्यतीत्येवंभाषितेचैववज्रिणा ३० मांधातेतिचनामास्यचक्रुःसेंद्रादिवौकसः ३१ प्रदेशिनींशक्रदत्तामास्वाद्यसशिशुस्तदा ॥ अवर्धतमहातेजाःकिष्कून्राजंस्त्रयोदश ३२ वेदास्तंसधनुर्वेदादिव्यान्यस्त्राणिचेश्वरम् ॥ उपतस्थुर्महाराजध्यातमात्रस्यसर्वशः ३३ आजगवंनामधनुःशराःशृंगोद्भवाश्चये ॥ अभेद्यंकवचंचैवसद्यस्तमुपशिश्रियुः ३४ सोभिषिक्तोमघवतास्वयंशक्रेणभारत ॥ धर्मेणव्यजयल्लोकांस्त्रीन्विष्णुरिवविक्रमैः ३५ तस्याप्रतिहतंचक्रंप्रावर्ततमहात्मनः ॥ रत्नानिचैवराजर्षिंस्वयमेवोपतस्थिरे ३६ तस्येयंवसुसंपूर्णावसुधावसुधाधिप ॥ तेनेष्टंविविधैर्यज्ञैर्बहुभिःस्वाप्तदक्षिणैः ३७ चितचैत्योमहातेजाधर्मान्प्राप्यचपुष्कलान् ॥ शक्रस्यार्धासनंराजँल्लब्धवानमितद्युतिः ३८ एकाह्नात्पृथिवींतेनधर्मनित्येनधीमता ॥ विजिताशासनादेवसरत्नाकरपत्तना ३९ तस्यचैत्यैर्महाराजक्रतूनांदक्षिणावताम् ॥ चतुरंतामहीव्याप्तानासीत्किंचिदनावृतम् ४० तेनपद्मसहस्राणिगवांदशमहात्मना ॥ ब्राह्मणानांमहाराजदत्तानीतिप्रचक्षते ४१ तेनद्वादशवार्षिक्यामनावृष्ट्यांमहात्मना ॥ वृष्टंसस्यविवृद्ध्यर्थंमिषतोवज्रपाणिनः ४२ तेनसोमकुलोत्पन्नोगांधाराधिपतिर्महान् ॥ गर्जन्निवमहामेघःप्रमथ्यनिहतःशरैः ४३ प्रजाश्चतुर्विधास्तेनत्राताराजन्कृतात्मना ॥ तेनात्मतपसालोकास्तापिताश्चातितेजसा ४४ तस्यैतद्देवयजनंस्थानमादित्यवर्चसः ॥ यस्यपुण्यतमेदेशेकुरुक्षेत्रस्यमध्यतः ४५ एतत्तेसर्वमाख्यातंमांधातुश्चरितंमहत् ॥ जन्मचाग्र्यंमहीपालयन्मांत्वंपरिपृच्छसि ४६

दिः स्वर्गमीनविशेषयोरितिविश्वः दिव्याइत्यर्थः ३४ । ३५ चक्रमाज्ञा ३६ । ३७ चितचैत्यःकृतचयनक्रतुः ३८ । ३९ । ४० पद्मंशतकोटयस्तेषामपिसहस्राणिदश ४१ । ४२ । ४३ चतुर्विधाः सुरनरतिर्यक्स्थावराः ४४ । ४५ । ४६

४७ ॥ इत्यारण्यकेपर्वणिनैलकंठीयेभारतभावदीपेषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ ॥ ॥ कथमिति १ । २ । ३ । ४ । ५ स्फिचिकट्याम् ६ । ७ अमात्यपर्षदोमध्येमंत्रिसभांतः
८ क्षत्तादौवारिकः ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ जंतुनापशुभूतेन । 'सवरुणंराजानमुपससारपुत्रोमेजायतांतेनत्वायजा' इति इतिपुत्रस्यापिपशुकरणंबह्वृचब्राह्मणेपरामृष्टं

॥ वैशंपायनउवाच ॥ एवमुक्तःसकौन्तेयोलोमशेनमहर्षिणा ॥ पप्रच्छानंतरंभूयःसोमकंप्रतिभारत ४७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांमांधात्रुपाख्यानेषड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ ॥ युधिष्ठिरउवाच ॥ कथंवीर्यःसराजाभूत्सोमकोवदतांवर ॥ कर्माण्यस्यप्रभावंचश्रोतुमिच्छामितत्त्वतः १ ॥ लोमशउवाच ॥ युधिष्ठिरासीन्नृपतिःसोमकोनामधार्मिकः ॥ तस्यभार्याशतंराजन्सदृशीनामभूत्तदा २ सवैयत्नेनमहतातासुपुत्रंमहीपतिः ॥ कंचिन्नासादयामासकालेनमहताह्यपि ३ कदाचित्तस्यवृद्धस्ययतमानस्ययत्नतः ॥ जंतुर्नामसुतस्तस्मिन्स्त्रीशतेसमजायत ४ तंजातंमातरःसर्वाःपरिवार्यसमासते ॥ सततंपृष्ठतःकृत्वाकामभोगान्विशांपते ५ ततःपिपीलिकाजंतुंकदाचिददशत्स्फिचि ॥ सदष्टोव्यनदन्नादंतेनदुःखेनबालकः ६ ततस्तामातरःसर्वाःप्राक्रोशन्भृशदुःखिताः ॥ प्रवार्यजंतुंसहसासशब्दस्तुमुलोऽभवत् ७ तमार्तनादंसहसाशुश्रावसमहीपतिः ॥ अमात्यपर्षदोमध्येउपविष्टःसहर्त्विजा ८ ततःप्रस्थापयामासकिमेतदितिपार्थिवः ॥ तस्मैक्षत्तायथावृत्तमाचचक्षेसुतंप्रति ९ त्वरमाणःसचोत्थायसोमकःसहमंत्रिभिः ॥ प्रविश्यांतःपुरंपुत्रमाश्वासयदरिंदमः १० सांत्वयित्वातुतंपुत्रंनिष्क्रम्यांतःपुरान्नृपः ॥ ऋत्विजासहितोराजन्सहामात्यउपाविशत् ११ ॥ सोमकउवाच ॥ धिगस्त्विहैकपुत्रत्वमपुत्रत्वंवरंभवेत् ॥ नित्यातुरत्वाद्भूतानांशोकएवैकपुत्रता १२ इदंभार्याशतंब्रह्मन्परीक्ष्यसदृशंप्रभो ॥ पुत्रार्थिनामयावोढंनतासांविद्यतेप्रजा १३ एकःकथंचिदुत्पन्नःपुत्रोजंतुरयंमम ॥ यतमानासुसर्वासुकिंनुदुःखमतःपरम् १४ वयश्चसमतीतंमेसभार्यस्यद्विजोत्तम ॥ आसांप्राणाःसमायत्तामममचात्रैकपुत्रके १५ स्यान्नुकर्मतथायुक्तंयेनपुत्रशतंभवेत् ॥ महतालघुनावाऽपिकर्मणादुष्करेणवा १६ ॥ ऋत्विगुवाच ॥ अस्तिचैतादृशंकर्मयेनपुत्रशतंभवेत् ॥ यदिशक्नोषितत्कर्तुमथवक्ष्यामिसोमक १७ ॥ सोमकउवाच ॥ कार्यंवायदिवाऽकार्यंयेनपुत्रशतंभवेत् ॥ कृतमेवेतितद्विद्धिभगवान्प्रब्रवीतुमे १८ ॥ ऋत्विगुवाच ॥ यजस्वजंतुनाराजंस्त्वंमयाविततेक्रतौ ॥ ततःपुत्रशतंश्रीमद्भविष्यत्यचिरेणते १९ वपायांहूयमानायांधूममाघ्रायमातरः ॥ ततस्ताःसुमहावीर्याञ्जनयिष्यंतितेसुतान् २० तस्यामेवतुतेजंतुर्भवितापुनरात्मजः ॥ उत्तरेचास्यसौवर्णंलक्ष्मपार्श्वेभविष्यति २१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिलोमशतीर्थयात्रायांजंतूपाख्यानेसप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ ॥ ॥ ॥ सोमकउवाच ॥ ब्रह्मन्यद्यद्यथाकार्यंतत्कुरुष्वतथातथा ॥ पुत्रकामतयासर्वंकरिष्यामिवचस्तव १ ॥ लोमशउवाच ॥ ततःसयाजयामाससोमकंतेनजंतुना ॥ मातरस्तुबलात्पुत्रमपाकर्षुःकृपान्विताः २

ततोनशास्त्रविरोधः १९ । २० । २१ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ ॥ ब्रह्मन्निति १ । २

वाशंत्यःक्रोशंत्यः ३ । ४ वपांदेहांतर्गतमपूपाकारंमांसं ५ । ६ । ७ । ८ लक्षणंचिन्हं ९ सोमकस्यऋत्विगितिशेषः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ क्षांतःक्षमावान् उष्यउषित्वा २० अभिचारपापंकुमार्गोपदेष्टृषुयाजकेष्वेवयाज्यस्यनिपातस्तुगुरौकरुणाप्रयुक्तःस्वयंकृतोनतुन्याय्यइत्यध्यायतात्पर्यम् २१ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टाविंशत्य

हाहताःस्मेतिवाशंत्यस्तीव्रशोकसमाहताः ॥ रुदंत्यःकरुणंवापिगृहीत्वादक्षिणेकरे ३ सव्येपाणौगृहीत्वातुयाजकोऽपिस्मकर्षति ॥ कुररीणामिवार्तानांसमाकृष्यतुतंसुतम् ४ विशस्यचैनंविधिवद्वपामस्यजुहावसः ॥ वपायांहूयमानायांगंधमाघ्रायमातरः ५ आर्तानिपेतुःसहसापृथिव्यांकुरुनंदन ॥ सर्वाश्चगर्भानलभंस्ततस्ताःपरमांगनाः ६ ततोदशसुमासेषुसोमकस्यविशांपते ॥ जज्ञेपुत्रशतंपूर्णंतासुसर्वासुभारत ७ जंतुर्ज्येष्ठःसमभवज्जनित्र्यामेवपार्थिव ॥ सतासामिष्टएवासीन्नतथातेनिजाःसुताः ८ तच्चलक्षणमस्यासीत्सौवर्णंपार्श्वउत्तरे ॥ तस्मिन्पुत्रशतेचाग्र्यःसबभूवगुणैरपि ९ ततःसलोकमगमत्सोमकस्यगुरुःपरम् ॥ अथकालेव्यतीतेतुसोमकोऽप्यगमत्परम् १० अथतंनरकेघोरेपच्यमानंददर्शसः ॥ तमपृच्छत्किमर्थंत्वंनरकेपच्यसेद्विज ११ तमब्रवीद्गुरुःसोऽथपच्यमानोग्निनाभृशम् ॥ त्वंमयायाजितोराजंस्तस्येदंकर्मणःफलम् १२ एतच्छ्रुत्वासराजर्षिर्धर्मराजानमब्रवीत् ॥ अहमत्रप्रवेक्ष्यामिमुच्यतांममयाजकः ॥ मत्कृतेहिमहाभागःपच्यतेनरकाग्निना १३ ॥ धर्मउवाच ॥ नान्यःकर्तुःफलंराजन्नुपभुंक्तेकदाचन ॥ इमानितवदृश्यंतेफलानिवदतांवर १४ ॥ सोमकउवाच ॥ पुण्यान्नकामयेलोकानृतेऽहंब्रह्मवादिनम् ॥ इच्छाम्यहमनेनैवसहवस्तुंसुरालये १५ नरकेवाधर्मराजकर्मणाऽस्यसमोह्यहम् ॥ पुण्यापुण्यफलंदेवसममस्त्वावयोरिदम् १६ ॥ धर्मराजउवाच ॥ यद्येवमीप्सितंराजन्भुंक्ष्वास्यसहितःफलम् ॥ तुल्यकालंसहानेनपश्चात्प्राप्स्यसिसद्गतिम् १७ ॥ लोमशउवाच ॥ सचकारतथासर्वंराजाराजीवलोचनः ॥ क्षीणपापश्चतस्मात्सविमुक्तोगुरुणासह १८ लेभेकामाञ्शुभान्राजन्कर्मणानिर्जितान्स्वयम् ॥ सहतेनैवविप्रेणगुरुणासगुरुप्रियः १९ एषतस्याश्रमःपुण्योयएषोऽग्रेविराजते ॥ क्षांतउष्यात्रषड्रात्रंप्राप्नोतिसुगतिंनरः २० एतस्मिन्नपिराजेंद्रवत्स्यामोविगतज्वराः ॥ षड्रात्रंनियतात्मानःसज्जीभवकुरूद्वह २१ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांजंतूपाख्यानेअष्टाविंशाधिकशततमोऽध्यायः ॥ १२८ ॥
॥ लोमशउवाच ॥ अस्मिन्किलस्वयंराजन्निष्टवान्वैप्रजापतिः ॥ सत्रमिष्टीकृतंनामपुरावर्षसहस्रिकम् १ अंबरीषश्चनाभागइष्टवान्यमुनामनु ॥ यत्रेष्ट्वादशपद्मानिसदस्येभ्योऽधिसृष्टवान् २ यज्ञैश्चतपसाचैवपरांसिद्धिमवापसः ॥ देशश्चनाहुषस्यायंयज्वनःपुण्यकर्मणः ३ सार्वभौमस्यकौन्तेययथातेरमितौजसः ॥ स्पर्धमानस्यशक्रेणतस्येदंयज्ञवास्त्विह ४

धिकशततमोऽध्यायः ॥ १२८ ॥ ॥ ॥ ॥ अस्मिन्निति १ दशपद्मानिगवामितिशेषः । तस्यद्वादशशतंदक्षिणाइति यागीयदक्षिणादौ सर्वत्रगोपदस्यैवाध्याहारदर्शनात् अभिसृष्टवानदत्तवान् २ । ३ । यज्ञवास्तुयज्ञभूमिः । इहअस्मिन्वास्तुनि इदमुत्तरान्वयि ४

अग्निभिरग्निस्थापनार्थैरिष्टकारचितैःस्थंडिलैः ५ शमीआमिक्षार्थंदध्युत्पादनार्थमानीताशमीशाखा एकपत्राशाततिपत्रा अंतर्वेदिशाखायाःपलाशान्यसर्वाणिप्रशात्यमूलतःशाखांपरिवास्योपवेषंकरोती तिसूत्रात् यापूर्वमेकपत्रशाखाऽभूत्सैषाउपवेषरूपेणावशिष्टादृश्यतेअग्रभागस्यवन्हौप्रहृतत्वात् परिवास्यच्छित्वा सरकंसुराग्रहपात्रं। सरकोऽस्त्रीसीधुपात्रे इतिमेदिनी ६ प्रसर्पणंसंचारभूमिः रौप्यायांरूप्य वत्श्वेतवर्णायांस्थल्यांनद्यांवा सामीप्येसप्तमी प्रसर्पणंतीर्थमित्यन्ये ७ अनुवंशंपरंपरागतमाख्यानश्लोकं । उलूखलैरिति । उलूखलसदृशानिस्त्रीणांकर्णाभरणानिभवंतीति स्वयमुलूखलैरेवाभरणैर्युक्तासतीति शेषः एतेनविकृतवेषत्वंपिशाच्याः ८ उक्तंभाषणमेवाहद्वाभ्यां युगंधरइति । अत्रप्राञ्चः अस्मिंस्तीर्थेसपुत्राब्राह्मणीस्नातुमागतातांप्रतिपिशाचीवदति त्वयायुगंधरेपर्वतेदेशेवादधिप्राशनंकृतं तत्रो ष्ट्रीक्षीरं गर्दभ्यादिक्षीरंचदधिक्रियते । तथाअच्युतस्थलाख्येसंकरजानांग्रामेवासश्चकृतः । तथाभूतिलयाख्येदस्युग्रामेऽग्निदग्धानांमृतानांक्षेपणंयस्यांनद्यांक्रियतेतस्यांस्नाताऽसि अतोदोषत्रयवतीत्वं एतत्करणेहिप्रायश्चित्तंधर्मशास्त्रेप्रसिद्धं । औष्ट्रमैकशफंक्षीरंसुरातुल्यमिति । संसृज्यसंकरैःसार्धंप्राजापत्यंव्रतंचरेदिति । प्रोष्यभूतिलयेविप्रःप्राजापत्यंव्रतंचरेदितिच तच्चत्वयानकृतमतःकथ मत्रवस्तुमिच्छसि दोषवतामिहतीर्थवासोदुर्लभइत्यर्थः । एवंपिशाचीवाक्यंश्रुत्वाऽपिसाब्राह्मणीतत्रस्नानादिकंकृतवती ततस्तयाराक्षस्यातस्याघटपिठरादिकंनाशितं उक्तंन । 'एतत्तवदिवावृत्तंरात्रौवृत्तं तुद्रक्ष्यसि'इति वृत्तंजातं रात्रौतुतवपुत्रमपिनाशयिष्यामीतिभावः । अथापिद्वितीयांरात्रिंवस्तुमिच्छसिचेत्तवभूयांसमपकारंकरिष्यामीतियुगंधरादिदेशत्रयनिंदापरत्वेनव्याचख्युः । अर्वाञ्चस्तुयुगंध रादौदधिप्राशनादिकंत्रयमधिकारकारणंकृत्वा एकरात्रमिहयदिवस्तुमिच्छसिचेद्वस । अत्रपिशाचीवचनव्याजेनैकरात्रवासोनियम्यते यदितुद्वितीयंदिवारात्रंवत्स्यसितर्हिएतत्तवदिवाकालेवृत्तंभविष्यति एत

पश्यनानाविधाकारैरग्निभिर्निचितांमहीम् ॥ मज्जंतीमिवचाक्रांतांययातेर्यज्ञकर्मभिः ५ एषाशम्येकपत्रायासरकंचैतदुत्तमम् ॥ पश्यरामन्हदानेतान्पश्य नारायणाश्रमम् ६ एतच्चर्चीकपुत्रस्ययोगैर्विचरतोमहीम् ॥ प्रसर्पणंमहीपालरौप्यायाममितौजसः ७ अत्रानुवंशंपठतःशृणुमेकुरुनंदन ॥ उलूखलैराभर णैःपिशाचीयदभाषत ८ युगंधरेदधिप्राश्यउषित्वाचाच्युतस्थले ॥ तद्वद्भूतलयेस्नात्वासपुत्रावस्तुमर्हसि ९

दितिवस्त्रपात्राहारताडनादिकमभिनीयदर्शयति । रात्रौत्वतोऽन्यथाप्राणापहारांतमित्यर्थइति । ब्रह्मज्ञानिवंशावतंसलक्ष्मणानुचरास्तु द्वारमेतत्कुरुक्षेत्रस्येत्युपसंहारादस्यक्षेत्रस्यद्विविधकुरुक्षेत्रप्रापकत्वम वगतं कुरुक्षेत्रद्वयंच । एकंशतपथेप्रवर्ग्यकांडे तेषांकुरुक्षेत्रंदेवयजनमासतस्मादाहुःकुरुक्षेत्रंदेवानांदेवयजनमितिकर्मांगंकुरुदेशांतर्गतंप्रसिद्धम् । अपरंच अविमुक्तंवैकुरुक्षेत्रमित्यादिनाज्ञानांगमविमुक्ता ख्यंजाबालरामतापनीयोपनिषदोःप्रसिद्धम् । ततश्चास्यक्षेत्रस्यक्रममुक्तौसद्योमुक्तौपरंपरयाहेतुत्वादत्रवासेदेवाविघ्नमाचरंति । मुक्तोहिदेवपशुत्वान्निवर्ततइति । तथाबृहदारण्यकेआत्मेत्येवोपासीते त्यैकात्म्यंज्ञेयमित्युक्त्वाऽथयोन्यांदेवतामुपास्तेऽन्योऽसावन्योऽहमितिनसवेदयथापशुरेवसदेवानामितिभेददर्शिनोदेवपशुत्वमुक्त्वा तस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युरित्यैकात्म्यज्ञानंदेवानामप्रियंपशुना शइवपशुपतेरित्युक्तम् । ज्ञातैकात्म्यस्यतुदेवाअप्रियंकर्तुमसमर्थास्तथाचतत्रैवश्रूयते । तस्यहनदेवाश्चनाभूत्याईशतआत्माह्येषांसभवतीति देवाश्चनदेवाअपि अभूत्यैअनैश्वर्याय एवंसतियदिब्रह्मिष्ठाऽसि तर्हित्रचिरकालंवस्तुमर्हसीति पिशाचीकांचित्सपुत्रांस्त्रियमिहवस्तुमिच्छंतींप्रतिप्रब्रवीति युगंधरइति युगानिकृतत्रेताद्वापरकलिसंज्ञानिधारयतीतियुगंधरःस्थूलशरीराभिमानीजीवः तथाहिश्रुतिः । 'कलिः शयानोभवतिसंजिहानस्तुद्वापरः ॥ उत्तिष्ठंस्त्रेताभवतिकृतंसंपद्यतेचरन्'इति । शयानोधर्ममाचार्यादिमुखादजानन्पुरुषःकलिः । सएवसंजिहानस्तंजानन्द्वापरोभवति । उत्तिष्ठन्धर्मानुष्ठानार्थंयतमानस्त्रे ताभवति । धर्मंचरन्ननुतिष्ठंस्तुकृतंभवतीतिपुंसएवयुगंधरत्वमाह । दधिप्राशनशब्देनधर्मप्रजासंपत्त्यर्थोदारसंयोगउच्यते । तथाहिगृह्यसूत्रे । समंजंतुविश्वेदेवाइतिदध्नःप्राश्यप्रतिप्रयच्छेदितिविवाहांते–

दंपत्योर्हृदयसंधानार्थंदधिप्राशनंविधीयतेतत्र 'समापोहृदयानिनौ संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ'इतिमंत्रशेषः । मंत्रार्थस्तु विश्वेदेवाः नौआवयोर्हृदयानि वृत्तिबहुत्वात्बहुवचनं समंजंतुस्निग्धानिकुर्वंतु । संशब्दावृत्त्या समंजंत्वित्यस्याप्यावृत्तिर्ज्ञेया । आपोनौहृदयानिसमंजंत्वित्यर्थः स्निग्धयोर्हृद्वयोःसंधानंभवतीति । मातरिश्वाप्राणवायुर्नौहृदयानिसंदधातु । एवंधातासंदधातु । उनिश्चितं देष्ट्रीअंतर्यामिणी देवताचसंदधातु । व्यवहिताश्चेतिछंदसिव्यवहितोपसर्गेणापिक्रियायाः संबंधः । पूर्ववदुपसर्गावृत्त्याक्रियापदस्यावृत्तिरिति । तथाचक्षौमेवसानौजायापतीसहोभौचरतांधर्मंप्रजांप्रजनयावहा इतिश्रुति लिंगाभ्यां धर्मप्रजोत्पादने सहाधिकारात् । 'जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायते ब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यः प्रजयापितृभ्यः' इतिचश्रुतानामृणानामपाकरणं दारसंयोगंविनानभवतीतिदधिप्राशन शब्देनलक्षितलक्षणयाआनृण्यंग्राह्यं तेनस्वधर्मनिष्ठःप्रजावानेतत्तीर्थंसेवितुमर्हतीतिपूर्वपादार्थः । अच्युतस्थलेच्युतियोग्यस्थूलशरीरापेक्षयाअच्युतंस्थलंलिंगशरीरं तत्रउषित्वासूत्रात्मानमुपास्येत्यर्थः । भूतानिवियदादीनिलीयंतेऽस्मिन्नितिकारणंब्रह्मभूतलयः । भूतिलयइतिपाठेभूतिरैश्वर्यं । तस्यापिचलयोऽस्मिन्निितिशुद्धं ब्रह्मतयोरन्यतरत्रस्नात्वामलंत्यक्त्वा 'यथैषीकतूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानः

एकरात्रमुषित्वेहद्वितीयंयदिवत्स्यसि ॥ एतद्वैतेदिवावृत्तंरात्रौवृत्तमितोऽन्यथा १० अद्यचात्रनिवत्स्यामःक्षपांभरतसत्तम ॥ द्वारमेतत्तुकौंतेयकुरुक्षेत्रस्य भारत ११ अत्रैवनाहुषोराजाराजन्क्रतुभिरिष्टवान् ॥ ययातिर्बहुरत्नौघैर्यत्रेन्द्रोमुदमभ्यगात् १२ एतत्प्लक्षावतरणंयमुनातीर्थमुत्तमम् ॥ एतद्वैनाकपृष्ठस्यद्वारमाहुर्मनीषिणः १३ अत्रसारस्वतैर्यज्ञैरीजानाःपरमर्षयः ॥ यूपोलूखलिकास्तातगच्छंत्यवभृथप्लवम् १४ अत्रवैभरतोराजाराजन्क्रतुभिरिष्टवान् ॥ हयमेधेनयज्ञेनमेध्यमश्वमवासृजत् १५ असकृत्कृष्णसारंगंधर्मेणाप्यचमेदिनीम् ॥ अत्रैवपुरुषव्याघ्रमरुत्तःसत्रमुत्तमम् १६ प्रापचैवर्षिमुख्येनसंवर्तेनाभिपालितः ॥ अत्रोपस्पृश्यराजेंद्रसर्वाँल्लोकान्प्रपश्यति ॥ पूयतेदुष्कृताच्चैवअत्रापिसमुपस्पृश १७ ॥ ॥ वैशंपायनउवाच ॥ ॥ तत्रसभ्रातृकःस्नात्वास्तूयमानोमहर्षिभिः ॥ लोमशंपांडवश्रेष्ठइदंवचनमब्रवीत् १८ सर्वाँल्लोकान्प्रपश्यामितपसासत्यविक्रम ॥ इहस्थःपांडवश्रेष्ठंपश्यामिश्वेतवाहनम् १९ ॥ ॥ लोमशउवाच ॥ ॥ एवमेतन्महाबाहोपश्यंतिपरमर्षयः ॥ सरस्वतीमिमांपुण्यांपुण्यैकशरणावृताम् २०

प्रदूयंते'इतितज्ज्ञानफलश्रवणात् । तद्वदितितच्छब्देनपूर्वार्धोक्तेकर्मोपास्तीउच्येते ताभ्यांयुक्तंयथास्यात्तथाभूतलयेस्नानं तेनदैनंदिनसुषुप्तेर्निवृत्तिः । तत्रापिप्रत्यहंब्रह्मप्राप्तिःश्रूयते 'यत्रैतत्पुरुषःस्वपितिनामसतासोम्यतदासंपन्नोभवति' इति सताब्रह्मणा । तथाचकर्मोपास्तिपूर्वकंयोब्रह्मजानातिसोऽत्रवस्तुमर्हति तस्यपिशाचादिबाधानास्तीत्यर्थः ९ त्वंत्वब्रह्मविदेकंरात्रमेवात्रवस्तुंयोग्या यदिद्वितीयांवस्तुमिच्छसितर्हितेनवएतन्मदीयंवृत्तंभविष्यतिमद्वत्पिशाचीभूत्वात्रस्नानंनलप्स्यसे एतदितिस्ववृत्तस्याभिनीयप्रदर्शनं द्वितीयदिनवासस्यैवैतत्फलं द्वितीयरात्रिवासेतुइतोऽन्यथाअहल्यादिवन्मोहप्राप्त्याशिलाभावोभविष्यतितेननीर्थदर्शनमपिनलप्स्यसेइति १० अतोऽत्रक्षपांरात्रिमेवएकांवत्स्यामः प्रातरेवप्रस्थास्यामइतिभावः । द्वारमित्यर्धंतुउक्तार्थमस्ति ११ अत्रैवकुरुक्षेत्रद्वारे १२ । १३ सारस्वतैर्ब्राह्मणैर्ऋत्विग्भिर्यज्ञैरीजानाः यूपोलूखलिकाः यूपानुलूखलानिचयज्ञसाधनान्याददतेयूपोलूखलिकाः । पशुभिःपुरोडाशैश्चइष्टवंतइत्यर्थः १४ । १५ कृष्णसारंगंकृष्णहरिणसदृशं एकदेशेकृष्णवर्णश्यामकर्णमित्यर्थः १६ । १७
१८ इहस्थोयमुनान्तर्गतप्लक्षावतरणस्थः १९ तीर्थांतरमाह सरस्वतीमिति २०

२१ । २२ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ इहेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ बद्धापाशैरितिशेषः विपाशःपाशहीनः अतएवविपाशानाम ९ । १० औत्तराणामौदीच्यानाम ११ वर्षवसतिस्थानम १२ एषइति । योरामः प्रख्यातःसत्यविक्रमश्च विदेहादुत्तरंचयद्वारं यद्वर्षस्यद्वारमेषोऽनुभूयमानोवातिकषंडोवातानीतःपद्मादिसमूहोनात्यवर्ततेतेनरामेण कृतमितिपूर्वेणान्वयः अनेनवायोरप्यस्मिन्वर्षेप्रवेशोनास्तिकि मुतेतरस्येतिप क्षादेर्वातानीतस्यात्रा प्रवेशाद्रामसामर्थ्यंप्रत्यक्षमाश्चर्यमित्यर्थः १३ युगंपंचसंवत्सरात्मकंतस्मिन्क्षीणे

यत्रस्नात्वानरश्रेष्ठधूतपाप्माभविष्यसि ॥ इहसारस्वतैर्यज्ञैरिष्टवंतःसुरर्षयः ॥ ऋषयश्चैवकौन्तेयतथाराजर्षयोऽपिच २१ वेदीप्रजापतेरेषासमंतात्पंचयोजना ॥ कुरोर्वैयज्ञशीलस्यक्षेत्रमेतन्महात्मनः २२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामेकोनत्रिंशाधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ लोमशउवाच ॥ इहमर्त्यास्तनूस्त्यक्त्वास्वर्गंगच्छंतिभारत ॥ मर्तुकामानराराजन्निहायांतिसहस्रशः १ एवमाशीःप्रयुक्ताहिदक्षेणयजतापुरा ॥ इहयेवैमरिष्यंतितेवैस्वर्गजितोनराः २ एषासरस्वतीरम्यादिव्याचौघवतीनदी ॥ एतद्विनशनंनामसरस्वत्याविशांपते ३ द्वारंनिषादराष्ट्रस्ययेषांदोषात्सरस्वती ॥ प्रविष्टापृथिवींवीरमानिषादाहिमांविदुः ४ एषवैचमसोद्भेदोयत्रदृश्यासरस्वती ॥ यत्रैनामभ्यवर्तंतसर्वाःपुण्याःसमुद्रगाः ५ एतत्सिंधोर्महत्तीर्थंयत्रागस्त्यमरिंदम ॥ लोपामुद्रासमागम्यभर्तारमवृणीतवै ६ एतत्प्रकाशतेतीर्थंप्रभासंभास्करद्युते ॥ इंद्रस्यदयितंपुण्यंपवित्रंपापनाशनम् ७ एतद्विष्णुपदंनामदृश्यतेतीर्थमुत्तमम् ॥ एषारम्याविपाशाचनदीपरमपावनी ८ अत्रवैपुत्रशोकेनवसिष्ठोभगवानृषिः ॥ बद्ध्वात्मानंनिपतितोविपाशःपुनरुत्थितः ९ काश्मीरमंडलंचैतत्सर्वपुण्यमरिंदम ॥ महर्षिभिश्चाध्युषितंपश्येदंभ्रातृभिःसह १० यत्रौत्तराणांसर्वेषामृषीणांनाहुषस्यच ॥ अग्नेश्चैवात्रसंवादःकाश्यपस्यचभारत ११ एतद्द्वारंमहाराजमानसस्यप्रकाशते ॥ वर्षमस्यगिरेर्मध्येरामेणश्रीमताकृतम् १२ एषवातिकषंडोवैप्रख्यातःसत्यविक्रमः ॥ नात्यवर्ततयद्द्वारंविदेहादुत्तरंचयः १३ इदमाश्चर्यमपरंदेशेऽस्मिन्पुरुषर्षभ ॥ क्षीणेयुगेतुकौंतेयशर्वस्यसहपार्षदैः १४ सहोमयाचभवतिदर्शनंकामरूपिणः ॥ अस्मिन्सरसिसत्रैर्वैचैत्रेमासिपिनाकिनम् १५ यजंतेयाजकाःसम्यक्परिवारंशुभार्थिनः ॥ अत्रोपस्पृश्यसरसिश्रद्दधानोजितेंद्रियः १६ क्षीणपापःशुभाँल्लोकान्प्राप्नुतेनात्रसंशयः ॥ एषउज्जानकोनामपावकिर्यत्रशांतवान् ॥ अरुंधतीसहायश्चवसिष्ठोभगवानृषिः १७ ह्रदश्चकुशवानेषयत्रपद्मंकुशेशयम् ॥ आश्रमश्चैवरुक्मिण्यायत्राशाम्यदकोपना १८ समाधीनांसमासस्तुपांडवेयश्रुतस्त्वया ॥ तंद्रक्ष्यसिमहाराजभृगुतुंगंमहागिरिम् १९ वितस्तांपश्यराजेंद्रसर्वपापप्रमोचनीम् ॥ महर्षिभिश्चाध्युषितांशीततोयांसुनिर्मलाम् २० जलांचोपजलांचैवयमुनामभितोनदीम् ॥ उशीनरोवैयत्रेष्ट्वावासवादत्यरिच्यत २१ तांदेवसमितिंतस्यवासवश्चविशांपते ॥ अभ्यागच्छन्नृपवरंज्ञातुमग्निश्चभारत २२ जिज्ञासमानौवरदौमहात्मानमुशीनरम् ॥ इंद्रःश्येनःकपोतोऽग्निर्भूत्वायज्ञेऽभिजग्मतुः २३

समाप्तेसति यदासौरसावनबार्हस्पत्यनाक्षत्रचान्द्राःसंवत्सराएककालंसमाप्यंतेसयुगक्षयकालस्तस्मिन्नित्यर्थः । युगेक्षीणेइत्यस्यसंवत्सरांतइतिवाऽर्थः चैत्रप्रतिपद्युगादिरितिव्यवहारात् १४ अतएवपूर्वदिनेशिवंदृष्ट्वाप्रतिपदमारभ्यमासमात्रंपिनाकिनंयजंतइतिसंगच्छते १५ । १६ पावकिःस्कंदः शांतवान्शमंप्राप वसिष्ठोऽपिशान्तवान् १७ कुशवान्जलवान् । ‘ शरंवनंकुशंनीरम् ’ इतिधनंजयः अकोपनाजितक्रोधा १८ समासःसंक्षेपः यस्मिन्दृष्टेसमाधिफलंभवतीत्यर्थः १९ । २० । २१ देवसमितिंराजसभाम २२ । २३

निलिल्येलीनः २४ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ धर्मात्मानमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

ऊरूराज्ञःसमासाद्यकपोतःश्येनजाद्भयात् ॥ शरणार्थीतदाराजन्निलिल्येभयपीडितः २४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांश्येनकपोतीयेत्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ ॥ ॥ श्येनउवाच ॥ धर्मात्मानंत्वाऽऽहुरेकंसर्वेराजन्महीक्षितः ॥ सर्वधर्मविरुद्धंत्वंकस्मात्कर्मचिकीर्षसि १ विहितंभक्षणंराजन्पीडयमानस्यमेक्षुधा ॥ मारक्षीर्धर्मलोभेनधर्ममुत्सृष्टवानसि २ ॥ राजोवाच ॥ संत्रस्तरूपस्त्राणार्थीत्वत्तोभीतोमहाद्विज ॥ मत्सकाशममनुप्राप्तःप्राणगृध्नुरयंद्विजः ३ एवमभ्यागतस्येहकपोतस्याभयार्थिनः ॥ अप्रदानेपरंधर्मंकथंश्येननपश्यसि ४ प्रस्पंदमानःसम्भ्रांतःकपोतःश्येनलक्ष्यते ॥ मत्सकाशंजीवितार्थीतस्यत्यागोविगर्हितः ५ योहिकश्चिद्द्विजान्हन्याद्गांवालोकस्यमातरम् ॥ शरणागतंचत्यजतेतुल्यंतेषांहिपातकम् ६ ॥ श्येनउवाच ॥ आहारात्सर्वभूतानिसंभवंतिमहीपते ॥ आहारेणविवर्धंतेतेनजीवंतिजंतवः ७ शक्यतेदुस्त्यजेऽप्यर्थेचिररात्रायजीवितुम् ॥ नतुभोजनमुत्सृज्यशक्यंवर्तयितुंचिरम् ८ भक्ष्याद्वियोजितस्याद्यममप्राणाविशांपते ॥ विसृज्यकायमेष्यंतिपंथानमकुतोभयम् ९ प्रमृतेमयिधर्मात्मन्पुत्रदारादिनंक्ष्यति ॥ रक्षमाणःकपोतंत्वंबहून्प्राणान्नरक्षसि १० धर्मंयोबाधतेधर्मोनसधर्मःकुवर्त्मतत् ॥ अविरोधात्तुयोधर्मःसधर्मःसत्यविक्रम ११ विरोधिषुमहीपालनिश्चित्यगुरुलाघवम् ॥ नबाधाविद्यतेयत्रतंधर्मंसमुपाचरेत् १२ गुरुलाघवमादायधर्माधर्मविनिश्चये ॥ यतोभूयांस्ततोराजन्कुरुष्वधर्मनिश्चयम् १३ ॥ राजोवाच ॥ बहुकल्याणसंयुक्तंभाषसेविहगोत्तम ॥ सुपर्णःपक्षिराट्किंत्वंधर्मज्ञश्चास्यसंशयम् १४ तथाहिधर्मसंयुक्तंबहुचित्रंचभाषसे ॥ नतेऽस्त्यविदितंकिंचिदितित्वांलक्षयाम्यहम् १५ शरणैषिपरित्यागंकथंसाध्वितिमन्यसे ॥ आहारार्थंसमारंभस्तवचायंविहंगम १६ शक्यश्चाप्यन्यथाकर्तुमाहारोऽप्यधिकस्त्वया ॥ गोवृषोवावराहोवामृगोवामहिषोऽपिवा ॥ त्वदर्थमद्यक्रियतांयच्चान्यदिहकांक्षसि १७ ॥ श्येनउवाच ॥ नवराहंनचोक्षाणंनमृगान्विविधांस्तथा ॥ भक्षयामिमहाराजकिंममान्येनकेनचित् १८ यस्तुमेदेवविहितोभक्षःक्षत्रियपुंगव ॥ तमुत्सृजमहीपालकपोतमिममेवमे १९ श्येनःकपोतानत्तीतिस्थितिरेषासनातनी ॥ माराजन्सारमज्ञात्वाकदलीस्कंधमासज २० ॥ राजोवाच ॥ राष्ट्रंशिबीनामृद्धंवैददानितवखेचर ॥ यंवाकामयसेकामंश्येनसर्वंददानिते २१ विनेमंपक्षिणंश्येनशरणार्थिनमागतम् ॥ येनेमंवर्जयेथास्त्वंकर्मणापक्षिसत्तम ॥ तदाचक्ष्वकरिष्यामिनहिदास्येकपोतकम् २२ ॥ श्येनउवाच ॥ उशीनरकपोतेतेयदिस्नेहोनराधिप ॥ आत्मनोमांसमुत्कृत्यकपोततुलयाधृतम् २३ यदासमंकपोतेनतवमांसंनृपोत्तम ॥ तदादेयंतुतन्मह्यंसामेतुष्टिर्भविष्यति २४ ॥ राजोवाच ॥ अनुग्रहमिमंमन्येश्येनयन्माऽभियाचसे ॥ तस्मात्तेऽद्यप्रदास्यामिस्वमासंतुलयाधृतम् २५

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ कदलीस्कंधमासजेविकदलीस्कंधतुल्येनिःसारेऽस्मिन्धर्मेमासज्जोभवेत्यर्थः २० । २१ । २२ । २३ । २४ । २५

२६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ स्वदेहत्यागेनापिशरणागतोरक्षणीयइत्यध्यायतात्पर्यम् ३४ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

॥ लोमशउवाच ॥ उत्कृत्त्यसस्वयंमांसंराजापरमधर्मवित् ॥ तुलयामासकौंतेयकपोतेनसमंविभो २६ ध्रियमाणःकपोतस्तुमांसेनात्यतिरिच्यते ॥ पुनश्चोत्कृत्यमांसानिराजाप्रादादुशीनरः २७ नविद्यतेयदामांसंकपोतेनसमंधृतम् ॥ ततउत्कृत्तमांसोऽसावारुरोहस्वयंतुलाम् २८ ॥ श्येनउवाच ॥ इंद्रोऽहमस्मिधर्मज्ञकपोतोहव्यवाडयम् ॥ जिज्ञासमानौधर्मेत्वांयज्ञवाटमुपागतौ २९ यत्तेमांसानिगात्रेभ्यउत्कृत्तानिविशांपते ॥ एषातेभास्वतीकीर्तिर्लोकानभिभविष्यति ३० यावल्लोकेमनुष्यास्त्वांकथयिष्यंतिपार्थिव ॥ तावत्कीर्तिश्चलोकाश्चस्थास्यंतितवशाश्वताः ३१ इत्येवमुक्त्वाराजानमारुरोहदिवंपुनः ॥ उशीनरोऽपिधर्मात्माधर्मेणावृत्यरोदसी ३२ विभ्राजमानोवपुषाऽप्यारुरोहत्रिविष्टपम् ॥ तदेतत्सदनंराजन्राज्ञस्तस्यमहात्मनः ३३ पश्यस्वैतन्मयासार्धंपुण्यंपापप्रमोचनम् ॥ तत्रवैसततंदेवामुनयश्चसनातनाः ॥ दृश्यंतेब्राह्मणैराजन्पुण्यवद्भिर्महात्मभिः ३४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांश्येनकपोतीयेएकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥ ॥ ॥ लोमशउवाच ॥ यःकथ्यतेमंत्रविदग्र्यबुद्धिरौद्दालकिःश्वेतकेतुःपृथिव्याम् ॥ तस्याश्रमंपश्यनरेंद्रपुण्यंसदाफलैरुपपन्नंमहीजैः १ साक्षादत्रश्वेतकेतुर्ददर्शसरस्वतींमानुषदेहरूपाम् ॥ वेत्स्यामिवाणीमितिसंप्रवृत्तांसरस्वतींश्वेतकेतुर्बभाषे २ अस्मिन्युगेब्रह्मकृतांवरिष्ठावास्तांमुनीमातुलभागिनेयौ ॥ अष्टावक्रश्चैवकहोडसूनुरौद्दालकिःश्वेतकेतुःपृथिव्याम् ३ विदेहराजस्यमहीपतेस्तौविप्रावुभौमातुलभागिनेयौ ॥ प्रविश्ययज्ञायतनंविवादेबंदिंनिजग्राहतुरप्रमेयौ ४ उपास्स्वकौंतेयसहानुजस्त्वंतस्याश्रमंपुण्यतमंप्रविश्य ॥ अष्टावक्रंयस्यदौहित्रमाहुर्योऽसौबंदिंजनकस्याथयज्ञे ५ वादीविप्राग्र्योबालएवाभिगम्यवादेभंक्त्वामज्जयामासनद्याम् ६ ॥ युधिष्ठिरउवाच ॥ कथंप्रभावःसबभूवविप्रस्तथाभूतंयोनिजग्राहबंदिम् ॥ अष्टावक्रःकेनचासौबभूवतत्सर्वंमेलोमशशंसतत्त्वम् ७ ॥ लोमशउवाच ॥ उद्दालकस्यनियतःशिष्यएकोनाम्नाकहोडइतिविश्रुतोऽभूत् ॥ शुश्रूषुराचार्यवशानुवर्तीदीर्घंकालंसोऽध्ययनंचकार ८ तंवैविप्राःपर्यचरंस्सशिष्यस्तांचज्ञात्वापरिचर्यांगुरुःसः ॥ तस्मैप्रादात्सद्यएवश्रुतंचभार्यांचवैदुहितरंस्वांसुजाताम् ९ तस्यागर्भःसमभवदग्निकल्पःसोऽधीयानंपितरंचाप्युवाच ॥ सर्वांरात्रिमध्ययनंकरोषिनेदंपितःसम्यगिवोपवर्तते १० उपालब्धःशिष्यमध्येमहर्षिःसतंकोपादुदरस्थंशशाप ॥ यस्मात्कुक्षौवर्तमानोब्रवीषितस्माद्वक्रोभविताऽस्यष्टकृत्वः ११ सवैतथावक्रएवाभ्यजायदष्टावक्रःप्रथितोवैमहर्षिः ॥ अस्यासीद्वैमातुलःश्वेतकेतुःसतेनतुल्योवयसाबभूव १२ संपीड्यमानातुतदासुजातासावर्धमानेनसुतेनकुक्षौ ॥ उवाचभर्तारमिदंरहोगताप्रसाद्यहीनंवसुनाधनार्थिनी १३

यःकथ्यतेइति १ । २ । ३ बंदिंबंदिनंनिजग्राहतुर्निजगृहतुः संप्रसारणाभावआर्षः नितरांग्राहवदाचरतुरितिवा ४ । ५ । ६ । ७ । ८ । ९ । १० अष्टकृत्वोऽष्टवारमष्टसुस्थानेष्वित्यर्थः ११ । १२ । १३

प्रजाताप्रसूता १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ ॥ ॥ अंधस्येति । अंधादीनामक्षमत्वान्मार्गोदेयइत्यर्थः अनमेत्यसमीपमप्राप्य १ । २ । ३ ऐंद्रद्युम्नेहेजनक ४ । ५ । ६ ज्ञानागमेज्ञानशास्त्रेवेदांतेष्वित्यर्थः निष्ठांनिश्चयम् ७ वेदजानीतेयदितर्हिईरय जुष्टांमुनिसेवितां एक





कथंकरिष्याम्यधनामहर्षेमासश्चायंदशमोवर्ततेमे ॥ नैवास्तितेवसुकिंचित्प्रजातायेनाहमेतामापदंनिस्तरेयम् १४ उक्तस्त्वेवंभार्ययाविकहोडोवित्तस्यार्थेजनकमथाभ्यगच्छत् ॥ सवैतदावादविदानिगृह्यनिमज्जितोबंदिनेहाप्सुविप्रः १५ उद्दालकस्तंतुतदानिशम्यसूतेनवादेऽप्सुनिमज्जितंतथा ॥ उवाचतांतत्रततःसुजातामष्टावक्रेगूहितव्योऽयमर्थः १६ ररक्षसाचापितमस्यमंत्रंजातोऽप्यसौनैवशुश्रावविप्रः ॥ उद्दालकंपितृवच्चापिमेनेतथाऽष्टावक्रोभ्रातृवच्छ्वेतकेतुम् १७ ततोवर्षेद्वादशेश्वेतकेतुरष्टावक्रंपितुरंकेनिषण्णम् ॥ अपाकर्षद्गृह्यपाणौरुदंतंनायंतवांकःपितुरित्युक्तवांश्च १८ यत्तेनोक्तंदुरुक्तंतत्तदानींहृदिस्थितंतस्यसुदुःखमासीत् ॥ गृहंगत्वामातरंसोऽभिगम्यपप्रच्छेदंक्कनुतातोममेति १९ ततःसुजातापरमार्तरूपाशापाद्भीतासर्वमेवाचचक्षे ॥ तद्वैतत्त्वंसर्वमाज्ञायरात्रावित्यब्रवीच्छ्वेतकेतुंसविप्रः २० गच्छावयज्ञंजनकस्यराज्ञोबह्वाश्चर्यःश्रूयतेतस्ययज्ञः ॥ श्रोष्यावोऽत्रब्राह्मणानांविवादमन्नंचाग्र्यंतत्रभोक्ष्यावहेच २१ विचक्षणत्वंचभविष्यतेनौशिवश्चसौम्यश्चहिब्रह्मघोषः २२ तौजग्मतुर्मातुलभागिनेयौयज्ञंसमृद्धंजनकस्यराज्ञः ॥ अष्टावक्रःपथिराज्ञासमेत्यप्रोत्सार्यमाणोवाक्यमिदंजगाद २३ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामष्टावक्रीयेद्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

॥ अष्टावक्रउवाच ॥ अंधस्यपंथाबधिरस्यपंथाःस्त्रियःपंथाभारवाहस्यपंथाः ॥ राज्ञःपंथाब्राह्मणेनासमेत्यसमेत्यतुब्राह्मणस्यैवपंथाः १ ॥ राजोवाच ॥ पंथाअयंतेऽद्यमयाऽतिदिष्टोयेनेच्छसितेनकामंव्रजस्व ॥ नपावकोविद्यतेवैलघीयानिंद्रोऽपिनित्यंनमतेब्राह्मणानाम् २ ॥ अष्टावक्रउवाच ॥ प्राप्तौस्वयज्ञंनृपसंदिदृक्षूकौतूहलंनौबलवन्नरेंद्र ॥ प्राप्ताविहावामतिथीप्रवेशंकांक्षावहेद्वारपतेस्तवाज्ञाम् ३ ऐंद्रद्युम्नेयज्ञदृशाविहावांविवक्षूवैजनकेंद्रंदिदृक्षू ॥ तौवैक्रोधव्याधिनादह्यमानावयंचनौद्वारपालोरुणद्धि ४ ॥ द्वारपालउवाच ॥ वंदेसमादेशकरावयंस्मनिबोधवाक्यंचमयेर्यमाणम् ॥ नवैबालाःप्रविशंत्यत्रविप्रावृद्धाविदग्धाःप्रविशंत्यत्रविप्राः ५ ॥ अष्टावक्रउवाच ॥ यद्यत्रवृद्धेषुकृतःप्रवेशोयुक्तंप्रवेष्टुंममद्वारपाल ॥ वयंहिवृद्धाश्चरितव्रताश्चवेदप्रभावेनसमन्विताश्च ६ शुश्रूषवश्चापिजितेंद्रियाश्चज्ञानागमेचापिगताःस्मनिष्ठाम् ॥ नबालइत्येवमवंतव्यमाहुर्बालोऽप्यग्निर्दहतिस्पृश्यमानः ७ ॥ द्वारपालउवाच ॥ सरस्वतीमीरयवेदजुष्टामेकाक्षरांबहुरूपांविराजम् ॥ अंगात्मानंसमवेक्षस्वबालंकिंश्लाघसेदुर्लभोवैमनीषी ८ ॥ अष्टावक्रउवाच ॥ नज्ञायतेकायवृद्ध्याविवृद्धिर्यथाष्ठीलाशाल्मलेःसंप्रवृद्धा ॥ ह्रस्वोऽल्पकायःफलितोविवृद्धोयश्चाफलस्तस्यनवृद्धभावः ९

मेवाक्षरंब्रह्मप्रतिपाद्यंयस्यांतामेकाक्षरां बहुरूपांमंत्रार्थवादादिरूपां विराजंविशेषेणकर्मकांडादाधिक्येनराजमाना अंगेतिसंबोधने ८ शाल्मलेरष्ठीला शाल्मलिफलांतर्गतग्रंथिः सहिकेवलतूलमयत्वान्निःसारः अतोदेहवृद्धिर्व्यर्था अल्पकायःकृशः ९

१० । ११ अनूचानःसांगवेदाध्यायी १२ पुष्करमालिनेस्वर्णमालाधारिणे १३ । १४ । १५ उपायतःप्रयतिष्येइत्युक्त्वा यज्ञवाटादन्यत्रतस्यराजदर्शनंकारयित्वाआह प्रवेशनेकुरुयत्नमिति राज्ञःपुरस्तात्किंचिज्ज्ञानंप्रकाशयेत्यर्थः १६ सम्राट्सार्वभौमः १७ । १८ सोऽहमद्वैतंब्रह्मकथयितुमागतोऽस्मि एतेनकृत्स्नस्यास्यप्रबंधस्यतात्पर्यमुपन्यस्तम् १९ । २० । २१ विज्ञानमत्ताअपिपराजयंप्राप्यसभातोनिःसृताः २२ निहतोनिर्जितः शेष्यतेप्रसुप्तपुरुषवज्जडोभविष्यति २३ ब्रह्माद्वैतंकथयितुमागतोस्मीतिप्रतिजानानमष्टावक्रंप्रतिपृच्छतिराजा त्रिंशकेति । उभयतस्तीक्ष्णाग्राभिःषड्भिःशलाकाभिरेकस्मिन्शंकौप्रोतमध्याभिः पृथग्गताभिर्द्वादशारंषण्णाभिचक्रंजायते तत्रद्वादशराशयःअराः राशिद्वयात्मानःषड्ऋतवोनाभयः एकैकस्मिन्राशौत्रिंशत्त्रिंशदंशास्तदेतद्भचक्रंषष्ट्यानाडीभिःपरिवर्तते । अस्यषष्ट्य

॥ द्वारपालउवाच ॥ ॥ वृद्धेभ्यएवेहमतिंस्मबालागृण्हंतिकालेनभवंतिवृद्धाः ॥ नहिज्ञानमल्पकालेनशक्यंकस्माद्बालःस्थविरइवप्रभाषसे १० ॥ अष्टावक्रउवाच ॥ नतेनस्थविरोभवतियेनास्यपलितंशिरः ॥ बालोऽपियःप्रजानातितंदेवाःस्थविरंविदुः ११ नहायनैर्नपलितैर्नवित्तेननबंधुभिः ॥ ऋषयश्चक्रिरेधर्मंयोऽनूचानःसनोमहान् १२ दिदृक्षुरस्मिसंप्राप्तोबंदिनंराजसंसदि ॥ निवेदयस्वमांद्वाःस्थराज्ञेपुष्करमालिने १३ द्रष्टाऽस्यद्यवदतोऽस्मान्द्वारपालमनीषिभिः ॥ सहवादेविवृद्धेतुबंदिनंचापिनिर्जितम् १४ पश्यंतुविप्राःपरिपूर्णविद्याःसहैवराज्ञासपुरोधमुख्याः ॥ उताहोवाऽप्युच्चतांनीचतांवातूष्णींभूतेष्वेवसर्वेष्वथाद्य १५ ॥ ॥ द्वारपालउवाच ॥ ॥ कथंयज्ञंदशवर्षोविशेस्त्वंविनीतानांविदुषांसंप्रवेशम् ॥ उपायतःप्रयतिष्येतवाहंप्रवेशनेकुरुयत्नंयथावत् १६ ॥ ॥ अष्टावक्रउवाच ॥ ॥ भोराजन्जनकानांवरिष्ठस्त्वंवैसम्राट्त्वयिसर्वंसमृद्धम् ॥ त्वंवाकर्ताकर्मणांयज्ञियानांयथातिरेकोनृपतिर्वापुरस्तात् १७ वृद्धान्बंदीवादविदोनिगृह्यवादेभग्नानप्रतिशंकमानः ॥ त्वयाऽभिसृष्टैःपुरुषैराप्तकृद्भिर्जलेसर्वान्मज्जयतीतिनःश्रुतम् १८ सोऽहंश्रुत्वाब्राह्मणानांसकाशेब्रह्माद्वैतंकथयितुमागतोऽस्मि ॥ क्वासौबंदीयावदेनंसमेत्यनक्षत्राणीवसवितानाशयामि १९ ॥ ॥ राजोवाच ॥ ॥ आशंससेबंदिनंवैविजेतुमविज्ञायत्वंवाक्यबलंपरस्य ॥ विज्ञातवीर्यैःशक्यमेवंप्रवक्तुंदृष्टश्चासौब्राह्मणैर्वेदशीलैः २० आशंससेत्वंबंदिनंवैविजेतुमविज्ञात्वातुबलंबंदिनोऽस्य ॥ समागताब्राह्मणास्तेनपूर्वंनशोभंतेभास्करेणेवताराः २१ आशंसंतोबंदिनंजेतुकामास्तस्यांतिकंप्राप्यविलुप्तशोभाः ॥ विज्ञानमत्तानिःसृताश्चैवतातकथंसदस्यैर्वचनंविस्तरेयुः २२ ॥ ॥ अष्टावक्रउवाच ॥ ॥ विवादितोऽसौनहिमादृशैर्हिसिंहीकृतस्तेनवदत्यभीतः ॥ समेत्यमांनिहतःशेष्यतेऽद्यमार्गेभग्नंशकटमिवाचलाक्षम् २३ ॥ ॥ राजोवाच ॥ ॥ त्रिंशकद्वादशांशस्यचतुर्विंशतिपर्वणः ॥ यस्त्रिषष्टिशतारस्यवेदार्थंसपरःकविः २४

धिकशतत्रयपरिवर्तैःसावनःसंवत्सरोभवति । अस्मिंश्चक्रेकुलालचक्रवत्प्रदक्षिणमावर्तमानेपिपीलिकापंक्तिवत् प्रतीपंसूर्यादयःपरिभ्रमंति । तत्रचंद्रस्यसप्तविंशत्यहोरात्रैर्भगणभोगः । सूर्यस्यसपादपंचषष्ट्यधिकेनाह्नांशतत्रयेणसएवसौरःसंवत्सरः । अस्मिंश्चक्रेस्वस्वगत्यागच्छतोःसूर्यचंद्रयोर्यदाऽत्यंतंविप्रकर्षस्तदापौर्णमासी यदाऽत्यंतंसन्निकर्षस्तदादर्शस्तेद्वेपर्वणी । एवंचतुर्विंशत्यापर्वभिश्चतुःपंचाशदधिकेनाह्नांशतत्रयेणचान्द्रःसंवत्सरस्तत्त्रयंपृच्छति त्रयाणामपिपृथक्कर्मसुविनियोगात् । तथाचोक्तंमाधवे'अब्दःपंचविधश्चांद्रोव्रतादौतिलकादिके । सुजन्मादिव्रतेसौरोगोसत्रादिषुसावनः'इति । त्रिंशकद्वादशांशस्य–

त्रिशतोगणस्त्रिंशकस्तेएवद्वादशसंख्याका अंशायस्येतिसौरसंवत्सरप्रश्नः । चतुर्विंशतिपर्वणइतिचान्द्रस्य । त्रीणिषष्ट्यासहितानिशतान्यरायस्येतिसावनस्य । त्रिविधस्यास्यकालचक्रस्ययोऽर्थप्रयोजनंवेदसपरः कविरुत्कृष्टःक्रांतदर्शी २४ इतिपृष्टोऽपरआहोत्तरं पणनाभीति । त्रिशेषार्थोक्त्याविद्वत्ताप्रकाशः शेषोऽनुवादः प्रथयोमासाराशयोवातेषुहित्रिंशदहोरात्रा अंशावाप्रत्येकंप्रत्येकंप्रधीयंते । चक्रंपात्वस्मिन्कालेयथा कालेविहितोधर्मस्त्वांपात्वित्यर्थः । एतेनधर्मस्य श्रेयःसाधनत्वंविधीयते केवलकालज्ञानस्यापुरुषार्थत्वात् । मानांतरानवगतंप्रयोजनवदर्थंप्रतिपादयद्धिशास्त्रंभवति अन्यथाशास्त्रत्वव्याघातः । एवमन्यत्रापिवि धानंद्रष्टव्यं । 'राशिस्त्रिंशल्लवस्तान्द्विपडनुपततार्केणसौरोऽब्दइष्टः सोमेष्विष्टोतु चांद्रीशरदपिचचतुर्विंशकात्पर्वणांस्यात् । गोसत्रेसावनोऽब्दोगगनरसगुणैराज्यहैराशियुग्माद्दत्वाख्यश्चर्तुयाजांस्वसमयविहिताः श्रेयसेस्युर्मखाद्याः' २५ रथसंयुक्तेअश्वेइवसहचारिण्यौ श्येनपातेश्येनवदकस्मात्पतनशीलेयेउभेवर्तेतेदिवौकसांदेवानांमध्येनयोःसंबंधिनंगर्भंकोधत्तेकस्यगर्भेतेउत्पद्येतेकंचजनयतइत्यर्थः २६ उत्तरंतयो र्नामाप्यमंगलमितिमत्वापरोक्षेणनिर्दिशति तेउभेअधिदैवंविद्युदशनी । अध्यात्मंदुःखमृत्यू । विद्युदर्चिरशनिरंगाराइतिपंचाग्निविद्यायांतयोर्भेदेनव्यपदेशात् क्रमादाकाशेनदेहेनचरथेनवडवेइवनित्यसंयुक्ते श्येनपातेचनेतवगृहेमास्मपतातां राजन्नवशात्रवाणामपिगृहेमास्मपत्तामित्यत्यन्तामंगलत्वंतयोर्दर्शितं वातसारथिर्मेघोमनश्चआगंता आकाशाद्वृष्ट्यर्थंसुषुप्त्याख्यात्कारणात् कर्मफलभोगार्थमुदेष्यंस्तेउभेपूर्वो क्ते विद्युदशनीदुःखमृत्यूचगर्भंधत्तइत्येकमुत्तरम । तेचतमेववातसारथिंवैद्युतमग्निंमनश्चसुषुवतुरित्यपरं । यथाधूमज्योतिरादिसन्निपातरूपत्वादग्निरूपोमेघोग्निमेवविद्युदादिद्वारासूते एवंमनःप्रभवौदुः

॥ अष्टावक्रउवाच ॥ ॥ चतुर्विंशतिपर्वत्वांषण्णाभिद्वादशप्रधि ॥ तत्त्रिषष्टिशतारंवैचक्रंपातुसदागति २५ ॥ ॥ राजोवाच ॥ ॥ वडवेइवसंयुक्तेश्ये नपातेदिवौकसाम् ॥ कस्तयोर्गर्भमाधत्तेगर्भंसुषुवतुश्चकम् २६ ॥ ॥ अष्टावक्रउवाच ॥ ॥ मास्मतेतेगृहेराजन्शात्रवाणामपिध्रुवम् ॥ वातसारथिरागं ता गर्भंसुषुवतुश्चतम् २७ ॥ ॥ राजोवाच ॥ ॥ किंस्वित्सुप्तंननिमिषतिकिंस्विज्जातंनचोपति ॥ कस्यस्विद्धृदयंनास्तिकिंस्विद्वेगेनवर्धते २८ ॥ ॥ अष्टावक्रउवाच ॥ ॥ मत्स्यःसुप्तोननिमिषत्यंडंजातंनचोपति ॥ अश्मनोहृदयंनास्तिनदीवेगेनवर्धते २९

खमृत्यूस्ववासनारूपेणमनसःकारणेभवतः तथाचबीजांकुरवन्मनसोदुःखादेश्चहेतुहेतुमद्भावान्मनसोलयोदुःखाभावार्थमभ्यसनीयइत्यर्थः । एतेनाश्नापिनद्धंमधुपर्यपश्यन्मत्स्यंनदीनउदनिक्षियंतमितिमंत्रवर्णउप बृंहितः । अश्ना अशनवता जलशोषयता मेघेनविषयान्भुंजानेनमनसावामधुसलिलंतद्द्वैदेकरसंब्रह्मवापिनद्धमाच्छादितं मनसोदुःखहेतुत्वंदृष्टांतमुखेनाह मत्स्यमिति । नेत्युपमार्थोनिपातः दीनेऽल्पेउदनिउदकेक्षियं तंनिवसंतमत्स्यंनमीनमिवाकुलमित्यर्थः क्षियंतमित्यस्यैवाक्लिश्यमानमित्यर्थः 'हन्मेयोदुःखमृत्यूतडिदशनिसमेश्येनवच्छीघ्रपाते नित्योद्बद्धेरथेऽश्वेइवकरणसुराधीश्वरःप्राज्ञखोत्थः । स्वेगर्भंधत्तएनंसुषुवतुरितरं वासनातंतुजन्यां चेतःशार्ङ्गीनिरुध्यादसुपवनवशांविश्वचित्रांमुमुक्षुः' २७ स्वप्नङिति स्वपितृषोर्नजिङ्ङितिजकारांतस्यस्वप्नजशब्दस्यस्वप्नावस्थावद्वाचित्वं सुषुप्त्यवस्थांप्राप्तंकिंननिमिषतिलुप्तदृङ्नभवतीतिप्रश्नार्थः २८ तद्यथामहामत्स्यउभेकूलेअनुसंचरतीत्यादिश्रुत्या मत्स्योपमितश्चिद्रूपःपुरुषोजाग्रत्स्वप्नयोरिहपरलोकयोश्चसंचरणेनश्रान्तोमत्स्यइवकूलद्वयसंचारेणसुप्तिप्रलययोःकार्यकारणसंघातस्यनिखिलप्राणना दिशक्तेसुषुप्तेऽनुपरतदृक्शक्तिरेकएवास्ते । नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यते विनाशित्वादितिश्रुतेस्तदुपरमाभ्युपगमेकृतहानादिदोषप्राप्तिः सुखमहमेतावंतंकालमस्वाप्समितिपरामर्शानुपपत्तिश्चअस्यात्रिना शित्वादजातत्वम । यत्तुजातमंडंतद्ब्रह्माण्डभूतभौतिकात्मकंतन्नचोपति चुपमंदायांगतौ नचेष्टते किंत्वयमेवचतच्चेष्टयतेइत्यर्थः अश्मनोऽशरीरस्यहृदयं शोकायतनंनास्ति । इमशरीरमितियास्कः ।

अशरीरंवावसंतंनप्रियाप्रियेस्पृशतः । ‘तीर्णोहितदासर्वान्शोकान्हृदयस्यभवति’इतिश्रुत्योस्तद्दृष्टेर्देहाद्यसंगेयोगीनिर्मनस्कोजीवन्मुक्तोभवतीत्यर्थः । नदीचित्तनदी योगिनोव्युत्थितस्यवेगेनसद्यःकृत्स्नप्रपंच रूपेणवर्धते । योगिदृष्ट्यास्वाप्नवव्यावहारिकोऽपिप्रपंचोदृष्टिसमसमयोत्पत्तिकइत्यर्थः । एवंदृगलोपोदृश्यस्यजाड्यंदेहासंगिनोमुक्तिःसंसारस्यमनोमात्रत्वंचात्रदर्शितम् । पुंमीनोनिर्निमेषःस्वपितिभवनदी चारखिन्नःस्वरूपेजातंब्रह्मांडींपंडजडमपिजवतेयेनलोहाश्मनीत्या ॥ यस्याकायस्यनास्तिकचिदपिहृदयंशोकनीडंसमाधौयत्स्थामायानदीयंद्रुतमहमिदमाद्यात्मनोदेतिसोऽस्मि २९ वाक्प्रलापेवाचांप्रकृष्टेसंलापे एषबंदीदृश्यतामितिशेषः ३० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ ६ ॥ ॥ अत्रेति १ ग्लहंपराजितस्यजलेनिपातन रूपंपणं । प्रपन्नःस्वीकृतवान् मेममपुरतोनवक्ष्यसिप्रत्युत्तरमितिशेषः समिद्धतेजसःप्रलयकालेऽत्यंतंप्रदीप्तस्याग्नेःपुरोयथानदीवेगःशुष्यतितथाशुष्कोभविष्यसीत्यर्थः २ मामांप्रबोधजानीहि । भौवा

॥ राजोवाच ॥ नत्वांमन्येमानुषंदेवसत्वंनत्वंबालःस्थविरःसंमतोमे ॥ नतेतुल्योविद्यतेवाक्प्रलापेतस्माद्द्वारंवितराम्येषबंदी ३० ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायामष्टावक्रीयेत्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ ६ ॥ ॥ अष्टावक्रउवाच ॥ अत्रोग्रसेनसमितेषुराजन्समागतेष्वप्रतिमेषुराजसु ॥ नावैमिबंदिंवरमत्रवादिनांमहाजलेहंसमिवाददामि १ नमेऽद्यवक्ष्यस्यतिवादिमानिन्ग्लहंप्रपन्नःसरितामिवागमः ॥ हुताशनस्येवसमिद्धतेजसःस्थिरोभवस्वेहममाद्यबंदिन् २ व्याघ्रंशयानंप्रतिमाप्रबोधआशीविषंसृक्किणीसंलिहानम् ॥ पदाहतस्येहशिरोभिहत्यनादष्टोवैमोक्ष्यसेतन्निबोध ३ योवैदर्पात्संहननोपपन्नःसुदुर्बलःपर्वतमाविहंति ॥ तस्यैवपाणिःसनखोविदीर्यतेनचैवशैलस्यहिदृश्यतेव्रणः ४ सर्वेराज्ञोमैथिलस्यमैनाकस्येवपर्वताः ॥ निकृष्टभूताराजानोवत्साह्यनडुहोयथा ५ यथामहेन्द्रःप्रवरःसुराणांनदीषुगंगाप्रवरायथैव ॥ तथानृपाणांप्रवरस्त्वमेकोबंदिंसमभ्यानयमत्सकाशम् ६ ॥ ॥ लोमशउवाच ॥ ॥ एवमष्टावक्रःसमितौहिगर्जन्जातक्रोधोबंदिनमाहराजन् ॥ उक्तेवाक्येचोत्तरंमेब्रवीहिवाक्यस्यचाप्युत्तरंतेब्रवीमि ७ ॥ बंद्युवाच ॥ एकएवाग्निर्बहुधासमिध्यतेएकःसूर्यःसर्वमिदंविभाति ॥ एकोवीरोदेवराजोऽरिहंतायमःपितृणामीश्वरश्चैकएव ८ ॥ अष्टावक्रउवाच ॥ द्वाविंद्राग्नीचरतोवैसखायौद्वौदेवर्षीनारदपर्वतौच ॥ द्वावश्विनौद्वेरथस्यापिचक्रेभार्यापतीद्वौविहितौविधात्रा ९

दिकस्यबुधेर्लोटिरूपंअसंधिरार्षः । पदाहतस्यमत्पितुर्निग्रहणादहंपूर्वमेवत्वयापदाहतस्तस्यमेशिरोभिहत्यत्वंनमुच्यसेअदष्टःसन् ३ संहननेनदेहेनदृढकायत्वेनोपपन्नः ४ । ५ बंदिंबंदिनं विभक्त्यलोपेनकार लोपआर्षः ६ । ७ पूर्वंप्रतिज्ञातंब्रह्माद्वैतमेववादकथामुखेनप्रपंचयन् बंदिमुखेनबौद्धपक्षमुत्थापयति एकएवेति । यथाएकोग्निःसूर्योवाइतराप्रकाश्योन्यप्रकाशकश्च एवंदेवानामिंद्रियाणांराजाप्रधानभूतो धीधातुरहमिदमाद्याकारेणप्रकाशमानोवीरोऽरिहंतेतिपराभिमततत्त्वांतराभिभावकोयमःसर्वेन्द्रियाणांनियंता पितॄणांविषयोपहारद्वारापालयितॄणामिंद्रियाणामीश्वरोभोक्ताकर्ताचप्रधानभूतएकएवनान्यत्तत्त्वंपृथगस्ति । स्वप्नेसर्वेषांक्रियाकारकादीनांबुद्धिमात्रत्वोपलंभादित्यर्थः । धीर्देवेन्द्राग्निवत्सातदिदमहमितिव्यक्तनानास्वरूपास्वंचान्यंचस्वयंसाप्रथयतिरविवत्सारिपुःसाचमृत्युः । साश्रोत्रादेःप्रयोक्त्रीसकलमिदमिहस्वप्नवद्धीमयंस्यादित्येवंतार्किकेणप्रथमसुपगतोबंदिनाबौद्धपक्षः १ । ८ अष्टावक्रोद्वासुपर्णेतिमंत्रेतयोरन्यःपिप्पलंस्वाद्वत्तीतिसत्त्वमनश्नन्योऽभिपश्यतिज्ञइतिपैंगिरहस्यव्याख्यातेनप्रकारेणबुद्धिचै–

तन्ययोःसखायावित्युक्तेरिंद्राग्न्यादिवत्तौसहैवचरतः नहिदृश्यायाबुद्धेर्द्रष्टृत्वंसंभवति प्रकाश्यस्येवप्रकाशत्वमितिपरिहरति द्वाविंद्राग्नीइति । स्वप्नेऽपिबाधिताद्बोद्धव्यादबाधितोबोद्धाऽन्योऽस्तीतिभावः । स्वातंत्र्यादिंद्रआत्माऽनलवदिहपराधीनसिद्धिश्चबुद्धिर्दृग्दृश्येतेऽज्ञसत्वेइतिखलुविवृतेपैंगिनाद्वेतिमंत्रे ॥ भिन्नेदेवर्षिदस्रप्रभृतिवदपितेसूर्यचित्रांशुकाभेअन्योन्यापेक्षयाचव्यवहृतिपथगेचक्रवद्दंपतीवत् २ । ९ बंदी बोद्धुःकर्माधीनत्वमितिमीमांसकमतमाह त्रिरिति । पुण्येनदेवस्थावरमानुषरूपंजन्मत्रयंसुकृतेनैवलभते । पापेननारकस्थावरतिर्यग्रूपं स्वर्गान्नरकाद्वाच्युतस्यौषधिभावपूर्वकमेवरेतोद्वारा नृप शुतिर्यग्योनिसंभवस्यश्रौतप्रसिद्धेः अतएवत्रयोवेदायुक्तास्तात्पर्येणसन्नद्धाइववाजपेयोपलक्षितमाश्रमत्रयोचितंकृत्स्नंकर्मजातंवहंति वेदस्यापिकर्ममात्रपरत्वमित्यर्थः । अध्वर्यवोयज्ञस्ययोक्तारस्त्रैवर्णिकात्री ण्येवप्रातःसवनादीनितन्वते तेनयथाकालंकृतस्यकर्मणःफलंकालानुरोध्येवानुभवंतीत्यर्थः । त्रयोलोकाःस्वर्गोनरकोभूश्चेतिभोगभूमयः । त्रीण्येववेदेज्योतिष्मतांज्योतींषिसुखमार्गप्रकाशकानिजाग्रदा दीनि । 'तस्यत्रयआवसथास्त्रयःस्वप्ना' इतिश्रुतेः नास्तिततोऽन्यत्तत्त्वमित्यर्थः । देवःस्थाणुर्नरःस्यात्सुकृतकृदितरोनारकस्थाणुतिर्यग्जन्माचैवर्णिकःस्याच्छ्रुतियुगधिकृतोवाजपेयादियज्ञे ॥ कालेकृ लेयजंतेफलमपिचतथाभुंजतेयज्ञभाजः सत्वाद्यैर्यांतिलोकान्स्वरवनिनरकान्स्वप्नजाग्रत्सुषुप्तीः ३ । १० अष्टावक्रएतद्दूषयति चतुष्टयमिति । ब्राह्मणानांब्रह्मविदांनिकेतंज्ञानोपलब्धिस्थानं चतुष्टयंचतुःसं ख्यावयवोपेतम् । आश्रमत्रयादन्योऽस्तिमोक्षाश्रमोयदहरेवविरजेत्तदहरेवप्रव्रजेदितिश्रुतिसिद्धइत्यर्थः । यज्ञंज्ञानयज्ञं शूद्रस्याप्यस्त्यत्राधिकारोऽकर्मरूपत्वादित्यर्थः । दिशःदिश्यंतइतिदिशउप

॥ बंदुवाच ॥ ॥ त्रिःसूयतेकर्मणावैप्रजेयंत्रयोयुक्तावाजपेयंवहंति ॥ अध्वर्यवस्त्रिसवनानितन्वतेत्रयोलोकास्त्रीणिज्योतींषिचाहुः १० ॥ ॥ अष्टावक्रउवाच ॥ चतुष्टयंब्राह्मणानांनिकेतंचत्वारोवर्णायज्ञमिमंवहंति ॥ दिशश्चतस्रोवर्णचतुष्टयंचचतुष्पदागौरपिशश्वदुक्ता ११ ॥ बंदुवाच ॥ पंचाग्नयःपंचपदाचपंक्तिर्यज्ञाःपंचै वाप्यथपंचेंद्रियाणि ॥ दृष्टावेदेपंचचूडाप्सराश्चलोकेख्यातंपंचनदंचपुण्यम् १२ ॥ ॥ अष्टावक्रउवाच ॥ ॥ षडाधानेदक्षिणामाहुरेकेषट्चैवेमेऋतवःकालच क्रम् ॥ षडिंद्रियाण्युतषट्कृत्तिकाश्चषट्साद्यस्काःसर्ववेदेषुदृष्टाः १३

दिष्टाःसंति चतस्रोऽवस्थाःविराट्सूत्रांतर्यामितुर्यसाक्षात्काररूपाः विश्वतैजसप्राज्ञेभ्यःसर्वप्राणिप्रसिद्धेभ्योऽन्याइत्यर्थः । अतएवतासांवाचकंचतुष्टयमकारउकारमकारार्धमात्रारूपमुपनिषत्प्रसिद्धम् । नचार्धमात्रायाअप्रसिद्धत्वंवाच्यं यस्माच्चतुष्पदापरापश्यंतीमध्यमावैखरीतिपादचतुष्टयवतीगौर्वाणीशश्वत्सदैवोक्ता । चत्वारिवाक्परिमितापदानीतिमंत्रेइतिशेषः । जिज्ञास्यंब्रह्मतद्विव्रतिव्रनियतिभिर्ज्ञानयज्ञे ऽधिकारिचातुर्वर्ण्यंचतुष्पाच्चदुपदिशतिवागंडसूत्रेशशुद्धम् ॥ चत्वारोवाचिवर्णाअउमदलककलावैखरीमध्यमाख्यौपश्यंत्याख्यःपराख्यःसचतुरवयवःप्रत्ययोऽस्याःप्रसिद्धः ४ । ११ तुरीयमपलपन्बंदुराच पंचाग्नयोगार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याः । पंचपदाऽष्टाक्षरैःपादैःपंक्तिश्छंदः । यज्ञाःपंच अग्निहोत्रदर्शपूर्णमासौचातुर्मास्यानिपशुःसोमइतिश्रुताः । एतेत्रयःपंचकायथाएवंपंचैवेन्द्रियाणि शब्दादिपंचकग्राहकाणिनषष्ठोविषयइंद्रियंवास्तीत्यर्थः । दृष्टावेदे अप्सराआपःपुरुषवचसोभवंतीतिश्रुतेः शरीराकारपरिणतेषुजलप्रधानेषुभूतेषुसरत्यनुगच्छतीत्यप्सराश्चितिः पंचचूडापंचैवतत्तद्विषयाकारतयाप्रमा णविपर्ययविकल्पनिद्रास्मृतिरूपवृत्तिपंचकसारूप्येणशिखापंचकवत्येवदृष्टा । वृत्तिनिरोधस्यसमाधेरपिनिद्रायामेवांतर्भावइतिभावः । लोकेऽपिपंचानांविषयस्रोतसांसमाहारःपंचनदमुपेयमेवमेवचितिशक्तेरेवकर्तृ त्वभोक्तृत्वेइत्युत्तरार्धार्थः । अग्निच्छंदःक्रतूनामिवखलुमनसः खानिपंचैवभागाभ्रांतिर्निद्राविकल्पःस्मृतिरमलमतिर्वृत्तयःपंचतस्य ॥ ताभिःशाखावतीवस्त्विहजलपरीणामकायानुकर्त्रीशुद्धाशुद्धप्रवाहा भव निचितिनदीतज्जसौख्यादिभोक्त्री ५ । १२ कर्तृत्वादिधर्मकमस्तिषष्ठमिंद्रियंमनः सुषुप्तावितरवत्तल्लयस्याप्यनुभूयमानत्वात् । कर्तृत्वादेस्तत्सहभावनियतत्वदृष्टेश्च । चित्ताभावसाक्षीत्वात्मातत:पृथक्कर्त्रादिरूपः–

सप्तमोऽस्तीत्याहाष्टावक्रः षडाधानेइति षड्गाईतिशेषः दक्षिणादयोमनसश्चक्षुरादिसाजात्येदृष्टांताः । साद्यस्कायज्ञविशेषाः । श्रोनक्षत्रंतुषड्भाइवसमवपुषः षट्षडेवंसंचिताःश्रोत्राद्यादुःखसब्दाद्यनुभविनइतोऽन्याऽनुभूतिःसमाक्षी ॥ धीयोगात्सप्तभिस्तैरनुभवकरणैरत्रसप्तर्षिसंज्ञैर्भुंक्ते छंदोभिधानानपरिमितवपुश्छादकानष्टमोऽर्थान् ६ । १३ अथतर्कमतेनवंदीप्रत्यवतिष्ठते सप्तग्राम्याः मनःषष्ठैरिंद्रियैर्बुध्याचात्मगुणभूतयासमर्पितामंतव्यबोद्धव्यशब्दादयोविषयास्तेष्वेकैकस्मिन्नासक्तएकैकःपुरुषपशुस्तेचग्राम्याऐहिकावन्याआमुष्मिकाविषयास्तेष्वासक्ततयाप्रत्येकंसप्तसप्तपुरुषपशवःसप्तच्छंदांसिच्छादयंतिस्वस्वरूपार्पणजातसुखलेशेनपरमात्मानंगूहयंतीतितान्सप्तविषयान एकंक्रतुंकर्तारमात्मानंवहंतिप्रापयंति केसप्तर्षयः ॥ प्राणावाऋषयइति श्रुतेःसप्तैवोक्तामनआदयस्तदुपनीतानिसप्तचैवार्हणान्यर्हणीयानिसुखानि । यथासप्तभिस्तंत्रीभिर्वाद्यमानाएकावीणाशब्दंनिर्वर्तयतिएवमेतैःसप्तभिरात्मासुखमनुभवति । अन्यथाऽकरणत्वात्सुप्तौजडएवन्यस्तवास्यतक्षवत् अशादितवीणावच्चतिष्ठति । नतावतास्यकर्तृत्वापगमइत्यर्थः । भौमेष्वर्थेषुदिव्येष्वपिनरपशवःसप्तसप्तैवबद्धा भोक्तारंप्रापयंतिक्रतुपदंविदितंसप्ततान्सप्तखानि ॥ सप्तैवैषांसुखानिप्रतिविषयभवान्येकवीणेवदेही भोगंतंत्रींद्रियाद्योरवमिवकुरुतेयोऽत्रकर्तासभोक्ता ७ । १४ उक्तानेवसप्तकर्तृत्वादिधर्मवताऽहंकारेण सार्धमष्टौविचक्षन्नष्टावक्रोऽष्टौग्रहाअष्टावतिग्रहाइतिश्रुतेंद्रियविषयरूपग्रहातिग्रहरूपंबंधनमुपन्यस्य तदन्यमात्मानंपृथक्करोति अष्टौशाणाइति । शाणाःशणसूत्रेणनिर्वृत्तागोण्यआवपनविशेषास्ताइवइंद्रियप्रवेशयोग्याविषयाअष्टौतेशतमानमनंतंप्रमाणंधारयंति । संक्षेपेणाष्टावप्यनंताविषयाइत्यर्थः । अष्टौपादाःविषयदेशंप्रतिगतिसाधनानींद्रियाणियस्यसः शरभःशंलभंतेऽस्मात् । 'एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति' इतिश्रुतेः परमानंदरूपःपरमात्मालोऽयंज्ञातःसन्सिंहघाती छिनत्तिदुःखंददातीतिसिंहोऽद्वैतम् । द्वितीयाद्वैभयंभवतीतिश्रुतेःतस्यद्वैतस्यघा

॥ बंदयुवाच ॥ सप्तग्राम्याःपशवःसप्तवन्याःसप्तच्छंदांसिक्रतुमेकंवहंति ॥ सप्तर्षयःसप्तचाप्यर्हणानिसप्ततंत्रीप्रथिताचैववीणा १४ ॥ अष्टावक्रउवाच ॥ अष्टौशाणाःशतमानंवहंतितथाऽष्टपादःशरभःसिंहघाती ॥ अष्टौवसून्शुश्रुमदेवतासुयूपश्चाष्टास्त्रिर्विहितःसर्वयज्ञे १५ ॥ बंदयुवाच ॥ नवैवोक्ताःसामिधेन्यःपितॄणांतथा प्राहुर्नवयोगंविसर्गम् ॥ नवाक्षराबृहतीसंप्रदिष्टानवैवयोगोगणनामेतिशश्वत् १६

तकः । सुषुप्तौजडत्वेसुखमहमस्वाप्समितिव्युत्थितस्यस्वरूपसुखपरामर्शानुपपत्तिः । नचदुःखाभावस्यैवैषपरामर्शः तत्प्रकाशकस्यसाक्षिणःसत्त्वेतस्यतदानींजडत्वोक्त्ययोगात् । अतएवाष्टौवसून्वासनाः देवतास्वेवतत्तदिंद्रियाधिष्ठात्रीषु लिंगात्मनीतियावत् शुश्रुमवेदे नत्वात्मनीत्यर्थः । यूपश्चयोपयतिमोहयतीतियूपोनृपशोर्बंधनस्थानमज्ञानंतदेवाष्टास्त्रिरष्टकोणप्रष्टधारंसत्सर्वयज्ञेषुग्रहातिग्रहसंज्ञकविषयेंद्रियसंयोगेषुवर्ततइतिशेषः । शाणागोण्योऽष्टेनेऽर्थाःशतमथशरभःप्रत्यागानंदएतैःपूर्वोक्तैःसाहमर्थैर्व्रजतिसविषयान्खानितान्यंघ्रयोऽस्य । सिंहघ्नोहिंस्रभेदद्विडितिवसुपदंभेदसंस्कारजातांलिंगस्थेदेवतौघेवसतिसनृपशोर्बंधनेमोहयूपे ८ । १५ तत्रद्वैतघातित्वंशरभस्यानुपपन्नं सर्वेषांयुगपत्संसारोच्छेदापत्तेरित्याशंकतेबंदी नवैवेति । यथापितॄणामिष्टौएकैव उशंतस्त्वानिधीमहीतिऋक्त्रिरभ्यस्ता प्रत्येकंत्रिसमित्कानवसामिधेन्योऽग्निसमिंधनार्थाऋचःसंपद्यंतेतथाएकाप्रकृतिरेवत्रयोगुणाः स्वस्वेतरप्रधानगुणभावेनप्रत्येकंत्रिविधाःसंतोनवैवसंयुज्यमानाअंशानांबहुत्वाल्पत्वतारतम्येनविविधंसर्गंकुर्वंति । यथानवाक्षरैश्चतुर्भिःपादैर्बृहतीसंज्ञकंछंदोभवति यथावानवैवांकाःक्रमभेदेनस्थितायथेष्टंसंख्यावाचिनोभवंत्येवं गुणानवैवोक्तविधयासंतोऽनेकधाभावंभजंते तस्मात्प्रधाननित्यतायाअवश्याभ्युपगंतव्यत्वाद्द्वैतंसत्यमेवेतिभावः । त्रिःपाठेनानुपाठंत्रिसमिदितियथासामिधेन्यृक्नवत्वं प्राप्नोत्येवंप्रधानंत्रिगुणमनुगुणंत्रिप्रवेशान्नवत्वम् ॥ गत्वाऽनन्तंनवांकीगणितमिवमहन्मुख्यमेतत्प्रसूते तस्मान्नैतत्प्रधानाधिकमिहबृहतीवाक्षरेभ्योनवभ्यः ९ । १६

तदेतदिंद्रोमायाभिः पुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेतिश्रुत्यनुसाराद्द्वैतस्यानिर्वचनीयमायासहायेब्रह्मण्येवभानोपपत्तौ नसत्याप्रकृतिरभ्युपेयेत्याशयवानष्टावक्रःपरिहरन्नाह दिशइति । तावाएतादशै वभूतमात्राअधिप्रज्ञंदशप्रज्ञामात्राअधिभूतमितितस्यवाचास्सृष्टौपृथिवीचाग्निश्चेतिचकौषीतकीयैतरेयकयोर्दर्शनाद्दशैववागाद्याः प्रज्ञामात्राःपृथ्यादीनांभूतमात्राणांसृष्टयः । दिशंतिविषयस्वरूपमतिमृ जंतितादिशोवागाद्यादशैव पुरुषस्यदेहाख्येपुरेवसतोजीवस्य पूर्णपरंब्रह्मैवदशशतानिसहस्रंचविभूतिभेदेनमायया बहुरूपंभूत्वाऽस्तीत्याहुर्वेदाः । एतेनायंवैहरयोयंवैदशचसहस्राणिप्रयुतान्यर्बु दानीतियुक्ताह्यस्यहरयःशतादशेत्येवमंत्यपादस्यश्रौतीव्याख्यादर्शिता । तथाचरज्जूरगवन्मायाबुद्धस्य बाधिताऽपीतरस्यास्तीतिवक्तुंशक्यं । परमतेतु विभोरलुप्तदृशःपुरुषस्यमुक्तौतदद्दर्शनोक्तिरनु पपन्ना दृष्टांताभावादितिभावः । परापूर्वेषांसख्यावृणक्तिवितर्तुराणोअपरेभिरेति । अनानुभूतीरवधून्वानःपूर्वीरिंद्रःशरदस्तर्तरीति । रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय । इंद्रोमायाभिः पुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेतिदाशतय्याम् ४ । ७ अष्टकाध्यायवर्गेऋचावैंद्र्यौआम्नायेते । अनयोरर्थः । द्वयाहप्राजापत्यादेवाश्चासुराश्चततःकानीयसाएवदेवा ज्यायांसोअसुराइतिश्रुतिप्रसिद्धाः पूर्वदेवाःस्वाभाविकासंगपाप्मरूपाःकामक्रोधादयस्तेषांसख्यासख्यानिपरावृणक्तिदूराद्वर्जयति । वितर्तुराणःततारेतितर्तुराणस्तीर्णवान् । तरतेर्लिडादेशः कानच्द्विर्त्वंबहुलंछंदसीत्युकारोऽतादेशोरपरः । तीव्र वैराग्याभ्यासादिमान् अपरेभिःअपरैर्दैवैः शास्त्रीयैःशमदमादिभिरेतिप्राप्नोति सख्येत्यनुषज्यते कामादीन्जित्वाऽत्यादरेणशमादिपरोभवतीत्यर्थः । एवंभूतःअनानुभूतीरननुभवान् भ्रांतिज्ञानानिशुक्ति रजतज्ञानतुल्यानि देहाद्यात्मज्ञानान्यवधून्वानोऽपनुदन्नात्मनस्तत्तदुपाध्याकारतांनिषेधन्निंद्रःपरमेश्वरोऽप्यविद्ययाजीवभावमापन्नःसन् लब्धात्मतत्त्वोविद्वान्पूर्वीःशरदःअनादिकालप्रवृत्तकर्मवासनास्त

॥ अष्टावक्रउवाच ॥ दिशोदशोक्ताःपुरुषस्यलोकेसहस्रमाहुर्दशपूर्णंचतानि ॥ दशैवमासान्बिभ्रतिगर्भवत्योदशैरकादशदासादशार्हाः १७

॥ बंद्युवाच ॥ एकादशैकादशिनःपशूनामेकादशैवात्रभवंतियूपाः ॥ एकादशप्राणभृतांविकाराएकादशोक्तादिविदेवेषुरुद्राः १८

र्तरीत्यतिशयेनतरति वीतबंधोभवतीत्यर्थः । अत्रअननुभूतिपदेनशुक्तौरजतंपश्यन् रजतंवाशुक्तिवानानुभवतीतिलौकिकप्रयत्नेनदेहाद्यात्मज्ञानस्यानुभूतित्वंवदंतीश्रुतिर्देहादेर्मिथ्यात्वंसूचयति । तद्यु त्पादनायमंत्रोरूपंरूपमित्यादिस्तत्रमाययेतिअनृतेनाज्ञानेनेत्यर्थः । सत्यत्वेतत्कार्यपदार्थदर्शनस्याननुभूतित्वायोगादिति शेषंस्पष्टार्थम् । अनानुभूतीरित्यत्रश्रावयादीन् प्रकृत्यआद्याक्षरंप्लुतंतेषामनन्त्य त्यस्यमध्यमित्यनेनाननुइतिवर्णत्रयस्यमध्यंप्लुतंदीर्घंभवतीतिप्रातिशाख्येदीर्घत्वविधानादननुभूतीरित्यर्थः पदपाठश्चैवमेवेतिदिक् । दशैवमासानिति । यथास्त्रियोगर्भेणांतरालिकःसंबंधोबीजकुसूलन्यायेनै वमसंगस्यचिदात्मनोऽहंकारेणेत्यर्थः । दशैरकाः आसमंतादीरयंत्युपदिशंतितत्त्वमित्यैरकास्तत्त्वदर्शिनउपदेष्टारः । दशमासास्तत्त्वस्यक्षेपकाः । दशअर्हास्तत्त्वविद्याधिकारिणः । एवमुक्तविधंब्रह्माद्वैतं बुधानामनुभवसिद्धं मूढानांविद्वेष्यं चित्तशुद्धिमतांश्रद्धेयमित्यर्थः । स्वोत्थप्रज्ञादिशोऽस्मिन्दशपुरिवसतःपूरविद्याष्टकात्माताःपूर्णवस्त्वनंताःस्वगहिसमपुरांव्यापनात्पूर्णतास्य ॥ पुंपुर्योर्गर्भमात्रोरिव पृथगपृथक्त्वेनसत्यानृतेस्तः केऽप्यारूढाःपदंतत्कतिचनविमुखाः केपितत्प्राप्तियोग्याः १० । १७ एकादशेति प्राणभृतांपशूनांजीवपशूनांएकादशिनःएकादशेंद्रियाणिप्रकाशकानियेषुतेविषयाःशब्दादयस्तेएका दशैवसंख्याताः तएवसर्वेऽपिप्रत्येकंयूपाबंधकारागादयः नैषांकश्चिदप्यबंधकोऽस्तीतिवक्तुंपुनरेकादशग्रहणम् । अतोऽत्रअविमृष्टविधेयांशतादोषोनास्तीतिज्ञेयम् । विकाराःशब्दादिग्रहजाहर्षविषादाः तएतेदिविस्वर्गेऽपिरुद्रारोदयितारो देवानामपिसंतिकिमुतमनुष्याणाम् । तथाचसत्यात्मनोऽसंगत्वंकथंस्यात प्रत्यक्षेणदुःखानुभवादित्याक्षेपः । रुद्राएकादशोक्ताःस्वरपिसुरपशून्रोदयंतींद्रियाणिते षामेकादशार्थानृपशुनिगडनेयूपभूताभवंति ॥ रागद्वेषद्वयानिप्रतिविषयमभीतद्युजांस्युर्विकारास्तद्वंतस्तेऽपिचैकादशयदिहसिनोत्येकएकैकमेषाम ११ । १८

दृष्टांतमुखेनैवदार्ष्टांतिकंनिर्दिशन्परिहरत्यष्टावक्रः यद्यप्यत्रसंवत्सरजगत्यौमासाक्षरेभ्योऽनतिरिक्तेएवंसंघातादन्यःशुद्धश्चेतनोमूढानामप्रसिद्धस्तथापि आनंदाद्ध्येवखल्विमानिभूतानिजायंतइतिश्रुतेर्यथा अहर्गणानांद्वादशाहएवंसंघातस्यकृत्स्नस्यशुद्धंब्रह्मैवप्रकृतिः एतदेवकुतइत्यपेक्षायांचित्तशुद्ध्यैकगम्योऽयमर्थोनशुष्कतर्कगम्यइत्याह द्वादशादित्यानिति । धीराःध्यानवंतोयोगिनः । आदित्यान् आददतेइंद्रियाणिस्वस्वविषयेभ्योव्यावर्तयंतितद्द्वाराप्रत्यक्तत्त्वमधिगमयंतितान्द्वादशसंख्याकानाहुः सनत्सुजाताध्याउद्योगादौ । 'धर्मश्चसत्यंचदमस्तपश्चअमात्सर्यंह्रीस्तितिक्षाऽनसूया । यज्ञश्चदानंचधृतिर्यमोमहान् व्रतानिवैद्वादशब्राह्मणस्य'इति । बंधप्रत्यक्षमेतद्दृढमथजगतीवर्षवद्वर्णमासात्संघातात्प्रत्यगात्मानधिकइतियद्प्यस्तिलोकेतथापि ॥ वागारभ्योविकारःप्रकृतिरविकृतिर्द्वादशाहादिवत्कोऽप्यस्त्येषांभानआत्मा शमिभिरधिगतोवैकृतानैनमीयुः १२ । १९ ब्रह्मलोकंगतानामेवज्ञानंभवतीतिकेषांचिन्निर्बंधः कृतयुगादावेवज्ञानंभवतिनकलावित्यपिकेचित्तान्निराचष्टे त्रयोदशीति । देशकालापेक्षाचित्तशुद्धिर्न पुरुषयत्नसाध्येत्याक्षेपोबंदिप्रोक्तपूर्वार्धेन । नश्चेतादौसधर्मःसकलुषसमयेनापिभूरादिषट्केनोपातालेषुसप्तस्वपितुकृतयुगेसत्यलोकेचसोऽस्ति ॥ तस्माद्यामर्वभिद्धातिथिरियमपिनस्यात्सयेऽतीवशस्तानोवालोकास्त पोंताइतिमखतपसीश्रेयसेनात्मचर्चा । १३ । उत्तरार्धेतु केशीअग्निर्वायुःसूर्यश्चकेशिनइतिवैदिकप्रसिद्धेरग्न्यादिवदसंगआत्मा । त्रयोदशसंख्यानि दशेंद्रियाणिबुद्धिमनोहंकाराख्यानि अहःशब्दोऽत्रक्रतुवाच्यपि

॥ अष्टावक्रउवाच ॥ संवत्सरंद्वादशमासमाहुर्जगत्याःपादोद्वादशैवाक्षराणि ॥ द्वादशाहःप्राकृतोयज्ञउक्तोद्वादशादित्यान्कथयंतीहधीराः १९ ॥ बंदुवाच ॥ त्रयोदशीतिथिरुक्ताप्रशस्तात्रयोदशद्वीपवतीमहीच ॥ लोमशउवाच ॥ एतावदुक्त्वाविरराम बंदीश्लोकस्यार्धंव्याजहाराष्टवक्रः ॥ अष्टावक्रउवाच ॥ त्रयोदशाहानिससारकेशीत्रयोदशादीन्यतिच्छंदांसिचाहुः २० ततोमहानुदतिष्ठन्निनादस्तूष्णींभूतंसूतपुत्रंनिशम्य ॥ अधोमुखंध्यानपरंतदानीमष्टावक्रंचाप्युदीर्यंतमेव २१ तस्मिंस्तथासंकुलेवर्तमानेस्फीतेयज्ञेजनकस्योतराज्ञः ॥ अष्टावक्रंपूजयंतोऽभ्युपेयुर्विप्राःसर्वेप्रांजलयःप्रतीताः २२ ॥ अष्टावक्रउवाच ॥ अनेनैव ब्राह्मणाःशुश्रुवांसोवादेजित्वासलिलेमज्जिताःप्राक् ॥ तानेवधर्मानयमद्यबंदीप्राप्नोतुगृह्याशुनिमज्जयैनम् २३ ॥ बंदुवाच ॥ अहंपुत्रोवरुणस्योतराज्ञस्तत्रास सत्रंद्वादशवार्षिकंवै ॥ सत्रेणतेजनकतुल्यकालंतदर्थंतेप्रहितामेद्विजाग्र्याः २४

लक्षणया विषयेंद्रियसंबंधरूपभोगाख्येयज्ञेवर्तते असंगस्याप्यात्मनोबुद्ध्यादिसंगात् ध्यायतीवलेलायतीवेत्यादिश्रुतेःसंगित्वमिवभाति अतोबुद्ध्यादयःशोधनीयाएवनतुदासीत । नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतेतदिदमप्येनर्हियएवंवेदाहंब्रह्मास्मीतिश्रुत्यवष्टंभेनेहैवदेशेकालेचमुक्तिरस्तीतिभावः । यतोऽतिच्छंदांसिछादकमज्ञानमतिक्रांतानिधर्मादीनिद्वादश । त्रयोदशादीनित्रयोदशानांबुद्ध्यादीनामादीन्यदनशीलानिधर्मादिबलादुत्पन्नेज्ञानेबुद्ध्यादयोनिवर्तंतइत्यर्थः । तेषुबुद्ध्यादिषुनिवृत्तेषुब्रह्माद्वैतंकथयितुमागतोऽस्मीतिप्राक्प्रतिज्ञातं तदिहस्वयमेवप्रकाशतइत्युक्तमितिभावः । एतर्ह्यत्रैवदेवाइव मुनिमनुजायांतिसार्वात्म्यमित्याद्युक्तेःसाऽहंमनोधीखदशकमनुयन्नग्निवाय्वर्कतुल्यः ॥ संगीवासंग्यपिस्यात्रिदशगणमदंत्येवधर्मादयस्तेयेऽतिच्छंदोभिधानास्तिमिरमतिगताएवमद्वैतसिद्धिः । १४ । तदयं संग्रहः । तत्त्वंधीसाक्षिमाक्ष्येश्रुतिषुकृतिपरोऽस्यत्रकर्तापिसोऽत्तापंचानांषष्ठमेतस्त्वमथसमतिकैस्तैःकरोत्यष्टमोऽन्यः ॥ सोऽहंसाक्षीततोऽन्येगुणमयमखिलंचिन्मयास्तेमदुःखाच्चित्स्यातदुःखीतरासाशमयुगिहचिदद्वैतभागष्टवक्रः । १५ । ग्रंथविस्तरभयादुदाहृतोपक्रमाननुगुण्यात् क्लिष्टत्वात्प्रयोजनवदर्थापर्यवसायित्वाच्च टीकांतरोक्ताअर्थानेहप्रदर्शिताः २० सूतपुत्रं शोभनःऊतःपटस्तद्वत्प्रकृतिविकृत्यात्मैकस्तंतुभिरोतुभिश्चप्रोतत्वाद्तःक्रतुरपिसूतःशोभनयज्ञोवरुणस्तस्यपुत्रम् । सइत्तंतुंसविजानात्सोमितिमंत्रवर्णात्तंत्वाद्यात्मकस्यक्रतोरूतशब्दवाच्यत्वंउदीर्यंतमुदीर्यमाणंस्तूयमानमित्यर्थः । २१ । २२ शुश्रुवांसः पंडिताः २३ । २४

जनितारंवरुणम् २५ विप्राइति वाचाउच्चैःपाठेनैवउतमेधयाऊहापोहकौशलेनविप्राविदानाःपंडिताअपिजितामज्जिताश्च तांप्रसिद्धांवाचंवेदमयींमेधयासहितां बंदिनाकुतर्कार्णवेमज्जितामहंयथाउज्जहारोद्धृतवानस्मितथासंतःसदसद्वचनविवेककुशलाअत्रचिन्वंतिपरीक्षयंति लोडर्थेलट् परीक्षयंत्वित्यर्थः २६ ननुबंदिनोद्धृतांवाचंत्वमेवकुतर्कार्णवेमज्जितवानसितत्रकिंसद्भिःपरीक्षणीयमित्याशंक्याह अग्निर्दहन्निति । अग्निर्दहन्स्वभावेनदाहकोऽपिजातवेदाः जातानिसतामसतांचवृत्तानिवेदजानातीतिजातवेदाः सतांसत्याभिसंधीनांगृहान्शरीराणिविसर्जयन्वर्जयंस्तेजसायथाअधाक्षीत्स्म अर्थादनृताभिसंधिगृहान् नशब्दउपमार्थे । अपोननावादुरितातरेमेत्यादिवत् । यथातप्तपरशुग्रहणेवह्निः सत्याभिसंधिनदहति सत्यपक्षपातीनतुजातिवयोविद्यादिपक्षपाती एवंसंतोऽपिबालादिषु अतोबालवचनमितिमद्वाक्यंनावमंतव्यमितिभावः

तेतुसर्वेवरुणस्योतयज्ञंद्रष्टुंगताइमआयांतिभूयः ॥ अष्टावक्रंपूजयेपूजनीयंयस्यहेतोर्जनितारंसमेष्ये २५ ॥ अष्टावक्रउवाच ॥ विप्राःसमुद्रांभसिमज्जितायेवाचाजितामेधयाबाविदानाः ॥ तांमेधयावाचमथोज्जहारयथाबाचमवचिन्वंतिसंतः २६ अग्निर्दहन्जातवेदाःसतांगृहान्विसर्जयंस्तेजसानस्मधाक्षीत् ॥ बालेषुपुत्रेषुकृपणंवदत्सुतथाबाचमवचिन्वंतिसंतः २७ श्लेष्मातकीक्षीणवर्चाःशृणोषिउताहोत्वांस्तुतयोमादयंति ॥ हस्तीवत्वंजनकवितुद्यमानोनमामिकांवाचमिमांशृणोषि २८ ॥ जनकउवाच ॥ शृणोमिवाचंतवदिव्यरूपाममानुषींदिव्यरूपोऽसिसाक्षात् ॥ अजैषीर्यद्बंदिनंत्वंविवादेनिसृष्टएषतवकामोऽद्यबंदी २९ ॥ अष्टावक्रउवाच ॥ नानेनजीवताकश्चिदर्थोमेबंदिनानृप ॥ पितायद्यस्यवरुणोमज्जयैनंजलाशये ३० ॥ बंद्युवाच ॥ अहंपुत्रोवरुणस्योतराज्ञोनमेभयंविद्यतेमज्जितस्य ॥ इमंमुहूर्तंपितरंद्रक्ष्यतेऽयमष्टावक्रश्चिरनष्टंकहोडम् ३१ ॥ लोमशउवाच ॥ ततस्तेपूजिताविप्रावरुणेनमहात्मना ॥ उदतिष्ठंस्ततःसर्वेजनकस्यसमीपतः ३२ ॥ कहोडउवाच ॥ इत्यर्थमिच्छंतिसुतान्जनाजननकर्मणा ॥ यदहंनाशकंकर्तुंतत्पुत्रःकृतवान्मम ३३ उताबलस्यबलवानुतबालस्यपंडितः ॥ उतवाऽविदुषोविद्वान्पुत्रोजनकजायते ३४ शितेनतेपरशुनास्वयमेवांतकोनृप ॥ शिरांस्यपाहरन्राजौरिपूणांभद्रमस्तुते ३५ महदौक्थ्यंगीयतेसामचाग्र्यंसम्यक्सोमःपीयतेचात्रसत्रे ॥ शुचीन्मार्गान्प्रतिजगृहुश्चहृष्टाःसाक्षाद्देवाजनकस्योतराज्ञः ३६ ॥ लोमशउवाच ॥ समुत्थितेष्वथसर्वेषुराजन्विप्रेषुतेष्वधिकंसुप्रभेषु ॥ अनुज्ञातोजनकेनाथराज्ञाविवेशतोयंसागरस्योतबंदी ३७ अष्टावक्रःपितरंपूजयित्वासंपूजितोब्राह्मणैस्तैर्यथावत् ॥ प्रत्याजगामाश्रममेवचाग्र्यंजित्वासौतिंसहितोमातुलेन ३८ ततोऽष्टावक्रंमातुरथांतिकेपितानदींसमंगांशीघ्रमिमांविशस्व ॥ प्रोवाचचैनंसतथाविवेशसमैरंगैश्चापिबभूवसद्यः ३९ नदीसमंगाचबभूवपुण्यायस्यांस्नातोमुच्यतेकिल्बिषाद्धि ॥ त्वमप्येनांस्नानपानावगाहैःसभ्रातृकःसहभार्योविशस्व ४०

२७ श्लेष्मातकीशब्दितस्तरुविशेषस्तस्यपत्रेषुभोजनंतत्फलभक्षणंचबुद्धिघ्नंदोषकरंचेतिप्रसिद्धम् २८ अद्यतवकामोनिसृष्टः एषबंदीदृश्यतामितिशेषः २९ । ३० । ३१ । ३२ इत्यर्थमेतदर्थम् ३३ । ३४ शितेनतीक्ष्णेनतेतवरिपूणामित्यन्वयः यमादपितवशत्रुसंहरणशक्तिरधिकेतिभावः ३५ औक्थ्यमुक्थ्याख्यक्रतुविशेषेगेयं साक्षादित्यपरोक्षंदेवतासान्निध्यमुच्यते ३६ । ३७ सौतिंसूतस्यवरुणस्यपुत्रम् ३८ समान्यंगानिकरोतीतिसमंगेतियोगोदर्शितः शकंध्वादित्वात्पररूपम् ३९ । ४०

मतीतोविश्रब्धः ४१ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ ॥ एषेति । मधुविलेतिअष्टावक्रांगसमीकरणात्पूर्वंसमंगायाएवनाम १ । २

अत्रकौंतेयसहितोभ्रातृभिस्त्वंसुखोषितःसहविप्रैःप्रतीतः ॥ पुण्यान्यन्यानिशुचिकर्मैकभक्तिर्मयासार्धंचरितास्याजमीढ ४१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणि तीर्थयात्रापर्वणिलोमशतीर्थयात्रायामष्टावक्रीयेचतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ लोमशउवाच ॥ एषामधुविलाराजन्समंगासंप्रकाशते ॥ एतत्कर्दमिलंनामभरतस्याभिषेचनम् १ अलक्ष्म्याकिलसंयुक्तोवृत्रंहत्वाशचीपतिः ॥ आप्लुतःसर्वपापेभ्यःसमंगायांव्यमुच्यत २ एतद्विनशनंकुक्षौमैनाकस्यनरर्षभ ॥ अदितिर्यत्रपुत्रार्थंतदन्नमपचत्पुरा ३ एनंपर्वतराजानमारुह्यभरतर्षभाः ॥ अयशस्यामसंशब्द्यामलक्ष्मींव्यपनोत्स्यथ ४ एतेकनखलाराजनृषीणांदयितानगाः ॥ एषाप्रकाशतेगंगायुधिष्ठिरमहानदी ५ सनत्कुमारोभगवानत्रसिद्धिमगात्पुरा ॥ आजमीढावगाह्यैनांसर्वपापैःप्रमोक्ष्यसे ६ अपांह्रदंचपुण्याख्यंभृगुतुंगंचपर्वतम् ॥ उष्णीगंगेचकौंतेयसामात्यःसमुपस्पृश ७ आश्रमःस्थूलशिरसोरमणीयःप्रकाशते ॥ अत्रमानंचकौंतेयक्रोधंचैवविवर्जय ८ एषरैभ्याश्रमःश्रीमान्पांडवेयप्रकाशते ॥ भारद्वाजोयत्रकविर्यवक्रीतोव्यनश्यत ९ ॥ युधिष्ठिरउवाच ॥ कथंयुक्तोऽभवदृषिर्भरद्वाजःप्रतापवान् ॥ किमर्थंचयवक्रीतःपुत्रोऽनश्यतवैमुनेः १० एतत्सर्वंयथावृत्तंश्रोतुमिच्छामितत्त्वतः ॥ कर्मभिर्देवकल्पानांकीर्त्यमानैर्भृशंरमे ११ ॥ लोमशउवाच ॥ भरद्वाजश्चरैभ्यश्चसखायौसंबभूवतुः ॥ तावूषतुरिहात्यंतंप्रीयमाणावनंतरम् १२ रैभ्यस्यतुसुतावास्तामर्वावसुपरावसू ॥ आसीद्यवक्रीःपुत्रस्तुभरद्वाजस्यभारत १३ रैभ्योविद्वान्सहापत्यस्तपस्वीचेतरोऽभवत् ॥ तयोश्चाप्यतुलाकीर्तिर्बाल्यात्प्रभृतिभारत १४ यवक्रीःपितरंदृष्ट्वातपस्विनमसत्कृतम् ॥ दृष्ट्वाचसत्कृतंविप्रैरैभ्यंपुत्रैःसहानघः १५ पर्यतप्यततेजस्वीमन्युनाऽभिपरिप्लुतः ॥ तपस्तेपेततोघोरंवेदज्ञानायपांडव १६ ससमिद्धेमहत्यग्नौशरीरमुपतापयन् ॥ जनयामाससंतापमिंद्रस्यसुमहातपाः १७ ततइंद्रोयवक्रीतमुपगम्ययुधिष्ठिर ॥ अब्रवीत्कस्यहेतोस्त्वमास्थितस्तपउत्तमम् १८ ॥ यवक्रीतउवाच ॥ द्विजानामनधीतावैवेदाःसुरगणार्चित ॥ प्रतिभांत्वितितप्येऽहमिदंपरमकंतपः १९ स्वाध्यायार्थंसमारंभोममायंपाकशासन ॥ तपसाज्ञातुमिच्छामिसर्वज्ञानानिकौशिक २० कालेनमहतावेदाःशक्यागुरुमुखाद्विभो ॥ प्राप्तुंतस्मादयंयत्नःपरमोमेसमास्थितः २१ ॥ इंद्रउवाच ॥ अमार्गएषविप्रर्षेयेनत्वंयातुमिच्छसि ॥ किंविघातेनतेविप्रगच्छाधीहिगुरोर्मुखात् २२ ॥ लोमशउवाच ॥ एवमुक्त्वागतःशक्रोयवक्रीरपिभारत ॥ भूयएवाकरोद्यत्नंतपस्यमितविक्रमः २३ घोरेणतपसाराजंस्तप्यमानोमहत्तपः ॥ संतापयामासभृशंदेवेंद्रमितिनःश्रुतम् २४ तंतथातप्यमानंतुतपस्तीव्रंमहामुनिम् ॥ उपेत्यबलभिद्देवोवारयामासवैपुनः २५

अन्नंब्रह्मौदनं अदितिःपुत्रकामा । साध्येभ्योदेवेभ्योब्रह्मौदनमपचदितिश्रुतेः ३ अयशस्यामयशस्करींअसंशब्द्यामकीर्तनीयां ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ इतरोभरद्वाजस्तपस्व्येवनतुशिष्यादिसंपन्नः १४ । १५ । १६ । १७ । १८ । १९ सर्वज्ञानानिसर्वशास्त्राणि २० । २१ विघातेनआत्मनाशनेन २२ । २३ । २४ । २५

नप्रतिभास्यंतीतिनकारावृत्त्यायोज्यम् २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ अमर्त्यइतिच्छेदः अमरइत्यर्थः



अशक्योऽर्थःसमारब्धोनैतद्बुद्धिकृतंतव ॥ प्रतिभास्यंतिवैवेदास्तवचैवपितुश्चते २६ ॥ यवक्रीतउवाच ॥ नचैतदेवंक्रियतेदेवराजममेप्सितम् ॥ महतानियमेनाहं तप्स्येघोरतरंतपः २७ समिद्धेऽग्नावुपकृत्यांगमंगंहोष्यामिवामघवंस्तन्निबोध ॥ यद्येतदेवंनकरोषिकामंममेप्सितंदेवराजेहसर्वम् २८ ॥ लोमशउवाच ॥ निश्चयं तमभिज्ञायमुनेस्तस्यमहात्मनः ॥ प्रतिवारणहेत्वर्थंबुद्ध्यासंचिंत्यबुद्धिमान् २९ ततइंद्रोऽकरोद्रूपंब्राह्मणस्यतपस्विनः ॥ अनेकशतवर्षस्यदुर्बलस्यसयक्ष्मणः ३० यवक्रीतस्ययत्तीर्थमुचितंशौचकर्मणि ॥ भागीरथ्यांतत्रसेतुंवालुकाभिश्चकारसः ३१ यदाऽस्यवदतोवाक्यंनसचक्रेद्विजोत्तमः ॥ वालुकाभिस्ततःशक्रोगंगांसमभि पूरयन् ३२ वालुकामुष्टिमनिशंभागीरथ्यांव्यसर्जयत् ॥ सेतुमभ्यारभच्छक्रोयवक्रीतंनिदर्शयन् ३३ तंददर्शयवक्रीतोयत्नवंतंनिबंधने ॥ प्रहसंश्चाब्रवीद्वाक्यमिदं समुनिपुंगवः ३४ किमिदंवर्ततेब्रह्मन्किंचतेहचिकीर्षितम् ॥ अतीवहिमहान्यत्नःक्रियतेऽयंनिरर्थकः ३५ ॥ इंद्रउवाच ॥ बंधिष्येसेतुनागंगांसुखःपंथाभविष्यति ॥ क्लिश्यतेहिजनस्तातततरमाणःपुनःपुनः ३६ ॥ वयक्रीतउवाच ॥ नायंशक्यस्त्वयाबद्धुंमहानोघस्तपोधन ॥ अशक्याद्विनिवर्तस्वशक्यमर्थंसमारभ ३७ ॥ इंद्रउवाच ॥ यथैवभवताचेदंतपोवेदार्थमुद्यतम् ॥ अशक्यंतद्वदस्माभिरयंभारःसमाहितः ३८ ॥ यवक्रीतउवाच ॥ यथातवनिरर्थोऽयमारंभस्त्रिदशेश्वर ॥ तथायदिममापीदं मन्यसेपाकशासन ३९ क्रियतांयद्भवेच्छक्यंत्वयासुरगणेश्वर ॥ वरांश्चमेप्रयच्छान्यान्यैरन्यान्भवितास्म्यति ४० ॥ लोमशउवाच ॥ तस्मैप्रादाद्वरानिंद्रउक्त वान्यान्महातपाः ॥ प्रतिभास्यंतितेवेदाःपित्रासहयथेप्सिताः ४१ यच्चान्यत्कांक्षसेकामंयवक्रीगम्यतामिति ॥ सलब्धकामःपितरंसमेत्याथेदमब्रवीत् ४२ ॥ यवक्रीतउवाच ॥ प्रतिभास्यंतिवैवेदाममतातस्यचोभयोः ॥ अतिचान्यान्भविष्यावोवरालब्धास्तथामया ४३ ॥ भरद्वाजउवाच ॥ दर्पस्तेभवितातातवराँ ल्लब्ध्वायथेप्सितान् ॥ सदर्पपूर्णःकृपणःक्षिप्रमेवविनंक्ष्यसि ४४ अत्राप्युदाहरंतीमागाथादेवैरुदाहृताः ॥ मुनिरासीत्पुरापुत्रबालधिर्नामवीर्यवान् ४५ सपुत्रशो कादुद्विग्नस्तपस्तेपेसुदुष्करम् ॥ भवेन्ममसुतोऽमर्त्यइतितंलब्धवांश्चसः ४६ तस्यप्रसादोवैदेवैःकृतोनत्वमरैःसमः ॥ नामर्त्योविद्यतेमर्त्योनिमित्तायुर्भविष्यति ४७ ॥ बालधिरुवाच ॥ यथेमेपर्वताःशश्वत्तिष्ठंतिसुरसत्तमाः ॥ अक्षयास्तन्निमित्तंमेसुतस्यायुर्भविष्यति ४८ ॥ भरद्वाजउवाच ॥ तस्यपुत्रस्तदाजज्ञेमेधावीक्रोधन स्तदा ॥ सतच्छ्रुत्वाऽकरोद्दर्पमृषींश्चैवावमन्यत ४९ विकुर्वाणोमुनीनांचव्यचरत्समहीमिमाम् ॥ आससादमहावीर्यंधनुषाक्षंमनीषिणम् ५० तस्यापचक्रेमेधावीतं शशापसवीर्यवान् ॥ भवभस्मेतिचोक्तःसनभस्मसमपद्यत ५१ धनुषाक्षस्तुतंदृष्ट्वामेधाविनमनामयम् ॥ निमित्तमस्यमहिषैर्भेदयामासवीर्यवान् ५२ सनिमित्तेविनष्टे तुममारसहसाशिशुः ॥ तंमृतंपुत्रमादायविललापततःपिता ५३

४६ । ४७ । ४८ । ४९ । ५० । ५१ निमित्तंपर्वतान् भेदयामासखंडयामास ५२ । ५३

५४ दिष्टंदैवविहिते ५५ । ५६ । ५७ । ५८ । ५९ । ६० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ ॥ चंक्रम्यमाणोभृशंपर्यटन् माधवेवैशाखे १ । २ हृतचेतनोवशीकृतचित्तः ३ । ४ एकांतमुन्नीय एकांतेकार्यरतंसमाप्य । मज्जयामास शोकसमुद्रेइतिशेषः । सज्जयामासेतिपाठे स्वशत्रुमपकर्तुंरैभ्यंसन्नद्धंचकार

लालप्यमानंतंदृष्ट्वामुनयःपरमार्तवत् ॥ ऊचुर्वेदविदःसर्वेगाथांयांतांनिबोधमे ५४ नदिष्टमर्थमत्येतुमीशोमर्त्यःकथंचन ॥ महिषैर्भेदयामासधनुषाक्षोमहीध रान् ५५ एनंलब्ध्वावरान्बालादर्पपूर्णास्तपस्विनः ॥ क्षिप्रमेवविनश्यंतियथानस्यात्तथाभवान् ५६ एषरैभ्योमहावीर्यःपुत्रौचास्यतथाविधौ ॥ तंयथापुत्र नाभ्येषितथाकुर्यास्त्वतंद्रितः ५७ सहिक्रुद्धःसमर्थश्चपुत्रंपीडयितुंरुषा ॥ रैभ्यश्चापितपस्वीचकोपनश्चमहानृषिः ५८ ॥ यवक्रीतउवाच ॥ एवंकरिष्येमा तापंतातकार्षीःकथंचन ॥ यथाहिमेभवान्मान्यस्तथारैभ्यःपितामम ५९ ॥ लोमशउवाच ॥ उक्त्वासपितरंश्लक्ष्णंयवक्रीरकुतोभयः ॥ विप्रकुर्वन्नृषीनन्या नतुष्यत्परयामुदा ६० ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांयवक्रीतोपाख्यानेपंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ लो मशउवाच ॥ चंक्रम्यमाणःसतदायवक्रीरकुतोभयः ॥ जगाममाधवेमासिरैभ्याश्रमपदंप्रति १ सददर्शाश्रमेरम्येपुष्पितद्रुमभूषिते ॥ विचरंतींस्नुषांतस्यकिन्नरी मिवभारत २ यवक्रीस्तामुवाचेदमुपातिष्ठस्वमामिति ॥ निर्लज्जोलज्जयायुक्तांकामेनहृतचेतनः ३ सातस्यशीलमाज्ञायतस्माच्छापाच्चबिभ्यती ॥ तेजस्वि तांचरैभ्यस्यतथेत्युक्त्वाजगामह ४ ततएकांतमुन्नीयमज्जयामासभारत ॥ आजगामतदारैभ्यःस्वमाश्रममरिंदम ५ रुदतींचस्नुषांदृष्ट्वाभार्यामार्तांपरावसोः ॥ सांत्वयन्श्लक्ष्णयावाचापर्यपृच्छद्युधिष्ठिर ६ सातस्मैसर्वमाचष्टयवक्रीभाषितंशुभा ॥ प्रत्युक्तंचयवक्रीतंप्रेक्षापूर्वंतथाऽऽत्मना ७ शृण्वानस्यैवरैभ्यस्ययव क्रेस्तद्विचेष्टनम् ॥ दहन्निवतदाचेतःक्रोधःसमभवन्महान् ८ सतदामन्युनाऽविष्टस्तपस्वीकोपनोभृशम् ॥ अवलुच्यजटामेकांजुहावाग्नौसुसंस्कृतैः ९ ततः समभवन्नारीतस्यारूपेणसंमिता ॥ अवलुच्यापरांचापिजुहावाग्नौजटांपुनः १० ततःसमभवद्रक्षोघोराक्षंभीमदर्शनम् ॥ अब्रूतांतौतदारैभ्यंकिंकार्यंकरवामहे ११ तावब्रवीदृषिःक्रुद्धोयवक्रीर्वध्यतामिति ॥ जग्मतुस्तौतथेत्युक्त्वायवक्रीतजिघांसया १२ ततस्तंसमुपास्थायकृत्यासृष्टामहात्मना ॥ कमंडलुंजहारास्य मोहयित्वेवभारत १३ उच्छिष्टंतुयवक्रीतमपकृष्टकमंडलुम् ॥ ततउद्यतशूलःसराक्षसःसमुपाद्रवत् १४ तमाद्रवंतंसंप्रेक्ष्यशूलहस्तंजिघांसया ॥ यवक्रीःसहसो त्थायप्राद्रवद्येनवैसरः १५ जलहीनंसरोदृष्ट्वायवक्रीस्त्वरितःपुनः ॥ जगामसरितःसर्वास्ताश्चाप्यासन्विशोषिताः १६ सकाल्यमानोघोरेणशूलहस्तेनरक्षसा ॥ अग्निहोत्रंपितुर्भीतःसहसाप्रविवेशह १७ सवैप्रविशमानस्तुशूद्रेणांधेनरक्षिणा ॥ निगृहीतोबलाद्द्वारिसोऽवातिष्ठतपार्थिव १८ निगृहीतंतुशूद्रेणयवक्रीतंसराक्षसः ॥ ताडयामासशूलेनसभिन्नहृदयोऽपतत् १९

तदेवाह आजगामेत्यादिना ५ । ६ प्रत्युक्तंप्रत्याख्यातं मदुपरिबलात्कारंकृतवानित्युक्तवतीत्यर्थः ७ । ८ सुसंस्कृतैः स्वरवर्णादिसंस्कारयुक्तैर्मंत्रैः ९ नारीकृत्या १० । ११ । १२ । १३ । १४ । १५ १६ काल्यमानः सर्वतोनिषिध्यमानः अग्निहोत्रेअग्निहोत्रशालायां १७ अवातिष्ठत बहिरेव १८ । १९

२० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ भरद्वाजइति । आन्हिकंस्वाध्यायंप्रत्यहंकर्तव्यं ब्रह्मयज्ञम् १ हतपुत्रत्वेन आशौचयुक्तत्वात् २ । ३ ४ शुद्धयतिनिःसंदेहंभवति ५ । ६ अग्न्यगारंप्रविष्टस्यरक्षोभयंनभवेदितिभावः ७ । ८ शूद्रस्यशूद्रकृतं विप्रियंपुत्रनिरोधेनकृतम् ९ । १० । ११ । १२ । १३ । १४ । किल्बिषीशोकाक्रां

यवक्रीतंसहत्वातुराक्षसोरैभ्यमागमत् ॥ अनुज्ञातस्तुरैभ्येणतयानार्यासहावसत् २० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांयवक्रीतोपाख्यानेषट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ लोमशउवाच ॥ भरद्वाजस्तुकौंतेयकृत्वास्वाध्यायमाह्निकम् ॥ समित्कलापमादायप्रविवेशस्वमाश्रमम् १ तंस्मदृष्ट्वापुरासर्वेप्रत्युत्तिष्ठंतिपावकाः ॥ नत्वेतमुपतिष्ठंतिहतपुत्रंतदाऽग्नयः २ वैकृतंत्वग्निहोत्रेसलक्षयित्वामहातपाः ॥ तमंधंशूद्रमासीनंगृहपालमथाब्रवीत् ३ किंनुमेनाग्नयःशूद्रप्रतिनंदंतिदर्शनम् ॥ त्वंचापिनयथापूर्वंकच्चित्क्षेममिहाश्रमे ४ कच्चिन्नरैभ्यंपुत्रोमेगतवानल्पचेतनः ॥ एतदाचक्ष्वमेशीघ्रंनहिशुद्ध्यतिमेमनः ५ ॥ शूद्रउवाच ॥ रैभ्यंयातोनूनमयंपुत्रस्तेमंदचेतनः ॥ तथाहिनिहतःशेतेराक्षसेनबलीयसा ६ प्रकाल्यमानस्तेनायंशूलहस्तेनरक्षसा ॥ अग्न्यगारंप्रतिद्वारिमयादोर्भ्यांनिवारितः ७ ततःसविहताशोऽत्रजलकामोऽशुचिर्ध्रुवम् ॥ निहतःसोऽतिवेगेनशूलहस्तेनरक्षसा ८ भरद्वाजस्तुतच्छ्रुत्वाशूद्रस्यविप्रियंमहत् ॥ गतासुंपुत्रमादायविललापसुदुःखितः ९ ॥ भरद्वाजउवाच ॥ ब्राह्मणानांकिलार्थायननुत्वंतप्तवांस्तपः ॥ द्विजानामनधीतावैवेदाःसंप्रतिभांत्विति १० तथाकल्याणशीलस्त्वंब्राह्मणेषुमहात्मसु ॥ अनागाःसर्वभूतेषुकर्कशत्वमुपेयिवान् ११ प्रतिषिद्धोमयातातरैभ्यावसथदर्शनात् ॥ गतवानेवतंद्रष्टुंकालांतकयमोपमम् १२ यःसजानन्महातेजावृद्धस्यैकंममात्मजम् ॥ गतवानेवकोपस्यवशंपरमदुर्मतिः १३ पुत्रशोकमनुप्राप्यएषरैभ्यस्यकर्मणा ॥ त्यक्ष्यामित्वामृतेपुत्रप्राणानिष्टतमान्भुवि १४ यथाहंपुत्रशोकेनदेहंत्यक्ष्यामिकिल्बिषी ॥ तथाज्येष्ठःसुतोरैभ्यंहिंस्याच्छीघ्रमनागसम् १५ सुखिनोवैनरायेषांजात्यापुत्रोनविद्यते ॥ येपुत्रशोकमप्राप्यविचरंतियथासुखम् १६ येतुपुत्रकृताच्छोकाद्भृशंव्याकुलचेतसः ॥ शपंतीष्टान्सखीनार्तास्तेभ्यःपापतरोनुकः १७ परासुश्चसुतोदृष्टःशप्तश्चेष्टःसखामया ॥ ईदृशीमापदंकोऽत्रद्वितीयोऽनुभविष्यति १८ ॥ लोमशउवाच ॥ विलप्यैवंबहुविधंभरद्वाजोऽदहत्सुतम् ॥ सुसमिद्धंततःपश्चात्प्रविवेशहुताशनम् १९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांयवक्रीतोपाख्यानेसप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ लोमशउवाच ॥ एतस्मिन्नेवकालेतुबृहद्द्युम्नोमहीपतिः ॥ सत्रंतेनेमहाभागोरैभ्ययाज्यःप्रतापवान् १ तेनरैभ्यस्यवैपुत्रावर्वावसुपरावसू ॥ वृतौसहायौसत्रार्थंबृहद्द्युम्नेनधीमता २ तत्रतौसमनुज्ञातौपित्राकौंतेयजग्मतुः ॥ आश्रमेत्वभवद्रैभ्योभार्याचैवपरावसोः ३ अथावलोककोऽगच्छद्गृहानेकःपरावसुः ॥ कृष्णाजिनेनसंवीतंददर्शपितरंवने ४ जघन्यरात्रेनिद्रांधःसावशेषेतमस्यपि ॥ चरंतंगहनेऽरण्येमेनेसपितरंमृगम् ५

तः १५ । १६ । १७ । १८ । १९ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ एतस्मिन्निति १ । २ । ३ अवलोककःअवलोकनार्थी गृहाम्भार्याम् ४ । ५

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ त्रिरूपतेहेप्रजाधीश १४ । १५ । १६ प्रभाषितो मिथ्यावाच्यमीत्यधिक्षिप्तः १७ रहस्यवेदं सूर्यमंत्रप्रकाशकंतेदं घृणिरितिद्वेअक्षरे सूर्यइतित्रीणि आदित्यइतित्रीणि । 'एतद्वैसावित्रस्याष्टाक्षरंपदंश्रियाभिषिक्तम्'इतिकाठकब्राह्मणं कृतवान्ददर्श १८ मूर्तिमान्सूर्यस्तंद्विजंददर्शआत्मानंदर्शयामास १९ तंदेवाःप्रकर्षेणवरयामासुः निरासुर्निराचक्रुर्यज्ञादितिशेषः २० । २१ प्रति

मृगंतुमन्यमानेनपितावैतेनहिंसितः ॥ अकामयानेनतदाशरीरत्राणमिच्छता ६ तस्यसप्रेतकार्याणिकृत्वासर्वाणिभारत ॥ पुनरागम्यतत्सत्रमब्रवीद्भ्रातरंव चः ७ इदंकर्मनशक्तस्त्वंवोढुमेकःकथंचन ॥ मयाचहिंसितस्तातोमन्यमानेनतंमृगम् ८ सोऽस्मदर्थेव्रतंतातचरत्वंब्रह्महिंसनम् ॥ समर्थोऽप्यहमेकाकीकर्म कर्तुमिदंमुने ९ ॥ अर्वावसुरुवाच ॥ करोतुवैभवान्सत्रंबृहद्द्युम्नस्यधीमतः ॥ ब्रह्मवध्यांचरिष्येऽहंत्वदर्थेनियतेंद्रियः १० ॥ लोमशउवाच ॥ सतस्यब्रह्मव ध्यायाःपारंगत्वायुधिष्ठिर ॥ अर्वावसुस्तदासत्रमाजगामपुनर्मुनिः ११ ततःपरावसुर्दृष्ट्वाभ्रातरंसमुपस्थितम् ॥ बृहद्द्युम्नमुवाचेदंवचनंहर्षगद्गदम् १२ एष तेब्रह्महायज्ञंमाद्रष्टुंप्रविशेदिति ॥ ब्रह्महाप्रेक्षितेनापिपीडयेत्त्वामसंशयम् १३ ॥ लोमशउवाच ॥ तच्छ्रुत्वैवतदाराजाप्रेष्यानाहसविट्पते ॥ प्रेष्यैरुत्सार्यमा णस्तुराजन्नर्वावसुस्तदा १४ नमयाब्रह्महत्येयंकृतेत्याहपुनःपुनः ॥ उच्यमानोऽसकृत्प्रेष्यैर्ब्रह्महन्नितिभारत १५ नैवस्मप्रतिजानातिब्रह्मवध्यांस्वयंकृताम् ॥ ममभ्रात्रा कृतमिदंमयासपरिमोक्षितः १६ सतथाप्रवदन्क्रोधात्तैश्चप्रेष्यैःप्रभाषितः ॥ तूष्णींजगामब्रह्मर्षिर्वनमेवमहातपाः १७ उग्रंतपःसमास्थायदिवाकरमथाश्रितः ॥ रह स्यवेदंकृतवान्सूर्यस्यद्विजसत्तमः १८ मूर्तिमांस्तंददर्शाथस्वयमग्रभुगव्ययः ॥ लोमशउवाच ॥ प्रीतास्तस्याभवन्देवाःकर्मणाऽर्वावसोर्नृप १९ तंतेप्रवरयामासुर्नि रासुश्चपरावसुम् ॥ ततोदेवावरंतस्मैददुरग्निपुरोगमाः २० सचापिवरयामासपितुरुत्थानमात्मनः ॥ अनागस्त्वंततोभ्रातुःपितुश्चास्मरणंवधे २१ भरद्वाजस्यचोत्था नंयवक्रीतस्यचोभयोः ॥ प्रतिष्ठांचापिवेदस्यसौरस्यद्विजसत्तमः ॥ एवमस्त्वितितंदेवाःप्रोचुश्चापिवरान्ददुः २२ ततःप्रादुर्बभूवुस्तेसर्वएवयुधिष्ठिर ॥ अथाब्रवीद्यव क्रीतोदेवानग्निपुरोगमान् २३ समधीतंमयाब्रह्मव्रतानिचरितानिच ॥ कथंचरैभ्यःशक्तोमामधीयानंतपस्विनम् २४ तथायुक्तेनविधिनानिहंतुममरोत्तमाः ॥ देवा ऊचुः ॥ मैवंकृथाययवक्रीततथावदसिवैमुने ॥ ऋतेगुरुमधीताहिसुखंवेदास्त्वयापुरा २५ अनेनतुगुरून्दुःखात्तोषयित्वाऽऽत्मकर्मणा ॥ कालेनमहताक्लेशाद्ब्रह्माधिगतमु त्तमम् २६ ॥ लोमशउवाच ॥ यवक्रीतमथोक्त्वैवंदेवाःसेंद्रपुरोगमाः ॥ संजीवयित्वातान्सर्वान्पुनर्जग्मुस्त्रिविष्टपम् २७ आश्रमस्तस्यपुण्योऽयंसदापुष्पफलद्रुमः ॥ अत्रोष्यराजशार्दूलसर्वपापंप्रमोक्ष्यसि २८ ॥ इतिश्रीमहाभारतेआरण्यकेप० तीर्थयात्रापर्वणिलोमश० यवक्रीतोपाख्यानेअष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८॥

॥ लोमशउवाच ॥ उशीरबीजंमैनाकंगिरिंश्वेतंचभारत ॥ समतीतोऽसिकौंतेयकालशैलंचपार्थिव १ एषागंगासप्तविधाराजतेभरतर्षभ ॥ स्थानंविरजसंपुण्यं यत्राग्निर्नित्यमिध्यते २

ष्ठांसंप्रदायप्रवृत्तिं सौरोवेदःपूर्वमुक्तः २२ । २३ समधीतंसम्यक्प्राप्तंब्रह्मवेदः २४ । २५ । २६ । २७ । २८ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

उशीरेति १ यत्राग्निर्नित्यमिध्यतइति । त्रियोगिनारायणाख्यंहरिद्वारात्परतःस्थानमस्ति २

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० विशालाबदरी ११ । १२ । १३ । १४ । १५ इंद्रस्यइंद्रसंबंधिनो जांबूनदंसुवर्णं तन्मयात्पर्वतान्मेरोः गोपाययेतिणिजंतस्यरूपं देवैरितिशेषः स्वार्थेवाणिच् आजमीढत्वं

एतद्धैमानुषेणाद्यनशक्यंद्रष्टुमद्भुतम् ॥ समाधिंकुरुताव्यग्रास्तीर्थान्येतानिद्रक्ष्यथ २ एतद्द्रक्ष्यसिदेवानामाक्रीडंचरणांकितम् ॥ अतिक्रांतोऽसिकौंतेयकालशैलंचपर्वतम् ४ श्वेतंगिरिंप्रवेक्ष्यामोमंदरंचैवपर्वतम् ॥ यत्रमाणिवरोयक्षःकुबेरश्चैवयक्षराट् ५ अष्टाशीतिसहस्राणिगंधर्वाःशीघ्रगामिनः ॥ तथाकिंपुरुषाराजन्यक्षाश्चैवचतुर्गुणाः ६ अनेकरूपसंस्थानानानाप्रहरणाश्चते ॥ यक्षेंद्रंमनुजश्रेष्ठमाणिभद्रमुपासते ७ तेषामृद्धिरतीवात्रगतौवायुसमाश्चते ॥ स्थानात्प्रच्यावयेयुर्येदेवराजमपिध्रुवम् ८ तैस्तातबलिभिर्गुप्तायातुधानैश्चरक्षिताः ॥ दुर्गमाःपर्वताःपार्थसमाधिंपरमंकुरु ९ कुबेरसचिवाश्चान्येरौद्रामैत्राश्चराक्षसाः ॥ तैःसमेष्यामकौंतेयसंयतोविक्रमेणच १० कैलासःपर्वतोराजन्षड्योजनसमुच्छ्रितः ॥ यत्रदेवाःसमायांतिविशालायत्रभारत ११ असंख्येयास्तुकौंतेययक्षराक्षसकिन्नराः ॥ नागाःसुपर्णागंधर्वाःकुबेरसदनंप्रति १२ तान्विगाहस्वपार्थाद्यतपसाचदमेनच ॥ रक्ष्यमाणोमयाराजन्भीमसेनबलेनच १३ स्वस्तितेवरुणोराजायमश्चसमितिंजयः ॥ गंगाचयमुनाचैवपर्वतश्चदधातुते १४ मरुतश्चसहाश्विभ्यांसरितश्चसरांसिच ॥ स्वस्तिदेवासुरेभ्यश्चवसुभ्यश्चमहाद्युते १५ इंद्रस्यजांबूनदपर्वताद्धैशृणोमिघोषंतवदेविगंगे ॥ गोपाययेमंसुभगेगिरिभ्यःसर्वाजमीढोपचितंनरेंद्रम् १६ ददस्वशर्मप्रविविक्षतोमतोऽस्यशैलानिमाञ्छैलसुतेनृपस्य ॥ उक्त्वातथासागरगांसविप्रोयत्तोभवस्वेतिशशासपार्थम् १७ ॥ युधिष्ठिरउवाच ॥ ॥ अपूर्वोऽयंसंभ्रमोलोमशस्यकृष्णांचसर्वेरक्षतमाप्रमादम् ॥ देशोह्ययंदुर्गतमोऽस्यतस्मात्परंशौचमिहाचरध्वम् १८ ॥ वैशंपायनउवाच ॥ ततोऽब्रवीद्भीममुदारवीर्यंकृष्णांयत्तःपालयभीमसेन ॥ शून्येऽर्जुनेऽसन्निहितेचतातत्वामेवकृष्णाभजतेभयेषु १९ ततोमहात्मासयमौसमेत्यमूर्धन्युपाघ्रायविमृज्यगात्रे ॥ उवाचतौबाष्पकलंसराजामाभैष्टमागच्छतमप्रमत्तौ २० ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांकैलासादिगिरिप्रवेशेऊनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥ ॥ ॥ ॥ युधिष्ठिरउवाच ॥ अंतर्हितानिभूतानिबलवंतिमहांतिच ॥ अग्निनातपसाचैवशक्यंगंतुंवृकोदर १ सन्निवर्तयकौंतेयक्षुत्पिपासेबलाश्रयात् ॥ ततोबलंचदाक्ष्यंचसंश्रयस्ववृकोदर २ ऋषेस्त्वयाश्रुतंवाक्यंकैलासंपर्वतंप्रति ॥ बुध्द्याप्रपश्यकौंतेयकथंकृष्णागमिष्यति ३ अथवासहदेवेनधौम्येनचसमंविभो ॥ सूतैःपौरोगवैश्चैवसर्वैश्चपरिचारकैः ४ रथैरश्वैश्चयेचान्येविप्राःक्लेशासहाःपथि ॥ सर्वैस्त्वंसहितोभीमनिवर्तस्वायतेक्षण ५ त्रयोवयंगमिष्यामोलघ्वाहारायतव्रताः ॥ अहंचनकुलश्चैवलोमशश्चमहातपाः ६ ममागमनमाकांक्षन्गंगाद्वारेसमाहितः ॥ वसेहद्रौपदींरक्षन्यावदागमनंमम ७

शेअपचितंपूजितंश्रेष्ठमित्यर्थः १६ ददस्वदेहि १७ शौचंवाङ्मनःकायशुद्धिं १८ । १९ भैष्टमितिच्छेदः २० ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे ऊनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

अंतर्हितानीति १ । २ । ३ । ४ । ५ । ६ । ७

८ । ९ । १० । ११ १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ परिदायरक्षार्थंसमर्प्य २८ । २९ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारत

भीमउवाच ॥ राजपुत्रीश्रमेणार्तादुःखार्ताचैवभारत ॥ व्रजत्येवहिकल्याणीश्वेतवाहदिदृक्षया ८ तवचाप्यरतिस्तीव्रावर्ततेतमपश्यतः ॥ गुडाकेशंमहात्मानंसंग्रामे
ष्वपलायिनम् ९ किंपुनःसहदेवंचमांचकृष्णांचभारत ॥ द्विजाःकामंनिवर्ततांसर्वेचपरिचारकाः १० सूताःपौरोगवाश्चैवयंचमन्येतनोभवान् ॥ नह्यहंहातुमिच्छा
मिभवंतमिहकर्हिचित् ११ शैलेऽस्मिन्राक्षसाकीर्णेदुर्गेषुविषमेषुच ॥ इयंचापिमहाभागाराजपुत्रीपतिव्रता १२ त्वामृतेपुरुषव्याघ्रनोत्सहेद्विनिवर्तितुम् ॥ तथैव
सहदेवोऽयंसततंत्वामनुव्रतः १३ नजातुविनिवर्तेतमनोज्ञोह्यहमस्यवै ॥ अपिचात्रमहाराजसव्यसाचिदिदृक्षया १४ सर्वेलालसभूताःस्मतस्माद्यास्यामहेसह ॥ यद्य
शक्योरथैर्गंतुंशैलोऽयंबहुकन्दरः १५ पद्भिरेवगमिष्यामोमाराजन्विमनाभव ॥ अहंवहिष्येपांचालींयत्रयत्रनशक्ष्यति १६ इतिमेवर्ततेबुद्धिर्माराजन्विमनाभव ॥
सुकुमारौतथावीरौमाद्रीनंदिकरावुभौ ॥ दुर्गेसंतारयिष्यामियत्राशक्तौभविष्यतः १७ ॥ युधिष्ठिरउवाच ॥ एवंतेभाषमाणस्यबलंभीमाभिवर्धताम् ॥ यत्त्वमुत्सहसे
वोढुंपांचालींचयशस्विनीम् १८ यमजौचापिभद्रंतेनैतदन्यत्रविद्यते ॥ बलंतवयशश्चैवधर्मःकीर्तिश्चवर्धताम् १९ यत्त्वमुत्सहसेनेतुंभ्रातरौसहकृष्णया ॥ मातेग्ला
निर्महाबाहोमाचतेऽस्तुपराभवः २० ॥ ॥ वैशंपायनउवाच ॥ ततःकृष्णाऽब्रवीद्वाक्यंप्रहसंतीमनोरमा ॥ गमिष्यामिनसंतापःकार्योमांप्रतिभारत २१
॥ लोमशउवाच ॥ तपसाशक्यतेगंतुंपर्वतंगंधमादनम् ॥ तपसाचैवकौंतेयसर्वेयोक्ष्यामहेवयम् २२ नकुलःसहदेवश्चभीमसेनश्चपार्थिव ॥ अहंचत्वंचकौंतेयद्रक्ष्यामः
श्वेतवाहनम् २३ ॥ वैशंपायनउवाच ॥ एवंसंभाषमाणास्तेसुबाहुविषयंमहत् ॥ ददृशुर्मुदिताराजन्प्रभूतगजवाजिमत् २४ किराततंगणाकीर्णंपुलिंदशतसंकुलम् ॥
हिमवत्यमरैर्जुष्टंबह्वाश्चर्यसमाकुलम् ॥ सुबाहुश्चापितान्दृष्ट्वापूजयाप्रत्यगृह्णत २५ विषयांतेकुलिंदानामीश्वरःप्रीतिपूर्वकम् ॥ ततस्तेपूजितास्तेनसर्वएवसुखोषिताः
२६ प्रतस्थुर्विमलेसूर्येहिमवंतंगिरिंप्रति ॥ इंद्रसेनमुखांश्चापिभृत्यान्पौरोगवांस्तथा २७ सूदांश्चपारिबर्हांश्चद्रौपद्याःसर्वशोनृप ॥ राज्ञःकुलिंदाधिपतेःपरिदायमहा
रथाः २८ पद्भिरेवमहावीर्याययुःकौरवनंदनाः ॥ तेशनैःप्राद्रवन्सर्वेकृष्णयासहपांडवाः ॥ तस्माद्देशात्सुसंहृष्टाद्रष्टुकामाधनंजयम् २९ इतिश्रीमहाभारतेआरण्यके
पर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांगंधमादनप्रवेशेचत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥ युधिष्ठिरउवाच ॥ भीमसेनयमौचोभौपांचालिचनिबो
धत ॥ नास्तिभूतस्यनाशोवैपश्यतास्मान्वनेचरान् १ दुर्बलाःक्लेशिताःस्मेतियद्ब्रुवामेतरेतरम् ॥ अशक्येऽपिव्रजामोयद्धनंजयदिदृक्षया २ तन्मेदहतिगात्राणितूल
राशिमिवानलः ॥ यच्चवीरंनपश्यामिधनंजयमुपांतिकात् ३ तस्यदर्शनतृष्णंमांसानुजंवनमास्थितम् ॥ याज्ञसेन्याःपरामर्शःसचवीरदहत्युत ४

भावदीपे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥ ॥ भीमसेनेति । भूतस्यप्राक्तनकर्मणः १ । २ । ३ परामर्शः केशेषुग्रहणम् ४

नकुलात्पूर्वजंपार्थंनपश्याम्यमितौजसम् ॥ अजेयमुग्रधन्वानंतेनतप्येवृकोदर ५ तीर्थानिचैवरम्याणिवनानिचसरांसिच ॥ चरामिसहयुष्माभिस्तस्यदर्शनकांक्षया ६ पंचवर्षाण्यहंवीरंसत्यसंधंधनंजयम् ॥ यन्नपश्यामिबीभत्सुंतेनतप्येवृकोदर ७ तंवैश्यामंगुडाकेशंसिंहविक्रांतगामिनम् ॥ नपश्यामिमहाबाहुंतेनतप्येवृकोदर ८ कृतास्त्रंनिपुणंयुद्धेऽप्रतिमानंधनुष्मताम् ॥ नपश्यामिकुरुश्रेष्ठंतेनतप्येवृकोदर ९ चरंतमरिसंघेषुकालेकुद्धमिवांतकम् ॥ प्रभिन्नमिवमातंगंसिंहस्कंधंधनंजयम् १० यःसशक्रादनवरोवीर्येणद्रविणेनच ॥ यमयोःपूर्वजःपार्थःश्वेताश्वोऽमितविक्रमः ११ दुःखेनमहताऽऽविष्टस्तंनपश्यामिफाल्गुनम् ॥ अजेयमुग्रधन्वानंतेनतप्येवृकोदर १२ सततंयःक्षमाशीलःक्षिप्यमाणोऽप्यणीयसा ॥ ऋजुमार्गप्रपन्नस्यशर्मदाताऽभयस्यच १३ सतुजिह्मप्रवृत्तस्यमाययाऽभिजिघांसतः ॥ अपिवज्रधरस्यापिभवेत्कालविषोपमः १४ शत्रोरपिप्रपन्नस्यसोऽनृशंसःप्रतापवान् ॥ दाताऽभयस्यबीभत्सुरमितात्मामहाबलः १५ सर्वेषामाश्रयोऽस्माकंरणेऽरीणांप्रमर्दिता ॥ आहर्तासर्वरत्नानांसर्वेषांनःसुखावहः १६ रत्नानियस्यवीर्येणदिव्यान्यासन्पुरामम ॥ बहूनिबहुजातीनियानिप्राप्तःसुयोधनः १७ यस्यबाहुबलाद्वीरसभाचासीत्पुरामम ॥ सर्वरत्नमयीख्याताांत्रिषुलोकेषुपांडव १८ वासुदेवसमंवीर्येकार्तवीर्यसमंयुधि ॥ अजेयमजितंयुद्धेतंनपश्यामिफाल्गुनम् १९ संकर्षणंमहावीर्यंत्वांचभीमापराजितम् ॥ अनुयातःस्ववीर्येणवासुदेवंचशत्रुहा २० यस्यबाहुबलेतुल्यःप्रभावेचपुरंदरः ॥ जवेवायुर्मुखेसोमःक्रोधेमृत्युःसनातनः २१ तेवयंतंनरव्याघ्रंसर्वेवीरदिदृक्षवः ॥ प्रवेक्ष्यामोमहाबाहोपर्वतंगंधमादनम् २२ विशालाबदरीयत्रनरनारायणाश्रमः ॥ तंसदाध्युषितंयक्षैर्द्रक्ष्यामोगिरिमुत्तमम् २३ कुबेरनलिनींरम्यांराक्षसैरभिसेविताम् ॥ पद्भिरेवगमिष्यामस्तप्यमानामहत्तपः २४ नचयानवताशक्योगंतुंदेशोवृकोदर ॥ ननृशंसेनलुब्धेननाप्रशांतेनभारत २५ तत्रसर्वेगमिष्यामोभीमार्जुनगवेषिणः ॥ सायुधाबद्धनिस्त्रिंशाःसार्धेविप्रैर्महाव्रतैः २६ मक्षिकादंशमशकान्सिंहान्व्याघ्रान्सरीसृपान् ॥ प्राप्नोत्यनियतःपार्थनियतस्तान्नपश्यति २७ तेवयंनियतात्मानःपर्वतंगंधमादनम् ॥ प्रवेक्ष्यामोमिताहाराधनंजयदिदृक्षवः २८ ॥ इतिश्रीमहाभारतेआरण्यकेप० तीर्थयात्रापर्वणिलोमशतीर्थयात्रायांगंधमादनप्रवेशे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ लोमशउवाच ॥ द्रष्टारःपर्वताःसर्वेनद्यःसपुरकाननाः ॥ तीर्थानिचैवश्रीमंतिस्पृष्टंचसलिलंकरैः १ पर्वतंमंदरंदिव्यमेषपंथाःप्रयास्यति ॥ समाहितानिरुद्विग्नाःसर्वेभवतपांडवाः २ अयंदेवनिवासोवैगंतव्योवोभविष्यति ॥ ऋषीणांचैवदिव्यानांनिवासःपुण्यकर्मणाम् ३ एषाशिवजलापुण्यायातिसौम्यमहानदी ॥ बदरीप्रभवाराजन्देवर्षिगणसेविता ४



भावदीपे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ ॥ भोद्रष्टारः सर्वेमंदरादन्येपर्वतादृष्टाइतिशेषः १ । २ । ३ महानदीगंगा अलकनंदा वा ४

उपयाताइष्टसिद्ध्यर्थंप्रार्थिता ५ सामगाः तैत्तिरीयकेब्रह्मविद्देयंसामश्रूयते ' एतत्सामगायन्नास्ते हा ३ वुहा ३ वुहा ३ वु अहमन्नम् 'इत्यादि मरीच्यादयोऽत्रसार्वात्म्यंस्वस्यपश्यंतोगायंतीत्यर्थः ६ आह्निकंनैयमिकं जपं परिधावन्तिपरिचरंति तमिंद्रम् ७ । ८ । ९ वादतवादयत अक्षरलोप आर्षः १० । ११ । १२ पांडुरंश्वेतं अस्थ्नांराशिमितिशेषः १३ । १४ । १५ नरकस्यभौमासुरस्य १६ । १७ । १८ । १९ । २०

एषावैहायसैर्नित्यंवालखिल्यैर्महात्मभिः ॥ अर्चिताचोपयाताचगंधर्वैश्चमहात्मभिः ५ अत्रसामस्मगायंतिसामगाःपुण्यर्निःस्वनाः ॥ मरीचिःपुलहश्चैवभृगुश्चैवांगिरास्तथा ६ अत्राह्निकंसुरश्रेष्ठोजपतेसमरुद्गणः ॥ साध्याश्चैवाश्विनौचैवपरिधावंतितंतदा ७ चंद्रमाःसहसूर्येणज्योतींषिचग्रहैःसह ॥ अहोरात्रविभागेननदीमेनामनुव्रजन् ८ एतस्याःसलिलंमूर्ध्निवृषांकःपर्यधारयत् ॥ गंगाद्वारेमहाभागयेनलोकस्थितिर्भवेत् ९ एतांभगवतींदेवींभवंतःसर्वएवहि ॥ प्रयतेनात्मनातातप्रतिगम्याभिवादत १० तस्यतद्वचनंश्रुत्वालोमशस्यमहात्मनः ॥ आकाशगंगांप्रयताःपांडवास्तेऽभ्यवादयन् ११ अभिवाद्यचतेसर्वेपांडवाधर्मचारिणः ॥ पुनःप्रयाताःसंहृष्टाःसर्वेऋषिगणैःसहः १२ ततोदूरात्प्रकाशन्तपांडुरंमेरुसंनिभम् ॥ ददृशुस्तेनरश्रेष्ठाविकीर्णंसर्वतोदिशम् १३ तान्प्रष्टुकामान्विज्ञायपांडवान्सतुलोमशः ॥ उवाचवाक्यंवाक्यज्ञःशृणुध्वंपांडुनंदनाः १४ एतद्विकीर्णंसुश्रीमत्कैलासशिखरोपमम् ॥ यत्पश्यसिनरश्रेष्ठपर्वतप्रतिमंस्थितम् १५ एतान्यस्थीनिदैत्यस्यनरकस्यमहात्मनः ॥ पर्वतप्रतिमंभातिपर्वतप्रस्तराश्रितम् १६ पुरातनेनदेवेनविष्णुनापरमात्मना ॥ दैत्योविनिहतस्तेनसुरराजहितैषिणा १७ दशवर्षसहस्राणितपस्तप्यन्महामनाः ॥ ऐंद्रंप्रार्थयतेस्थानंतपःस्वाध्यायविक्रमात् १८ तपोबलेनमहताबाहुवेगबलेनच ॥ नित्यमेवदुराधर्षोधर्षयन्सदितेःसुतः १९ सतुतस्यबलंज्ञात्वाधर्मंचचरितव्रतम् ॥ भयाभिभूतःसंविग्नःशक्रआसीत्तदाऽनघ २० तेनसंचिंतितोदेवोमनसाविष्णुरव्ययः ॥ सर्वत्रगःप्रभुःश्रीमानागतश्चस्थितोबभौ २१ ऋषयश्चापितंसर्वेतुष्टुवुश्चदिवौकसः ॥ तंदृष्ट्वाज्वलमानश्रीर्भगवान्हव्यवाहनः २२ नष्टतेजाःसनभवत्तस्यतेजोभिभर्त्सितः ॥ तंदृष्ट्वावरदंदेवंविष्णुंदेवगणेश्वरम् २३ प्रांजलिःप्रणतोभूत्वानमस्कृत्यचवज्रभृत् ॥ प्राहवाक्यंततस्तत्त्वंयतस्तस्यभयंभवेत् २४ ॥ विष्णुरुवाच ॥ जानामितेभयंशक्रदैत्येन्द्रान्नरकात्ततः ॥ ऐंद्रंप्रार्थयतेस्थानंतपःसिद्धेनकर्मणा २५ सोऽहमेनंतवप्रीत्यातपःसिद्धमपिध्रुवम् ॥ वियुनज्मिदेहाद्देवेंद्रमुहूर्तंप्रतिपालय २६ तस्यविष्णुर्महातेजाःपाणिनाचेतनांहरत् ॥ सपपाततोभूमौगिरिराजइवाहतः २७ तस्यैतदस्थिसंघातंमायाविनिहतस्यवै ॥ इदंद्वितीयमपरंविष्णोःकर्मप्रकाशते २८ नष्टावसुमतीकृत्स्नापातालेचैवमज्जिता ॥ पुनरुद्धरितातेनवाराहेणैकशृंगिणा २९ ॥ युधिष्ठिरउवाच ॥ भगवन्विस्तरेणेमांकथांकथयतत्त्वतः ॥ कथंतेनसुरेशेननष्टावसुमतीतदा ३० योजनानांशतंब्रह्मन्पुनरुद्धरितातदा ॥ केनचैवप्रकारेणजगतोधरणीध्रुवा ३१ शिवादेवीमहाभागासर्वसस्यप्ररोहिणी ॥ कस्यचैवप्रभावाद्धियोजनानांशतंगता ३२

२१ । २२ । २३ । २४ । २५ । २६ पाणिनाचपेटाघातेनचेतनांहरत्प्राणान्जहार २७ । २८ । २९ । ३० केनचप्रकारेणउद्धरिता पुनरुद्धृतेतिशेषः ३१ गता अधस्तादितिशेषः ३२

३३ । ३४ । ३५ । ३६ पशवश्चगावश्चएडकामेषाश्चपशुगवेडकम ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ नतेत्वया हेमहि कुर्मिकरोमि ४४ । ४५ धूमंधूपं ज्वलयन्निति हेतौशतृप्रत्ययः यथा

केनतद्वीर्यमर्वस्वंदर्शितंपरमात्मनः ॥ एतत्सर्वंयथातत्त्वमिच्छामिद्विजसत्तम ॥ श्रोतुंविस्तरशःसर्वंत्वंहितस्यप्रतिश्रयः ३३ ॥ लोमशउवाच ॥ यत्तेऽहंपरिपृष्टोऽस्मिकथामेतांयुधिष्ठिर ॥ तत्सर्वमखिलेनेहश्रूयतांममभाषतः ३४ पुराकृतयुगेतातवर्त्तमानेभयंकरे ॥ यमत्वंकारयामासआदिदेवःपुरातनः ३५ यमत्वंकुर्वतस्तस्यदेवदेवस्यधीमतः ॥ नतत्रम्रियतेकश्चिज्जायतेवातथाऽच्युत ३६ वर्धंतेपक्षिसंघाश्चतथापशुगवेडकम् ॥ गवाश्वंचमृगाश्चैवसर्वेतेपिशिताशनाः ३७ तथापुरुषशार्दूलमानुषाश्चपरंतप ॥ सहस्रशोह्ययुतशोवर्धंतेसलिलंयथा ३८ ॥ एतस्मिन्संकुलेतातवर्त्तमानेभयंकरे ॥ अतिभाराद्वसुमतीयोजनानांशतंगता ३९ सावैव्यथितसर्वांगीभारेणाक्रांतचेतना ॥ नारायणंवरंदेवंप्रपन्नाशरणंगता ४० ॥ पृथिव्युवाच ॥ भगवंस्त्वत्प्रसादाद्धितिष्ठेयंसुचिरंत्विह ॥ भारेणास्मिसमाक्रांतानशक्नोमिस्मवर्तितुम् ४१ ममेमंभगवन्भारंव्यपनेतुंत्वमर्हसि ॥ शरणागताऽस्मितेदेवप्रसादंकुरुमेविभो ४२ तस्यास्तद्वचनंश्रुत्वाभगवानक्षरःप्रभुः ॥ प्रोवाचवचनंहृष्टःश्रव्याक्षरसमीरितम् ४३ ॥ ॥ विष्णुरुवाच ॥ ॥ नतेमहिभयंकार्यंभारार्तेवसुधारिणि ॥ अयमेवंतथाकुर्मियथालघ्वीभविष्यसि ४४ ॥ लोमशउवाच ॥ ॥ सतांविसर्जयित्वातुवसुधांशैलकुंडलाम् ॥ ततोवराहःसंवृत्तएकशृंगोमहाद्युतिः ४५ रक्ताभ्यांनयनाभ्यांतुभयमुत्पादयन्निव ॥ धूमंचज्वलयँल्लक्ष्म्यातत्रदेशेव्यवर्धत ४६ सगृहीत्वावसुमतींशृंगेणैकेनभास्वता ॥ योजनानांशतंवीरसमुद्धरतिसोऽक्षरः ४७ तस्यांचोद्धार्यमाणायांसंक्षोभःसमजायत ॥ देवाःसंक्षुभिताःसर्वेऋषयश्चतपोधनाः ४८ हाहाभूतमभूत्सर्वंत्रिदिवंव्योमभूस्तथा ॥ नपर्यवस्थितःकश्चिद्देवोवामानुषोऽपिवा ४९ ततोब्रह्माणमासीनंज्वलमानमिवश्रिया ॥ देवाःसर्षिगणाश्चैवउपतस्थुरनेकशः ५० उपसर्प्यचदेवेशंब्रह्माणंलोकसाक्षिकम् ॥ भूत्वाप्रांजलयःसर्वेवाक्यमुच्चारयंस्तदा ५१ लोकाःसंक्षुभिताःसर्वेव्याकुलंचचराचरम् ॥ समुद्राणांचसंक्षोभस्त्रिदशेशप्रकाशते ५२ सैषावसुमतीकृत्स्नायोजनानांशतंगता ॥ किमेतत्किंप्रभावेणयेनेदंव्याकुलंजगत् ॥ आख्यातुनोभवान्शीघ्रंविसंज्ञाःस्मेहसर्वशः ५३ ॥ ॥ ब्रह्मोवाच ॥ असुरेभ्योभयंनास्तियुष्माकंकुत्रचित्क्वचित् ॥ श्रूयतांयत्कृतेप्वेषसंक्षोभोजायतेऽमराः ५४ योऽसौसर्वत्रगःश्रीमानक्षरात्माव्यवस्थितः ॥ तस्यप्रभावात्संक्षोभस्त्रिदिवस्यप्रकाशते ५५ यैषावसुमतीकृत्स्नायोजनानांशतंगता ॥ समुद्धृतापुनस्तेनविष्णुनापरमात्मना ५६ तस्यामुद्धार्यमाणायांसंक्षोभःसमजायत ॥ एवंभवंतोजानंतुच्छिद्यतांसंशयश्चवः ५७ ॥ देवाऊचुः ॥ क्वतद्भूतंवसुमतींसमुद्धरतिहृष्टवत् ॥ तंदेशंभगवन्ब्रूहितत्रयास्यामहेवयम् ५८

यथाधूमोज्वलतितथातथाऽवर्धतेत्यर्थः ४६ अक्षरोवेदात्मा ४७ । ४८ । ४९ । ५० वाक्यमुच्चारयन्नुच्चारितवंतः ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८

नंदनेइंद्रवने अत्रएतत्समीपे ५९ । ६० । ६१ । ६२।६३ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ ॥ तेशूराइति १।२।३।४।५।६।७।८।९।१०।११।१२

ब्रह्मोवाच ॥ हंतगच्छतभद्रंवोनंदनेपश्यतास्थितम् ॥ एषोऽत्रभगवान्श्रीमान्सुपर्णःसंप्रकाशते ५९ वाराहेणैवरूपेणभगवाँल्लोकभावनः ॥ कालानलइवाभातिपृथिवीतलमुद्धरन् ६० एतस्योरसिसुव्यक्तंश्रीवत्समभिराजते ॥ पश्यध्वंविबुधाःसर्वेभूतमेतदनामयम् ६१ ॥ लोमशउवाच ॥ ततोदृष्ट्वामहात्मानंश्रुत्वाचामंत्र्यचामराः ॥ पितामहंपुरस्कृत्यजग्मुर्देवायथागतम् ६२ ॥ वैशंपायनउवाच ॥ श्रुत्वातुतांकथांसर्वेपांडवाजनमेजय ॥ लोमशादेशितेनाशुपथाजग्मुःप्रहृष्टवत् ६३ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांगंधमादनप्रवेशेद्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ वैशंपायनउवाच ॥ तेशूरास्ततधन्वानस्तूणवंतःसमार्गणाः ॥ बद्धगोधांगुलित्राणाःखड्गवंतोऽमितौजसः १ परिगृह्यद्विजश्रेष्ठान्ज्येष्ठाःसर्वधनुष्मताम् ॥ पांचालीसहिताराजन्प्रययुर्गंधमादनम् २ सरांसिसरितश्चैवपर्वतांश्चवनानिच ॥ वृक्षांश्चबहुलच्छायान्ददृशुर्गिरिमूर्धनि ३ नित्यपुष्पफलान्देशान्देवर्षिगणसेवितान् ॥ आत्मन्यात्मानमाधायवीरामूलफलाशिनः ४ चेरुरुच्चावचाकारान्देशान्विषमसंकटान् ॥ पश्यंतोमृगजातानिबहूनिविविधानिच ५ ऋषिसिद्धामरयुतंगंधर्वाप्सरसांप्रियम् ॥ विविशुस्तेमहात्मानःकिंनराचरितंगिरिम् ६ प्रविशत्स्वथवीरेषुपर्वतंगंधमादनम् ॥ चंडवातंमहद्वर्षंप्रादुरासीद्विशांपते ७ ततोरेणुःसमुद्भूतःसपत्रबहुलोमहान् ॥ पृथिवींचांतरिक्षंचद्यांचैवसहसाऽऽवृणोत् ८ नस्मप्रज्ञायतेकिंचिदावृतेव्योम्निरेणुना ॥ नचापिशेकुस्तत्कर्तुमन्योन्यस्याभिभाषणम् ९ नचापश्यंस्ततोऽन्योन्यंतमसाऽऽवृतचक्षुषः ॥ आकृष्यमाणावातेनसाश्मचूर्णेनभारत १० द्रुमाणांवातभग्नानांपततांभूतलेऽनिशम् ॥ अन्येषांचमहीजानांशब्दःसमभवन्महान् ११ द्यौःस्वित्पततिकिंभूमिर्दीर्यतेपर्वतोनुकिम् ॥ इतितेमेनिरेसर्वेपवनेनाभिमोहिताः १२ तेयथाऽनंतरान्वृक्षान्वल्मीकान्विषमाणिच ॥ पाणिभिःपरिमार्गंतोभीतावायोर्निलिल्यिरे १३ ततःकार्मुकमादायभीमसेनोमहाबलः ॥ कृष्णामादायसंगम्यतस्थावाश्रित्यपादपम् १४ धर्मराजश्चधौम्यश्चनिलिल्यातेमहावने ॥ अग्निहोत्राण्युपादायसहदेवस्तुपर्वते १५ नकुलोब्राह्मणाश्चान्येलोमशश्चमहातपाः ॥ वृक्षानासाद्यसंत्रस्तास्तत्रतत्रनिलिल्यिरे १६ मंदीभूतेतुपवनेतस्मिन्रजसिशाम्यति ॥ महद्भिर्जलधारौघैर्वर्षमभ्याजगामह १७ भृशंचटचटाशब्दोवज्राणांक्षिप्यतामिव ॥ ततस्ताश्चचलाभासश्चेरुरभ्रेषुविद्युतः १८ ततोऽश्मसहिताधाराःसंवृण्वंत्यःसमंततः ॥ प्रपेतुरनिशंतत्रशीघ्रवातसमीरिताः १९ तत्रसागरगाह्यापःकीर्यमाणाःसमंततः ॥ प्रादुरासन्सकलुषाःफेनवन्त्योविशांपते २० वहंत्योवारिबहुलंफेनोडुपपरिप्लुतम् ॥ परिसस्रुर्महाशब्दाःप्रकर्षंत्योमहीरुहान् २१ तस्मिन्नुपरतेशब्देवातेचसमतांगते ॥ गतेह्यंभसिनिम्नानिप्रादुर्भूतेदिवाकरे २२

पथामार्गेण अनन्तरान्सन्निहितान् निलिल्यिरे निलीनाः १३ संगम्यादायेत्यन्वयः गत्वागृहीत्वेत्यर्थः १४ । १५ । १६ । १७ । १८ अश्मसहिताःकरकासहिताः १९ । २० वारिवहंत्योनद्यः २१ । २२

२३ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ ॥ ॥ ॥ क्रोशमात्रमिति १ । २ । ३ । ४ । ५ । ६ । ७

निर्जग्मुस्तेशनैःसर्वेसमाजग्मुश्चभारत ॥ प्रतस्थिरेपुनर्वीराःपर्वतंगंधमादनम् २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांगंधमादनप्रवेशेत्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ वैशंपायनउवाच ॥ क्रोशमात्रंप्रयातेषुपांडवेषुमहात्मसु ॥ पद्भ्यामनुचितागंतुंद्रौपदीसमुपाविशत् १ श्रांतादुःखपरीताचवातवर्षेणतेनच ॥ सौकुमार्याच्चपांचालीसंमुमोहतपस्विनी २ साकंपमानामोहेनबाहुभ्यामसितेक्षणा ॥ वृत्ताभ्यामनुरूपाभ्यामूरूसमवलंबत ३ आलंबमानासहितावूरूगजकरोपमौ ॥ पपातसहसाभूमौवेपंतीकदलीयथा ४ तांपतंतींवरारोहांभज्यमानांलतामिव ॥ नकुलःसमभिद्रुत्यपरिजग्राहवीर्यवान् ५ ॥ नकुलउवाच ॥ राजन्पंचालराजस्यसुतेयमसितेक्षणा ॥ श्रांतानिपतिताभूमौतामवेक्षस्वभारत ६ अदुःखार्हापरंदुःखंप्राप्तेयंमृदुगामिनी ॥ आश्वासयमहाराजतामिमांश्रमकर्शिताम् ७ ॥ वैशंपायनउवाच ॥ राजातुवचनात्तस्यभृशंदुःखसमन्वितः ॥ भीमश्चसहदेवश्चसहसासमुपाद्रवन् ८ तामवेक्ष्यतुकौंतेयोविवर्णवदनांकृशाम् ॥ अंकमानीयधर्मात्मापर्यदेवयदातुरः ९ ॥ युधिष्ठिरउवाच ॥ कथंवेश्मसुगुप्तेषुस्वास्तीर्णशयनोचिता ॥ भूमौनिपतिताशेतेसुखार्हावरवर्णिनी १० सुकुमारौकथंपादौमुखंचकमलप्रभम् ॥ मत्कृतेऽद्यवरार्हायाःश्यामतांसमुपागतम् ११ किमिदंद्यूतकामेनमयाकृतमबुद्धिना ॥ आदायकृष्णांचरतावनेमृगगणायुते १२ सुखंप्राप्स्यसिकल्याणिपांडवान्प्राप्यवैपतीन् ॥ इतिद्रुपदराजेनपित्रादत्ताऽऽयतेक्षणा १३ तत्सर्वमनवाप्येयंश्रमशोकाध्वकर्शिता ॥ शेतेनिपतिताभूमौपापस्यममकर्मभिः १४ ॥ वैशंपायनउवाच ॥ तथालालप्यमानेतुधर्मराजेयुधिष्ठिरे ॥ धौम्यप्रभृतयःसर्वेतत्राजग्मुर्द्विजोत्तमाः १५ तेसमाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ॥ रक्षोघ्नांश्चतथामंत्राञ्जेपुश्चक्रुश्चतेक्रियाः १६ पठ्यमानेषुमंत्रेषुशांत्यर्थंपरमर्षिभिः ॥ स्पृश्यमानाकरैःशीतैःपांडवैश्चमुहुर्मुहुः १७ सेव्यमानाचशीतेनजलमिश्रेणवायुना ॥ पांचालीसुखमासाद्यलेभेचेतःशनैःशनैः १८ परिगृह्यचतांदीनांकृष्णामजिनसंस्तरे ॥ पार्थाविश्रामयामासुर्लब्धसंज्ञांतपस्विनीम् १९ तस्यायमौरक्ततलौपादौपूजितलक्षणौ ॥ कराभ्यांकिणजाताभ्यांशनकैःसंववाहतुः २० पर्याश्वासयदप्येनांधर्मराजोयुधिष्ठिरः ॥ उवाचकुरुश्रेष्ठोभीमसेनमिदंवचः २१ बहवःपर्वताभीमविषमाहिमदुर्गमाः ॥ तेषुकृष्णामहाबाहोकथंनुविचरिष्यति २२ ॥ भीमसेनउवाच ॥ त्वांराजन्राजपुत्रींचयमौचपुरुषर्षभ ॥ स्वयंनेष्यामिराजेंद्रमाविषादेमनःकृथाः २३ हैडिंबश्चमहावीर्योविहगोमद्बलोपमः ॥ वहेदनघसर्वान्नोवचनात्तेघटोत्कचः २४ ॥ वैशंपायनउवाच ॥ अनुज्ञातोधर्मराज्ञापुत्रंसस्माराराक्षसम् ॥ घटोत्कचस्तुधर्मात्मास्मृतमात्रःपितुस्तदा २५

८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ विहगइवविहगःखेचरः २४ । २५

२६ । २७ । २८ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ॥ धर्मज्ञइति १ । २ । ३ । ४ । ५ । ६ वक्ष्यंतिवहनंकरिष्यंति ७

कृतांजलिरुपातिष्ठदभिवाद्याथपांडवान् ॥ ब्राह्मणांश्चमहाबाहुःसचतैरभिनंदितः २६ उवाचभीमसेनंसपितरंभीमविक्रमम् ॥ स्मृतोऽस्मिभवताशीघ्रंशुश्रूषुरहमागतः २७ आज्ञापयमहाबाहोसर्वंकर्ताऽस्म्यसंशयम् ॥ तच्छ्रुत्वाभीमसेनस्तुराक्षसंपरीषस्वजे २८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांगंधमादनप्रवेशेचतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ युधिष्ठिरउवाच ॥ धर्मज्ञोबलवान्शूरःसत्योराक्षसपुंगवः ॥ भक्तोऽस्मानौरसःपुत्रोभीमगृह्णातुमाचिरम् १ तवबाहुबलेनाहमतिभीमपराक्रम ॥ अक्षतःसहपांचाल्यागच्छेयंगंधमादनम् २ ॥ वैशंपायनउवाच ॥ भ्रातुर्वचनमाज्ञायभीमसेनोघटोत्कचम् ॥ आदिदेशनरव्याघ्रस्तनयंशत्रुकर्शनम् ३ ॥ भीमसेनउवाच ॥ हैडिंबेयपरिश्रांतातवमाताऽपराजिता ॥ त्वंचकामगमस्तातबलवान्वहतांखग ४ स्कंधमारोप्यभद्रंतेमध्येऽस्माकंविहायसा ॥ गच्छनीचिकयागत्यायथाचैनांनपीडयेः ५ ॥ ॥ घटोत्कचउवाच ॥ धर्मराजंचधौम्यंचकृष्णांचयमजौतथा ॥ एकोऽप्यहमलंवोढुंकिमुताद्यसहायवान् ६ अन्येचशतशःशूराविहंगाःकामरूपिणः ॥ सर्वान्वोब्राह्मणैःसार्धंवक्ष्यंतिसहिताऽनघ ७ एवमुक्त्वाततःकृष्णामुवाहसघटोत्कचः ॥ पांडूनांमध्यगोवीरःपांडवानपिचापरे ८ लोमशःसिद्धमार्गेणजगामानुपमद्युतिः ॥ स्वेनैवसप्रभावेणद्वितीयइवभास्करः ९ ब्राह्मणांश्चापितान्सर्वान्समुपादायराक्षसाः ॥ नियोगाद्राक्षसेंद्रस्यजग्मुर्भीमपराक्रमाः १० एवंसुरमणीयानिवनान्युपवनानिच ॥ आलोकयन्तस्तेजग्मुर्विशालांबदरींप्रति ११ तेत्वाशुगतिभिर्वीराराक्षसैस्तैर्महाजवैः ॥ उह्यमानाययुःशीघ्रंमहदध्वानमल्पवत् १२ देशान्म्लेच्छजनाकीर्णान्नानारत्नाकरायुतान् ॥ ददृशुर्गिरिपादांश्चनानाधातुसमाचितान् १३ विद्याधरसमाकीर्णान्युतान्वानरकिन्नरैः ॥ तथाकिंपुरुषैश्चैवगंधर्वैश्चसमंततः १४ मयूरैश्चमरैश्चैववानरैरुरुभिस्तथा ॥ वराहैर्गवयैश्चैवमहिषैश्चसमावृतान् १५ नदीजालसमाकीर्णान्नानापक्षियुतान्बहून् ॥ नानाविधमृगैर्जुष्टान्वानरैश्चोपशोभितान् १६ समदैश्चापिविहगैःपादपैरन्वितांस्तथा ॥ तेऽवतीर्यबहून्देशानुत्तरांश्चकुरूनपि १७ ददृशुर्विविधाश्चर्यंकैलासंपर्वतोत्तमम् ॥ तस्याभ्याशेतुददृशुर्नरनारायणाश्रमम् १८ उपेतंपादपैर्दिव्यैःसदापुष्पफलोपगैः ॥ ददृशुस्तांचबदरींवृत्तस्कंधांमनोरमाम् १९ स्निग्धामविरलच्छायांश्रियापरमयायुताम् ॥ पत्रैःस्निग्धैरविरलैरुपेतांमृदुभिःशुभाम् २० विशालशाखांविस्तीर्णामतिद्युतिसमन्विताम् ॥ फलैरुपचितैर्दिव्यैराचितांस्वादुभिर्भृशम् २१ मधुस्रवैःसदादिव्यांमहर्षिगणसेविताम् ॥ मदप्रमुदितैर्नित्यंनानाद्विजगणैर्युताम् २२ अदंशमशकेदेशेबहुमूलफलोदके ॥ नीलशाद्वलसंछन्नेदेवगंधर्वसेविते २३ सुसमीकृतभूभागेस्वभावविहितेशुभे ॥ जातांहिममृदुस्पर्शेदेशेऽपहतकंटके २४ तामुपेत्यमहात्मानःसहतैर्ब्राह्मणर्षभैः ॥ अवतेरुस्ततःसर्वेराक्षसस्कंधतःशनैः २५



८ । ९ । १० । ११ । १२ रत्नाकरैराससंताद्युतान् १३ । १४ । १५ । १६ । १७ अभ्यासेसमीपे १८ । १९ । २० । २१ । २२ । २३ । २४ स्वभावतएवविशेषेणहितेस्वभावविहिते जातांबदरीम् २५ ॥

२६ । २७ महर्षिगणसंबाधंऋषिगणव्याप्तं ब्राह्म्यालक्ष्म्याऋग्यजुःसामात्मिकया । 'ऋचःसामानियजूंषिसाहिश्रीरमृतासताम्'इतिश्रुतेः २८ सुष्ठुसंमृष्टं समार्जनमनुलेपनंचयत्रतत् २९ अग्निशरणैरग्न्यगारैः आचितंव्याप्तं कठिनैःशिक्यैःकरंडैर्वा ३० । ३१ देवचर्यासत्यसंकल्पत्वादिकातयाउपशोभितम् ३२ । ३३ ब्रह्मभूतैर्ब्रह्मवित्त्वेनब्रह्मभावंगतैः तथाचश्रुतिः ब्रह्मविद्ब्रह्मैवभवतीति ३४ । ३५ । ३६

ततस्तमाश्रमंरम्यंनरनारायणाश्रितम् ॥ ददृशुःपांडवाराजन्सहिताद्विजपुंगवैः २६ तमसारहितंपुण्यमनामृष्टंरवेःकरैः ॥ क्षुत्तृट्शीतोष्णदोषैश्चवर्जितंशोकनाशनम् २७ महर्षिगणसंबाधंब्राह्म्यालक्ष्म्यासमन्वितम् ॥ दुष्प्रवेशंमहाराजनरैर्धर्मबहिष्कृतैः २८ बलिहोमार्चितंदिव्यंसुसंमृष्टानुलेपनम् ॥ दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् २९ विशालैरग्निशरणैःस्रुग्भांडैराचितंशुभैः ॥ महद्भिस्तोयकलशैःकठिनैश्चोपशोभितम् ३० शरण्यंसर्वभूतानांब्रह्मघोषनिनादितम् ॥ दिव्यमाश्रयणीयंतमाश्रमंश्रमनाशनम् ३१ श्रियायुतमनिर्देश्यंदेवचर्योपशोभितम् ॥ फलमूलाशनैर्दान्तैश्चारुकृष्णाजिनांबरैः ३२ सूर्यवैश्वानरसमैस्तपसाभावितात्मभिः ॥ महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेंद्रियैः ३३ ब्रह्मभूतैर्महाभागैरुपेतंब्रह्मवादिभिः ॥ सोऽभ्यगच्छन्महातेजास्तानृषीन्प्रयतःशुचिः ३४ भ्रातृभिःसहितोधीमान्धर्मपुत्रोयुधिष्ठिरः ॥ दिव्यज्ञानोपपन्नास्तेदृष्ट्वाप्राप्तंयुधिष्ठिरम् ३५ अभ्यगच्छंतसुप्रीताःसर्वएवमहर्षयः ॥ आशीर्वादान्प्रयुंजानाःस्वाध्यायनिरताभृशम् ३६ प्रीतास्तेतस्यसत्कारंविधिनापावकोपमाः ॥ उपाजह्रुश्चसलिलंपुष्पमूलफलंशुचि ३७ सतैःप्रीत्याऽथसत्कारमुपनीतंमहर्षिभिः ॥ प्रयतःप्रतिगृह्याथ धर्मराजोयुधिष्ठिरः ३८ तंशक्रसदनप्रख्यंदिव्यगंधंमनोरमम् ॥ प्रीतःस्वर्गोपमंपुण्यंपांडवःसहकृष्णया ३९ विवेशशोभयायुक्तंभ्रातृभिश्चसहानघ ॥ ब्राह्मणैर्वेदवेदांगपारगैश्चसहस्रशः ४० तत्रापश्यतधर्मात्मादेवदेवर्षिपूजितम् ॥ नरनारायणस्थानंभागीरथ्योपशोभितम् ४१ पश्यंतस्तेनरव्याघ्रारेमिरेतत्रपांडवाः ॥ मधुस्रवफलंदिव्यंब्रह्मर्षिगणसेवितम् ४२ तदुपेत्यमहात्मानस्तेऽवसन्ब्राह्मणैःसह ॥ मुदायुक्तामहात्मानोरेमिरेतत्रतेतदा ४३ आलोकयंतोमैनाकंनानाद्विजगणायुतम् ॥ हिरण्यशिखरंचैवतच्चबिंदुसरःशिवम् ४४ तस्मिन्विहरमाणाश्चपांडवाःसहकृष्णया ॥ मनोज्ञकाननवरेसर्वर्तुकुसुमोज्ज्वले ४५ पादपैःपुष्पविकचैःफलभारावनामिभिः ॥ शोभितेसर्वतोरम्यैःपुंस्कोकिलगणायुतैः ४६ स्निग्धपत्रैरविरलैःशीतच्छायैर्मनोरमैः ॥ सरांसिचविचित्राणिप्रसन्नसलिलानिच ४७ कमलैःसोत्पलैश्चैव भ्राजमानानिसर्वशः ॥ पश्यंतश्चारुरूपाणिरेमिरेतत्रपांडवाः ४८ पुण्यगंधःसुखस्पर्शोववौतत्रसमीरणः ॥ ह्लादयन्पांडवान्सर्वान्द्रौपद्यासहितान्प्रभो ४९ भागीरथींसुतीर्थांचसीतांविमलपंकजाम् ॥ मणिप्रवालप्रस्तारांपादपैरुपशोभिताम् ५० दिव्यपुष्पसमाकीर्णांमनःप्रीतिविवर्धनीम् ॥ वीक्षमाणामहात्मानोविशालांबदरीमनु ५१ तस्मिन्देवर्षिचरितेदेशेपरमदुर्गमे ॥ भागीरथीपुण्यजलेतर्पयांचक्रिरेतदा ५२

सत्कारंचक्रुरितिशेषः ३७ । ३८ । ३९ । ४० । ४१ । ४२ तदुपेत्यस्थानंप्राप्य ४३ । ४४ । ४५ पुष्पविकचैर्विकसितकुसुमैः ४६ । ४७ । ४८ । ४९ सीतांनामतः प्रस्तारःसोपानपादगणादिरूपः घट्ट इत्यर्थः ५० । ५१ । ५२

५३ । ५४ । इत्यारण्यकेपर्वणि नैलकंठीयेभारतभावदीपे पंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ ॥ तत्रेति १ पूर्वोत्तरेऐशानकोणे २ । ३ शुभाकल्याणी शुभंशोभायुतं सौगंधिकंपद्मजातिभेदः ४ गंधेति संस्थानमाकारः ५ हरआहर इदमेतज्जातीयं ६ । ७ । ८ । ९ । १० प्रभिन्नोमत्तः ११ ग्लानिर्वैक्लव्यंदेहचित्तयोरवसादौ भयंतत्कारणंस्वोच्छेदबुद्धिः भयाभावादेवमयायत्नेनगंतव्यमित्यादरः संभ्रमः

देवान्नृषींश्चकौंतेयाःपरमंशौचमास्थिताः ॥ तत्रतेतर्पयंतश्चजपंतश्चकुरूद्वहाः ५३ ब्राह्मणैःसहितावीराह्यवसन्पुरुषर्षभाः ॥ कृष्णायास्तत्रपश्यंतःक्रीडितान्यमरप्रभाः ॥ विचित्राणिनरव्याघ्रारेमिरेतत्रपांडवाः ५४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांगंधमादनप्रवेशेपंचचत्वारिंशदधिकशततमोऽध्यायः १४५ ॥ ॥ ॥ वैशंपायनउवाच ॥ तत्रतेपुरुषव्याघ्राःपरमंशौचमास्थिताः ॥ षड्रात्रमवसन्वीराधनंजयदिदृक्षवः १ ततःपूर्वोत्तरेवायुःप्लवमानोयदृच्छया ॥ सहस्रपत्रमर्काभंदिव्यंपद्ममुपाहरत् २ तदवैक्षतपांचालीदिव्यगंधंमनोरमम् ॥ अनिलेनाहृतंभूमौपतितंजलजंशुचि ३ तच्छुभाशुभमासाद्यसौगंधिकमनुत्तमम् ॥ अतीवमुदिताराजन्भीमसेनमथाब्रवीत् ४ पश्यदिव्यंसुरुचिरंभीमपुष्पमनुत्तमम् ॥ गंधसंस्थानसंपन्नंमनसोममनंदनम् ५ इदंचधर्मराजायप्रदास्यामिपरंतप ॥ हरेदंममकामायकाम्यकेपुनराश्रमे ६ यदितेऽहंप्रियापार्थबहूनीमान्युपाहर ॥ तान्यहंनेतुमिच्छामिकाम्यकंपुनराश्रमम् ७ एवमुक्त्वाशुभापांगीभीमसेनमनिंदिता ॥ जगामपुष्पमादायधर्मराजायतस्तदा ८ अभिप्रायंतुविज्ञायमहिष्याःपुरुषर्षभः ॥ प्रियायाःप्रियकामःसप्रायाद्भीमोमहाबलः ९ वातंतमेवाभिमुखोयतस्तत्पुष्पमागतम् ॥ आजिहीर्षुर्जगामाशुसपुष्पाण्यपराण्यपि १० रुक्मपृष्ठंधनुर्गृह्यशरांश्चाशीविषोपमान् ॥ मृगराडिवसंक्रुद्धःप्रभिन्नइवकुंजरः ११ ददृशुःसर्वभूतानिमहाबाणधनुर्धरम् ॥ नग्लानिर्नचवैक्लव्यंनभयंनचसंभ्रमः ॥ कदाचिज्जुषतेपार्थमात्मजंमातरिश्वनः १२ द्रौपद्याःप्रियमन्विच्छन्सबाहुबलमाश्रितः १३ व्यपेतभयसंमोहःशैलमभ्यपतद्बली ॥ सतंद्रुमलतागुल्मच्छन्नंनीलशिलातलम् १४ गिरिंचचारारिहरःकिन्नराचरितंशुभम् ॥ नानावर्णधरैश्चित्रंधातुद्रुममृगांडजैः १५ सर्वभूषणसंपूर्णंभूमेर्भुजमिवोच्छ्रितम् ॥ सर्वत्ररमणीयेषुगंधमादनसानुषु १६ सक्तचक्षुरभिप्रायान्हृदयेनानुचिंतयन् ॥ पुंस्कोकिलनिनादेषुषट्पदाचरितेषुच १७ बद्धश्रोत्रमनश्चक्षुर्जगामामितविक्रमः ॥ आजिघ्रन्सममहातेजाःसर्वर्तुकुसुमोद्भवम् १८ गंधमुद्धतमुद्दामोवनेमत्तइवद्विपः ॥ वीज्यमानःसुपुण्येननानाकुसुमगंधिना १९ पितुःसंस्पर्शशीतेनगंधमादनवायुना ॥ ह्रियमाणश्रमःपित्रासंप्रहृष्टतनूरुहः २० सयक्षगंधर्वसुरब्रह्मर्षिगणसेवितम् ॥ विलोकयामासतदापुष्पहेतोररिंदमः २१ विषमच्छेदैरचितैरनुलिप्तइवांगुलैः ॥ बलिभिर्धातुविच्छेदैःकांचनांजनराजतैः ॥ सपक्षमिवनृत्यंतंपार्श्वलग्नैःपयोधरैः २२

सोऽपितंनजुषतेभवने तत्रहेतुः आत्मजमिति मातरिश्वनोवायोः मार्थः १२ । १३ । १४ । १५ । १६ अभिप्रायान्देवर्षिगंधर्वादिलीलोन्नयनहेतून्पुष्पकुशादिसंस्तरान् १७ । १८ । १९ पितुर्यथापुत्रस्पर्शः शीतस्तादृक्स्पर्शवतावायुनेत्यर्थः पित्रावायुना २० । २१ धातुविच्छेदैर्धातुभेदैः अंगुलेरिवविषमच्छेदैःसप्तपर्णादिभिर्नानाधातुरंजितपत्रैःरचितैः बलिभिस्त्रिपुंड्राकारैरनुलिप्तइवेत्यर्थः । आंजनेतिकृष्णधातुग्रहणं पीतकृष्णश्वेतधातुभिरित्यर्थः पयोधरैर्मेघैः २२

दरीविलगृहं कंदरंमहाप्रपातः अभिरामादरीप्रभृतयो यस्मिन् २३ विषाणाग्रैर्दन्ताग्रैः । 'विषाणंकुष्ठकेक्ष्वीवंत्रिषुशृंगेभदंतयोः' इतिमेदिनी । शिलाःसमपाषाणाःशयनासनयोग्याः उपलास्तदन्ये २४ शष्पं वालतृणं कवलोग्रासस्तद्युक्तैः २५ । २६ । २७ कनकवर्णाभःपीतदीप्तिः सिंहसंहननःसिंहवद्दृढांगः २८ वारणानामपिवारणोनिवारकःसंग्रामादौ विचेष्टितैर्व्यावृत्ताभिर्निश्चेष्टाभिरेकाग्राभिरित्यर्थः २९ रूपस्य

मुक्ताहारैरिवचितंच्युतैःप्रस्रवणोदकैः ॥ अभिरामदरीकुंजनिर्झरोदककंदरम् २३ अप्सरोनूपुररवैःप्रनृत्तवरबर्हिणम् ॥ दिग्वारणविषाणाग्रैर्घृष्टोपलशिलातलम् २४ स्रस्तांशुकमिवाक्षोभ्यैर्निम्नगानिःसृतैर्जलैः ॥ सशष्पकवलैःस्वस्थैरदूरपरिवर्तिभिः २५ भयानभिज्ञैर्हरिणैःकौतूहलनिरीक्षितः ॥ चालयानःस्ववेगेनलताजालान्यनेकशः २६ आक्रीडमानोहृष्टात्माश्रीमान्वायुसुतोययौ ॥ प्रियामनोरथंकर्तुमुद्यतश्चारुलोचनः २७ प्रांशुःकनकवर्णाभःसिंहसंहननोयुवा ॥ मत्तवारणविक्रांतो मत्तवारणवेगवान् २८ मत्तवारणताम्राक्षोमत्तवारणवारणः ॥ प्रियपार्श्वोपविष्टाभिर्व्यावृत्ताभिर्विचेष्टितैः २९ यक्षगंधर्वयोषाभिरदृश्याभिर्निरीक्षितः ॥ नवावतारंरूपस्यविक्रीडन्निवपांडवः ३० चचाररमणीयेषुगंधमादनसानुषु ॥ संस्मरन्विविधान्क्लेशान्दुर्योधनकृतान्बहून् ३१ द्रौपद्यावनवासिन्याःप्रियंकर्तुंसमुद्यतः ॥ सोऽचिंतयद्गतेस्वर्गमर्जुनेमयिचागते ३२ पुष्पहेतोःकथंत्वार्यःकरिष्यतियुधिष्ठिरः ॥ स्नेहान्नरवरोनूनमविश्वासाद्बलस्यच ३३ नकुलंसहदेवंचनमोक्ष्यतियुधिष्ठिरः ॥ कथंतुकुसुमावाप्तिःस्याच्छीघ्रमितिचिंतयन् ३४ प्रतस्थेनरशार्दूलःपक्षिराडिववेगितः ॥ सज्जमानमनोदृष्टिःफुल्लेषुगिरिसानुषु ३५ द्रौपदीवाक्यपाथेयोभीमःशीघ्रतरंययौ ॥ कंपयन्मेदिनींपद्भ्यांनिर्घातइवपर्वसु ३६ त्रासयन्गजयूथानिवातरंहावृकोदरः ॥ सिंहव्याघ्रमृगांश्चैवमर्दयानोमहाबलः ३७ उन्मूलयन्महावृक्षान्पोथयंस्तरसाबली ॥ लतावल्लीश्चवेगेनविकर्षन्पांडुनंदनः ॥ उपर्युपरिशैलाग्रमारुरुक्षुरिवद्विपः ३८ विनर्दमानोऽतिभृशंसविद्युदिवतोयदः ॥ तेनशब्देनमहताभीमस्यप्रतिबोधिताः ३९ गुहांसंतत्यजुर्व्याघ्रानिलिल्युर्वनवासिनः ॥ समुत्पेतुःखगास्त्रस्तामृगयूथानिदुद्रुवुः ४० ऋक्षाश्चोत्ससृजुर्वृक्षांस्तत्यजुर्हरयोगुहाम् ॥ व्यजृंभंतमहासिंहामहिषाश्चावलोकयन् ४१ तेनवित्रासितानागाःकरेणुपरिवारिताः ॥ तद्वनंसंपरित्यज्यजग्मुरन्यन्महावनम् ४२ वराहमृगसंघाश्चमहिषाश्चवनेचराः ॥ व्याघ्रगोमायुसंघाश्चप्रणेदुर्गवयैःसह ४३ रथांगसाह्वदात्यूहाहंसकारंडवप्लवाः ॥ शुकाःपुंस्कोकिलाःक्रौंचाविसंज्ञाभेजिरेदिशः ४४ तथाऽन्येदर्पितानागाःकरेणुशरपीडिताः ॥ सिंहव्याघ्राश्चसंक्रुद्धाभीमसेनमथाद्रवन् ४५ शकृन्मूत्रंचमुंचानाभयविभ्रांतमानसाः ॥ व्यादितास्यामहारौद्राव्यनदन्भीषणान्रवान् ४६ ततोवायुसुतःक्रोधात्स्वबाहुबलमाश्रितः ॥ गजेनान्यान्गजान्श्रीमान्सिंहंसिंहेनवाविभुः ४७

सौंदर्यस्य । 'रूपंस्वभावेसौंदर्ये'इतिमेदिनी ३० । ३१ । ३२ । ३३ । ३४ । ३५ निर्घातउत्पातः पर्वसुउत्सवेषु ३६ । ३७ पोथयन्मर्दयन् लताभूचरा वल्लीवृक्षचरेतिभेदः ३८ । ३९ । ४० अवलोकयन् व्यलोकयन् ४१ । ४२ । ४३ रथांगसाह्वाश्चक्रसमाननामानश्चक्रवाकाइतियावत् दात्यूहोमयूरश्चातकोवा । 'दात्यूहःकालकंठके चातकेपि' इतिमेदिनी ४४ करेणुशरेणहस्तिनीकृतेनोत्तेजनेनपीडिताः 'शरस्तूत्तेजने बाणे' इतिमेदिनी ४५ । ४६ ४७

४८ । ४९ । ५० । ५१ आस्रावी मत्तगजइवेत्यर्थः कदलीस्तंभान्मृगविशेषपादान । 'रंभावृक्षेऽथकदलीपताकामृगभेदयोः'इतिमेदिनी । उत्तरश्लोकाद्बलिनामित्यपकृष्यबलिनांयक्षादीनां पताकास्तंभान्वा ५२ । । ५३ ।५४ । ५५ । ५६ । ५७। ५८ नलिनोत्पलंपद्मपुष्पं ।'उत्पलीतुपर्पटयांक्लीवं कुष्ठप्रसूनयोः'इतिमेदिनी । उद्दामोबंधनशून्यः ५९ अध्यगंतुंपर्वतोपरिवनंगंतुमुद्यतः

तलप्रहारैरन्यांश्चव्यहनत्पांडवोबली ॥ तेवध्यमानाभीमेनसिंहव्याघ्रतरक्षवः ४८ भयाद्विसस्रजुर्भीमंशकृन्मूत्रंचसुस्रुवुः ॥ प्रविवेशततःक्षिप्रंतानपास्यमहाबलः ४९ वनंपांडुसुतःश्रीमान्शब्देनापूरयन्दिशः ॥ अथापश्यन्महाबाहुर्गंधमादनसानुषु ५० सुरम्यंकदलीषंडंबहुयोजनविस्तृतम् ॥ तमभ्यगच्छद्वेगेनक्षोभयिष्यन्महाबलः ५१ महागजइवास्रावीप्रभंजन्विविधान्द्रुमान् ॥ उत्पाट्यकदलीस्तंभान्बहुतालसमुच्छ्रयान् ५२ चिक्षेपतरसाभीमःसमंताद्बलिनांवरः ॥ विनदन्सुमहातेजान्नृसिंहइवदर्पितः ५३ ततःसत्वान्युपाक्रामद्बहूनिसुमहांतिच ॥ रुरुवानरसिंहांश्चमहिषांश्चजलाशयान् ५४ तेनशब्देनचैवाथभीमसेनरवेणच ॥ वनांतरगताश्चापिवित्रेसुर्मृगपक्षिणः ५५ तंशब्दंसहसाश्रुत्वामृगपक्षिसमीरितम् ॥ जलार्द्रपक्षाविहगाःसमुत्पेतुःसहस्रशः ५६ तानौदकान्पक्षिगणान्निरीक्ष्यभरतर्षभः ॥ तानेवानुसरन्रम्यंददर्शसुमहत्सरः ५७ कांचनैःकदलीषंडैर्मंदमारुतकंपितैः ॥ वीज्यमानमिवाक्षोभ्यंतीरात्तीरविसर्पिभिः ५८ तत्सरोऽथावतीर्याशुप्रभूतनलिनोत्पलम् ॥ महागजइवोद्दामश्चिक्रीडबलवद्बली ५९ विक्रीड्यतस्मिन्रुचिरमुत्ततारामितद्युतिः ॥ ततोऽध्यगंतुंवेगेनतद्वनंबहुपादपम् ६० दध्मौचशंखंस्वनवत्सर्वप्राणेनपांडवः ॥ आस्फोटयच्चबलवान्भीमःसंनादयन्दिशः ६१ तस्यशंखस्यशब्देनभीमसेनरवेणच ॥ बाहुशब्देनचोग्रेणनदंतीवगिरेर्गुहाः ६२ तंवज्रनिष्पेषसममास्फोटितमहारवम् ॥ श्रुत्वाशैलगुहासुप्तैःसिंहैर्मुक्तोमहास्वनः ६३ सिंहनादभयत्रस्तैःकुंजरैरपिभारत ॥ मुक्तोविरावःसुमहान्पर्वतोयेनपूरितः ६४ तंतुनादंततःश्रुत्वामुक्तंवारणपुंगवैः ॥ भ्रातरंभीमसेनंतुविज्ञायहनुमान्कपिः ६५ दिवंगमंरुरोधाथमार्गंभीमस्यकारणात् ॥ अनेनहिपथामावैगच्छेदितिविचार्यसः ६६ आस्तएकायनेमार्गेकदलीषंडमंडिते ॥ भ्रातुर्भीमस्यरक्षार्थंतंमार्गमवरुध्यवै ६७ माऽत्रप्राप्स्यतिशापंवाधर्षणांवेतिपांडवः ॥ कदलीषंडमध्यस्थोह्येवंसंचिंत्यवानरः ६८ प्राजृंभतमहाकायोहनूमान्नामवानरः ॥ कदलीषंडमध्यस्थोनिद्रावशगतस्तदा ६९ जृंभमाणःसुविपुलंशक्रध्वजमिवोच्छ्रितम् ॥ आस्फोटयच्चलांगूलमिंद्राशनिसमस्वनम् ७० तस्यलांगूलनिनदंपर्वतःसुगुहामुखैः ॥ उद्गारमिवगौर्नर्दन्नुत्ससर्जसमंततः ७१ लांगूलास्फोटशब्दाच्चचलितःसमहागिरिः ॥ विघूर्णमानशिखरःसमंतात्पर्यशीर्यत ७२ सलांगूलरवस्तस्यमत्तवारणनिःस्वनम् ॥ अंतर्धायविचित्रेषुचचारगिरिसानुषु ७३ सभीमसेनस्तच्छ्रुत्वासंप्रहृष्टतनूरुहः ॥ शब्दप्रभवमन्विच्छंश्चचारकदलीवनम् ७४

सन्निविशेषः ६० । ६१ । ६२ आस्फोटितउद्घाटितःबाहुघातोवा ६३ । ६४ । ६५ दिवंगमंमार्गं स्वर्गमार्गं ६६ एकायनेअतिसंकुचिते ६७ वानरःकपिः वानानिशुष्कफलानिरात्यादत्तइतिवानरःआर्हिंस्र इत्यर्थः ६८ । ६९ । ७० उद्गारंप्रतिशब्दंगौरिवउत्ससर्ज ७१ । ७२ । ७३ । ७४

७५ । ७६ बाहाःस्वस्तिकंचतुरस्रंमूलंअंसइतियावत् तत्रन्यस्तकंधरमित्यर्थः । तत्रहेतुः स्कंधेति विपुलांसत्वादित्यर्थः ७७ आभुग्नं द्विगुणीकृतम् ७८ । ७९ उडुपंचंद्रम् ८० अशोकानामशोकपुष्पाणाम् ८१

कदलीवनमध्यस्थमथपीनेशिलातले ॥ ददर्शसुमहाबाहुर्वानराधिपतिंतदा ७५ विद्युत्संपातदुष्प्रेक्षंविद्युत्संपातपिंगलम् ॥ विद्युत्संपातनिनदंविद्युत्संपातचंचलम् ७६ बाहुस्वस्तिकविन्यस्तपीनह्रस्वशिरोधरम् ॥ स्कंधभूयिष्ठकायत्वात्तनुमध्यकटीतटम् ७७ किंचिच्चाभुग्नशीर्षेणदीर्घरोमांचितेनच ॥ लांगूलेनोर्ध्वगतिनाध्वजेनेवविराजितम् ७८ ह्रस्वौष्ठंताम्रजिह्वास्यंरक्तवर्णंचलद्भ्रुवम् ॥ विवृत्तदंष्ट्रादशनंशुक्लतीक्ष्णाग्रशोभितम् ७९ अपश्यद्वदनंतस्यरश्मिवंतमिवोडुपम् ॥ वदनाभ्यंतरगतैःशुक्लैर्दंतैरलंकृतम् ८० केसरोत्करसंमिश्रमशोकानामिवोत्करम् ॥ हिरण्मयीनांमध्यस्थंकदलीनांमहाद्युतिम् ८१ दीप्यमानेनवपुषास्वर्चिष्मंतमिवानलम् ॥ निरीक्षंतममित्रघ्नंलोचनैर्मधुपिंगलैः ८२ तंवानरवरंधीमानतिकायंमहाबलम् ॥ स्वर्गपंथानमावृत्यहिमवंतमिवस्थितम् ८३ दृष्ट्वाचैनंमहाबाहुरेकंतस्मिन्महावने ॥ अथोपसृत्यतरसाविभीर्भीमस्ततोबली ८४ सिंहनादंचकारोग्रंवज्राशनिसमंबली ॥ तेनशब्देनभीमस्यवित्रेसुर्मृगपक्षिणः ८५ हनूमांश्चमहासत्वईषदुन्मील्यलोचने ॥ दृष्ट्वातमथसावज्ञंलोचनैर्मधुपिंगलैः ॥ स्मितेनचैनमासाद्यहनूमानिदमब्रवीत् ८६ ॥ ॥ हनूमानुवाच ॥ किमर्थंसरुजस्तेऽहंसुखसुप्तःप्रबोधितः ॥ ननुनामत्वयाकार्यादयाभूतेषुजानता ८७ वयंधर्मंनजानीमस्तिर्यग्योनिमुपाश्रिताः ॥ नरास्तुबुद्धिसंपन्नादयांकुर्वतिजंतुषु ८८ क्रूरेषुकर्मसुकथंदेहवाक्चित्तदूषिषु ॥ धर्मघातिषुसज्जंतेबुद्धिमंतोभवद्विधाः ८९ नत्वंधर्मंविजानासिबुधानोपासितास्त्वया ॥ अल्पबुद्धितयाबाल्यादुत्सादयसियन्मृगान् ९० ब्रूहिकस्त्वंकिमर्थंवाकिमिदंवनमागतः ॥ वर्जितंमानुषैर्भावैस्तथैवपुरुषैरपि ९१ क्वचत्वयाऽद्यगंतव्यंप्रब्रूहिपुरुषर्षभ ॥ अतःपरमगम्योयंपर्वतःसुदुरारुहः ९२ विनासिद्धगतिंवीरगतिरत्रनविद्यते ॥ देवलोकस्यमार्गोऽयमगम्योमानुषैःसदा ९३ कारुण्यात्त्वामहंवीरवारयामिनिबोधमे ॥ नातःपरंत्वयाशक्यंगंतुमाश्वसिहिप्रभो ९४ स्वागतंसर्वथैवेहतवाद्यमनुजर्षभ ॥ इमान्यमृतकल्पानिमूलानिचफलानिच ९५ भक्षयित्वानिवर्तस्वमावृथाप्राप्स्यसेवधम् ॥ ग्राह्यंयदिवचोमह्यंहितंमनुजपुंगव ९६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांभीमकदलीखंडप्रवेशेषट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वावचस्तस्यवानरेंद्रस्यधीमतः ॥ भीमसेनस्तदावीरःप्रोवाचामित्रकर्षणः १ ॥ भीमउवाच ॥ कोभवान्किंनिमित्तंवावानरंवपुरास्थितः ॥ ब्राह्मणानंतरोवर्णःक्षत्रियस्त्वांतुपृच्छति २ कौरवःसोमवंशीयःकुंत्यागर्भेणधारितः ॥ पांडवोवायुतनयोभीमसेनइतिश्रुतः ३ सवाक्यंकुरुवीरस्यस्मितेनप्रतिगृह्यतत् ॥ हनूमान्वायुतनयोवायुपुत्रमभाषत ४

८२ । ८३ । ८४ । ८५ । ८६ सरुजःसपीडः तेत्वया ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ आश्वसिहिविश्वासंकुरु ९४ । ९५ मह्यं मम ९६ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ ॥ एतदिति १ । २ । ३ । ४

वैशसंविरोधं ५ । ६ । ७ निर्गुणइति । गुणाःसत्वादयोरूपादयश्चतैर्वर्जितः अतएवपरमः कोशपंचकेहि अनात्मन्यात्मत्वममुख्यमाध्यासिकत्वात्तस्य ततोऽन्यस्तुनिरुपाधिचिन्मात्रोमुख्यआत्मासयसंभूतआकाशोघट
मिवदेहंव्याप्यस्थितः एतेनशुद्धस्त्वंपदार्थउक्तः अस्यनिर्गुणत्वेऽनुभवंप्रमाणयतिज्ञानविज्ञेयमिति ज्ञानंशास्त्रार्थध्यानजप्रमातेनज्ञेयं ज्ञातविज्ञेयमितिपाठे सर्वप्रकाशकमहंकारादिसाक्षिणमित्यर्थः तस्यावमानना

॥ हनूमानुवाच ॥ वानरोऽहंनतेमार्गंप्रदास्यामियथेप्सितम् ॥ साधुगच्छनिवर्तस्वमात्वंप्राप्स्यसिवैशसम् ५ ॥ भीमसेनउवाच ॥ वैशसंवाऽस्तुयद्वान्यन्नत्वां
पृच्छामिवानर ॥ प्रयच्छमार्गमुत्तिष्ठमामत्तःप्राप्स्यसेऽव्यथाम् ६ ॥ हनूमानुवाच ॥ नास्तिशक्तिर्ममोत्थातुंव्याधिनाक्लेशितोह्यहम् ॥ यद्यवश्यंप्रयातव्यंलंघ
यित्वाप्रयाहिमाम् ७ ॥ भीमउवाच ॥ निर्गुणःपरमात्मातुदेहंव्याप्यावतिष्ठते ॥ तमहंज्ञानविज्ञेयंनावमन्येनलंघये ८ यद्यागमैर्नविद्यांचतमहंभूतभावनम्
क्रमेयंत्वांगिरिंचैवहनूमानिवसागरम् ९ ॥ हनूमानुवाच ॥ कएषहनुमान्नामसागरोयेनलंघितः ॥ पृच्छामित्वांनरश्रेष्ठकथ्यतांयदिशक्यते १० ॥ भीमउवाच ॥
भ्रातामममगुणश्लाघ्योबुद्धिसत्वबलान्वितः ॥ रामायणेऽतिविख्यातःश्रीमान्वानरपुंगवः ११ रामपत्नीकृतेयेनशतयोजनविस्तृतः ॥ सागरःप्लवगेन्द्रेण
क्रमेणैकेनलंघितः १२ समेभ्राताममहावीर्यस्तुल्योऽहंतस्यतेजसा ॥ बलेपराक्रमेयुद्धेशक्तोऽहंतवनिग्रहे १३ उत्तिष्ठदेहिमेमार्गंपश्यमेचाद्यपौरुषम् ॥ मच्छास
नमकुर्वाणंत्वांवानेष्येयमक्षयम् १४ ॥ वैशंपायनउवाच ॥ विज्ञायतंबलोन्मत्तंबाहुवीर्येणदर्पितम् ॥ हृदयेनावहस्यैनंहनूमान्वाक्यमब्रवीत् १५ ॥ हनूमानु
वाच ॥ प्रसीदनास्तिमेशक्तिरुत्थातुंजरयाऽनघ ॥ ममानुकंपयात्वेतत्पुच्छमुत्सार्यगम्यताम् १६ ॥ वैशंपायनउवाच ॥ एवमुक्तेहनुमताहीनवीर्यपराक्र
मम् ॥ मनसाऽचिंतयद्भीमःस्वबाहुबलदर्पितः १७ पुच्छेप्रगृह्यतरसाहीनवीर्यपराक्रमम् ॥ सालोक्यमंतकस्यैनंनयाम्यद्येहवानरम् १८ सावज्ञमथवामेनस्म
यन्नजग्राहपाणिना ॥ नचाशकच्चालयितुंभीमःपुच्छंमहाकपेः १९ उच्चिक्षेपपुनर्दोर्भ्यामिंद्रायुधमिवोच्छ्रितम् ॥ नोद्धर्तुमशकद्भीमोदोर्भ्यामपिमहाबलः २०
उत्क्षिप्तभ्रूर्विवृत्ताक्षःसंहतभ्रुकुटीमुखः ॥ स्विन्नगात्रोऽभवद्भीमोनचोद्धर्तुंशशाकतम् २१ यत्नवानपितुश्रीमान्लांगूलोद्धरणोद्धुरः ॥ कपेःपार्श्वगतोभीमस्त
स्थौव्रीडानताननः २२ प्रणिपत्यचकौंतेयःप्रांजलिर्वाक्यमब्रवीत् ॥ प्रसीदकपिशार्दूलदुरुक्तंक्षम्यतांमम २३ सिद्धोवायदिवादेवोगंधर्वोवाऽथगुह्यकः ॥ पृष्टःस
न्कामयाब्रूहिकस्त्वंवानररूपधृक् २४ नचेद्गुह्यंमहाबाहोश्रोतव्यंचेद्भवेन्मम ॥ शिष्यवत्त्वांतुपृच्छामिउपपन्नोऽस्मितेनघ २५ ॥ हनूमानुवाच ॥ यत्तेममपरिज्ञानेकौ
तूहलमरिंदम ॥ तत्सर्वमखिलेनत्वंशृणुपांडवनंदन २६

शाङ्ग्रामादिवत्तदुपाधिभूतस्यशरीरस्यलंघनेनभवत्यतस्तद्वयंनकुर्वेइत्यर्थः ८ भूतभावनंभूतानांवियदादीनांजरायुजादीनांचभावनंरचनंयस्मात्तम् । आत्मनआकाशःसंभूतः आत्मनःसर्वएवआत्मानोव्युच्च
रंतीत्यादिश्रुतिभ्यः एतेनतत्पदार्थउक्तः तयोःसामानाधिकरण्यादभेदेब्रह्माद्वैतंचदर्शितम् ९ । १० । ११ क्रमेणपादविक्षेपेण १२ । १३ । १४ । १५ । १६ एवमुक्तेसति । तमित्यध्याहारः तंहीनवीर्यपराक्रमं
मनसाऽचिंतयन्मेने १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६

अहंकेसरिणःक्षेत्रेवायुनाजगदायुना ॥ जातःकमलपत्राक्षहनूमान्नामवानरः २७ सूर्यपुत्रंचसुग्रीवंशक्रपुत्रंचवालिनम् ॥ सर्वेवानरराजानस्तथावानरयूथपाः २८ उपतस्थुर्महावीर्याममचामित्रकर्षण ॥ सुग्रीवेणाभवत्प्रीतिरनिलस्याग्निनायथा २९ निकृतःसततोभ्रात्राकस्मिंश्चित्कारणांतरे ॥ ऋष्यमूकेमयासार्धंसु ग्रीवोन्यवसच्चिरम् ३० अथदाशरथिर्वीरोरामोनाममहाबलः ॥ विष्णुर्मानुषरूपेणचचारवसुधातलम् ३१ सपितुःप्रियमन्विच्छन्सहभार्यःसहानुजः ॥ सधनु र्धन्विनांश्रेष्ठोदंडकारण्यमाश्रितः ३२ तस्यभार्याजनस्थानाच्छलेनापहृताबलात् ॥ राक्षसेंद्रेणबलिनारावणेनदुरात्मना ३३ सुवर्णरत्नचित्रेणमृगरूपेणरक्षसा ॥ वंचयित्वानरव्याघ्रंमारीचेनतदाऽनघ ३४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांहनुमद्भीमसंवादेसप्तचत्वारिंशदधिकशततमो ऽध्यायः ॥ १४७ ॥ ॥ ॥ ॥ हनूमानुवाच ॥ हृतदारःसहभ्रात्रापत्नींमार्गन्सराघवः ॥ दृष्टवाञ्शैलशिखरेसुग्रीवंवानरर्षभम् १ तेनतस्याभव त्सख्यंराघवस्यमहात्मनः ॥ सहत्वावालिनंराज्येसुग्रीवमभिषिक्तवान् २ सराज्यंप्राप्यसुग्रीवःसीतायाःपरिमार्गणे ॥ वानरान्प्रेषयामासशतशोऽथसहस्रशः ३ ततोवानरकोटीभिःसहितोऽहंनरर्षभ ॥ सीतांमार्गन्महाबाहोप्रयातोदक्षिणांदिशम् ४ ततःप्रवृत्तिःसीतायागृध्रेणसुमहात्मना ॥ संपातिनासमाख्याताराव स्यनिवेशने ५ ततोऽहंकार्यसिद्ध्यर्थंरामस्याक्लिष्टकर्मणः ॥ शतयोजनविस्तारमर्णवंसहसाप्लुतः ६ अहंस्ववीर्यादुत्तीर्यसागरंमकरालयम् ॥ सुतांजनकराजस्यसीतां सुरसुतोपमाम् ७ दृष्टवान्भरतश्रेष्ठरावणस्यनिवेशने ॥ समेत्यतामहंदेवींवैदेहींराघवप्रियाम् ८ दग्ध्वालंकामशेषेणसाट्टप्राकारतोरणाम् ॥ प्रत्यागतश्चास्यपुनर्नामत त्रप्रकाश्यवै ९ मद्वाक्यंचावधार्याशुरामोराजीवलोचनः ॥ सबुद्धिपूर्वंसैन्यस्यबद्ध्वासेतुंमहोदधौ १० वृतोवानरकोटीभिःसमुत्तीर्णोमहार्णवम् ॥ ततोरामेणवीर्येणह त्वातान्सर्वराक्षसान् ११ रणेतुराक्षसगणंरावणंलोकरावणम् ॥ निशाचरेंद्रंहत्वातुसभ्रातृसुतबांधवम् १२ राज्येऽभिषिच्यलंकायांराक्षसेंद्रंविभीषणम् ॥ धार्मिकंभ क्तिमंतंचभक्तानुगतवत्सलम् १३ ततःप्रत्याहृताभार्यानष्टावेदश्रुतिर्यथा ॥ तयैवसहितःसाध्व्यापत्न्यारामोमहायशाः १४ गत्वाततोऽतित्वरितःस्वांपुरींरघुनंदनः ॥ अध्यावसत्ततोऽयोध्यामयोध्यांद्विषतांप्रभुः १५ ततःप्रतिष्ठितोराज्येरामोनृपतिसत्तमः ॥ वरंमयायाचितोऽसौरामोराजीवलोचनः १६ यावद्रामकथेयंतेभवेल्लोकेषुश त्रुहन् ॥ तावज्जीवेयमित्येवंतथास्त्वितिचसोऽब्रवीत् १७ सीताप्रसादाच्चसदामामिहस्थमरिंदम ॥ उपतिष्ठंतिदिव्याहिभोगाभीमयथेप्सिताः १८ दशवर्षसहस्राणि दशवर्षशतानिच ॥ राज्यंकारितवान्रामस्ततःस्वभवनंगतः १९



ऽध्यायः ॥ १४७ ॥ ॥ हृतदारइति १ । २ । ३ । ४ । ५ । ६ । ७ समेत्यविदित्वासंभाषणादिनानिश्चित्येत्यर्थः ८ अस्यरामस्य तत्रलंकायाम् ९ अवधार्यनिश्चित्य १० । ११ लोकरावणंलोकपी डाकरम् १२ । १३ । १४ अयोध्यांयोद्धुमशक्याम् १५ । १६ । १७ । १८ कारितवान् कृतवान् स्वार्थेणिच् स्वभवनंवैकुंठम् १९

२० । २१ । २२ ॥ इत्यारण्यकेपर्वणिनैलकंठीये भारतभावदीपे अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ ॥ ॥ एवमिति १ । २ । ३ । ४ हरिर्वानरः ५ । ६ । ७ । ८ वर्ष्मशरीरम् ९ भावान्तत्त्वानि कर्मशुभाशुभं वीर्यंफलोदयपर्यंतंशक्तिः भवाभवावुत्पत्तिविनाशौ ऐश्वर्यानैश्वर्येवा १० कृतमेवसर्वंकृतकृत्याएवेत्यर्थः ततएवहेतोःकृतयुगंनाम ११ गुणतांमुख्यमप्यमुख्यतांगतं १२ । १३ नसामेति । त्रयीधर्मस्यचित्तशुद्ध्यर्थत्वात्तस्याश्चतदानींस्वभावसिद्धत्वान्नसामादीन्यासन् मानवीक्रियाकृष्याद्यारंभरूपा किंतु अभिध्यायफलंसंकल्पादेवसर्वंसंपद्यतइत्यर्थः १४ वैकृतंकपटं १५ विग्रहोवैरं तंद्रीआ

तदिहाप्सरसस्तातगंधर्वाश्चसदाऽनघ ॥ तस्यवीरस्यचरितंगायंतोरमयंतिमाम् २० अयंचमार्गोमर्त्यानामगम्यःकुरुनंदन ॥ ततोऽहंरुद्धवान्मार्गंतवेमंदेवसेवितम् २१ धर्षयेद्वाशपेद्वाऽपिमाकश्चिदितिभारत ॥ दिव्योदेवपथोह्येषनात्रगच्छंतिमानुषाः ॥ यदर्थमागतश्चासिअतएवसरश्चतत् २२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांहनुमद्भीमसंवादेअष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तोमहाबाहुर्भीमसेनःप्रतापवान् ॥ प्रणिपत्यततःप्रीत्याभ्रातरंहृष्टमानसः १ उवाचश्लक्ष्णयावाचाहनूमंतंकपीश्वरम् ॥ मयाधन्यतरोनास्तियदार्यंदृष्टवानहम् २ अनुग्रहोमेसुमहांस्तृप्तिश्चतवदर्शनात् ॥ एवंतुकृतमिच्छामित्वयाऽद्यप्रियमात्मनः ३ यत्तेतदासीत्प्लवतःसागरंमकरालयम् ॥ रूपमप्रतिमंवीरतदिच्छामिनिरीक्षितुम् ४ एवंतुष्टोभविष्यामिश्रद्धास्यामिचतेवचः ॥ एवमुक्तःसतेजस्वीप्रहस्यहरिरब्रवीत् ५ नतच्छक्यंत्वयाद्रष्टुंरूपंनान्येनकेनचित् ॥ कालावस्थातदाह्यन्यानसावर्ततिसांप्रतम् ६ अन्यःकृतयुगेकालस्त्रेतायांद्वापरेपरः ॥ अयंप्रध्वंसनःकालोनाद्यतद्रूपमस्तिमे ७ भूमिर्नद्योनगाःशैलाःसिद्धादेवामहर्षयः ॥ कालंसमनुवर्तंतेयथाभावायुगेयुगे ८ बलवर्ष्मप्रभावाहिप्रहीयंत्युद्भवंतिच ॥ तदलंबततद्रूपंद्रष्टुंकुरुकुलोद्वह ॥ युगंसमनुवर्तामिकालोहिदुरतिक्रमः ९ ॥ भीमउवाच ॥ युगसंख्यांसमाचक्ष्वआचारंचयुगेयुगे ॥ धर्मकामार्थभावांश्चकर्मवीर्येभवाभवौ १० ॥ हनूमानुवाच ॥ कृतंनामयुगंतातयत्रधर्मःसनातनः ॥ कृतमेवनकर्तव्यंतस्मिन्कालेयुगोत्तमे ११ नतत्रधर्माःसीदंतिक्षीयंतेनचवैप्रजाः ॥ ततःकृतयुगंनामकालेनगुणतांगतम् १२ देवदानवगंधर्वयक्षराक्षसपन्नगाः ॥ नासन्कृतयुगेतातदानक्रयविक्रयः १३ नसामऋग्यजुर्वर्णाःक्रियानासीच्चमानवी ॥ अभिध्यायफलंतत्रधर्मःसंन्यासएवच १४ नतस्मिन्युगसंसर्गेव्याधयोनेंद्रियक्षयः ॥ नासूयानापिरुदितंनदर्पोनापिवैकृतम् १५ नविग्रहःकुतस्तंद्रीनद्वेषोनचपैशुनम् ॥ नभयंनापिसंतापोनचेर्ष्यानचमत्सरः १६ ततःपरमकंब्रह्मसागतिर्योगिनांपरा ॥ आत्माचसर्वभूतानांशुक्लोनारायणस्तदा १७ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चकृतलक्षणाः ॥ कृतेयुगेसमभवन्स्वकर्मनिरताःप्रजाः १८

लस्यं द्वेषःपरानिष्टचिंतनं पैशुनंतद्भाषणं ईर्ष्याअक्षमा मत्सरःपरोत्कर्षासहिष्णुत्वं १६ ततोऽसूयादित्यागात् परमकंपरमानंदात्मकंब्रह्मप्राप्यतइतिशेषः गतिःप्राप्यं आत्मेतिश्वेतरक्तपीतकृष्णरूपाणिक्रमेण कृतादिषुभवंतीतिकृतेनारायणःशुक्लइत्युक्तम् १७ कृतलक्षणाःकृतानिस्वतःसिद्धानिलक्षणानिशमोदमस्तपइत्यादीनियेषांते १८

समंब्रह्मतदेवआश्रयादिर्यस्यतत्तथा ब्रह्मैवफलप्राप्तयेश्रयेत । तत्प्राप्त्यर्थएवआचारोयस्य । तस्यैवचज्ञानंकेवलंनिरुपाधिविषयं । ब्रह्मैवकर्माणिगत्यागत्यादीनियेषांते अहमग्निरहंहुतमित्यादिवचनात् १९ एकोदेवःप्रत्यगात्मा तत्रैवसदायुक्तायोगवंतः । एकोमंत्रःप्रणवः एकोविधिर्वेदांतश्रवणादिः एकाक्रियाध्यानादिः । एकएवतत्त्वप्रतिपादकोवेदोयेषांसर्वेऽपिज्ञाननिष्ठाएवनतुकेवलकर्मठाव्यसनिनोवा २० कालोदर्शादिस्तद्युक्तेनकर्मणाकाम्यफलेनेच्छितफलेनरूयादिनास्वर्गादिनावासंयोगस्तदभावात् २१ आत्मनिब्रह्मणियोगऐक्यंतेनसमायुक्तोऽयंधर्मोयोगाख्यःकृतलक्षणःकृतयुगसूचकः । यदैवयत्रैवपुंसिईदृग्धर्मो वर्धते तदैवकृतयुगमित्यर्थः चतुष्पादोऽविकलः २२ त्रैगुण्यंप्रवृत्तिप्रकाशमोहात्मकरजःसत्त्वतमसांसमाहारस्तेनवर्जितंसत्रंयज्ञक्रिया रजोमिश्रत्वात् २३ सत्येनैवप्रवृत्ताः २४ भावसंकल्पाःभावोभावनाक्रिया

समाश्रयंसमाचारंसमज्ञानंचकेवलम् ॥ तदाहिसमकर्माणोवर्णाधर्मानवाप्नुवन् १९ एकदेवसदायुक्ताएकमंत्रविधिक्रियाः ॥ पृथग्धर्मास्त्वेकवेदाधर्ममेकमनुव्रताः २० चातुराश्रम्ययुक्तेनकर्मणाकालयोगिना ॥ अकामफलसंयोगात्प्राप्नुवंतिपरांगतिम् २१ आत्मयोगसमायुक्तोधर्मोऽयंकृतलक्षणः ॥ कृतेयुगेचतुष्पादश्चातुर्वर्ण्यस्यशाश्वतः २२ एतत्कृतयुगंनामत्रैगुण्यपरिवर्जितम् ॥ त्रेतामपिनिबोधत्वंयस्मिन्सत्रंप्रवर्तते २३ पादेनह्रसतेधर्मोरक्ततांयातिचाच्युतः ॥ सत्यप्रवृत्ताश्चनराःक्रियाधर्मपरायणाः २४ ततोयज्ञाःप्रवर्तंतेधर्माश्चविविधाःक्रियाः ॥ त्रेतायांभावसंकल्पाःक्रियादानफलोपगाः २५ प्रचलंतिनवैधर्मात्तपोदानपरायणाः ॥ स्वधर्मस्थाःक्रियावंतोनरास्त्रेतायुगेऽभवन् २६ द्वापरेचयुगेधर्मोद्विभागोनःप्रवर्तते ॥ विष्णुर्वैपीततांयातिचतुर्धावेदएवच २७ ततोऽन्येचचतुर्वेदास्त्रिवेदाश्चतथापरे ॥ द्विवेदाश्चैकवेदाश्चाप्यनृचश्चतथापरे २८ एवंशास्त्रेषुभिन्नेषुबहुधानीयतेक्रिया ॥ तपोदानप्रवृत्ताचराजसीभवतिप्रजा २९ एकवेदस्यचाज्ञानाद्वेदास्तेबहवःकृताः ॥ सत्त्वस्यचेहविभ्रंशात्सत्येकश्चिदवस्थितः ३० सत्यात्प्रच्यवमानानांव्याधयोबहवोऽभवन् ॥ कामाश्चोपद्रवाश्चैवतदादैवकारिताः ३१ यैरर्द्यमानाःसुभृशंतपस्तप्यंतिमानवाः ॥ कामकामाःस्वर्गकामायज्ञांस्तन्वंतिचापरे ३२ एवंद्वापरमासाद्यप्रजाःक्षीयंत्यधर्मतः ॥ पादेनैकेनकौंतेयधर्मःकलियुगेस्थितः ३३ तामसंयुगमासाद्यकृष्णोभवतिकेशवः ॥ वेदाचाराःप्रशाम्यंतिधर्मयज्ञक्रियास्तथा ३४ ईतयोव्याधयस्तंद्रीदोषाःक्रोधादयस्तथा ॥ उपद्रवाःप्रवर्तंतेआधयःक्षुद्भयंतथा ३५ युगेष्वावर्तमानेषुधर्मोव्यावर्ततेपुनः ॥ धर्मेव्यावर्तमानेतुलोकोव्यावर्ततेपुनः ३६ लोकेक्षीणेक्षयंयांतिभावालोकप्रवर्तकाः ॥ युगक्षयकृताधर्माःप्रार्थनानिविकुर्वते ३७

अहमनेनकर्मणाइदंफलमनेनप्रकारेणकरिष्यामीत्येवंरूपा तद्विषयएवसंकल्पोयेषां अतएवक्रियादिभिःफलोपगाःफलभुजोनतुकृतवत्संकल्पसिद्धाः २५ । २६ द्विभागोनःपादद्वयहीनःचतुर्धावेदःकृतःकृत्स्नस्यैकेनधारयितुमशक्यत्वात् २७ अनृचःऋङ्मात्रेणापिहीनाअतिमांद्यात् यद्वाचतुर्वेदाइतिवेदत्रयोक्तंकर्मज्योतिष्टोमादिकमथर्वणोपनिषदुक्तंध्यानंचसहैववाऽनुतिष्ठंतीतिकर्मोपास्तिसमुच्चयउक्तः । त्रिवेदाइति केवलकर्मठाः । द्विवेदाइति स्वशाखोक्तंसंध्यावंदनादिकर्मध्यानंचानुतिष्ठंति । एकवेदाध्यानैकनिष्ठाः । अनृचःकृतकृत्याः 'विपर्यस्तोनिदिध्यासेत्किंध्यानमविपर्यये' इत्युक्तेर्ध्यानादपिविरक्ताः २८ । २९ सत्त्वस्यबुद्धेर्विभ्रंशात् क्षयात् ३० । ३१ यैर्व्याधिभिःकामैश्च ३२ । ३३ तामसंतमोगुणप्रधानंकलिं ३४ ईतयोऽतिवृष्ट्यादयः ३५ व्यावर्ततेनश्यति ३६ भावाधर्मज्ञानादयः प्रार्थनानिविकुर्वते अन्यत्प्रार्थ्यतेऽन्यत्जायतेपौष्टिकमपिकर्मविधिलोपान्नाशकंभवतीतिभावः ३७

चिरजीविनोमादृशा अपि युगानुवर्तिनःकालानुसारिणोभवंति ३८ अनर्थकेषुनिष्प्रयोजनेषु भावोऽभिनिवेशः ३९ स्वस्तिकल्याणम् ४० ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे ऊनपंचाश

एतत्कलियुगंनामअचिराद्यत्प्रवर्तते ॥ युगानुवर्तनंत्वेतत्कुर्वंतिचिरजीविनः ३८ यच्चतेमत्परिज्ञानेकौतूहलमरिंदम ॥ अनर्थकेषुकोभावःपुरुषस्यविजानतः ३९ एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि ॥ युगसंख्यांमहाबाहोस्वस्तिप्राप्नुहिगम्यताम् ४० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांकदलीषंडेहनुमद्भीमसंवादेऊनपंचाशदधिकशततमोऽध्यायः ॥ १४९ ॥ ॥ भीमसेनउवाच ॥ पूर्वरूपमदृष्ट्वातेनयास्यामिकथंचन ॥ यदितेऽहमनुग्राह्योदर्शयात्मानमात्मना १ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुभीमेनस्मितंकृत्वाप्लवंगमः ॥ तद्रूपंदर्शयामासयद्वैसागरलंघने २ भ्रातुःप्रियमभीप्सन्वैचकारसुमहद्वपुः ॥ देहस्तस्यततोऽतीववर्धत्यायामविस्तरैः ३ सद्रुमंकदलीषंडंछादयन्नमितद्युतिः ॥ गिरिश्चोच्छ्रयमाक्रम्यतस्थौतत्रचवानरः ४ समुच्छ्रितमहाकायोद्वितीयइवपर्वतः ॥ ताम्रेक्षणस्तीक्ष्णदंष्ट्रोभ्रुकुटीकुटिलाननः ५ दीर्घलांगूलमाविध्यदिशोव्याप्यस्थितःकपिः ॥ तद्रूपंमहदालक्ष्यभ्रातुःकौरवनंदनः ६ विसिस्मियेतदाभीमोजहृषेचपुनःपुनः ॥ तमर्कमिवतेजोभिःसौवर्णमिवपर्वतम् ७ प्रदीप्तमिवचाकाशंदृष्ट्वाभीमोन्यमीलयत् ॥ आबभाषेचहनुमान्भीमसेनंस्मयन्निव ८ एतावदिहशक्तस्त्वंद्रष्टुंरूपंममानघ ॥ वर्धेऽहंचाप्यतोभूयोयावन्मेमनसिस्थितम् ॥ भीमशत्रुषुचात्यर्थंवर्धतेमूर्तिरोजसा ९ ॥ वैशंपायनउवाच ॥ तदद्भुतंमहारौद्रंविंध्यपर्वतसन्निभम् ॥ दृष्ट्वाहनुमतोवर्ष्मसंभ्रांतःपवनात्मजः १० प्रत्युवाचततोभीमःसंप्रहृष्टतनूरुहः ॥ कृतांजलिरदीनात्माहनुमंतमवस्थितम् ११ दृष्टंप्रमाणंविपुलंशरीरस्यास्यतेविभो ॥ संहरस्वमहावीर्यस्वयमात्मानमात्मना १२ नहिशक्नोमित्वांद्रष्टुंदिवाकरमिवोदितम् ॥ अप्रमेयमनाधृष्यंमैनाकमिवपर्वतम् १३ विस्मयश्चैवमेवीरसुमहान्मनसोऽद्यवै ॥ यद्रामस्त्वयिपार्श्वस्थेस्वयंरावणमभ्यगात् १४ त्वमेवशक्तस्तांलंकांसयोधांसहवाहनाम् ॥ स्वबाहुबलमाश्रित्यविनाशयितुमंजसा १५ नहितेकिंचिदप्राप्यंमारुतात्मजविद्यते ॥ तवनैकस्यपर्याप्तोरावणःसगणोयुधि १६ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुभीमेनहनुमान्प्लवगोत्तमः ॥ प्रत्युवाचततोवाक्यंस्निग्धगंभीरयागिरा १७ हनूमानुवाच ॥ एवमेतन्महाबाहोयथावदसिभारत ॥ भीमसेननपर्याप्तोममासौराक्षसाधमः १८ मयातुनिहतेतस्मिन्रावणेलोककंटके ॥ कीर्तिर्नश्येद्राघवस्यततएतदुपेक्षितम् १९ तेनवीरेणतंहत्वासगणंराक्षसाधमम् ॥ आनीतास्वपुरंसीताकीर्तिश्चाख्यापितानृषु २० तद्गच्छविपुलप्रज्ञभ्रातुःप्रियहितेरतः ॥ अरिष्टंक्षेममध्वानंवायुनापरिरक्षितः २१ एषपंथाःकुरुश्रेष्ठसौगंधिकवनायते ॥ द्रक्ष्यसेधनदोद्यानंरक्षितंयक्षराक्षसैः २२ नचतेतरसाकार्यःकुसुमावचयःस्वयम् ॥ दैवतानिहिमान्यानिपुरुषेणविशेषतः २३

दधिकशततमोऽध्यायः ॥ १४९ ॥ ॥ पूर्वरूपमिति १ । २ । ३ गिरिश्चविंध्यगिरिरिवइवार्थेचः ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ पर्याप्तःसमर्थः १६ । १७ १८ । १९ । २० अरिष्टंनिर्विघ्नम् २१ । २२ पुरुषेणमर्त्येन २३

२४ गमयस्वबोधपूर्वकमनुतिष्ठस्वार्थेणिच् २५ । २६ दुर्जनवधोऽधर्मोऽपिधर्मएवपरोपघातकंसत्यं धर्मोऽप्यधर्मएव २७ आचारः शौचादिस्तेनधर्मःप्राप्यतेततोवेदाधिगमस्ततोयज्ञानुष्ठानंततोदेवताप्रसादइत्यर्थः २८ वेदेति । यज्ञैर्देवानांनीत्यामनुष्याणांचस्थितिरित्यर्थ २९ पणोभृतिस्तामर्हतीतिपण्यासेवा । पणोवराटमानेस्यादित्युपक्रम्य व्यवहारेभृतौधने इतिमेदिनी वार्ताजीविकार्थावृत्तिः ३० साचक्रमेणब्राह्मणस्यत्रयीयाजनाध्यापनादिः वैश्यस्यवार्तापण्यादिः क्षत्रियस्यदंडादिः ३१ सालोकयात्रा ३२ । ३३ ऋतंसत्यमात्मज्ञानाख्यं एकोवर्णःशुक्लःकेवलसात्विकः धर्मोयोगाख्यः ३४ । ३५ भैक्ष्येति । गुरौत्रिव

बलिहोमनमस्कारैर्मंत्रैश्चभरतर्षभ ॥ दैवतानिप्रसादंहिभक्त्याकुर्वंतिभारत २४ मातातसाहसंकार्षीःस्वधर्मंपरिपालय ॥ स्वधर्मस्थःपरंधर्मंबुध्यस्वगमयस्व च २५ नहिधर्ममविज्ञायवृद्धाननुपसेव्यच ॥ धर्मार्थौवेदितुंशक्यौबृहस्पतिसमैरपि २६ अधर्मोयत्रधर्माख्योधर्मश्चाधर्मसंज्ञितः ॥ सविज्ञेयोविभागेनयत्र मुह्यंत्यबुद्धयः २७ आचारसंभवोधर्मोधर्माद्वेदाःप्रतिष्ठिताः ॥ वेदैर्यज्ञाःसमुत्पन्नायज्ञैर्देवाःप्रतिष्ठिताः २८ वेदाचारविधानोक्तैर्यज्ञैर्धार्यंतिदेवताः ॥ बृहस्पत्युशनःप्रोक्तैर्नयैर्धार्यंतिमानवाः २९ पण्याकरवणिज्याभिःकृष्यागोजाविपोषणैः ॥ वार्तयाधार्यतेसर्वंधर्मैरेतैर्द्विजातिभिः ३० त्रयीवार्तादंडनीतिस्तिस्रोविद्याविजानताम् ॥ ताभिःसम्यक्प्रयुक्ताभिर्लोकयात्राविधीयते ३१ साचेद्धर्मक्रियानस्यात्त्रयीधर्ममृतेभुवि ॥ दंडनीतिमृतेचापिनिर्मर्यादमिदंभवेत् ३२ वार्ताधर्मेह्यवर्तिन्योविनश्येयुरिमाःप्रजाः ॥ सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैःसूयंतिवैप्रजाः ३३ द्विजातीनामृतंधर्मोह्येकश्चैवैकवर्णिकः ॥ यज्ञाध्ययनदानानित्रयःसाधारणाःस्मृताः ३४ याजनाध्यापनंविप्रेधर्मश्चैवप्रतिग्रहः ॥ पालनंक्षत्रियाणांवैवैश्यधर्मश्चपोषणम् ३५ शुश्रूषाचद्विजातीनांशूद्राणांधर्मउच्यते ॥ भैक्ष्यहोमव्रतैर्हीनास्तथैवगुरुवासिताः ३६ क्षत्रधर्मोऽत्रकौंतेयतवधर्मोऽत्ररक्षणम् ॥ स्वधर्मंप्रतिपद्यस्वविनीतोनियतेंद्रियः ३७ वृद्धैःसंमंत्र्यसद्भिश्चबुद्धिमद्भिःश्रुतान्वितैः ॥ आस्थितःशास्तिदंडेन व्यसनीपरिभूयते ३८ निग्रहानुग्रहैःसम्यग्यदाराजाप्रवर्तते ॥ तदाभवंतिलोकस्यमर्यादाःसुव्यवस्थिताः ३९ तस्माद्देशेचदुर्गेचशत्रुमित्रबलेषुच ॥ नित्यंचारेणबोद्धव्यंस्थानंवृद्धिःक्षयस्तथा ४० राज्ञामुपायश्चारश्चबुद्धिर्मंत्रपराक्रमाः ॥ निग्रहप्रग्रहौचैवदाक्ष्यंवैकार्यसाधकम् ४१ साम्नादानेनभेदेनदंडेनोपेक्षणेनच ॥ साधनीयानिकर्माणिसमासव्यासयोगतः ४२ मंत्रमूलानयाःसर्वेचाराश्चभरतर्षभ ॥ सुमंत्रितेनयासिद्धिस्तांद्विजैःसहमंत्रयेत् ४३ स्त्रियामूढेनबालेनलुब्धेनलघुनाऽपिवा ॥ नमंत्रयीतगुह्यानियेषुचोन्मादलक्षणम् ४४ मंत्रयेत्सहविद्वद्भिःशक्तैःकर्माणिकारयेत् ॥ स्निग्धैश्चनीतिविन्यासान्मूर्खान्सर्वत्रवर्जयेत् ४५ धार्मिकान्धर्मकार्येषुअर्थकार्येषुपंडितान् ॥ स्त्रीषुक्लीबान्नियुंजीतक्रूरान्क्रूरेषुकर्मसु ४६

र्णे वाभितंवासोयेषांतेशूद्राभैक्ष्यादिभिर्हीनाभवंति ३६ क्षत्रधर्मोऽत्रप्रकरणेउच्यते सचतवधर्मोऽत्रलोके ३७ आस्थितोऽनुगृहीतः ३८ । ३९ स्थानंसिद्धसंरक्षणम् ४० । ४१ समासःसामादिपंचकेएकेनद्वित्रैर्वा कार्यसाधनं व्यासःसर्वैस्तत्सिद्धिः ४२ । ४३ । ४४ स्निग्धैर्हितेप्सुभिः नीतेःप्रजादारापत्यादेर्विन्यासाःस्थापनानि ४५ । ४६

स्वेभ्यश्चैवपरेभ्यश्चकार्याकार्यसमुद्भवा ॥ बुद्धिःकर्मसुविज्ञेयारिपूणांचबलाबलम् ४७ बुद्ध्यास्वप्रतिपन्नेषुकुर्यात्साधुष्वनुग्रहम् ॥ निग्रहंचाप्यशिष्टेषुनिर्मर्यादेषुकारयेत् ४८ निग्रहेप्रग्रहेसम्यग्यदाराजाप्रवर्तते ॥ तदाभवतिलोकस्यमर्यादासुव्यवस्थिता ४९ एषतेऽभिहितःपार्थघोरोधर्मोदुरन्वयः ॥ तंस्वधर्मविभागेनविनयस्थोऽनुपालय ५० तपोधर्मदमेज्याभिर्विप्रायांतियथादिवम् ॥ दानातिथ्यक्रियाधर्मैर्यांतिवैश्याश्चसद्गतिम् ५१ क्षत्रंयातितथास्वर्गंभुविनिग्रहपालनैः ॥ सम्यक्प्रणीतदंडाहिकामद्वेषविवर्जिताः ॥ अलुब्धाविगतक्रोधाःसतांयांतिसलोकताम् ५२ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांहनूमद्भीमसेनसंवादेपंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ ॥ वैशंपायनउवाच ॥ ततःसंहृत्यविपुलंतद्वपुःकामतःकृतम् ॥ भीमसेनंपुनर्दोर्भ्यांपर्यष्वजतवानरः १ परिष्वक्तस्यतस्याशुभ्रात्राभीमस्यभारत ॥ श्रमोनाशमुपागच्छत्सर्वंचासीत्प्रदक्षिणम् २ बलंचातिबलोमेनेनमेऽस्तिसदृशोमहान् ॥ ततःपुनरथोवाचपर्यश्रुनयनोहरिः ३ भीममाभाष्यसौहार्दाद्बाष्पगद्गदयागिरा ॥ गच्छवीरस्वमावासंस्मर्तव्योऽस्मिकथांतरे ४ इहस्थश्चकुरुश्रेष्ठननिवेद्योऽस्मिकर्हिचित् ॥ धनदस्यालयाच्चापिविसृष्टानांमहाबल ५ देशकालइहायातुंदेवगंधर्वयोषिताम् ॥ ममापिसफलंचक्षुःस्मारितश्चास्मिराघवम् ६ रामाभिधानंविष्णुंहिजगद्धृदयनंदनम् ॥ सीतावक्त्रारविंदार्कंदशास्यध्वांतभास्करम् ७ मानुषंगात्रसंस्पर्शंगत्वाभीमत्वयासह ॥ तदस्मद्दर्शनंवीरकौन्तेयामोघमस्तुते ८ भ्रातृत्वंत्वंपुरस्कृत्यवरंवरयभारत ॥ यदितावन्मयाक्षुद्रागत्वावारणसाह्वयम् ९ धार्तराष्ट्रानिहंतव्यायावदेतत्करोम्यहम् ॥ शिलयानगरंवाऽपिमर्दितव्यंमयायदि १० बध्वादुर्योधनंचाद्यआनयामितवांतिकम् ॥ यावदेतत्करोम्यद्यकामंतवमहाबल ११ वैशंपायनउवाच ॥ भीमसेनस्तुतद्वाक्यंश्रुत्वातस्यमहात्मनः ॥ प्रत्युवाचहनूमंतंप्रहृष्टेनांतरात्मना १२ कृतमेवत्वयासर्वंममवानरपुंगव ॥ स्वस्तितेऽस्तुमहाबाहोकामयेत्वांप्रसीदमे १३ सनाथाःपांडवाःसर्वेत्वयानाथेनवीर्यवन् ॥ तवैवतेजसासर्वान्विजेष्यामोवयंपरान् १४ एवमुक्तस्तुहनुमान्भीमसेनमभाषत ॥ भ्रातृत्वात्सौहृदाच्चैवकरिष्यामिप्रियंतव १५ चमुंविगाह्यशत्रूणांपरशक्तिसमाकुलाम् ॥ यदासिंहरवंवीरकरिष्यसिमहाबल १६ तदाऽहंबृंहयिष्यामिस्वरवेणरवंतव ॥ विजयस्यध्वजस्थश्चनादान्मोक्ष्यामिदारुणान् १७ शत्रूणांयेप्राणहराःसुखंयेनहनिष्यथ ॥ एवमाभाष्यहनुमांस्तदापांडवनंदनम् १८ मार्गमाख्यायभीमायतत्रैवांतरधीयत १९ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रायांगंधमा० हनूमद्भीमसंवादेएकपंचाशदधिकशततमोऽध्यायः ॥ १५१ ॥

गतेइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ सगत्वेति १

॥ वैशंपायनउवाच ॥ ॥ गतेतस्मिन्हरिवरेभीमोऽपिबलिनांवरः ॥ तेनमार्गेणविपुलंव्यचरद्गंधमादनम् १ अनुस्मरन्वपुस्तस्यश्रियंचाप्रतिमांभुवि ॥ माहात्म्य मनुभावंचस्मरन्दाशरथेर्ययौ २ सतानिरमणीयानिवनान्युपवनानिच ॥ विलोकयामासतदासौगंधिकवनेप्सया ३ फुल्लद्रुमविचित्राणिसरांसिसरितस्तथा ॥ नानाकुसुमचित्राणिपुष्पितानिवनानिच ४ मत्तवारणयूथानिपंकक्लिन्नानिभारत ॥ वर्षतामिवमेघानांवृंदानिददृशेतदा ५ हरिणैश्चपलापांगैर्हरिणीसहितैर्वनम् ॥ सशष्पकवलैःश्रीमान्पथिदृष्ट्वाद्रुतंययौ ६ महिषैश्चवराहैश्चशार्दूलैश्चनिषेवितम् ॥ व्यपेतभीर्गिरिंशौर्याद्भीमसेनोव्यगाहत ७ कुसुमानंतगंधैश्चताम्रपल्लवकोमलैः ॥ याच्यमानइवारण्येद्रुमैर्मारुतकंपितैः ८ कृतपद्मांजलिपुटामत्तषट्पदसेविताः ॥ प्रियतीर्थवनामार्गेपद्मिनीःसमतिक्रमन् ९ मज्जमानमनोदृष्टिःफुल्लेषुगिरिसानुषु ॥ द्रौपदीवाक्यपाथेयोभीमःशीघ्रतरंययौ १० परिवृत्तेऽहनिततःप्रकीर्णहरिणेवने ॥ कांचनैर्विमलैःपद्मैर्ददर्शविपुलांनदीम् ११ हंसकारंडवयुतांचक्रवाकोपशोभिताम् ॥ रचितामिवतस्याद्रेर्मालांविमलपंकजाम् १२ तस्यांनद्यांमहासत्वःसौगंधिकवनंमहत् ॥ अपश्यत्प्रीतिजननंबालार्कसदृशद्युति १३ तद्दृष्ट्वालब्धकामःसमनसापांडुनंदनः ॥ वनवासपरिक्लिष्टांजगाममनसाप्रियाम् १४ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौगंधिकाहरणेद्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ वैशंपायनउवाच ॥ ॥ सगत्वानलिनींरम्यांराक्षसैरभिरक्षिताम् ॥ कैलासशिखराभ्याशेददर्शशुभकाननाम् १ कुबेरभुवनाभ्याशेजातांपर्वतनिर्झरैः ॥ सुरम्यांविपुलच्छायांनानाद्रुमलताकुलाम् २ हरितांबुजसंछन्नांदिव्यांकनकपुष्कराम् ॥ नानापक्षिजनाकीर्णांसूपतीर्थामकर्दमाम् ३ अतीवरम्यांसुजलांजातांपर्वतसानुषु ॥ विचित्रभूतांलोकस्यशुभामद्भुतदर्शनाम् ४ तत्रामृतरसंशीतंलघुकुंतीसुतःशुभम् ॥ ददर्शविमलंतोयंपिबंश्चबहुपांडवः ५ तांतुपुष्करिणींरम्यांदिव्यसौगंधिकावृताम् ॥ जातरूपमयैःपद्मैश्छन्नांपरमगंधिभिः ६ वैदूर्यवरनालैश्चबहुचित्रैर्मनोरमैः ॥ हंसकारंडवोद्धूतैःसृजद्भिरमलंरजः ७ आक्रीडंराजराजस्यकुबेरस्यमहात्मनः ॥ गंधर्वैरप्सरोभिश्चदेवैश्चपरमार्चिताम् ८ सेवितामृषिभिर्दिव्यैर्यक्षैःकिंपुरुषैस्तथा ॥ राक्षसैःकिन्नरैश्चापिगुप्तांवैश्रवणेनच ९ तांचदृष्ट्वैवकौंतेयोभीमसेनोमहाबलः ॥ बभूवपरमप्रीतोदिव्यंसंप्रेक्ष्यतत्सरः १० तच्चक्रोधवशानामराक्षसाराजशासनात् ॥ रक्षंतिशतसाहस्राश्चित्रायुधपरिच्छदाः ११ तेतुदृष्ट्वैवकौंतेयमजिनैःप्रतिवासितम् ॥ रुक्मांगदधरंवीरंभीमंभीमपराक्रमम् १२ सायुधंबद्धनिस्त्रिंशमशंकितमरिंदमम् ॥ पुष्करेप्सुमुपायांतमन्योन्यमभिचुक्रुशुः १३ अयंपुरुषशार्दूलःसायुधोऽजिनसंवृतः ॥ यच्चिकीर्षुरिहप्राप्तस्तत्संप्रष्टुमिहार्हथ १४

२ सूपतीर्थांशोभनानिउपतीर्थानितीराणियस्यांसा ३ । ४ लघुआरोग्यकरम् ५ जातरूपंस्वर्णम् ६ हंसादिपोतैर्हंसाद्युद्धूतैर्वा ७ आक्रीडंक्रीडास्थानम् ८ । ९ । १० । ११ । १२ । १३ । १४

१५ । १६ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ ॥ पांडवइति १ अनिलोढंवायुनाआनीतम् २।३।४।५।६।७।८। ९ । १० । ११ । १२

ततःसर्वेमहाबाहुंसमासाद्यवृकोदरम् ॥ तेजोयुक्तमपृच्छंतकस्त्वमाख्यातुमर्हसि १५ मुनिवेषधरश्चैवसायुधश्चैवलक्ष्यसे ॥ यदर्थमभिसंप्राप्तस्तदाचक्ष्वमहा मते १६ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौगंधिकाहरणेत्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ ॥ ॥
॥ भीमउवाच ॥ पांडवोभीमसेनोऽहंधर्मराजादनंतरः ॥ विशालांबदरींप्राप्तोभ्रातृभिःसहराक्षसाः १ अपश्यत्तत्रपांचालीसौगंधिकमनुत्तमम् ॥ अनिलोढ मितोनूनंसाबहूनिपरीप्सति २ तस्यामामनवद्यांग्याधर्मपत्न्याःप्रियेस्थितम् ॥ पुष्पाहारमिहप्राप्तंनिबोधतनिशाचराः ३ ॥ राक्षसाऊचुः ॥ आक्रीडोऽयं कुबेरस्यदयितःपुरुषर्षभ ॥ नेहशक्यंमनुष्येणविहर्तुंमर्त्यधर्मणा ४ देवर्षयस्तथायक्षादेवाश्चात्रवृकोदर ॥ आमंत्र्ययक्षप्रवरंपिबंतिरमयंतिच ॥ गंधर्वाप्सर सश्चैवविहरंत्यत्रपांडव ५ अन्यायेनेहयःकश्चिदवमन्यधनेश्वरम् ॥ विहर्तुमिच्छेद्दुर्वृत्तःसविनश्येन्नसंशयः ६ तमनादृत्यपद्मानिजिहीर्षसिबलादितः ॥ धर्मरा जस्यचात्मानंब्रवीषिभ्रातरंकथम् ७ आमंत्र्ययक्षराजंवैततःपिबहरस्वच ॥ नातोऽन्यथात्वयाशक्यंकिंचित्पुष्करमीक्षितुम् ८ ॥ भीमसेनउवाच ॥ राक्ष सास्तंनपश्यामिधनेश्वरमिहांतिके ॥ दृष्ट्वापिचमहाराजंनाहंयाचितुमुत्सहे ९ नहियाचंतिराजानएषधर्मःसनातनः ॥ नचाहंहातुमिच्छामिक्षात्रधर्मंकथंचन १० इयंचनलिनीरम्याजातापर्वतनिर्झरे ॥ नेयंनवनमासाद्यकुबेरस्यमहात्मनः ११ तुल्याहिसर्वभूतानामियंवैश्रवणस्यच ॥ एवंगतेषुद्रव्येषुकःकंयाचितु मर्हति १२ ॥ वैशंपायनउवाच ॥ इत्युक्त्वाराक्षसान्सर्वान्भीमसेनोह्यमर्षणः ॥ व्यगाहतमहाबाहुर्नलिनींतांमहाबलः १३ ततःसराक्षसैर्वाचाप्रतिषिद्धःप्रता पवान् ॥ मामैवमितिसक्रोधैर्भर्त्सयद्भिःसमंततः १४ कदर्थीकृत्यतुसतान्राक्षसान्भीमविक्रमः ॥ व्यगाहतमहातेजास्तेतंसर्वेन्यवारयन् १५ गृह्णीतबध्नीत विकर्ततेमंपचामखादामचभीमसेनम् ॥ क्रुद्धाब्रुवंतोभिययुर्द्रुतंतेशस्त्राणिचोद्यम्यविवृत्तनेत्राः १६ ततःसगुर्वींयमदंडकल्पांमहागदांकांचनपट्टनद्धाम् ॥ प्रगृह्यतानभ्य पतत्तरस्वीततोब्रवीत्तिष्ठततिष्ठतेति १७ तेतंतदातोमरपट्टिशाद्यैर्व्याविद्धशस्त्रैःसहसानिपेतुः ॥ जिघांसवःक्रोधवशाःसुभीमाभीमंसमंतात्परिवव्रुरुग्राः १८ वातेनकुं त्यांबलवान्सुजातःशूरस्तरस्वीद्विषतांनिहंता ॥ सत्येचधर्मेचरतःसदैवपराक्रमेशत्रुभिरप्रधृष्यः १९ तेषांसमार्गान्विविधान्महात्माविहत्यशस्त्राणिचशात्रवाणाम् ॥ यथाप्रवीरान्निजघानभीमःपरंशतंपुष्करिणीसमीपे २० तेतस्यवीर्यंचबलंचदृष्ट्वाविद्याबलंबाहुबलंतथैव ॥ अशक्नुवंतःसहितंसमंताद्धतप्रवीराःसहसानिवृत्ताः २१ विदी र्यमाणास्ततएवहंतुमाकाशमास्थायविमूढसंज्ञाः ॥ कैलासशृंगाण्यभिदुद्रुवुस्तेभीमार्दिताःक्रोधवशाःप्रभग्नाः २२ सशक्रवद्दानवदैत्यसंघान्विक्रम्यजित्वाचरणेऽरिसं घान् ॥ विगाह्यतांपुष्करिणींजितारिःकामायजग्राहततोऽम्बुजानि २३

१३ । १४ । १५ । १६ । १७ । १८ । १९ विहत्यविनाश्य । चाल्यपीत्यनुनासिकालोपपक्षेइदंरूपम् २० सहितमेकीभूयाप्यशक्नुवंतः २१ । २२ विक्रम्यजित्वाचअभिभूयवशीकृत्यचेत्यर्थः २३

२४ । २५ कामात् कामायस्वेष्टसिद्ध्यर्थम् २६ । २७ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे चतुष्पंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥ ॥ ॥ ततइति १ । २ । ३

ततःसपीत्वाऽमृतकल्पमंभोभूयोबभूवोत्तमवीर्यतेजाः ॥ उत्पाट्यजग्राहचसोऽम्बुजानिसौगंधिकान्युत्तमगंधवंति ॥ २४ ॥ ततस्तुतेक्रोधवशाःसमेत्यधनेश्वरंभीमबल प्रणुन्नाः ॥ भीमस्यवीर्यंचबलंचसंख्येयथावदाचख्युरतीवभीताः २५ तेषांवचस्तत्तुनिशम्यदेवःप्रहस्यरक्षांसिततोऽभ्युवाच ॥ गृह्णातुभीमोजलजानिकामात्कृष्णानि मित्तंविदितंममैतत् २६ ततोऽभ्यनुज्ञाप्यधनेश्वरंतेजग्मुःकुरूणांप्रवरंविरोषाः ॥ भीमंचतस्यांददृशुर्नलिन्यांयथोपजोषंविहरंतमेकम् २७ ॥ इतिश्रीमहाभारतेआर ण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौगंधिकाहरणेचतुष्पंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ततस्तानिमहा र्हाणिदिव्यानिभरतर्षभ ॥ बहूनिबहुरूपाणिविरजांसिसमाददे १ ततोवायुर्महान्शीघ्रोनीचैःशर्करकर्षणः ॥ प्रादुरासीत्खरस्पर्शःसंग्राममभिचोदयन् २ पपातमहती चोल्कासनिर्घातामहाभया ॥ निष्प्रभश्चाभवत्सूर्यश्छन्नरश्मिस्तमोवृतः ३ निर्घातश्चाभवद्भीमोभीमेविक्रममास्थिते ॥ चचालपृथिवीचापिपांसुवर्षंपपातच ४ सलोहितादिशश्चासन्खरवाचोमृगद्विजाः ॥ तमोवृतमभूत्सर्वंनप्राज्ञायतकिंचन ५ अन्येचबहवोभीमाउत्पातास्तत्रजज्ञिरे ॥ तदद्भुतमभिप्रेक्ष्यधर्मपुत्रोयुधिष्ठिरः ६ उवाचवदतांश्रेष्ठःकोऽस्मानभिभविष्यति ॥ सज्जीभवतभद्रंवःपांडवायुद्धदुर्मदाः ७ यथारूपाणिपश्यामिस्वभ्यग्रोनःपराक्रमः ॥ एवमुक्त्वाततोराजावीक्षांचक्रेसमंततः ८ अपश्यमानोभीमंतुधर्मपुत्रोयुधिष्ठिरः ॥ ततःकृष्णांयमौचापिसमीपस्थावरिंदमः ९ पप्रच्छभ्रातरंभीमंभीमकर्माणमाहवे ॥ कच्चित्कभीमःपांचालिकिंचित्कृत्यं चिकीर्षति १० कृतवानपिवावीरःसाहसंसाहसप्रियः ॥ इमेह्यकस्मादुत्पातामहासमरदर्शनाः ११ दर्शयंतोभयंतीव्रंप्रादुर्भूताःसमंततः ॥ तेतथावादिनंकृष्णाप्रत्युवा चमनस्विनी ॥ प्रियाप्रियंचिकीर्षंतीमहिषीचारुहासिनी १२ ॥ द्रौपद्युवाच ॥ यत्तत्सौगंधिकंराजन्नाहृतंमातरिश्वना ॥ तन्मयाभीमसेनस्यप्रीतयाऽद्योपपादितम् १३ अपिचोक्तोमयावीरोयदिपश्येर्बहून्यपि ॥ तानिसर्वाण्युपादायशीघ्रमागम्यतामिति १४ सतुनूनंमहाबाहुःप्रियार्थंममपांडवः ॥ प्रागुदीचींदिशंराजंस्तान्याहर्तु मितोगतः १५ उक्तस्त्वेवंतयाराजायमाविदमथाब्रवीत् ॥ गच्छामसहितास्तूर्णंयेनयातोवृकोदरः १६ वहंतुराक्षसाविप्रान्यथाश्रांतान्यथाकृशान् ॥ त्वमप्यमरसंका शवहकृष्णांघटोत्कच १७ व्यक्तंदूरमितोभीमःप्रविष्टइतिमेमतिः ॥ चिरंचतस्यकालोयंसचवायुसमोजवे १८ तरस्वीवैनतेयस्यसदृशोभुविलंघने ॥ उत्पतेदपिचाका शंनिपतेच्चयथेच्छकम् १९ तमन्वियामभवतांप्रभावाद्रजनीचराः ॥ पुरासनापराध्नोतिसिद्धानांब्रह्मवादिनाम् २० तथेत्युक्त्वातुतेसर्वेहैडिंबप्रमुखास्तदा ॥ उद्देशज्ञाःकुबेरस्यनलिन्याभरतर्षभ २१ आदायपांडवांश्चैवतांश्चविप्राननेकशः ॥ लोमशेनैवसहिताःप्रययुःप्रीतमानसाः २२ तेसर्वेत्वरितागत्वाददृशुःशुभकान नाम् ॥ पद्मसौगंधिकवतींनलिनींसुमनोरमाम् २३

४ । ५ । ६ । ७ स्वभ्यग्रःसुतरामासन्नः पराक्रमःपराक्रमकालः ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० उद्देशज्ञाःस्थलज्ञाः २१ । २२ । २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥ ॥ तस्मिन्निति १ । २

तंचभीमंमहात्मानंतस्यास्तीरेमनस्विनम् ॥ दशशुर्निहतांश्चैवयक्षांश्चविपुलेक्षणान् २४ भिन्नकायाक्षिबाहूरून्संचूर्णितशिरोधरान् ॥ तंचभीमंमहात्मानंतस्यास्ती रेव्यवस्थितम् २५ सक्रोधंस्तब्धनयनंसंदष्टदशनच्छदम् ॥ उद्यम्यचगदांदोर्भ्यांनदीतीरेष्ववस्थितम् २६ प्रजासंक्षेपसमयेदंडहस्तमिवांतकम् ॥ तंदृष्ट्वाधर्मराजस्तुप रिष्वज्यपुनःपुनः २७ उवाचश्लक्ष्णयावाचाकौंतेयकिमिदंकृतम् ॥ साहसंबतभद्रंतेदेवानामथचाप्रियम् २८ पुनरेवंनकर्तव्यंममवेदिच्छसिप्रियम् ॥ अनुशिष्यतुकौं तेयंपद्मानिपरिगृह्यच २९ तस्यामेवनलिन्यांतुविजह्रुरमरोपमाः ॥ एतस्मिन्नेवकालेतुप्रगृहीतशिलायुधाः ३० प्रादुरासन्महाकायास्तस्योद्यानस्यरक्षिणः ॥ तेदृष्ट्वा धर्मराजानंमहर्षिंचापिलोमशम् ३१ नकुलंसहदेवंचतथान्यान्ब्राह्मणर्षभान् ॥ विनयेननताःसर्वेप्रणिपत्यचभारत ३२ सांत्विताधर्मराजेनप्रसेदुःक्षणदाचराः ॥ विदिताश्चकुबेरस्यतत्रतेकुरुपुंगवाः ३३ ऊषुर्नातिचिरंकालंरममाणाःकुरूद्वहाः ॥ प्रतीक्षमाणाबीभत्सुंगंधमादनसानुषु ३४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्व णितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसौगंधिकाहरणेपंचपंचाशदधिकशततमोऽध्यायः १५५ ॥ ॥ ॥ वैशंपायनउवाच ॥ ॥ तस्मिन्निवसमानो ऽथधर्मराजोयुधिष्ठिरः ॥ कृष्णयासहितान्भ्रातॄनित्युवाचसहद्विजान् १ दृष्टानितीर्थान्यस्माभिःपुण्यानिचशिवानिच ॥ मनसोह्लादनीयानिवनानिचपृथक्पृथक् २ देवैः पूर्वविचीर्णानिमुनिभिश्चमहात्मभिः ॥ यथाक्रमविशेषेणद्विजैःसंपूजितानिच ३ ऋषीणांपूर्वचरितंतथाकर्मविचेष्टितम् ॥ राजर्षीणांचचरितंकथाश्चविविधाःशुभाः ४ शृण्वानास्तत्रतत्रस्मआश्रमेषुशिवेषुच ॥ अभिषेकंद्विजैःसार्धंकृतवंतोविशेषतः ५ अर्चिताःसततंदेवाःपुष्पैरद्भिःसदाचवः ॥ यथालब्धैर्मूलफलैःपितरश्चापितर्पिताः ६ पर्वतेषुचरम्येषुसर्वेषुचसरस्सुच ॥ उदधौचमहापुण्येसूपस्पृष्टंमहात्मभिः ७ इलासरस्वतीसिंधुर्यमुनानर्मदातथा ॥ नानातीर्थेषुरम्येषुसूपस्पृष्टंसहद्विजैः ८ गंगाद्वा रमतिक्रम्यबहवःपर्वताःशुभाः ॥ हिमवान्पर्वतश्चैवनानाद्विजगणायुतः ९ विशालाबदरीदृष्टानरनारायणाश्रमः ॥ दिव्यपुष्करिणीदृष्टासिद्धदेवर्षिपूजिता १० यथा क्रमविशेषेणसर्वाण्यायतनानिच ॥ दर्शितानिद्विजश्रेष्ठालोमशेनमहात्मना ११ इमंवैश्रवणावासंपुण्यंसिद्धनिषेवितम् ॥ कथंभीमगमिष्यामोगतिरंतरधीयताम् १२ ॥ वैशंपायनउवाच ॥ एवंब्रुवतिराजेंद्रेवागुवाचाशरीरिणी ॥ नशक्योदुर्गमोगंतुमितोवैश्रवणाश्रमात् १३ अनेनैवपथाराजन्प्रतिगच्छयथागतम् ॥ नरनारायणस्था नंबदरीत्यभिविश्रुतम् १४ तस्माद्यास्यसिकौंतेयसिद्धचारणसेवितम् ॥ बहुपुष्पफलंरम्यमाश्रमंवृषपर्वणः १५ अतिक्रम्यचतंपार्थत्वार्ष्टिषेणाश्रमेवसेः ॥ ततोद्रक्ष्य सिकौंतेयनिवेशंधनदस्यच १६ एतस्मिन्नंतरेवायुर्दिव्यगंधवहःशुचिः ॥ सुखप्रह्लादनःशीतःपुष्पवर्षंववर्षच १७ श्रुत्वातुदिव्यामाकाशाद्वाचंसर्वेविसिस्मियुः ॥ ऋषी णांब्राह्मणानांचपार्थिवानांविशेषतः १८

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ गतिरंतरधीयतां अंतर्गतिःकुबेरभवनेप्रवेशःकथंभवेदित्यधीयतांविचार्यतां १२ इतोहेतोर्वैश्रवणाश्रमात् प्रतिगच्छपरावर्तस्व १३ । १४ । १५ । १६ । १७ । १८

श्रुत्वातन्महदाश्चर्यंद्विजोधौम्योऽब्रवीत्तदा ॥ नशक्यमुत्तरंवक्तुमेवंभवतुभारत १९ ततोयुधिष्ठिरोराजाप्रतिजग्राहतद्वचः ॥ प्रत्यागम्यपुनस्तंतुनरनारायणाश्रमम् २० भीमसेनादिभिःसर्वैर्भ्रातृभिःपरिवारितः ॥ पांचाल्याब्राह्मणाश्चैवन्यवसंतसुखंतदा २१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांपुनर्नारायणाश्रमागमनेषट्पंचाशदधिकशततमोऽध्यायः १५६ ॥ ॥ समाप्तंचेदंतीर्थयात्रापर्व ॥ ॥ अथजटासुरवधपर्व ॥ वैशंपायनउवाच ॥ ततस्तान्परिविश्वस्तान्वसतस्तत्रपांडवान् ॥ पर्वतेंद्रेद्विजैःसार्धंपार्थागमनकांक्षया १ गतेषुतेषुरक्षःसुभीमसेनात्मजेऽपिच ॥ रहितान्भीमसेनेनकदाचित्तान्यदृच्छया २ जहारधर्मराजानंयमौकृष्णांचराक्षसः ॥ ब्राह्मणोमंत्रकुशलःसर्वशास्त्रविदुत्तमः ३ इतिब्रुवन्पांडवेयान्पर्युपास्तेस्मनित्यशः ॥ परीप्समानःपार्थानांकलापानिधनूंषिच ४ अंतरंसंपरिप्रेप्सुर्द्रौपद्याहरणंप्रति ॥ दुष्टात्मापापबुद्धिःसनाम्नाख्यातोजटासुरः ५ पोषणंतस्यराजेंद्रचक्रेपांडवनंदनः ॥ बुबुधेनचतंपापंभस्मच्छन्नमिवानलम् ६ सभीमसेनेनिष्क्रांतेमृगयार्थमरिंदम ॥ घटोत्कचंसानुचरंदृष्ट्वाविप्रद्रुतंदिशः ७ लोमशप्रभृतींस्तांस्तुमहर्षींश्चसमाहितान् ॥ स्नातुंविनिर्गतान्दृष्ट्वापुष्पार्थंचतपोधनान् ८ रूपमन्यत्समास्थायविकृतंभैरवंमहत् ॥ गृहीत्वासर्वशस्त्राणिद्रौपदींपरिगृह्यच ९ प्रातिष्ठतसदुष्टात्मात्रीन्गृहीत्वाचपांडवान् ॥ सहदेवस्तुयत्नेनततोऽपक्रम्यपांडवः १० विक्रम्यकौशिकंखड्गंमोक्षयित्वाग्रहंरिपोः ॥ आक्रंदद्भीमसेनंवैयेनयातोमहाबलः ११ तमब्रवीद्धर्मराजोह्रियमाणोयुधिष्ठिरः ॥ धर्मस्तेहीयते मूढनतत्त्वंसमवेक्षसे १२ येऽन्येकेचिन्मनुष्येषुतिर्यग्योनिगताश्चये ॥ धर्मंतेसमवेक्षंतेरक्षांसिचविशेषतः १३ धर्मस्यराक्षसामूलंधर्मंतेविदुरुत्तमम् ॥ एतत्परीक्ष्यसर्वंत्वंसमीपेस्थातुमर्हसि १४ देवाश्चऋषयःसिद्धाःपितरश्चापिराक्षस ॥ गंधर्वोरगरक्षांसिवयांसिपशवस्तथा १५ तिर्यग्योनिगताश्चैवअपिकीटपिपीलिकाः ॥ मनुष्यानुपजीवंतिततस्त्वमपिजीवसि १६ समृद्ध्यायस्यलोकस्यलोकोयुष्माकमृध्यति ॥ इमंचलोकंशोचंतमनुशोचंतिदेवताः १७ पूज्यमानाश्चवर्धंतेहव्यकव्यैर्यथाविधि ॥ वयंराष्ट्रस्यगोप्तारोरक्षितारश्चराक्षस १८ राष्ट्रस्यारक्ष्यमाणस्यकुतोभूतिःकुतःसुखम् ॥ नचराजाऽवमंतव्योरक्षसाजात्वनागसि १९ अणुरप्यपचारश्चनास्त्यस्माकंनराशन ॥ विघसाशान्यथाशक्त्याकुर्महेदेवतादिषु २० गुरूंश्चब्राह्मणांश्चैवप्रमाणप्रवणाःसदा ॥ द्रोग्धव्यंनचमित्रेषुनविश्वस्तेषुकर्हिचित् २१ येषांचान्नानि भुंजीतयत्रचस्यात्प्रतिश्रयः ॥ सत्वंप्रतिश्रयेऽस्माकंपूज्यमानःसुखोषितः २२ भुक्त्वाचान्नानिदुष्प्रज्ञकथमस्मान्जिहीर्षसि ॥ एवमेवव्रथाचारोवृथावृद्धोवृथामतिः २३

कलापानिनिषंगादीनि ४ । । ५ । ६ । ७ । ८ । ९ कौशिकंकोशादागतंग्रहंग्रहणं १० । ११ । १२ १३ । १४ । १५ । १६ युष्माकंदेवासुरादीनांऋध्यति ऋच्छतीतिपाठेवृद्धिंगच्छति १७ । १८ । १९ विघसाशान् देवासुरब्राह्मणादिशेषान्नंविघसंतस्यआशोभोजनंयेषांतान् २० । २१ । प्रतिश्रयोगृहं २२ । २३

नभविष्यसिमरिष्यसि २४ । २५ । २६ । २७ । २८ । २९ । ३० सत्कृत्यं साधुकार्यं ३१ । ३२ । ३३ राक्षसेइतिमूर्यास्तात्प्रागयंमरिष्यतीत्यर्थः ३४ तिष्ठस्वस्थिरोभव ३५ । ३६ । ३७ । ३८

वृथामरणमर्हश्चवृथाऽद्यनभविष्यसि ॥ अथचेद्दुष्टबुद्धिस्त्वंसर्वैर्धर्मैर्विवर्जितः २४ प्रदायशस्त्राण्यस्माकंयुद्धेनद्रौपदींहर ॥ अथचेत्त्वमविज्ञानादिदंकर्मकरिष्यसि २५ अधर्मंचाप्यकीर्तिंचलोकेप्राप्स्यसिकेवलम् ॥ एतामद्यपरामृश्यस्त्रियंराक्षसमानुषीम् २६ विषमेतत्समालोड्यकुंभेनप्राशितंत्वया ॥ ततोयुधिष्ठिरस्तस्यगुरुकःसमपद्यत २७ सतुभाराभिभूतात्मानतथाशीघ्रगोऽभवत् ॥ अथाब्रवीद्द्रौपदींचनकुलंचयुधिष्ठिरः २८ माभैष्टराक्षसान्मूढाद्गतिरस्यमयाहृता ॥ नातिदूरेमहाबाहुर्भवितापवनात्मजः २९ अस्मिन्मुहूर्तेसंप्राप्तेनभविष्यतिराक्षसः ॥ सहदेवस्तुतंदृष्ट्वाराक्षसंमूढचेतसम् ३० उवाचवचनंराजन्कुंतीपुत्रंयुधिष्ठिरम् ॥ राजन्किंनामसत्कृत्यंक्षत्रियस्यास्त्यतोऽधिकम् ३१ यद्युद्धेऽभिमुखःप्राणांस्त्यजेच्छत्रुंजयेतवा ॥ एषचास्मान्वयंचैनंयुध्यमानाःपरंतप ३२ सूदयेममहाबाहोदेशकालोह्ययंनृप ॥ क्षत्रधर्मस्यसंप्राप्तःकालःसत्यपराक्रमः ३३ जयंतोहन्यमानावाप्राप्तुमर्हामसद्गतिम् ॥ राक्षसेजीवमानेऽद्यरविरस्तमियाद्यदि ३४ नाहंब्रूयांपुनर्जातुक्षत्रियोऽस्मीतिभारत ॥ भोभोराक्षसतिष्ठस्वसहदेवोऽस्मिपांडवः ३५ हत्वावामांनयस्वैनांहतोवाऽद्येहस्वप्स्यसि ॥ तदाब्रुवतिमाद्रेयेभीमसेनोयदृच्छया ३६ प्रत्यदृश्यद्गदाहस्तःसवज्रइववासवः ॥ सोऽपश्यद्भ्रातरौतत्रद्रौपदींचयशस्विनीम् ३७ क्षितिस्थंसहदेवंचक्षिपंतंराक्षसंतदा ॥ मार्गाच्चराक्षसंमूढंकालोपहतचेतसम् ३८ भ्रमंतंतत्रतत्रैवदैवेनविनिवारितम् ॥ भ्रातॄंस्तान्ह्रियतोदृष्ट्वाद्रौपदींचमहाबलः ३९ क्रोधमाहारयद्भीमोराक्षसंचेदमब्रवीत् ॥ विज्ञातोऽसिमयापूर्वंपापःशस्त्रपरीक्षणे ४० आस्थातुत्वयिमेनास्तियतोऽसिनहतस्तदा ॥ ब्रह्मरूपप्रतिच्छन्नोननोवदसिचाप्रियम् ४१ प्रियेषुरममाणंत्वांनचैवाप्रियकारिणम् ॥ अतिथिंब्रह्मरूपंचकथंहन्यामनागसम् ४२ राक्षसंजानमानोऽपियोहन्यान्नरकंव्रजेत् ॥ अपक्वस्यचकालेनवधस्तवनविद्यते ४३ नूनमद्यासिसंपक्वोयथातेमतिरीदृशी ॥ दत्ताकृष्णापहरणेकालेनाद्भुतकर्मणा ४४ बडिशोऽयंत्वयाग्रस्तःकालसूत्रेणलंबितः ॥ मत्स्योऽम्भसीवस्यूतास्यःकथमद्यभविष्यसि ४५ यंचासिप्रस्थितोदेशंमनःपूर्वंगतंचते ॥ नतंगंताऽसिगंतासिमार्गंबकहिडिंबयोः ४६ एवमुक्तस्तुभीमेनराक्षसःकालचोदितः ॥ भीतउत्सृज्यतान्सर्वान्युद्धायसमुपस्थितः ४७ अब्रवीच्चपुनर्भीमंरोषात्प्रस्फुरिताधरः ॥ नमेमूढादिशःपापत्वदर्थमेविलंबितम् ४८ श्रुतामेराक्षसायेयेत्वयाविनिहतारणे ॥ तेषामद्यकरिष्यामितवास्रेणोदकक्रियाम् ४९ एवमुक्तस्ततोभीमःसृक्किणीपरिसंलिहन् ॥ स्मयमानइवक्रोधात्साक्षात्कालांतकोपमः ५० बाहुसंरंभमेवेक्षन्नभिदुद्रावराक्षसम् ॥ राक्षसोऽपितदाभीमंयुद्धार्थिनमवस्थितम् ५१

ह्रियतोह्रियमाणान् ३९ । ४० आस्थात्वन्मारणेआदरः ४१ । ४२ । ४३ । ४४ बडिशोमत्स्यवेधनं भविष्यसिजीविष्यसि ४५ । ४६ । ४७ । ४८ अस्रेणलोहितेन ४९ । ५० बाहुसंरभ्यतेआस्फोट्यतेयस्यांक्रियायांयथास्यात्तथाबाहुसंरंभम् ५१

१ गुरुकःभारवान् ।

५२।५३।५४।५५।५६।५७।५८।५९।६० आविध्यभ्रामयित्वा ६१ मुंजीकृताःरज्ज्वर्थंमुंजवज्जर्जरीकृताः ६२ महाभ्रैरित्वेत्यभूतोपमा ६३।६४।६५।६६ शिरोधरांग्रीवां ६७ अभ्यवर्तता

मुहुर्मुहुर्व्यादादानःसृक्किणीपरिसंलिहन् ॥ अभिदुद्रावसंरब्धोबलिर्वज्रधरंयथा ५२ वर्तमानेतदाताभ्यांबाहुयुद्धेसुदारुणे ॥ माद्रीपुत्रावतिक्रुद्धावुभावप्यभ्यधावताम् ५३ न्यवारयत्तौप्रहसन्कुंतीपुत्रोवृकोदरः ॥ शक्तोऽहंराक्षसस्येतिप्रेक्षध्वमितिचाब्रवीत् ५४ आत्मनाभ्रातृभिश्चैवधर्मेणसुकृतेनच ॥ इष्टेनचशपेराजन्सूदयिष्यामि राक्षसम् ५५ इत्येवमुक्त्वातौवीरौस्पर्धमानौपरस्परम् ॥ बाहुभ्यांसमसज्जेतामुभौरक्षोवृकोदरौ ५६ तयोरासीत्संप्रहारःक्रुद्धयोर्भीमरक्षसोः ॥ अमृष्यमाणयोःसंख्ये देवदानवयोरिव ५७ आरुज्यारुज्यतौवृक्षानन्योन्यमभिजघ्नतुः ॥ जीमूताविवगर्जंतौनिनदंतौमहाबलौ ५८ बभंजतुर्महावृक्षानूरुभिर्बलिनांवरौ ॥ अन्योन्येनाभिसं रब्धौपरस्परवधैषिणौ ५९ तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ॥ वालिसुग्रीवयोर्भ्रात्रोःपुरास्त्रीकांक्षिणोर्यथा ६० आविध्याविध्यतौवृक्षान्मुहूर्तमितरेतरम् ॥ ताडयामासतुरुभौविनदंतौमुहुर्मुहुः ६१ तस्मिन्देशेयदावृक्षाःसर्वएवनिपातिताः ॥ मुंजीकृताश्चशतशःपरस्परवधेप्सया ६२ ततःशिलाःसमादायमुहूर्तमिवभारत ॥ महाभ्रैरिवशैलेंद्रौयुयुधातेमहाबलौ ६३ शिलाभिरुग्ररूपाभिर्बृहतीभिःपरस्परम् ॥ वज्रैरिवमहावेगैराजघ्नतुरमर्षणौ ६४ अभिद्रुत्यचभूयस्तावन्योन्यबलदर्पितौ ॥ भुजाभ्यांपरिगृह्याथचकर्षातेगजाविव ६५ मुष्टिभिश्चमहाघोरैरन्योन्यमभिजघ्नतुः ॥ ततःकटकटाशब्दोबभूवसुमहात्मनोः ६६ ततःसंहृत्यमुष्टिंतुपंचशीर्षमिवो रगम् ॥ वेगेनाभ्यहनद्भीमोराक्षसस्यशिरोधराम् ६७ ततःश्रांतंतुतद्रक्षोभीमसेनभुजाहतम् ॥ सुपरिश्रांतमालक्ष्यभीमसेनोऽभ्यवर्तत ६८ ततएनंमहाबाहुर्बाहुभ्या ममरोपमः ॥ समुत्क्षिप्यबलाद्भीमोविनिष्पिष्यमहीतले ६९ तस्यगात्राणिसर्वाणिचूर्णयामासपांडवः ॥ अरत्निनाचाभिहत्यशिरःकायादपाहरत् ७० संदष्टौष्ठंविवृ त्ताक्षंफलंवृक्षादिवच्युतम् ॥ जटासुरस्यतुशिरोभीमसेनबलाद्धतम् ७१ पपातरुधिरादिग्धंसंदष्टदशनच्छदम् ॥ तंनिहत्यमहेष्वासोयुधिष्ठिरमुपागमत् ॥ स्तूयमानो द्विजाग्र्यैस्तुमरुद्भिरिववासवः ७२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणितीर्थयात्रापर्वणिलोमशतीर्थयात्रायांसप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ ॥ ॥ समाप्तंचजटासुरवधपर्व ॥ अथयक्षयुद्धपर्व ॥ वैशंपायनउवाच ॥ निहतेराक्षसेतस्मिन्पुनर्नारायणाश्रमम् ॥ अभ्येत्यराजाकौंतेयोनिवासमकरोत्प्रभुः १ ससमा नीयतान्सर्वान्भ्रातॄनित्यब्रवीद्वचः ॥ द्रौपद्यासहितान्कालेसंस्मरन्भ्रातरंजयम् २ समाश्चतस्रोऽभिगताःशिवेनचरतांवने ॥ कृतोद्देशःसबीभत्सुःपंचमीमभितःस माम् ३ प्राप्यपर्वतराजानंश्वेतंशिखरिणांवरम् ॥ पुष्पितैर्द्रुमषंडैश्चमत्तकोकिलषट्पदैः ४ मयूरैश्चातकैश्चापिनित्योत्सवविभूषितम् ॥ व्याघ्रैर्वराहैर्महिषैर्गवयैर्हरिणै स्तथा ५ श्वापदैर्व्यालरूपैश्चरुरुभिश्चनिषेवितम् ॥ फुल्लैःसहस्रपत्रैश्चशतपत्रैस्तथोत्पलैः ६

धिकोत्साहवानभूत् ६८। ६९ अरत्निनातलप्रहारेणेत्यर्थः ७०।७१।७२ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ निहतेइति १ जयमर्जुनम् २ कृतोद्देशःपंचमेवर्षेमयाऽवश्यमागंतव्यमितिकृतसंकेतः ३ श्वेतंकैलासम् ४।५।६

प्रफुल्लैःकमलैश्चैवतथानीलोत्पलैरपि ॥ महापुण्यंपवित्रंचसुरासुरनिषेवितम् ७ तत्रापिचकृतोदेशःसमागमदिदृक्षुभिः ॥ कृतश्चसमयस्तेनपार्थेनामिततेजसा ८ पंचवर्षाणिवत्स्यामिविद्यार्थीतिपुरामयि ॥ अत्रगांडीवधन्वानमवाप्तास्त्रमरिंदमम् ९ देवलोकादिमंलोकंद्रक्ष्यामःपुनरागतम् ॥ इत्युक्त्वाब्राह्मणान्सर्वानामंत्रयत पांडवः १० कारणंचैवतत्तेषामाचचक्षेतपस्विनाम् ॥ तानुग्रतपसःप्रीतान्कृत्वापार्थाःप्रदक्षिणाम् ११ ब्राह्मणास्तेऽन्वमोदंतशिवेनकुशलेनच ॥ सुखोदर्कमिमंक्लेश मचिराद्भरतर्षभ १२ क्षत्रधर्मेणधर्मज्ञतीर्त्वागांपालयिष्यसि ॥ तत्तुराजावचस्तेषांप्रतिगृह्यतपस्विनाम् १३ प्रतस्थेसहविप्रैस्तैर्भ्रातृभिश्चपरंतपः ॥ राक्षसैरनुयातोवै लोमशेनाभिरक्षितः १४ क्वचित्पद्भ्यांततोऽगच्छद्राक्षसैरुह्यतेक्वचित् ॥ तत्रतत्रमहातेजाभ्रातृभिःसहसुव्रतः १५ ततोयुधिष्ठिरोराजाबहून्क्लेशान्विचिंतयन् ॥ सिंहव्याघ्रगजाकीर्णामुदीचींप्रययौदिशम् १६ अवेक्ष्यमाणःकैलासंमैनाकंचैवपर्वतम् ॥ गंधमादनपादांश्चश्वेतंचापिशिलोच्चयम् १७ उपर्युपरिशैलस्यबह्वीश्चसरितः शिवाः ॥ पृष्ठंहिमवतःपुण्यंययौसप्तदशेऽहनि १८ ददृशुःपांडवाराजन्गंधमादनमंतिकात् ॥ पृष्ठेहिमवतःपुण्येनानाद्रुमलतावृते १९ सलिलावर्तसंजातैःपु ष्पितैश्चमहीरुहैः ॥ समावृतंपुण्यतममाश्रमंवृषपर्वणः २० तमुपागम्यराजर्षिंधर्मात्मानमरिंदमाः ॥ पांडवावृषपर्वाणमवदंतगतक्लमाः २१ अभ्यनंदत्स राजर्षिःपुत्रवद्भरतर्षभान् ॥ पूजिताश्चावसंस्तत्रसप्तरात्रमरिंदमाः २२ अष्टमेऽहनिसंप्राप्तेतमृषिंलोकविश्रुतम् ॥ आमंत्र्यवृषपर्वाणंप्रस्थानंप्रत्यरोचयन् २३ एकैकश श्वतान्विप्रान्निवेद्यवृषपर्वणि ॥ न्यासभूतान्यथाकालंबंधूनिवसुसत्कृतान् २४ पारिबर्हंचतंशेषंपरिदायमहात्मने ॥ ततस्तेयज्ञपात्राणिरत्नान्याभरणानिच २५ न्यदधुःपांडवाराजन्नाश्रमेवृषपर्वणः ॥ अतीतानागतेविद्वान्कुशलःसर्वधर्मवित् २६ अन्वशासत्सधर्मज्ञःपुत्रवद्भरतर्षभान् ॥ तेऽनुज्ञातामहात्मानःप्रययुर्दिशमुत्तराम् २७ तान्प्रस्थितानभ्यगच्छद्वृषपर्वामहीपतिः ॥ उपन्यस्यमहातेजाविप्रेभ्यःपांडवांस्तदा २८ अनुसंसार्यकौंतेयानाशीर्भिरभिनंद्यच ॥ वृषपर्वानिववृतेपंथानमुप दिश्यच २९ नानामृगगणैर्जुष्टंकौंतेयःसत्यविक्रमः ॥ पदातिर्भ्रातृभिःसार्धंप्रातिष्ठतयुधिष्ठिरः ३० नानाद्रुमनिरोधेषुवसंतःशैलसानुषु ॥ पर्वतंविविशुस्तेतंचतुर्थेऽ हनिपांडवाः ३१ महाभ्रघनसंकाशंसलिलोपहितंशुभम् ॥ मणिकांचनरूपस्यशिलानांचसमुच्चयान् ३२ तेसमासाद्यपंथानंयथोक्तंवृषपर्वणा ॥ अनुसस्रुर्यथोद्देशंपश्यं तोविविधान्नगान् ३३ उपर्युपरिशैलस्यगुहाःपरमदुर्गमाः ॥ सुदुर्गमांस्तेसुबहून्सुखेनैवाभिचक्रमुः ३४ धौम्यःकृष्णाचपार्थाश्चलोमशश्चमहानृषिः ॥ अगच्छन्स हितास्तत्रनकश्चिदवहीयते ३५ तेमृगद्विजसंघुष्टंनानाद्रुमलतायुतम् ॥ शाखामृगगणैश्चैवसेवितंसुमनोरमम् ३६ पुण्यंपद्मसरोयुक्तंसपल्वलमहावनम् ॥ उपतस्थुर्महाभागामाल्यवंतंमहागिरिम् ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ काश्मरीगंभारी ४६ क्षीरिकाराजादना ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ तामरसानां रक्तोत्पलानां रस एवआसवो

ततःकिंपुरुषावाससिद्धचारणसेवितम् ॥ ददृशुर्हृष्टरोमाणःपर्वतंगंधमादनम् ३८ विद्याधरानुचरितंकिन्नरीभिस्तथैवच ॥ गजसंघसमावाससिंहव्याघ्रगणायुतम् ३९ शरभोन्नादसंघुष्टंनानामृगनिषेवितम् ॥ तेगंधमादनवनंतन्नंदनवनोपमम् ४० मुदिताःपांडुतनयामनोहृदयनंदनम् ॥ विविशुःक्रमशोवीराःशरण्यंशुभकाननम् ४१ द्रौपदीसहितावीरास्तैश्चविप्रैर्महात्मभिः ॥ शृण्वंतःप्रीतिजननान्वल्गून्मदकलान्शुभान् ४२ श्रोत्ररम्यान्सुमधुरान्शब्दान्खगमुखेरितान् ॥ सर्वर्तुफलभाराढ्यान्सर्वर्तुकुसुमोज्ज्वलान् ४३ पश्यंतःपादपांश्चापिफलभारावनामितान् ॥ आम्रानाम्रातकान्भव्यान्नारिकेलान्सतिंदुकान् ४४ मुंजातकांस्तथांजीरान्दाडिमान्बीजपूरकान् ॥ पनसाँल्लकुचान्मोचान्खर्जूरानम्लवेतसान् ४५ परावतांस्तथाक्षौद्रान्नीपांश्चापिमनोरमान् ॥ बिल्वान्कपित्थान्जंबूंश्चकाश्मरीर्बदरीस्तथा ४६ प्लक्षानुदुंबरवटानश्वत्थान्क्षीरिकास्तथा ॥ भल्लातकानामलकीर्हरीतकबिभीतकान् ४७ इंगुदान्करमर्दांश्चतिंदुकांश्चमहाबलान् ॥ एतानन्यांश्चविविधान्गंधमादनसानुषु ४८ फलैरमृतकल्पैस्तानाचितान्स्वादुभिस्तरून् ॥ तथैवचंपकाशोकान्केतकान्बकुलांस्तथा ४९ पुन्नागान्सप्तपर्णांश्चकर्णिकारान्सकेतकान् ॥ पाटलान्कुटजान्रम्यान्मंदारेंदीवरांस्तथा ५० पारिजातान्कोविदारान्देवदारुद्रुमांस्तथा ॥ शालांस्तालांस्तमालांश्चपिप्पलान्हिंगुकांस्तथा ५१ शाल्मलीःकिंशुकाशोकान्शिंशपाःसरलांस्तथा ॥ चकोरैःशतपत्रैश्चभृंगराजैस्तथाशुकैः ५२ कोकिलैःकलविंकैश्चहारितैर्जीवजीवकैः ॥ प्रियकैश्चातकैश्चैवतथाऽन्यैर्विविधैःखगैः ५३ श्रोत्ररम्यंसुमधुरंकूजद्भिश्चाप्यधिष्ठितान् ॥ सरांसिचमनोज्ञानिसमंताज्जलचारिभिः ५४ कुमुदैःपुंडरीकैश्चतथाकोकनदोत्पलैः ॥ कल्हारैःकमलैश्चैवआचितानिसमंततः ५५ कादंबैश्चक्रवाकैश्चकुररैर्जलकुक्कुटैः ॥ कारंडवैःप्लवैर्हंसैर्बकैर्मद्गुभिरेवच ५६ एतैश्चान्यैश्चकीर्णानिसमंताज्जलचारिभिः ॥ हृष्टैस्तथातामरसरसासवमदालसैः ५७ पद्मोदरच्युतरजःकिंजल्कारुणरंजितैः ॥ मंजुस्वरैर्मधुकरैर्विरुतान्कमलाकरान् ५८ अपश्यंस्तेनरव्याघ्रागंधमादनसानुषु ॥ तथैवपद्मषंडैश्चमंडितांश्चसमंततः ५९ शिखंडिनीभिःसहितान्लतामंडलकेषुच ॥ मेघतूर्यरवोद्दाममदनाकुलितान्भृशम् ६० कृत्वैवकेकामधुरंसंगीतंमधुरस्वरम् ॥ चित्रान्कलापान्विस्तीर्यसविलासान्मदालसान् ६१ मयूरान्ददृशुर्हृष्टान्नृत्यतोवनलालसान् ॥ कांश्चित्प्रियाभिःसहितान्रममाणान्कलापिनः ६२ वल्लीलतासंकटेषुकुटजेषुस्थितांस्तथा ॥ कांश्चिच्चकुटजानांतुविटपेषूत्कटानिव ६३ कलापरुचिराटोपनिचितान्मुकुटानिव ॥ विवरेषुतरूणांचरुचिरान्ददृशुश्चते ६४ सिंधुवारांस्तथोदारान्मन्मथस्येवतोमरान् ॥ सुवर्णवर्णकुसुमान्गिरीणांशिखरेषुच ६५ कर्णिकारान्विकसितान्कर्णपूरानिवोत्तमान् ॥ तथाऽपश्यन्कुरबकान्वनराजिषुपुष्पितान् ६६

मधंतज्जेनमदेनअलसाः ५७ विरुतान्विशिष्टशब्दयुतान् ५८ । ५९ । ६० । ६१ । ६२ कुटजेषुवृक्षविशेषेषुवल्लीनांलताप्रतानानितैःसंकटेषुकुंजीकृतेषु ६३ । ६४ सिंधुवारान् पत्रविशेषान् ६५ । ६६

कामवश्यानांनराणामौत्सुक्यकरान् ६७ । ६८ । ६९ । ७० । ७१ स्फाटिकाभानिनिर्मलानि सारसानामभिरुतंचयेषुतानिसरांसीत्युत्तरेणान्वयः ७२ । ७३ । ७४ । ७५ । ७६ हेभीम ७७ । ७८ । ७९

कामवश्यौत्सुक्यकरान्कामस्यैवशरोत्करान् ॥ तथैववनराजीनामुदारान्रचितानिव ६७ विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव ॥ तथाऽनंगशराकारान्सह कारान्मनोरमान् ६८ अपश्यन्भ्रमरारावान्मंजरीभिर्विराजितान् ॥ हिरण्यसदृशैः पुष्पैर्दावाग्निसदृशैरपि ६९ लोहितैरंजनाभैश्चवैदूर्यसदृशैरपि ॥ अतीववृक्षाराजंते पुष्पिताःशैलसानुषु ७० तथाशालांस्तमालांश्चपाटलाबकुलानपि ॥ मालाइवसमासक्ताःशैलानांशिखरेषुच ७१ विमलस्फाटिकाभानिपांडुरच्छदनैर्द्विजैः ॥ क लहंसैरुपेतानिसारसाभिरुतानिच ७२ सरांसिबहुशःपार्थाःपश्यंतःशैलसानुषु ॥ पद्मोत्पलविमिश्राणिसुखशीतजलानिच ७३ एवंक्रमेणतेवीरावीक्षमाणाःसमंततः ॥ गंधवंत्यथमाल्यानिरसवंतिफलानिच ७४ सरांसिचमनोज्ञानिवृक्षांश्चातिमनोरमान् ॥ विविशुःपांडवाःसर्वेविस्मयोत्फुल्ललोचनाः ७५ कमलोत्पलकह्लारपुंडरीकसु गंधिना ॥ सेव्यमानावनेतस्मिन्सुखस्पर्शेनवायुना ७६ ततोयुधिष्ठिरोभीममाहेदंप्रीतिमद्वचः ॥ अहोश्रीमदिदंभीमगंधमादनकाननम् ७७ वनेह्यस्मिन्मनोरम्ये दिव्याःकाननजाद्रुमाः ॥ लताश्चविविधाकाराःपत्रपुष्पफलोपगाः ७८ भांत्येतेपुष्पविकचाःपुंस्कोकिलकुलाकुलाः ॥ नात्रकंटकिनःकेचिन्नचविद्यंत्यपुष्पिताः ॥ ७९ स्निग्धपत्रफलावृक्षागंधमादनसानुषु ॥ भ्रमरारावमधुरानलिनीःफुल्लपंकजाः ८० विलोड्यमानाःपश्येमाःकरिभिःसकरेणुभिः ॥ पश्येमांनलिनींचान्यांकम लोत्पलमालिनीम् ८१ स्रग्धरांविग्रहवतींसाक्षाच्छ्रियमिवापराम् ॥ नानाकुसुमगंधाढ्यास्तस्येमाःकाननोत्तमे ८२ उपगीयमानाभ्रमरैराजंतेवनराजयः ॥ पश्य भीमशुभान्देशान्देवाक्रीडान्समन्ततः ८३ अमानुषगतिंप्राप्ताःसंसिद्धाःस्मवृकोदर ॥ लताभिःपुष्पिताग्राभिःपुष्पिताःपादपोत्तमाः ८४ संश्लिष्टाःपार्थशोभंतेगंधमा दनसानुषु ॥ शिखंडिनीभिश्चरतांसहितानांशिखंडिनाम् ८५ नदतांशृणुनिर्घोषंभीमपर्वतसानुषु ॥ चकोराःशतपत्राश्चमत्तकोकिलसारिकाः ८६ पत्रिणःपुष्पितानेतान्संपतंतिमहाद्रुमान् ॥ रक्तपीतारुणाःपार्थपादपाग्रगताःखगाः ८७ परस्परमुदीक्षंतेबहवोजीवजीवकाः ॥ हरितारुणवर्णानांशाद्वलानांसमीपतः ८८ सारसाः प्रतिदृश्यंतेशैलप्रस्रवणेष्वपि ॥ वदंतिमधुरावाचःसर्वभूतमनोरमाः ८९ भृंगराजोपचक्राश्चलोहपृष्ठाःपतत्रिणः ॥ चतुर्विषाणाःपद्माभाःकुंजराःसकरेणवः ९० एतेवै दूर्यवर्णाभंक्षोभयंतिमहत्सरः ॥ बहुतालसमुत्सेधाःशैलशृंगपरिच्युताः ९१ नानाप्रस्रवणेभ्यश्चवारिधाराःपतंतिच ॥ भास्कराभप्रभाभीमाःशारदाभ्रघनोपमाः ९२ शोभयंतिमहाशैलंनानारजतधातवः ॥ क्वचिदंजनवर्णाभाःक्वचित्कांचनसन्निभाः ९३ धातवोहरितालस्यक्वचिद्धिंगुलकस्यच ॥ मनःशिलागुहाश्चैवसंध्याभ्रनिकरोप माः ९४ शशलोहितवर्णाभाःक्वचिद्गैरिकधातवः ॥ सितासिताभ्रप्रतिमाबालसूर्यसमप्रभाः ९५

८० नलिनींसरसींकमलोत्पलयोरवांतरजातिभेदः ८१ विग्रहवतींशरीरवतीं तस्यशैलस्य ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ भृंगराजादयःपक्षिविशेषाः चतुर्विषाणाश्चतुर्दंताः पद्माभाः श्वेताः ९० । ९१ । ९२ । ९३ । ९४ । ९५

यथोक्तंवृषपर्वणानिमित्तभूतेनउक्तंमयासुरेण तथाहि सभापर्वणिमयेनवृषपर्वकथायुधिष्ठिरंप्रतिसभाकरणप्रसंगादुक्तेत्युक्तं 'सपूर्वदेवचरितंतदातत्रविशांपते। कथयामासदैतेयःपांडुपुत्रेषुभारत' इतिसमयः पूर्वदेवोऽसुरःवृषपर्वा ९६।९७।९८।९९।१००।१०१।१०२।१०३॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अष्टपंचाशदधिकशततमोऽध्यायः॥ १५८॥ ॥ युधिष्ठिरइति नामकीर्तयन्युधि

एतेबहुविधाःशैलंशोभयंतिमहाप्रभाः ॥ गंधर्वाःसहकांताभिर्ययोक्तंवृषपर्वणा ९६ दृश्यंतेशैलशृंगेषुपार्थकिंपुरुषैःसह: ॥ गीतानांसमतालानांतथासाम्नांचनिःस्वनः ९७ श्रूयतेबहुधाभीमसर्वभूतमनोहरः महागंगामुदीक्षस्वपुण्यांदेवनदींशुभाम् ९८ कलहंसगणैर्जुष्टामृषिकिन्नरसेविताम् ॥ धातुभिश्चसरिद्भिश्चकिन्नरैर्मृगपक्षिभिः ९९ गंधर्वैरप्सरोभिश्चकाननैश्चमनोरमैः ॥ व्यालैश्चविविधाकारैःशतशीर्षैःसमंततः १०० उपेतंपश्यकौंतेयशैलराजमरिंदम ॥ वैशंपायन उवाच ॥ तेप्रीतमनसःशूराःप्राप्तागतिमनुत्तमाम् १०१ नातृप्यन्पर्वतेंद्रस्यदर्शनेनपरंतपाः ॥ उपेतमथमाल्यैश्चफलवद्भिश्चपादपैः २ आर्ष्टिषेणस्यराजर्षेराश्रमंददृशुस्तदा ॥ ततस्तेतिग्मतपसंकृशंधमनिसंततम् ॥ पारगंसर्वधर्माणामार्ष्टिषेणमुपागमन् १०३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणियक्षयुद्धपर्वणिगंधमादनप्रवेशेअष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ युधिष्ठिरस्तमासाद्यतपसादग्धकिल्बिषम् ॥ अभ्यवादयतप्रीतःशिरसानामकीर्तयन् १ ततःकृष्णाचभीमश्चयमौचसुतपस्विनौ ॥ शिरोभिःप्राप्यराजर्षिंपरिवार्योपतस्थिरे २ तथैवधौम्योधर्मज्ञःपांडवानांपुरोहितः ॥ यथान्यायमुपाक्रांतस्तमृषिंसंशितव्रतम् ३ अन्वजानात्सधर्मज्ञोमुनिर्दिव्येनचक्षुषा ॥ पांडोःपुत्रान्कुरुश्रेष्ठानास्यतामितिचाब्रवीत् ४ कुरूणामृषभंपार्थंपूजयित्वामहातपाः ॥ सहभ्रातृभिरासीनंपर्यपृच्छदनामयम् ५ नानृतेकुरुषेभावंकच्चिद्धर्मेप्रवर्तसे ॥ मातापित्रोश्चतेवृत्तिःकच्चित्पार्थनसीदति ६ कच्चित्तेगुरवःसर्वेवृद्धावैद्याश्चपूजिताः ॥ कच्चिन्नकुरुषेभावंपार्थपापेषुकर्मसु ७ सुकृतंप्रतिकर्तुंचकच्चिद्धातुंचदुष्कृतम् ॥ यथान्यायंकुरुश्रेष्ठजानासिनविकत्थसे ८ यथार्हमानिताःकच्चित्त्वयानन्दंतिसाधवः ॥ वनेष्वपिवसन्कच्चिद्धर्ममेवानुवर्तसे ९ कच्चिद्धौम्यस्त्वदाचारैर्नपार्थपरितप्यते ॥ दानधर्मतपःशौचैरार्जवेनतितिक्षया १० पितृपैतामहंवृत्तंकच्चित्पार्थानुवर्तसे ॥ कच्चिद्राजर्षियातेनपथागच्छसिपांडव ११ स्वेस्वेकिलकुलेजातेपुत्रेनप्तरिवापुनः ॥ पितरःपितृलोकस्थाःशोचंतिचहसंतिच १२ किंतस्यदुष्कृतेऽस्माभिःसंप्राप्तव्यंभविष्यति ॥ किंचास्यसुकृतेस्माभिःप्राप्तव्यमितिशोभनम् १३ पितामातातथैवाग्निर्गुरुरात्माचपंचमः ॥ यस्यैतेपूजिताःपार्थतस्यलोकावुभौजितौ १४ ॥ युधिष्ठिरउवाच ॥ भगवानार्यमाऽऽहैतद्यथावद्धर्मनिश्चयम् ॥ यथाशक्तियथान्यायंक्रियतेविधिवन्मया १५ ॥ आर्ष्टिषेणउवाच ॥ अब्भक्षावायुभक्षाश्चप्लवमानाविहायसा ॥ जुषंतेपर्वतश्रेष्ठमृषयःपर्वसंधिषु १६

ष्ठिरोऽहंत्वामभिवादयेइतिवदन् १।२।३ मुनिःआर्ष्टिषेणः ४।५ वृत्तिर्यथायोग्यमाज्ञापालनश्राद्धकरणादिरूपा ६ वैद्याःविद्ययाविदिताः ७ सुष्ठुकृतमस्यतमुपकारिणं दुष्कृतमपकारिणंहातुंत्यक्तुंनविकत्थसे ज्ञातास्मीतिनश्लाघसे ८।९।१०।११।१२।१३।१४ यथावत्प्राहयथामामाह १५ पर्वसंधिषुप्रतिपत्पंचदश्योरंतराले १६

कामिनःसहकांताभिःपरस्परमनुव्रताः ॥ दृश्यंतेशैलशृंगस्थायथाकिंपुरुषान्नृप १७ अरजांसिचवासांसिवसानाःकौशिकानिच ॥ दृश्यंतेबहवःपार्थगंधर्वाप्सरसांग णाः १८ विद्याधरगणाश्चैवस्रग्विणःप्रियदर्शनाः ॥ महोरगगणाश्चैवसुपर्णाश्चोरगादयः १९ अस्यचोपरिशैलस्यश्रूयतेपर्वसंधिषु ॥ भेरीपणवशंखानांमृदंगानांच निःस्वनः २० इहस्थैरेवतत्सर्वंश्रोतव्यंभरतर्षभाः ॥ नकार्यावःकथंचित्स्यात्तत्राभिगमनेमतिः २१ नचाप्यतःपरंशक्यंगंतुंभरतसत्तमाः ॥ विहारोह्यत्रदेवानाममानुष गतिस्तुसा २२ ईषच्चपलकर्माणंमनुष्यमिहभारत ॥ द्विषंतिसर्वभूतानिताडयंतिचराक्षसाः २३ अस्यातिक्रम्यशिखरंकैलासस्ययुधिष्ठिर ॥ गतिःपरमसिद्धानांदेवर्षी णांप्रकाशते २४ चापलादिहगच्छंतंपार्थयानमितःपरम् ॥ अयःशूलादिभिर्घ्नंतिराक्षसाःशत्रुसूदन २५ अप्सरोभिःपरिवृतःसमृद्ध्यानरवाहनः ॥ इहवैश्रवणस्तात पर्वसंधिषुदृश्यते २६ शिखरस्थंसमासीनमधिपंयक्षरक्षसाम् ॥ प्रेक्षंतसर्वभूतानिभानुमंतमिवोदितम् २७ देवदानवसिद्धानांतथावैश्रवणस्यच ॥ गिरेःशिखरमुद्या नमिदंभरतसत्तम २८ उपासीनस्यधनदंतुम्बुरोःपर्वसंधिषु ॥ गीतसामस्वनस्तातश्रूयतेगंधमादने २९ एतदेवंविधंचित्रमिहतातयुधिष्ठिर ॥ प्रेक्षंतेसर्वभूतानिबहुशः पर्वसंधिषु ३० भुंजानामुनिभोज्यानिरसवंतिफलानिच ॥ वसध्वंपांडवश्रेष्ठायावदर्जुनदर्शनात् ३१ नतातचपलैर्भाव्यमिहप्राप्तैःकथंचन ॥ उषित्वेहयथाकामंयथाश्र द्धंविहृत्यच ॥ ततःशस्त्रजितांतातपृथिवींपालयिष्यसि ३२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणियक्षयुद्धप० आर्ष्टिषेणयुधिष्ठिरसंवादेऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥ ॥ जनमेजयउवाच ॥ ॥ आर्ष्टिषेणाश्रमेतस्मिन्ममपूर्वपितामहाः ॥ पांडोःपुत्रामहात्मानःसर्वेदिव्यपराक्रमाः १ कियंतंकालमवसन्पर्वतेगं धमादने ॥ किंचचक्रुर्महावीर्याःसर्वेऽतिबलपौरुषाः २ कानिचाभ्यवहार्याणितत्रतेषांमहात्मनाम् ॥ वसतांलोकवीराणामासंस्तद्ब्रूहिसत्तम ३ विस्तरेणचमेशंसभो मसेनपराक्रमम् ॥ यद्यच्चक्रेमहाबाहुस्तस्मिन्हैमवतेगिरौ ४ नखल्वासीत्पुनर्युद्धंतस्ययक्षैर्द्विजोत्तम ॥ कच्चित्समागमस्तेषामासीद्वैश्रवणस्यच ५ तत्रह्यायातिधन दआर्ष्टिषेणोयथाऽब्रवीत् ॥ एतदिच्छाम्यहंश्रोतुंविस्तरेणतपोधन ॥ नहिमेशृण्वतस्तृप्तिरस्तितेषांविचेष्टितम् ६ ॥ वैशंपायनउवाच ॥ एतदात्महितंश्रुत्वातस्याप्र तिमतेजसः ॥ शासनंसततंचक्रुस्तथैवभरतर्षभाः ७ भुंजानामुनिभोज्यानिरसवंतिफलानिच ॥ शुद्धबाणहतानांचमृगाणांपिशितान्यपि ८ मेध्यानिहिमवत्पृष्ठेमधू निविविधानिच ॥ एवंतेन्यवसंस्तत्रपांडवाभरतर्षभाः ९ तथानिवसतांतेषांपंचमंवर्षमभ्यगात् ॥ शृण्वतांलोमशोक्तानिवाक्यानिविविधान्युत १० कृत्यकालउपस्था स्यइतिचोक्त्वाघटोत्कचः ॥ राक्षसैःसहसर्वैश्चपूर्वमेवगतःप्रभो ११ आर्ष्टिषेणाश्रमेतेषांवसतांवैमहात्मनाम् ॥ अगच्छन्बहवोमासाःपश्यतांमहदद्भुतम् १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ पृथूविशिष्टौअंसौयस्यसपृथुव्यंसः २९ । ३० । ३१ । ३२ । ३३ ग्लानिःश्रमः कातर्यंभयं वैक्लव्यमनुत्साहः मत्सरःपरोत्कर्षासहिष्णुत्वम् ३४ एकायनं वामदक्षिणसंचारशून्यम् ३५ । ३६ । ३७ परिक्षिप्तंपरितआवृतम् ३८ चयाट्टालकशोभिना चयःप्राकारस्यमूलबंधः अट्टालकउपरिगृहम् । ‘ चयःसमूहे

तैस्तत्रविहरद्भिश्चरममाणैश्चपांडवैः ॥ प्रीतिमंतोमहाभागामुनयश्चारणास्तथा १३ आजग्मुःपांडवान्द्रष्टुंशुद्धात्मानोयतव्रताः ॥ तेतैःसहकथांचक्रुर्दिव्यांभरतसत्तमाः १४ ततःकतिपयाहस्यमहाह्रदनिवासिनम् ॥ ऋद्धिमंतंमहानागंसुपर्णःसहसाऽहरत् १५ प्राकंपतमहाशैलःप्रामृद्यंतमहाद्रुमाः ॥ ददृशुःसर्वभूतानिपांडवाश्चतदद्भुतम् १६ ततःशैलोत्तमस्याग्रात्पांडवान्प्रतिमारुतः ॥ अवहत्सर्वमाल्यानिगंधवंतिशुभानिच १७ तत्रपुष्पाणिदिव्यानिसुहृद्भिःसहपांडवाः ॥ ददृशुःपंचवर्णानिद्रौपदीचयशस्विनी १८ भीमसेनंततःकृष्णाकालेवचनमब्रवीत् ॥ विविक्तेपर्वतोद्देशेसुखासीनंमहाभुजम् १९ सुपर्णानिलवेगेनश्वसनेनमहाबलात् ॥ पंचवर्णानिपात्यंतेपुष्पाणिभरतर्षभ २० प्रत्यक्षंसर्वभूतानांनदीमश्वरथांप्रति ॥ खांडवेसत्यसंधेनभ्रात्रातवमहात्मना २१ गन्धर्वोरगरक्षांसिवासवश्चनिवारितः ॥ हतामायाविनश्चोग्राधनुःप्राप्तंचगांडिवम् २२ तवापिसुमहत्तेजोमहद्बाहुबलंचते ॥ अविषह्यमनाधृष्यंशक्रतुल्यपराक्रम २३ त्वद्बाहुबलवेगेनत्रासिताःसर्वराक्षसाः ॥ हित्वाशैलंप्रपद्यंतांभीमसेनदिशोदश २४ ततःशैलोत्तमस्याग्रंचित्रमाल्यधरंशिवम् ॥ व्यपेतभयसंमोहाःपश्यंतुसुहृदस्तव २५ एवंप्रणिहितंभीमचिरात्प्रभृतिमेमनः ॥ द्रष्टुमिच्छामिशैलाग्रंत्वद्बाहुबलपालिता २६ ततःक्षिप्तमिवात्मानंद्रौपद्यासपरंतपः ॥ नामृष्यतमहाबाहुःप्रहारमिवसद्गवः २७ सिंहर्षभगतिःश्रीमानुदारःकनकप्रभः ॥ मनस्वीबलवान्दृप्तोमानीशूरश्चपांडवः २८ लोहिताक्षःपृथुव्यंसोमत्तवारणविक्रमः ॥ सिंहदंष्ट्रोबृहत्स्कंधःशालपोतइवोद्गतः २९ महात्माचारुसर्वांगःकंबुग्रीवोमहाभुजः ॥ रुक्मपृष्ठंधनुःखङ्गंतूणांश्चापिपरामृशत् ३० सकेसरीवचोत्सिक्तःप्रभिन्नइववारणः ॥ व्यपेतभयसंमोहःशैलमभ्यपतद्बली ३१ तंमृगेंद्रमिवायांतंप्रभिन्नमिववारणम् ॥ ददृशुःसर्वभूतानिबाणकार्मुकधारिणम् ३२ द्रौपद्यावर्धयन्हर्षंगदामादायपांडवः ॥ व्यपेतभयसंमोहःशैलराजंसमाश्रितः ३३ नग्लानिर्नचकातर्यंनवैक्लव्यंनमत्सरः ॥ कदाचिज्जुषतेपार्थमात्मजंमातरिश्वनः ३४ तदेकायनमासाद्यविषमंभीमदर्शनम् ॥ बहुतालोच्छ्रयंशृंगमारुरोहमहाबलः ३५ सकिन्नरमहानागमुनिगंधर्वराक्षसान् ॥ हर्षयन्पर्वतस्याग्रमारुह्यसमहाबलः ३६ ततोवैश्रवणावासंददर्शभरतर्षभः ॥ कांचनैःस्फाटिकैश्चैववेश्मभिःसमलंकृतम् ३७ प्राकारेणपरिक्षिप्तंसौवर्णेनसमंततः ॥ सर्वरत्नद्युतिमतासर्वोद्यानवतातथा ३८ शैलादभ्युच्छ्रयवताचयाट्टालकशोभिना ॥ द्वारतोरणनिर्व्यूहध्वजसंवाहशोभिना ३९ विलासिनीभिरत्यर्थंनृत्यंतीभिःसमंततः ॥ वायुनाधूयमानाभिःपताकाभिरलंकृतम् ४० धनुष्कोटिमवष्टभ्यवक्रभावेनबाहुना ॥ पश्यमानःसखेदेनद्रविणाधिपतेःपुरम् ४१

प्राकारमूलबंधेसमाहिते ’ इतिमेदिनी । तोरणंबहिर्द्वारं निर्व्यूहःनागदंताख्यंगृहाग्निर्गतंदारु । ‘ निर्व्यूहोनागदंतेस्यात् ’ इतिविश्वः ३९ । ४० वक्रभावेनवक्रेणबाहुनाउपलक्षितः एतेऽस्मात्रमत्युद्गच्छंतीतिवा वक्रबुद्ध्या खेदेनतद्दर्शनात्स्वसंपत्स्मरणंतेन द्रविणाधिपतेःधनाधिपतेः ४१

४२ । ४३ ददृशे ददर्श ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ अदर्शयदधीकारंस्वाम्यंप्राग्दर्शितवान्यःसमणिमानितियत्तदोरध्या

मोदयन्सर्वभूतानिगंधमादनसंभवः ॥ सर्वगंधवहस्तत्रमारुतःसुसुखोववौ ४२ चित्राविविधवर्णाभाश्चित्रमंजरिधारिणः ॥ आचिंत्याविविधास्तत्रद्रुमाःपरमशोभिनः ४३ रत्नजालपरिक्षिप्तंचित्रमाल्यविभूषितम् ॥ राक्षसाधिपतेःस्थानंददृशेभरतर्षभः ४४ गदाखड्गधनुष्पाणिःसमभित्यक्तजीवितः ॥ भीमसेनोमहाबाहुस्तस्थौगिरिरिवाचलः ४५ ततःशंखमुपाध्मासीद्द्विषतांलोमहर्षणम् ॥ ज्याघोषतलशब्दंचकृत्वाभूतान्यमोहयत् ४६ ततःप्रहृष्टरोमाणस्तंशब्दमभिदुद्रुवुः ॥ यक्षराक्षसगंधर्वाःपांडवस्यसमीपतः ४७ गदापरिघनिर्स्त्रिंशशूलशक्तिपरश्वधाः ॥ प्रगृहीताव्यरोचंतयक्षराक्षसबाहुभिः ४८ ततःप्रववृतेयुद्धंतेषांतस्यचभारत ॥ तैःप्रयुक्तान्महामायैःशूलशक्तिपरश्वधान् ४९ भल्लैर्भीमःप्रचिच्छेदभीमवेगतरैस्ततः ॥ अंतरिक्षगतानांचभूमिष्ठानांचगर्जताम् ५० शरैर्विव्याधगात्राणिराक्षसानांमहाबलः ॥ सालोहितमहावृष्टिरभ्यवर्षन्महाबलम् ५१ गदापरिघपाणीनांरक्षसांकायसंभवाः ॥ कायेभ्यःप्रच्युताधारााराक्षसानांसमंततः ५२ भीमबाहुबलोत्सृष्टैरायुधैर्यक्षरक्षसाम् ॥ विनिकृत्तानिदृश्यंतेशरीराणिशिरांसिच ५३ प्रच्छाद्यमानंरक्षोभिःपांडवंप्रियदर्शनम् ॥ ददृशुःसर्वभूतानिसूर्यमभ्रगणैरिव ५४ सरश्मिभिरिवादित्यःशरैरिरिनिघातिभिः ॥ सर्वानार्छन्महाबाहुर्बलवान्सत्यविक्रमः ५५ अभितर्जयमानाश्चरुवंतश्चमहारवान् ॥ नमोहंभीमसेनस्यददृशुःसर्वराक्षसाः ५६ यक्षाविकृतसर्वांगाभीमसेनभयार्दिताः ॥ भीममार्तस्वरंचकुर्विप्रकीर्णमहायुधाः ५७ उत्सृज्यतेगदाशूलानसिशक्तिपरश्वधान् ॥ दक्षिणांदिशमाजग्मुस्त्रासितादृढधन्वना ५८ तत्रशूलगदापाणिर्व्यूढोरस्कोमहाभुजः ॥ सखावैश्रवणस्यासीन्मणिमान्नामराक्षसः ५९ अदर्शयदधीकारंपौरुषंचमहाबलः ॥ सतान्दृष्ट्वापरावृत्तान्स्मयमानइवाब्रवीत् ६० एकेनबहवःसंख्येमानुषेणपराजिताः ॥ प्राप्यवैश्रणावासंकिंवक्ष्यथधनेश्वरम् ६१ एवमाभाष्यतान्सर्वानभ्यवर्ततराक्षसः ॥ शक्तिशूलगदापाणिरभ्यधावत्सपांडवम् ६२ तमापतंतंवेगेनप्रभिन्नमिववारणम् ॥ वत्सदंतैस्त्रिभिःपार्श्वेभीमसेनःसमार्दयत् ६३ मणिमानपिसंक्रुद्धःप्रगृह्यमहतींगदाम् ॥ प्राहिणोद्भीमसेनायपरिगृह्यमहाबलः ६४ विद्युद्रूपांमहाघोरामाकाशेमहतींगदाम् ॥ शरैर्बहुभिरानर्छद्भीमसेनःशिलाशितैः ६५ प्रत्यहन्यंततेसर्वेगदामासाद्यसायकाः ॥ नवेगंधारयामासुर्गदावेगस्यवेगिताः ६६ गदायुद्धसमाचारंबुध्यमानःसवीर्यवान् ॥ व्यंसयामासतंतस्यप्रहारंभीमविक्रमः ६७ ततःशक्तिंमहाघोरांरुक्मदंडामयस्मयीम् ॥ तस्मिन्नेवांतरेधीमान्प्रजहाराथराक्षसः ६८ साभुजंभीममनिर्ह्रादाभित्त्वाभीमस्यदक्षिणम् ॥ साग्निज्वालामहारौद्रापपातसहसाभुवि ६९ सोऽतिविद्धोमहेष्वासःशक्त्याऽमितपराक्रमः ॥ गदांजग्राहकौन्तेयःक्रोधपर्याकुलेक्षणः ७०

हारेणयोज्यम् ६० संख्येसंग्रामे ६१ । ६२ । ६३ । ६४ । ६५ प्रत्यहन्यंतप्रतिहताः वेगितावेगवंतोऽपि गदावेगस्यगदायांवेगोऽत्यभ्यासोयस्यतस्य ६६ सभीमः व्यंसयामास व्यर्थीचकार ६७ अयस्मयीं छांदसंभत्वं अयोमयीम् ६८ । ६९ । ७०

शैक्यां शीकयतिशत्रून्पराभवनीतिशैक्या । शीकयतेर्ऋहलोर्ण्यदितिण्यत् ततः स्वार्थिकोऽण् ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षष्ट्यधिकशत

रुक्मपट्टपिनद्धांतांशत्रूणांभयवर्धिनीम् ॥ प्रगृह्याथनदन्भीमःशैक्यांसर्वायसींगदाम् ७१ तरसाचाभिदुद्रावमणिमंतंमहाबलम् ॥ दीप्यमानंमहाशूलंप्रगृह्यमणिमानपि ७२ प्राहिणोद्भीमसेनायवेगेनमहतानदन् ॥ भंक्त्वाशूलंगदाग्रेणगदायुद्धविशारदः ७३ अभिदुद्रावतंहंतुंगरुत्मानिवपन्नगम् ॥ सोऽन्तरिक्षमवप्लुत्यविधूयसहसागदाम् ७४ प्रचिक्षेपमहाबाहुर्विनद्यरणमूर्धनि ॥ सेंद्राशनिरिवेंद्रेणविसृष्टावातरंहसा ७५ हत्वारक्षःक्षितिंप्राप्यकृत्येवनिपपातह ॥ तंराक्षसंभीमबलंभीमसेनेनपातितम् ७६ ददृशुःसर्वभूतानिसिंहेनेवगवांपतिम् ॥ तंप्रेक्ष्यनिहतंभूमौहतशेषानिशाचराः ॥ भीममार्तस्वरंकृत्वाजग्मुःप्राचींदिशंप्रति ७७ ॥ इतिश्रीमहाभारते आरण्यकेपर्वणियक्षयुद्धपर्वणिमणिमद्वधेषष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥ वैशंपायनउवाच ॥ श्रुत्वाबहुविधैःशब्दैर्नाद्यमानांगिरेर्गुहाम् ॥ अजातशत्रुःकौंतेयोमाद्रीपुत्रावुभावपि १ धौम्यःकृष्णाचविप्राश्चसर्वेचसुहृदस्तथा ॥ भीमसेनमपश्यंतःसर्वेविमनसोऽभवन् २ द्रौपदीमार्ष्टिषेणायसंप्रधार्यमहारथाः ॥ सहिताःसायुधाःशूराःशैलमारुरुहुस्तदा ३ ततःसंप्राप्यशैलाग्रंवीक्षमाणामहारथाः ॥ ददृशुस्तेमहेष्वासाभीमसेनमरिंदमाः ४ स्फुरतश्चमहाकायान्गतसत्वांश्चराक्षसान् ॥ महाबलान्महासत्वान्भीमसेनेनपातितान् ५ शुशुभेसमहाबाहुर्गदाखड्गधनुर्धरः ॥ निहत्यसमरेसर्वान्दानवान्मघवानिव ६ ततस्तेभ्रातरंदृष्ट्वापरिष्वज्यमहारथाः ॥ तत्रोपविविशुःपार्थाःप्राप्तागतिमनुत्तमाम् ७ तैश्चतुर्भिर्महेष्वासैर्गिरिशृंगमशोभत ॥ लोकपालैर्महाभागैर्दिवंदेववरैरिव ८ कुबेरसदनंदृष्ट्वाराक्षसांश्चनिपातितान् ॥ भ्राताभ्रातरमासीनमब्रवीत्पृथिवीपतिः ९ ॥ युधिष्ठिरउवाच ॥ साहसाद्यदिवामोहाद्भीमपापमिदंकृतम् ॥ नैतत्तेसदृशंवीरमुनेरिवमृषावधः १० राजद्विष्टंनकर्तव्यमितिधर्मविदोविदुः ॥ त्रिदशानामिदंद्विष्टंभीमसेनत्वयाकृतम् ११ अर्थधर्मावनादृत्ययःपापेकुरुतेमनः ॥ कर्मणांपार्थपापानांसफलंविंदतेध्रुवम् ॥ पुनरेवंनकर्तव्यंममचेदिच्छसिप्रियम् १२ ॥ वैशंपायनउवाच ॥ एवमुक्त्वासधर्मात्माभ्राताभ्रातरमच्युतम् ॥ अर्थतत्त्वविभागज्ञःकुंतीपुत्रोयुधिष्ठिरः १३ विरराममहातेजास्तमेवार्थंविचिंतयन् ॥ ततस्तेहतशिष्टायेभीमसेनेनराक्षसाः १४ सहिताःप्रत्यपद्यंतकुबेरसदनंप्रति ॥ तेजवेनमहावेगाःप्राप्यवैश्रवणालयम् १५ भीममार्तस्वरंचक्रुर्भीमसेनभयार्दिताः ॥ न्यस्तशस्त्रायुधाःक्लांताःशोणिताक्ततनुच्छदाः १६ प्रकीर्णमूर्धजाराजन्यक्षाधिपतिमब्रुवन् ॥ गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः १७ राक्षसानिहताःसर्वेतवदेवपुरःसराः ॥ प्रमृद्यतरसाशैलंमानुषेणधनेश्वर १८ एकेनसहिताःसंख्येरणेक्रोधवशागणाः ॥ प्रवराराक्षसेंद्राणांयक्षाणांचनराधिप १९

तमोऽध्यायः ॥ १६० ॥ ॥ श्रुत्वेति १ । २ संप्रधार्यरक्षार्थंसमर्प्य ३ । ४ । ५ । ६ । ७ । ८ । ९ मुनेरिववनवासिनस्तेतवैतत् सदृशंनोचितं यत् मृषानिर्निमित्तं वधोरक्षसांहिंसा १० । ११ । १२ । १३ । १४ सहितामिलिताः १५ तनुच्छदःकवचादिः १६ । १७ । १८ । १९

लब्धशेषालब्धप्रसादाः । 'शेषःसंकर्षणेवधेअनंतेनाप्रसादेच' इतिमेदिनी । लब्धशैलइतिगौडपाठेतु लब्धोभीमेनजितःशैलःशैलस्थराक्षसगणः २० । २१ द्वितीयमिवद्वितीयंभयहेतुं । 'द्वितीयाद्वैभयंभवति' इतिश्रुतेः २२ युज्यतांरथइतिशेषः अभ्रघनःसजलमेघः । 'अभ्रंमेघेचगगनेधातुभेदेचकांचने' इतिमेदिनीकोशात् कांचनमेघसंकाशमितिवा २३ गंधर्वैर्हयैर्योजयामासुः यक्षाइतिशेषः विमलाक्षाःद

शेरतेनिहतादेवगतसत्वाःपरासवः ॥ लब्धशेषावयंमुक्तामणिमांस्तेसखाहतः २० मानुषेणकृतंकर्मविधत्स्वयदनंतरम् ॥ सतच्छ्रुत्वातुसंक्रुद्धःसर्वयक्षगणाधिपः २१ कोपसंरक्तनयनःकथमित्यब्रवीद्वचः ॥ द्वितीयमपराध्यंतंभीमंश्रुत्वाधनेश्वरः २२ चुक्रोधयक्षाधिपतिर्युज्यतामितिचाब्रवीत् ॥ अथाभ्रघनसंकाशं गिरिशृंगमिवोच्छ्रितम् २३ रथंसंयोजयामासुर्गंधर्वैर्हेममालिभिः ॥ तस्यसर्वगुणोपेताविमलाक्षाहयोत्तमाः २४ तेजोबलगुणोपेतानानारत्नविभूषिताः ॥ शोभमानारथेयुक्तास्तरिष्यंतइवाशुगाः २५ हेषयामासुरन्योन्यंहेषितैर्विजयावहैः ॥ सतमास्थायभगवान्राजराजोमहारथम् २६ प्रययौदेवगंधर्वैःस्तूयमानो महाद्युतिः ॥ तंप्रयांतंमहात्मानंसर्वेयक्षाधनाधिपम् २७ रक्ताक्षाहेमसंकाशामहाकायामहाबलाः ॥ सायुधाबद्धनिस्त्रिंशायक्षादशशतावराः २८ तेजवेनमहावेगाः प्लवमानाविहायसा ॥ गंधमादनमाजग्मुःप्रकर्षंतइवांबरम् २९ तत्केसरिमहाजालंधनाधिपतिपालितम् ॥ कुबेरंचमहात्मानंयक्षरक्षोगणावृतम् ३० ददृशुर्हृष्टरोमाणःपांडवाःप्रियदर्शनम् ॥ कुबेरस्तुमहासत्वान्पांडोःपुत्रान्महारथान् ३१ आत्तकार्मुकनिस्त्रिंशान्दृष्ट्वाप्रीतोऽभवत्तदा ॥ देवकार्यंचिकीर्षन्सहृदयेनतुतोषह ३२ तेपक्षिणइवापेतुर्गिरिशृंगंमहाजवाः ॥ तस्थुस्तेषांसमभ्याशेधनेश्वरपुरःसराः ३३ ततस्तंहृष्टमनसंपांडवान्प्रतिभारत ॥ समीक्ष्ययक्षगंधर्वानिर्विकारमवस्थिताः ३४ पांडवाश्चमहात्मानःप्रणम्यधनदंप्रभुम् ॥ नकुलःसहदेवश्चधर्मपुत्रश्चधर्मवित् ३५ अपराद्धमिवात्मानंमन्यमानामहारथाः ॥ तस्थुःप्रांजलयःसर्वेपरिवार्यधनेश्वरम् ३६ सह्यासनवरंश्रीमत्पुष्पकंविश्वकर्मणा ॥ विहितंचित्रपर्यंतमातिष्ठतधनाधिपः ३७ तमासीनंमहाकायाःशंकुकर्णामहाजवाः ॥ उपोपविविशुर्यक्षाराक्षसाश्चसहस्रशः ३८ शतशश्चापिगंधर्वास्तथैवाप्सरसांगणाः ॥ परिवार्योपतिष्ठंतयथादेवाःशतक्रतुम् ३९ कांचनींशिरसाबिभ्रद्भीमसेनःस्रजंशुभाम् ॥ पाशखड्गधनुष्पाणिरुदैक्षतधनाधिपम् ४० भीमसेनस्यनग्लानिर्विक्षतस्यापिराक्षसैः ॥ आसीत्तस्यामवस्थायांकुबेरमपिपश्यतः ४१ आददानंशितान्बाणान्योद्धुकाममवस्थितम् ॥ दृष्ट्वाभीमंधर्मसुतमब्रवीन्नरवाहनः ४२ विदुस्त्वांसर्वभूतानिपार्थभूतहितेरतम् ॥ निर्भयश्चापिशैलाग्रेवसत्वंभ्रातृभिःसह ४३ नचमन्युस्त्वयाकार्योभीमसेनस्यपांडव ॥ कालेनैतेहताःपूर्वंनिमित्तमनुजस्तव ४४ व्रीडाचात्रनकर्तव्यासाहसंयदिदंकृतम् ॥ दृष्टश्चापिसुरैःपूर्वंविनाशोयक्षरक्षसाम् ४५ नभीमसेनेकोपोमेप्रीतोऽस्मिभरतर्षभ ॥ कर्मणाभीमसेनस्यममतुष्टिरभूत्पुरा ४६

शावर्तशुद्धाः २४ । २५ । २६ । २७ । २८ । २९ केसरिमहाजालमश्वानांमहद्वृंदं ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ दृष्टोज्ञातः ४५ । ४६

४७ । ४८ । ४९ । ५० ममया संक्लेशोभाविदुःखं ५१ । ५२ । ५३ कुशवत्यांकुशस्थलीसंज्ञेदेशविशेषे ५४ । ५५ । ५६ एधितंसमिद्धं ५७ मौर्ख्यादविचाराक्षमत्वात् अतएवअगस्त्योऽयमित्यज्ञानभावात् मौर्ख्यमपिदर्पात्संपत्तिगर्वात् सोऽपिमोहात्संपत्तेरनैश्वरत्वाज्ञानात् ५८ न्यष्ठीवत्थूत्कृतवान् ५९ । ६० । ६१ सैन्यानामिति । तव सैन्यानांमध्ये यस्तवआज्ञांकरिष्यतितत् घोरंशापंमानुषात्मरणरूपंनमाप्स्यते घोरत्वेहेतुः पुत्रेति पुत्रपौत्राःबलानिसैन्यानिचतेष्वन्वितं राक्षसाः सर्वेपुत्रादियुक्तामानुषवध्याभवंत्वित्येकस्यापराधेबहूनांदंडरूपइतिघोरत्वंशापस्येत्यर्थः ६२ । ६३ ॥ ॥इत्यारण्यकेपर्वणि

॥ वैशंपायनउवाच ॥ एवमुक्तातुराजानंभीमसेनमभाषत ॥ नैतन्मनसिमेतातवर्ततेकुरुसत्तम ४७ यदिदंसाहसंभीमकृष्णार्थेकृतवानसि ॥ मामनादृत्यदेवांश्चविनाशंयक्षरक्षसाम् ४८ स्वबाहुबलमाश्रित्यतेनाहंप्रीतिमांस्त्वयि ॥ शापादद्यविनिर्मुक्तोघोरादस्मिवृकोदर ४९ अहंपूर्वमगस्त्येनक्रुद्धेनपरमर्षिणा ॥ शप्तोऽपराधेकस्मिंश्चित्तस्यैषानिष्कृतिःकृता ५० दृष्टोहिममसंक्लेशःपुरापांडवनंदन ॥ नतवात्रापराधोऽस्तिकथंचिदपिपांडव ५१ ॥ युधिष्ठिरउवाच ॥ कथंशप्तोऽसिभगवन्नगस्त्येनमहात्मना ॥ श्रोतुमिच्छाम्यहंदेवतवैतच्छापकारणम् ५२ इदंचाश्चर्यभूतंमेयत्क्रोधात्तस्यधीमतः ॥ तदैवत्वंननिर्दग्धःसबलःसपदानुगः ५३ ॥ धनेश्वरउवाच ॥ देवतानामभून्मंत्रःकुशवत्यांनरेश्वर ॥ वृतस्तत्राहमगमंमहापद्मशतैस्त्रिभिः ५४ यक्षाणांघोररूपाणांविविधायुधधारिणाम् ॥ अध्वन्यहमथापश्यमगस्त्यमृषिसत्तमम् ५५ उग्रंतपस्तप्यमानंयमुनातीरमाश्रितम् ॥ नानापक्षिगणाकीर्णेपुष्पितद्रुमशोभितम् ५६ तमूर्ध्वबाहुंदृष्ट्वैवसूर्यस्याभिमुखेस्थितम् ॥ तेजोराशिंदीप्यमानंहुताशनमिवैधितम् ५७ राक्षसाधिपतिःश्रीमान्मणिमान्नाममेसखा ॥ मौर्ख्यादज्ञानभावाच्चदर्पान्मोहाच्चपार्थिव ५८ न्यष्ठीवदाकाशगतोमहर्षेस्तस्यमूर्धनि ॥ सकोपान्मामुवाचेदंदिशःसर्वादहन्निव ५९ मामवज्ञायदुष्टात्मायस्मादेषसखातव ॥ धर्षणांकृतवानेतांपश्यतस्तेधनेश्वर ६० तस्मात्सहैभिःसैन्यैस्तेवधंप्राप्स्यतिमानुषात् ॥ त्वंचाप्येभिर्हतैःसैन्यैःक्लेशंप्राप्येहदुर्मतिः ॥ तमेवमानुषंदृष्ट्वाकिल्बिषाद्विप्रमोक्ष्यसे ६१ सैन्यानांतुतवैतेषांपुत्रपौत्रबलान्वितम् ॥ नशापंप्राप्यतेघोरंतत्तवाज्ञांकरिष्यति ६२ एषशापोमयाप्राप्तःप्राक्तस्माद्दृषिसत्तमात् ॥ सभीमेनमहाराजभ्रात्रातवविमोक्षितः ६३ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणियक्षयुद्धपर्वणिकुबेरदर्शनेएकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥ ॥ ॥ ॥ धनदउवाच ॥ ॥ युधिष्ठिरधृतिर्दाक्ष्यंदेशकालपराक्रमाः ॥ लोकतंत्रविधानानामेषपंचविधोविधिः १ धृतिमंतश्चदक्षाश्चस्वेस्वेकर्मणिभारत ॥ पराक्रमविधानज्ञानराःकृतयुगेऽभवन् २ धृतिमान्देशकालज्ञःसर्वधर्मविधानवित् ॥ क्षत्रियःक्षत्रियश्रेष्ठप्रशास्तिपृथिवींचिरम् ३ यएवंवर्ततेपार्थपुरुषःसर्वकर्मसु ॥ सलोकेलभतेवीरयशःप्रेत्यचसद्गतिम् ४

नैलकंठीये भारतभावदीपे एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥ एवंशापकीर्तनव्याजेनमहतामवज्ञानकर्तव्येतिसूचितमर्थंकंठतोऽपिवक्तुंप्राह युधिष्ठिरेत्यादिना । धृतिःसंकटेष्वविक्लवता दाक्ष्यंयत्नशीलता पराक्रमःशत्रूणामभिभवनहेतुः क्रिया देशकालयोरानुकूल्यंचेति विधानानांकार्याणांविधिरभ्युदयहेतुः । अदेशेअकालेचकृतंधूतादिकमभिभवहेतुरित्यर्थः १ धृतिमंतइति । कृतयुगेहिज्ञानस्याप्राधान्यात् ज्ञानस्यचसर्वस्मिन्देशेकालेचाभ्युदयहेतुत्वात्तत्रदेशकालप्रतीक्षाऽऽसीदित्यर्थः २ क्षत्रियाणांतुसर्वमेवैतत्पंचकमावश्यकमित्याह धृतिमानिति ३ । ४

वृत्रहेतिपराक्रमंनिर्दिशति ५ संरंभातकोपात ६ । ७ निकृतीनांवंचनापराणाम् ८ इममुपदेशंप्रकृतेयोजयति अधर्मज्ञइति अवलिप्तोगर्वितः ९ । १० प्रथमंप्रथमोत्पन्नानिरक्षांसितत्संबंधित्वात्पक्षोऽपिप्रथमः । रक्षोभयहेतावपितामिस्रपक्षेत्वंतत्रनिर्भयोवसेत्यर्थः । केचित्तु इतएवप्रथमशब्दान्मासारंभेकृष्णपक्षस्यप्राथम्यमिच्छंति तदसत् पूर्वपक्षापरपक्षशब्दयोःक्रमेणशुक्लकृष्णयोरेवरूढत्वात् श्रौतेऽपिपौर्णमासतएवेष्ट्या रंभात् । नचपूर्णोमासोऽस्यामितियोगात्पौर्णमास्यंतोमासइतिवाच्यं तत्रमासशब्दस्यचंद्रवाचित्वात् । 'सूर्यामासाविचरंतादिवि' इतिमंत्रवर्णात् । सूर्यामासासूर्याचंद्रमसावित्यर्थः निपुणतरमुपपादितमे

देशकालांतरप्रेप्सुःकृत्वाशक्रःपराक्रमम् ॥ संप्राप्तस्त्रिदिवेराज्यंवृत्रहावसुभिःसह ५ यस्तुकेवलसंरंभात्प्रपातंननिरीक्षते ॥ पापात्मापापबुद्धिर्यःपापमेवानुवर्तते ६ कर्मणामविभागज्ञःप्रेत्यचेहविनश्यति ॥ अकालज्ञःसुदुर्मेधाःकार्याणामविशेषवित् ७ वृथाचारसमारंभःप्रेत्यचेहविनश्यति ॥ साहसेवर्तमानानांनिकृतीनांदुरात्म नाम् ८ सर्वसामर्थ्यलिप्सूनांपापोभवतिनिश्चयः ॥ अधर्मज्ञोऽवलिप्तश्चबालबुद्धिरमर्षणः ९ निर्भयोभीमसेनोऽयंतंशाधिपुरुषर्षभ ॥ आर्ष्टिषेणस्यराजर्षेःप्राप्यभूयस्त्व माश्रमम् १० तामिस्रंप्रथमंपक्षंवीतशोकभयोवस ॥ अलकाःसहगंधर्वैर्यक्षाश्चसहकिन्नरैः ११ मन्नियुक्तामनुष्येंद्रसर्वेचगिरिवासिनः ॥ रक्षिष्यंतिमहाबाहोसहितं द्विजसत्तमैः १२ साहसादनुसंप्राप्तःप्रतिबुध्यवृकोदरः ॥ वार्यतांसाध्वयंराजंस्त्वयाधर्मभृतांवर १३ अतःपरंचवोराजन्द्रक्ष्यन्तिवनगोचराः ॥ उपस्थास्यंतिवोराजन् रक्षिष्यंतेचवःसदा १४ तथैवचान्नपानानिस्वादुनिचबहूनिच ॥ आहरिष्यंतिमत्प्रेष्याःसदावःपुरुषर्षभाः १५ यथाजिष्णुर्महेंद्रस्ययथावायोर्वृकोदरः ॥ धर्मस्यत्वंय थातातयोगोत्पन्नोनिजःसुतः १६ आत्मजावात्मसंपन्नौयमौचोभौयथाऽश्विनोः ॥ रक्ष्यास्तद्वन्ममापीहयूयंसर्वेयुधिष्ठिर १७ अर्थतत्त्वविधानज्ञःसर्वधर्मविधानवित् ॥ भीमसेनादवरजःफाल्गुनःकुशलीदिवि १८ याःकाश्चनमतालोकेस्वर्ग्याःपरमसंपदः ॥ जन्मप्रभृतिताःसर्वाःस्थितास्तातधनंजये १९ दमोदानंबलंबुद्धिर्ह्रीर्धृति स्तेजउत्तमम् ॥ एतान्यपिमहासत्वेस्थितान्यमिततेजसि २० नमोहात्कुरुतेजिष्णुःकर्मपांडवगर्हितम् ॥ नपार्थस्यमृषोक्तानिकथयंतिनरानृषु २१ सदेवपितृगंध र्वैःकुरूणांकीर्तिवर्धनः ॥ मानितःकुरुतेऽस्त्राणिशक्रसद्मनिभारत २२ योऽसौसर्वान्महीपालान्धर्मेणवशमानयत् ॥ सशांतनुर्महातेजाःपितुस्तवपितामहः २३ प्री यतेपार्थपार्थेनदिविगांडीवधन्वना ॥ सम्यक्चासौमहावीर्यःकुलधुर्येणपार्थिवः २४ पितॄन्देवानृषीन्विप्रान्पूजयित्वामहातपाः ॥ सप्तमुख्यान्महामेधानाहरद्यमुनांप्रति २५ अधिराजःसराजंस्त्वांशांतनुःप्रपितामहः ॥ स्वर्गजिच्छक्रलोकस्थःकुशलंपरिपृच्छति २६ ॥ ॥ वैशंपायनउवाच ॥ ॥ एतच्छ्रुत्वातुवचनंधनदेनप्रभाषि तम् ॥ पांडवाश्चततस्तेनबभूवुःसंप्रहर्षिताः २७

तदस्माभिःकाण्वशतपथभाष्येएकपादीकांडे । अलकाअलकावासिनः ११ मन्नियुक्तारक्षिष्यंति सहितंत्वामितिशेषः १२ साहसादनुसंप्राप्तइतिप्रतिबुद्धयवार्यताम् १३ । १४ । १५ यथेति । इंद्रा दीनामौरसपुत्रत्वाद्यथायूयंरक्ष्यास्तथाममापीतिश्लोकद्वयार्थः १६ । १७ अर्थेति । तत्त्वं याथात्म्यं विधानंप्राप्त्युपायम् १८ स्वर्ग्याःस्वर्मार्यहिताःसंपदः १९ ताएवाह दमइति । तेजःशौर्यपराभिभव सामर्थ्यम् २० । २१ कुरुतेअभ्यस्यति २२ । २३ । २४ महामेधानश्वमेधान् २५ । २६ । २७

प्राध्वंकृत्वाबद्ध्वाउपसंहृत्येत्यर्थः । प्राध्वंबंधनेइतिगतिसंज्ञायांकुगतिप्रादयइतिप्राप्तोऽपिसमासोमहाविभाषयानादृतः ॥मश्चक्रे स्वदोषानर्जुनगुणांश्चश्रुत्वालज्जितःस्वापराधंक्षमापयितुमित्यर्थः । प्राज्यंकृत्वेत्य पिपाठः प्रकर्षेणअज्यंप्राज्यं ज्यारहितमित्यर्थः २८ नंदिःसमृद्धिः २९ स्वेषुवेश्मसुअस्मदीयेषु योयुष्मत्संबंधिनः कामान्काम्यमानानर्थान नपरिहास्यंतिकिंतुसाधयिष्यंत्येवेत्यर्थः ३० सृष्टोविसर्जितः संप्रा प्स्यतियुष्मान् ३१ अस्तं गृहं । अपाःसोममस्तमिंद्रप्रयाहीतिमंत्रवर्णात् ३२ परिस्तोमाश्चित्रकंबलाहस्त्यादीनांपल्याणभूताः ३३ ऐरावतपथेइंद्रपुरीप्रदेशे ३४ । ३५ अपाकृष्यंतअपाकृतानि ३६

ततःशक्तिंगदांखड्गंधनुश्चभरतर्षभः ॥ प्राध्वंकृत्वानमश्चक्रेकुबेरायवृकोदरः २८ ततोऽब्रवीद्धनाध्यक्षःशरण्यःशरणागतम् ॥ मानहाभवशत्रूणांसुहृदांनंदिवर्धनः २९ स्वेषुवेश्मसुरम्येषुवसतामित्रतापनाः ॥ कामान्नपरिहास्यंतियक्षावोभरतर्षभाः ३० शीघ्रमेवगुडाकेशःकृतास्त्रःपुनरेष्यति ॥ साक्षान्मघवतासृष्टःसंप्राप्स्यतिधनंजयः ३१ एवमुत्तमकर्माणमनुशिष्ययुधिष्ठिरम् ॥ अस्तंगिरिवरश्रेष्ठंप्रययौगुह्यकाधिपः ३२ तंपरिस्तोमसंकीर्णैर्नानारत्नविभूषितैः ॥ यानैरनुययुर्यक्षाराक्षसाश्चसह स्रशः ३३ पक्षिणामिवनिर्घोषःकुबेरस्यसंप्रति ॥ बभूवपरमाश्वानामैरावतपथेयथा ३४ तेजग्मुस्तूर्णमाकाशंधनाधिपतिवाजिनः ॥ प्रकर्षंतइवाभ्राणिपिबंतइवमा रुतम् ३५ ततस्तानिशरीराणिगतसत्वानिरक्षसाम् ॥ अपाकृष्यंतशैलाग्राद्धनाधिपतिशासनात् ३६ तेषांहिशापकालःसकृतोगस्त्येनधीमता ॥ समरेनिहतास्त स्माच्छापस्यांतोऽभवत्तदा ३७ पांडवाश्चमहात्मानस्तेषुवेश्मसुताःक्षपाः ॥ सुखमूषुर्गतोद्वेगाःपूजिताःसर्वराक्षसैः ३८ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिय क्षयुद्ध० कुबेरवाक्येद्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥ ॥ वैशंपायनउवाच ॥ ॥ ततःसूर्योदयेधौम्यःकृत्वाऽऽह्निकमरिंदम ॥ आर्ष्टिषेणेनसहि तःपांडवानभ्यवर्तत १ तेऽभिवाद्यार्ष्टिषेणस्यपादौधौम्यस्यचैवह ॥ ततःप्रांजलयःसर्वेब्राह्मणांस्तानपूजयन् २ ततोयुधिष्ठिरंधौम्योगृहीत्वादक्षिणेकरे ॥ प्राचींदि शमभिप्रेक्ष्यमहर्षिरिदमब्रवीत् ३ असौसागरपर्यंतांभूमिमावृत्यतिष्ठति ॥ शैलराजोमहाराजमंदरोऽतिविराजते ४ इंद्रवैश्रवणावेतांदिशंपांडवरक्षतः ॥ पर्वतैश्चवनां तैश्चकाननैश्चैवशोभिताम् ५ एतदाहुर्महेंद्रस्यराज्ञोवैश्रवणस्यच ॥ ऋषयःसर्वधर्मज्ञाःसद्मतातमनीषिणः ६ अतश्चोद्यंतमादित्यमुपतिष्ठंतिवैप्रजाः ॥ ऋषयश्चापि धर्मज्ञाःसिद्धाःसाध्याश्चदेवताः ७ यमस्तुराजाधर्मज्ञःसर्वप्राणभृतांप्रभुः ॥ प्रेतसत्वगतिंह्येनांदक्षिणामाश्रितोदिशम् ८ एतत्संयमनंपुण्यमतीवाद्भुतदर्शनम् ॥ प्रेत राजस्यभवनमृद्ध्यापरमयायुतम् ९ तंप्राप्यसविताराजन्सत्येनप्रतितिष्ठति ॥ अस्तंपर्वतराजानमेतमाहुर्मनीषिणः १० एतंपर्वतराजानंसमुद्रंचमहोदधिम् ॥ आव सन्वरुणोराजाभूतानिपरिरक्षति ११ उदीचींदीपयन्नेषदिशंतिष्ठतिवीर्यवान् ॥ महामेरुर्महाभागशिवोब्रह्मविदांगतिः १२ यस्मिन्ब्रह्मसदश्चैवभूतात्माचावतिष्ठते ॥ प्रजापतिःसृजन्सर्वंयत्किंचिज्जंगमागमम् १३

३७ । ३८ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥ ॥ अर्जुनेनतपोबलाद्देवेभ्योऽस्त्राणिलब्धानीतिविस्मयोनकर्तव्यएतदर्थंकर्मफलो र्जितिं विष्णुलोकप्राप्त्यंतांवर्णयत्यध्यायेन धौम्योयुधिष्ठिरगर्वपरिहारार्थं ततइत्यादिना १ । २ । ३ । ४ । ५ । ६ । ७ प्रेतसत्वगतिंमृतानांप्राणिनांगम्याम् ८ संयमनंनामतः ९ । १० आवसन्नधिति ष्ठन् ११ । १२ भूतात्मासर्वेषांभूतानामात्मा संपूर्णब्रह्मांडपिंडाभिमानित्वात् १३

१४ अत्रैवप्रजापतौ १५ । १६ यमिति प्रकृतेःपंचभूतात्मिकायाःप्रकृतिमुपादानम् १७ ब्रह्मणश्चतुर्मुखस्य १८ । १९ ननुसर्वंसोपाधिककार्यंब्रह्मणोऽन्तःपातीतिवैदिकसिद्धांतस्तत्कथंविष्णोःस्थानंततःपरमि त्युच्यतेअतआह प्राच्यामिति । मेरावेवायंतारतम्येनदेशविशेषविभागो नतुसोपाधिकमपिकिंचिदजातमस्ति इममेवस्थानभेदमाश्रित्यब्रह्मलोकादावर्ततेनतुविष्णुलोकादितिपौराणिकीव्यवस्थाज्ञेया २० । २१ २२ । २३ । २४ । २५ ध्रुवमक्षयमव्ययमिति उत्पत्तिह्रासनाशशून्यमित्यर्थः एतच्चयथाघटाकाशयोर्मिथ्यात्वाविशेषेऽपिव्यवहारमाश्रित्यघटोनित्यआकाशोनित्यइतिविभागः एवंब्रह्मलोकांतमनित्यं वैकुंठं नित्यमिति परमार्थतस्तुक्रममुक्तिस्थानत्वादौपचारिकंध्रुवत्वादिज्ञेयं प्रणमनमस्कुरु २६ उपावृत्यअप्रदक्षिणंगत्वैव । भचक्रवेगात्कुलालचक्रेप्रतीपंक्रमंतीपिपीलिकेव प्रदक्षिणंकुरुतइत्यर्थः २७ । २८ प्रकर्षेणा

यानाहुर्ब्रह्मणःपुत्रान्मानसान्दक्षसप्तमान् ॥ तेषामपिमहामेरुःशिवंस्थानमनामयम् १४ अत्रैवप्रतितिष्ठंतिपुनरेवोदयंतिच ॥ सप्तदेवर्षयस्तातवसिष्ठप्रमुखास्तदा १५ देशंविरजसंपश्यमेरोःशिखरमुत्तमम् ॥ यत्रात्मतृप्तैरध्यास्तेदेवैःसहपितामहः १६ यमाहुःसर्वभूतानांप्रकृतेःप्रकृतिंध्रुवम् ॥ अनादिनिधनंदेवंप्रभुंनारायणंपरम् १७ ब्रह्मणःसदनात्तस्यपरंस्थानंप्रकाशते ॥ देवापियंनपश्यंतिसर्वतेजोमयंशुभम् १८ अत्यर्कानलदीप्तंतत्स्थानंविष्णोर्महात्मनः ॥ स्वयैवप्रभयाराजन्दुष्प्रेक्ष्यं देवदानवैः १९ प्राच्यांनारायणस्थानंमेरावतिविराजते ॥ यत्रभूतेश्वरस्तातसर्वप्रकृतिरात्मभूः २० भासयन्सर्वभूतानिसुश्रियाऽभिविराजते ॥ नात्रब्रह्मर्षयस्तात कुतएवमहर्षयः २१ प्राप्नुवंतिगतिंह्येतांयतीनांकुरुसत्तम ॥ नतंज्योतींषिसर्वाणिप्राप्यभासंतिपांडव २२ स्वयंप्रभुरचिंत्यात्माअत्रह्यतिविराजते ॥ यतयस्तत्र गच्छंतिभक्त्यानारायणंहरिम् २३ परेणतपसायुक्ताभाविताःकर्मभिःशुभैः ॥ योगसिद्धामहात्मानस्तमोमोहविवर्जिताः २४ तत्रगत्वापुनर्नेमंलोकमायांति भारत ॥ स्वयंभुवंमहात्मानंदेवदेवंसनातनम् २५ स्थानमेतन्महाभागध्रुवमक्षयमव्ययम् ॥ ईश्वरस्यसदाह्येतत्प्रणमात्रयुधिष्ठिर २६ एनंत्वहरहर्मेरुंसूर्याचंद्र मसौध्रुवम् ॥ प्रदक्षिणमुपावृत्यकुरुतःकुरुनंदन २७ ज्योतींषिचाप्यशेषेणसर्वाण्यनघसर्वतः ॥ परियांतिमहाराजगिरिराजंप्रदक्षिणम् २८ एतंज्योतींषिसर्वाणि प्रकर्षन्भगवानपि ॥ कुरुतेवितमस्कर्माआदित्योऽभिप्रदक्षिणम् २९ अस्तंप्राप्यततःसंध्यामतिक्रम्यदिवाकरः ॥ उदीचींभजतेकाष्ठांदिशमेषविभावसुः ३० समे रुमनुवृत्तःसपुनर्गच्छतिपांडव ॥ प्राङ्मुखःसवितादेवःसर्वभूतहितेरतः ३१ समासान्विभजन्कालेबहुधापर्वसंधिषु ॥ तथैवभगवान्सोमोनक्षत्रैःसहगच्छति ३२ एवमेतंत्वतिक्रम्यमहामेरुमतंद्रितः ॥ भावयन्सर्वभूतानिपुनर्गच्छतिमंदरम् ३३ तथातमिस्रहादेवोमयूखैर्भावयन्जगत् ॥ मार्गमेतदसंबाधमादित्यःपरिवर्तते ३४ सिसृक्षुःशिशिराण्येवदक्षिणांभजतेदिशम् ॥ ततःसर्वाणिभूतानिकालोऽभ्यर्छतिशैशिरः ३५

भिभवन् प्रदक्षिणंकुरुतइत्यनुवादउत्तरार्धार्थः २९ अस्तमदर्शनं । अयमर्थः मेरुंप्रदक्षिणंकुर्वन्नादित्योयत्रस्थोनदृश्यते तदेवास्तस्थानं ततउदीचींकाष्ठांदिशांमध्येऽतिश्रेष्ठांदिशंभजते अत्रसंध्योत्तरमुदङ्मुखः ३० ततउदीच्याःपरांकाष्ठांप्राप्यप्राङ्मुखइतिवदनामेरोश्चतुष्कोणत्वंसूचितंभवति । एतदेवतत्त्वमित्यास्थिताःपाखंडिनोद्वौसूर्यावितिकल्पयंति वस्तुतोऽत्रपरभ्रांतिरनूद्यते आकारेतात्पर्याभावादितिज्ञेयं ३१ ससोमोमासान्विभजन्नितिसंबंधः तत्रमासविभागप्रकारोऽष्टावक्रीयेउक्तः ३२ । ३३ । ३४ शिशिराणिशीतानि ३५

तेजांसिसमुपादत्तेग्रीष्मे ३६ । ३७ अनिर्देश्यंमार्गमंतरिक्षम् ३८ वह्निवायू परस्परंवर्धयंतौजलमुत्क्षिपतइतिप्रसिद्धं सजलस्थाल्यांवायूद्दीपितोऽग्निर्बाष्पवायुंवर्धयति वायुश्चस्थालीजलमुत्क्षिपतीतिवृष्टिमारुत संतापान्प्रतिसूर्यस्यैवहेतुत्वंयुक्तमितिभावः ३९ । ४० । ४१ । ४२ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ ॥ तस्मिन्निति १ । २ । ३ महतीचला लक्ष्मीःशोभायस्यमहाचलस्य । 'चलालक्ष्म्यांपुमान्कंपे' इति मेदिनी । सानून्येवतीक्ष्णाग्राणि पुंसंचारायोग्यानिशृंगाणीत्युच्यंते ४ रोधसोरोधस्वत्यः नवशैवालादिनाऽऽच्छादितनीराइत्यर्थः ५ । ६ ७ विभक्तभावोनबभूवाहोरात्रविभागोनासीत् नित्यमौषधिप्रभोपेतत्वात् अहोइतिरुत्वमार्षं ८ यंसूर्यंविभावसुर्वह्निरास्थितः । 'आदित्योवाअस्तंयन्नग्निमनुप्रविशति' इतिश्रुतेः यस्यसूर्यस्याश्रयेणैवरात्रौवह्निर्ज

स्थावराणांचभूतानांजंगमानांचतेजसा ॥ तेजांसिसमुपादत्तेनिवृत्तःसविभावसुः ३६ ततःस्वेदक्लमौतंद्रीग्लानिश्चभजतेनरान् ॥ प्राणिभिःसततंस्वप्नोह्यभीक्ष्णंच निषेव्यते ३७ एवमेतदनिर्देश्यंमार्गमावृत्यभानुमान् ॥ पुनःसृजतिवर्षाणिभगवान्भावयन्प्रजाः ३८ वृष्टिमारुतसंतापैःसुखैःस्थावरजंगमान् ॥ वर्धयन्सुमहातेजाः पुनःप्रतिनिवर्तते ३९ एवमेषचरन्पार्थकालचक्रमतंद्रितः ॥ प्रकर्षन्सर्वभूतानिसवितापरिवर्तते ४० संततागतिरेतस्यनैषतिष्ठतिपांडव ॥ आदायैवतुभूतानांतेजोवि सृजतेपुनः ४१ विभजन्सर्वभूतानामायुःकर्मचभारत ॥ अहोरात्रंकलाःकाष्ठाःसृजत्येषसदाविभुः ४२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणियक्षयुद्धपर्वणिमेरुदर्शने त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ ॥ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ तस्मिन्नगेंद्रेवसतांतुतेषांमहात्मनांसद्व्रतमास्थितानाम् ॥ रतिः प्रमोदश्चबभूवतेषामाकांक्षतांदर्शनमर्जुनस्य १ तान्वीर्ययुक्तान्सुविशुद्धकामांस्तेजस्विनःसत्यधृतिप्रधानान् ॥ संप्रीयमाणाबहवोऽभिजग्मुर्गंधर्वसंघाश्चमहर्षयश्च २ तंपादपैःपुष्पधरैरुपेतंनगोत्तमंप्राप्यमहारथानाम् ॥ मनःप्रसादःपरमोबभूवयथादिवंप्राप्यमरुद्गणानाम् ३ मयूरहंसस्वननादितानिपुष्पोपकीर्णानिमहाचलस्य ॥ शृंगाणिसानूनिचपश्यमानागिरेःपरंहर्षमवाप्यतस्थुः ४ साक्षात्कुबेरेणकृताश्चतस्मिन्नगोत्तमेसंवृतकूलरोधसः ॥ कादंबकारंडवहंसजुष्टाःपद्माकुलाःपुष्करिणीर पश्यन् ५ क्रीडाप्रदेशांश्चसमृद्धरूपान्सुचित्रमाल्यावृतजातशोभान् ॥ मणिप्रकीर्णांश्चमनोरमांश्चयथाभवेयुर्धनदस्यराज्ञः ६ अनेकवर्णैश्चसुगंधिभिश्चमहाद्रुमैः संततमभ्रजालैः ॥ तपःप्रधानाःसततंचरंतःशृंगंगिरेश्चिंतयितुंनशेकुः ७ स्वतेजसातस्यनगोत्तमस्यमहौषधीनांचतथाप्रभावात् ॥ विभक्तभावोनबभूवकश्चिदहो निशानांपुरुषप्रवीर ८ यमास्थितःस्थावरजंगमानिविभावसुर्भावयतेऽमितौजाः ॥ तस्योदयंचास्तमनंचवीरास्तत्रस्थितास्तेददृशुर्नृसिंहाः ९ रवेस्तमिस्रागम निर्गमांस्तेतथोदयंचास्तमनंचवीराः ॥ समावृताःप्रेक्ष्यतमोनुदस्यगभस्तिजालैःप्रदिशोदिशश्च १० स्वाध्यायवंतःसततक्रियाश्चधर्मप्रधानाश्चशुचिव्रताश्च ॥ सत्येस्थितास्तस्यमहारथस्यसत्यव्रतस्यागमनप्रतीक्षाः ११

गद्दीपयति तस्योदयमित्यन्वयः ९ तमिस्रागमनिर्गमाःअस्तोदयस्थानानि बहुत्वंलोकांतराभिप्रायं तथाहि यद्दाक्षिणात्यानामुदयस्थानंतदुदीच्यानामस्तस्थानं पाश्चात्यानांनिशीथस्थानं प्राच्यानांमध्याह्न स्थानमितिक्रमेणउदयादिस्थानानांबहुत्वंगम्यते । उदयमुदयाचलं । अस्तमितिमांतमव्ययमदर्शनवाचि तदर्थंअनितिचेष्टतेस्मिन्नित्यस्तमनमस्तमयस्थानं अस्ताचलमित्यादौत्वस्तपदंगृहवाचि प्रदिशोदिशा मंतरालानि १० सततक्रियाःअविच्छिन्नधर्माचरणाः ११

इहैवहर्षोऽस्तुसमागतानांक्षिप्रंकृतास्त्रेणधनंजयेन ॥ इतिब्रुवंतःपरमाशिषस्तेपार्थास्तपोयोगपराबभूवुः १२ दृष्ट्वाविचित्राणिगिरौवनानिकिरीटिनंचिंतयता मभीक्ष्णम् ॥ बभूवरात्रिर्दिवसश्चतेषांसंवत्सरेणैवसमानरूपः १३ यदैवधौम्यानुमतेमहात्माकृत्वाजटांप्रव्रजितःसजिष्णुः ॥ तदैवतेषांनबभूवहर्षःकुतोरतिस्त द्गतमानसानाम् १४ भ्रातुर्नियोगात्तुयुधिष्ठिरस्यवनादसौवारणमत्तगामी ॥ यत्काम्यकात्प्रव्रजितःसजिष्णुस्तदैवतेशोकहताबभूवुः १५ तथैवतंचिंतयतांसित ाश्वमस्त्रार्थिनंवासवमभ्युपेतम् ॥ मासोऽथकृच्छ्रेणतदाव्यतीतस्तस्मिन्नगेभारतभारतानाम् १६ उषित्वापंचवर्षाणिसहस्राक्षनिवेशने ॥ अवाप्यदिव्यान्य स्त्राणिसर्वाणिविबुधेश्वरात् १७ आग्नेयंवारुणंसौम्यंवायव्यमथवैष्णवम् ॥ ऐंद्रंपाशुपतंब्राह्मंपारमेष्ठ्यंप्रजापतेः १८ यमस्यधातुःसवितुस्त्वष्टुर्वैश्रवणस्यच ॥ तानि प्राप्यसहस्राक्षादभिवाद्यशतक्रतुम् १९ अनुज्ञातस्तदातेनकृत्वाचापिप्रदक्षिणम् ॥ आगच्छदर्जुनःप्रीतःप्रहृष्टोगंधमादनम् २० ॥ इतिश्रीमहाभारतेआरण्यकेप० यक्षयुद्धपर्वणिअर्जुनाभिगमनेचतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥ ॥ समाप्तंचयक्षयुद्धपर्व ॥ अथनिवातकवचयुद्धपर्व ॥ वैशंपायनउवाच ॥ ततःक दाचिद्धरिसंप्रयुक्तंमहेंद्रवाहंसहसोपयातम् ॥ विद्युत्प्रभंप्रेक्ष्यमहारथानांहर्षोऽर्जुनंचिंतयतांबभूव १ सदीप्यमानःसहसाऽन्तरिक्षंप्रकाशयन्मातलिसंगृहीतः ॥ बभौमहो ल्केवघनांतरस्थाशिखेवचाग्नेर्ज्वलिताविधूमा २ तमास्थितःसंददृशेकिरीटीस्रग्वीनवान्याभरणानिबिभ्रत् ॥ धनंजयोवज्रधरप्रभावःश्रियाज्वलन्पर्वतमाजगाम ३ सशै लमासाद्यकिरीटमालीमहेंद्रवाहादवरुह्यतस्मात् ॥ धौम्यस्यपादावभिवाद्यधीमानजातशत्रोस्तदनंतरंच ४ वृकोदरस्यापिचवंद्यपादौमाद्रीसुताभ्यामभिवादितश्च ॥ समेत्यकृष्णांपरिसांत्व्यचैनांप्रह्वोऽभवद्भ्रातुरुपह्वरेसः ५ बभूवतेषांपरमःप्रहर्षस्तेनाप्रमेयेणसमागतानाम् ॥ सचापितान्प्रेक्ष्यकिरीटमालीननंदराजानमभिप्रशंसन् ६ यमास्थितःसप्तजघानपूगान्दितेःसुतानांनमुचेर्निहंता ॥ तमिंद्रवाहंसमुपेत्यपार्थाःप्रदक्षिणंचक्रुरदीनसत्वाः ७ तेमातलेश्चक्रुरतीवहृष्टाःसत्कारमग्र्यंसुरराजतुल्यम् ॥ सर्वान्यथावच्चदिवौकसस्तेपप्रच्छुरेनंकुरुराजपुत्राः ८ तानप्यसौमातलिरभ्यनंदत्पितेवपुत्राननुशिष्यपार्थान् ॥ ययौरथेनाप्रतिमप्रभेणपुनःसकाशंत्रिदिवेश्वरस्य ९ गतेतुतस्मिन्नरदेववर्यःशक्रात्मजःशक्ररिपुप्रमाथी ॥ शक्रेणदत्तानिददौमहात्मामहाधनान्युत्तमरूपवंति १० दिवाकराभाणिविभूषणानिप्रियःप्रियायैसुतसोममात्रे ॥ ततःसतेषांकुरुपुंगवानांतेषांचसूर्याग्निसमप्रभाणाम् ११

ततइति । हरिभिरश्वैःसंप्रयुक्तंमहेंद्रस्यवाहंरथम् १ । २ । ३ । ४ प्रह्वोनम्रः उपह्वरेसमीपे ५ । ६ पूगान्यूथानि ७ एनंमातलिम् ८ । ९ । १० सुतसोमोभीमाद्द्रौपद्यांजातः ११

१२ । १३ आवसतिंरात्रिं प्रतीतोहृष्टः १४ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ ॥ ॥ ततइति १ । २ । ३ । ४

विप्रर्षभाणामुपविश्यमध्येसर्वैयथावत्कथयांबभूव ॥ एवंमयाऽस्त्राण्युपशिक्षितानिशक्राच्चवाताच्चशिवाच्चसाक्षात् १२ तथैवशीलेनसमाधिनाऽथप्रीताःसुरामे सहिताःसहेंद्राः ॥ संक्षेपतोवैसविशुद्धकर्मातेभ्यःसमाख्यायदिविप्रवासम् १३ माद्रीसुताभ्यांसहितःकिरीटीसुष्वापतामावसतिंप्रतीतः १४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनिवातकवचयुद्धपर्वणिअर्जुनसमागमेपंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ततोरजन्यांव्युष्टायांधर्मराजंयुधिष्ठिरम् ॥ भ्रातृभिःसहितःसर्वैरवंदतधनंजयः १ एतस्मिन्नेवकालेतुसर्ववादित्रनिःस्वनः ॥ बभूवतुमुलःशब्दस्त्वंतरिक्षेदिवौकसाम् २ रथनेमिस्वनश्चैवघंटाशब्दश्चभारत ॥ पृथग्व्यालमृगाणांचपक्षिणामिवसर्वशः ३ तेसमंतादनुययुर्गंधर्वाप्सरसांगणाः ॥ विमानैःसूर्यसंकाशैर्देवराजमरिंदमम् ४ ततःसहरिभिर्युक्तंजांबूनदपरिष्कृतम् ॥ मेघनादिनमारुह्यश्रियापरमयाज्वलन् ५ पार्थानभ्याजगामाथदेवराजःपुरंदरः ॥ आगत्यचसहस्राक्षोरथादवरुरोहवै ६ तंदृष्ट्वैवमहात्मानंधर्मराजोयुधिष्ठिरः ॥ भ्रातृभिःसहितःश्रीमान्देवराजमुपागमत् ७ पूजयामासचैवाथविधिवद्भूरिदक्षिणः ॥ यथार्हममितात्मानंविधिदृष्टेनकर्मणा ८ धनंजयश्चतेजस्वी प्रणिपत्यपुरंदरम् ॥ भृत्यवत्प्रणतस्तस्थौदेवराजसमीपतः ९ आघ्रायतंमहातेजाःकुंतीपुत्रोयुधिष्ठिरः ॥ धनंजयमभिप्रेक्ष्यविनीतंस्थितमंतिके १० जटिलंदेवराजस्य तपोयुक्तमकल्मषम् ॥ हर्षेणमहताऽऽविष्टःफाल्गुनस्याथदर्शनात् ११ बभूवपरमप्रीतोदेवराजंचपूजयन् ॥ तंतथाऽदीनमनसंराजानंहर्षसंप्लुतम् १२ उवाचवचनंधीमान्देवराजःपुरंदरः ॥ त्वमिमांपृथिवींराजन्प्रशासिष्यसिपांडव ॥ स्वस्तिप्राप्नुहिकौंतेयकाम्यकंपुनराश्रमम् १३ अस्त्राणिलब्धानिचपांडवेनसर्वाणिमत्तःप्रयतेनराजन् ॥ कृतप्रियश्चास्मिधनंजयेनजेतुंनशक्यस्त्रिभिरेषलोकैः १४ एवमुक्त्वासहस्राक्षःकुंतीपुत्रंयुधिष्ठिरम् ॥ जगामत्रिदिवंहृष्टःस्तूयमानोमहर्षिभिः १५ धनेश्वरगृहस्थानांपांडवानांसमागमम् ॥ शक्रेणयइदंविद्वानधीयीतसमाहितः १६ संवत्सरंब्रह्मचारीनियतःसंशितव्रतः ॥ सजीवेद्धिनिराबाधःससुखीशरदांशतम् १७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिनिवातकवचयुद्धपर्वणिइंद्रागमनेषट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ यथागतंगतेशक्रेभ्रातृभिःसहसंगतः ॥ कृष्णयाचैवबीभत्सुर्धर्मपुत्रमपूजयत् १ अभिवादयमानंतंमूर्ध्न्युपाघ्रायपांडवम् ॥ हर्षगद्गदयावाचाप्रहृष्टोऽर्जुनमब्रवीत् २ कथमर्जुनकालोऽयंस्वर्गेव्यतिगतस्तव ॥ कथंचास्त्राण्यवाप्तानिदेवराजश्चतोषितः ३

हरिभिर्युक्तंरथम ५ । ६ । ७ अमितात्मा अमितबुद्धिः ८ । ९ । १० । ११ अदीनेतिच्छेदः १२ । १३ कृतप्रियःशत्रुवधेन १४ । १५ । १६ । १७ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ ॥ ॥ यथेति १ प्रहृष्टोधर्मपुत्रः २ । ३

४ । ५ । ६ । ७ । ८ हंतेत्यव्ययंवाक्यारंभेहर्षेवा । 'हंतवाक्यारंभहर्षविवादेखेदसंभ्रमे' इतिमेदिनी ९ । १० । ११ । १२ । १३ । १४ शैशिरंहिममयम् १५ । १६ प्राणोबलम् १७ वराहवत्संस्थितमाका

सम्यग्वातेगृहीतानिकच्चिदस्त्राणिपांडव ॥ कच्चित्सुराधिपःप्रीतोरुद्रोवाऽस्त्राण्यदात्तव ४ यथादृष्टश्चतेशक्रोभगवान्वापिनाकधृक् ॥ यथैवास्त्राण्यवाप्तानियथैवाराधितश्चते ५ यथोक्तवांस्त्वांभगवान्शतक्रतुररिंदम ॥ कृतप्रियस्त्वयाऽस्मीतितस्यतेकिंप्रियंकृतम् ६ एतदिच्छाम्यहंश्रोतुंविस्तरेणमहाद्युते ॥ यथातुष्टोमहादेवोदेवराजस्तथाऽनघ ७ यच्चापिवज्रपाणेस्तुप्रियंकृतमरिंदम ॥ एतदाख्याहिमेसर्वमखिलेनधनंजय ८ ॥ अर्जुनउवाच ॥ शृणुहंतमहाराजविधिनायेनदृष्टवान् ॥ शतक्रतुमहंदेवंभगवंतंचशंकरम् ९ विद्यामधीत्यतांराजंस्त्वयोक्तामरिमर्दन ॥ भवताचसमादिष्टस्तपसेप्रस्थितोवनम् १० भृगुतुंगमथोगत्वाकाम्यकादास्थितस्तपः ॥ एकरात्रोषितःकंचिदपश्यंब्राह्मणंपथि ११ समामपृच्छत्कौंतेयक्वासिगंताब्रवीहिमे ॥ तस्माअवितथंसर्वमब्रुवंकुरुनंदन १२ सतथ्यंममतच्छ्रुत्वाब्राह्मणोराजसत्तम ॥ अपूजयतमांराजन्प्रीतिमांश्चाभवन्मयि १३ ततोमामब्रवीत्प्रीतस्तपआतिष्ठभारत ॥ तपस्वीनचिरेणत्वंद्रक्ष्यसेविबुधाधिपम् १४ ततोऽहंवचनात्तस्यगिरिमारुह्यशैशिरम् ॥ तपोऽतप्यंमहाराजमासंमूलफलाशनः १५ द्वितीयश्चापिमेमासोजलंभक्षयतोगतः ॥ निराहारस्तृतीयेऽथमासेपांडवनंदन १६ ऊर्ध्वबाहुश्चतुर्थंतुमासमस्मिस्थितस्तदा ॥ नचमेहीयतेप्राणस्तदद्भुतमिवाभवत् १७ पंचमेत्वथसंप्राप्तेप्रथमेदिवसेगते ॥ वराहसंस्थितंभूतंमत्समीपंसमागमत् १८ निघ्नन्प्रोथेनपृथिवींविलिखंश्चरणैरपि ॥ संमार्जन्जठरेणोर्वींविवर्तंश्चमुहुर्मुहुः १९ अनुतस्यापरंभूतंमहत्कैरातसंस्थितम् ॥ धनुर्बाणासिमत्प्राप्तंस्त्रीगणानुगतंदा २० ततोहंधनुरादायतथाऽक्षय्येमहेषुधी ॥ अताडयंशरेणाथतद्भूतंलोमहर्षणम् २१ युगपत्तंकिरातस्तुविकृष्यबलवद्धनुः ॥ अभ्याजघ्नेदृढतरंकंपयन्निवमेमनः २२ सतुमामब्रवीद्राजन्ममपूर्वपरिग्रहः ॥ मृगयाधर्ममुत्सृज्यकिमर्थंताडितस्त्वया २३ एषतेनिशितैर्बाणैर्दर्पंहन्मिस्थिरोभव ॥ सधनुष्मान्महाकायस्ततोमामभ्यभाषत २४ ततोगिरिमिवात्यर्थमावृणोन्मांमहाशरैः ॥ तंचाहंशरवर्षेणमहतासमवाकिरम् २५ ततःशरैर्दीप्तमुखैर्यंत्रितैरनुमंत्रितैः ॥ प्रत्यविध्यमहंतंतुवज्रैरिवशिलोच्चयम् २६ तस्यतच्छतधारूपमभवच्चसहस्रधा ॥ तानिचास्यशरीराणिशरैरहमताडयम् २७ पुनस्तानिशरीराणिएकीभूतानिभारत ॥ अदृश्यंतमहाराजतान्यहंव्यधमंपुनः २८ अणुर्बृहच्छिराभूत्वाबृहच्चाणुशिराःपुनः ॥ एकीभूतस्तदाराजन्सोऽभ्यवर्ततमांयुधि २९ यदाभिभवितुंबाणैर्नचशक्नोमितंरणे ॥ ततोमहास्त्रमातिष्ठंवायव्यंभरतर्षभ ३० नचैनमशकंहंतुंतदद्भुतमिवाभवत् ॥ तस्मिन्प्रतिहतेचास्त्रेविस्मयोमेमहानभूत् ३१ भूयएवमहाराजसविशेषमहंततः ॥ अस्त्रपूगेनमहतारणेभूतमवाकिरम् ३२



रोयस्य १८ प्रोथेनमुखाग्रेणपोत्राख्येन विवर्तनविषमेणभावेनवर्तमानः इतस्ततःपर्यटन्वा १९ । २० । २१ । २२ । २३ । २४ । २५ अनुपश्चात् यंत्रितैर्दृढाकृष्टैः २६ । २७ । २८ । २९ । ३० । ३१ । ३२

स्थूणाकर्णइतिशंकुकर्णाख्योरुद्रावतारभेदस्तद्दैवत्यमस्त्रं जालंजलमयंवारुणम् ३३ । ३४ । ३५ । ३६ । ३७ । ३८ ३९ व्यायामंसंघट्टनं अपारयन् अशक्नुवन् ४० । ४१ । ४२ । ४३ गोवृषोबलीवर्दश्रेष्ठः

स्थूणाकर्णमथोजालंशरवर्षमथोल्बणम् ॥ शलभास्त्रमश्मवर्षंसमास्थायाहमभ्ययाम् ३३ जग्रासप्रसभंतानिसर्वाण्यस्त्राणिमेनृप ॥ तेषुसर्वेषुजग्धेषुब्रह्मास्त्रंमहदादिशम् ३४ ततःप्रज्वलितैर्बाणैःसर्वतःसोऽपचीयते ॥ उपचीयमानश्चमयामहास्त्रेणव्यवर्धत ३५ ततःसंतापितालोकामत्प्रसूतेनतेजसा ॥ क्षणेनहिदिशःखंचसर्वतोहिविदीपितम् ३६ तदप्यस्त्रंमहातेजाःक्षणेनैवव्यशातयत् ॥ ब्रह्मास्त्रेतुहतेराजन्भयंमांमहदाविशत् ३७ ततोऽहंधनुरादायतथाऽक्षय्येमहेषुधी ॥ सहसाऽभ्यहनंभूतंतान्यप्यस्त्राण्यभक्षयत् ३८ हतेष्वस्त्रेषुसर्वेषुभक्षितेष्वायुधेषुच ॥ ममतस्यचभूतस्यबाहुयुद्धमवर्तत ३९ व्यायामंमुष्टिभिःकृत्वातलैरपिसमागतैः ॥ अपारयंश्चतद्भूतंनिश्चेष्टमगमंमहीम् ४० ततःप्रहस्यतद्भूतंतत्रैवांतरधीयत ॥ सहस्त्रीभिर्महाराजपश्यतोमेऽद्भुतोपमम् ४१ एवंकृत्वासभगवांस्ततोऽन्यद्रूपमास्थितः ॥ दिव्यमेवमहाराजवसानोऽद्भुतमंबरम् ४२ हित्वाकिरातरूपंचभगवांस्त्रिदशेश्वरः ॥ स्वरूपंदिव्यमास्थायतस्थौतत्रमहेश्वरः ४३ अदृश्यतततःसाक्षाद्भगवान्गोवृषध्वजः ॥ उमासहायोव्यालधृग्बहुरूपःपिनाकधृक् ४४ समामभ्येत्यसमरेतथैवाभिमुखंस्थितम् ॥ शूलपाणिरथोवाचतुष्टोऽस्मीतिपरंतप ४५ ततस्तद्धनुरादायतूणौचाक्षय्यसायकौ ॥ प्रादान्ममैवभगवान्वरयस्वेतिचाब्रवीत् ४६ तुष्टोऽस्मितवकौन्तेयब्रूहिकिंकरवाणिते ॥ मनोगतंवीरयत्तेतद्ब्रूहिवितराम्यहम् ४७ अमरत्वमपाहायब्रूहियत्तेमनोगतम् ॥ ततःप्रांजलिरेवाहमस्त्रेषुगतमानसः ४८ प्रणम्यमनसाशर्वंततोवचनमाददे ॥ भगवान्मेप्रसन्नश्चेदीप्सितोऽयंवरोमम ४९ अस्त्राणीच्छाम्यहंज्ञातुंयानिदेवेषुकानिचित् ॥ ददानीत्येवभगवानब्रवीत्र्यंबकश्चमाम् ५० रौद्रमस्त्रंमदीयंत्वामुपस्थास्यतिपांडव ॥ प्रददौचममप्रीतःसोऽस्त्रंपाशुपतंमहत् ५१ उवाचचमहादेवोदत्वामेऽस्त्रंसनातनम् ॥ नप्रयोज्यंभवेदेतन्मानुषेषुकथंचन ५२ जगद्विनिर्दहेदेवमल्पतेजसिपातितम् ॥ पीड्यमानेनबलवत्प्रयोज्यंस्याद्धनंजय ५३ अस्त्राणांप्रतिघातेचसर्वथैवप्रयोजयेत् ॥ तदप्रतिहतंदिव्यंसर्वास्त्रप्रतिषेधनम् ५४ मूर्तिमन्मेस्थितंपार्श्वेप्रसन्नेगोवृषध्वजे ॥ उत्सादनममित्राणांपरसेनानिकर्तनम् ५५ दुरासदंदुष्प्रसहंसुरदानवराक्षसैः ॥ अनुज्ञातस्त्वहंतेनतत्रैवससुपाविशम् ५६ प्रेक्षतश्चैवमेदेवस्तत्रैवांतरधीयत ५७ ॥ इतिश्रीमहाभारतेआरण्यकेप० निवातकवचवधपर्वणिगंधमादनवासेयुधिष्ठिरार्जुनसंवादेसप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ ॥ अर्जुनउवाच ॥ ततस्तामवसंप्रीतोरजनींतत्रभारत ॥ प्रसादाद्देवदेवस्यत्र्यंबकस्यमहात्मनः १ व्युषितोरजनींचाहंकृत्वापौर्वाह्णिकीःक्रियाः ॥ अपश्यंतंद्विजश्रेष्ठंदृष्टवानस्मियंपुरा २ तस्मैचाहंयथावृत्तंसर्वमेवन्यवेदयम् ॥ भगवंतंमहादेवंसमेतोऽस्मीतिभारत ३

४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ ५५ । ५६ । ५७ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ ततइति १ । २। ३

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० देवयानैर्विमानैः सद्मनिवासिनःस्त्रीबालादयः शचीजयंतादयइत्यर्थः ११ । १२ । १३ यथास्थानंप्राच्यामिन्द्रंप्रतीच्यांवरुणमित्यादि १४ । १५ । १६

समामुवाचराजेंद्रप्रीयमाणोद्विजोत्तमः ॥ दृष्टस्त्वयामहादेवोयथानान्येनकेनचित् ४ समेत्यलोकपालैस्तुसर्वैर्वैवस्वतादिभिः ॥ द्रष्टाऽस्यनघदेवेन्द्रंसचतेऽस्त्राणिदास्यति ५ एवमुक्त्वासमांराजन्नाश्लिष्यचपुनःपुनः ॥ अगच्छत्सयथाकामंब्राह्मणःसूर्यसन्निभः ६ अथापराह्णेतस्याह्नःप्रावात्पुण्यःसमीरणः ॥ पुनर्नवमिमंलोकंकुर्वन्निवसपत्नहन् ७ दिव्यानिचैवमाल्यानिसुगंधीनिनवानिच ॥ शैशिरस्यगिरेःपादेप्रादुरासन्समीपतः ८ वादित्राणिचदिव्यानिसुघोराणिसमंततः ॥ स्तुतयश्चेंद्रसंयुक्ताअश्रूयंतमनोहराः ९ गणाश्चाप्सरसांतत्रगंधर्वाणांतथैवच ॥ पुरस्ताद्देवदेवस्यजगुर्गीतानिसर्वशः १० मरुतांचगणास्तत्रदेवयानैरुपागमन् ॥ महेंद्रानुचरायचयेचसद्मनिवासिनः ११ ततोमरुत्वान्हरिभिर्युक्तैर्वाहैःस्वलंकृतैः ॥ शचीसहायस्तत्रायात्सहसर्वैस्तदामरैः १२ एतस्मिन्नेवकालेतुकुबेरोनरवाहनः ॥ दर्शयामासमांराजन्लक्ष्म्यापरमयायुतः १३ दक्षिणस्यांदिशियमंप्रत्यपश्यंव्यवस्थितम् ॥ वरुणंदेवराजंचयथास्थानमवस्थितम् १४ तेमामूचुर्महाराजसांत्वयित्वानरर्षभ ॥ सव्यसाचिन्निरीक्षास्माँल्लोकपालानवस्थितान् १५ सुरकार्यार्थसिद्ध्यर्थंदृष्टवानसिशंकरम् ॥ अस्मत्तोऽपिगृहाणत्वमस्त्राणीतिसमंततः १६ ततोऽहंप्रयतोभूत्वाप्रणिपत्यसुरर्षभान् ॥ प्रत्यगृह्णंतदाऽस्त्राणिमहांतिविधिवद्विभो १७ गृहीतास्त्रस्ततोदेवैरनुज्ञातोऽस्मिभारत ॥ 'अथदेवाययुःसर्वेयथागतमरिंदम १८ मघवानपिदेवेशोरथमारुह्यसुप्रभम् ॥ उवाचभगवान्स्वर्गेगंतव्यंफाल्गुनत्वया १९ पुरैवागमनादस्माद्वेदाहंत्वांधनंजय ॥ अतःपरंत्वहंवैत्वांदर्शयेभरतर्षभ २० त्वयाहितीर्थेषुपुरासमाप्लावःकृतोऽसकृत् ॥ तपश्चेदंमहत्तप्तंस्वर्गंगंताऽसिपांडव २१ भूयश्चैवचतप्तव्यंतपश्चरणमुत्तमम् ॥ स्वर्गेत्ववश्यंगंतव्यंत्वयाशत्रुनिषूदन २२ मातलिर्मन्नियोगात्त्वांत्रिदिवंप्रापयिष्यति ॥ विदितस्त्वंहिदेवानांमुनीनांचमहात्मनाम् २३ ततोऽहमब्रुवंशक्रंप्रसीदभगवन्मम ॥ आचार्यंवरयेयंत्वामस्त्रार्थेत्रिदशेश्वर २४ ॥ इंद्रउवाच ॥ क्रूरकर्मास्त्रवित्तातभविष्यसिपरंतप ॥ यदर्थमस्त्राणीप्सुस्त्वंतंकामंपांडवाप्नुहि २५ ततोऽहमब्रुवंनाहंदिव्यान्यस्त्राणिशत्रुहन् ॥ मानुषेषुप्रयोक्ष्यामिविनास्त्रप्रतिघातनात् २६ तानिदिव्यानिमेऽस्त्राणिप्रयच्छविबुधाधिप ॥ लोकांश्चास्त्रजितान्पश्चाल्लभेयंसुरपुंगव २७ ॥ इंद्रउवाच ॥ परीक्षार्थंमयैतत्तेवाक्यमुक्तंधनंजय ॥ ममात्मजस्यवचनंसूपपन्नमिदंतव २८ शिक्षमेभवनंगत्वासर्वाण्यस्त्राणिभारत ॥ वायोरग्नेर्वसुभ्योऽपिवरुणात्समरुद्गणात् २९ साध्यंपैतामहंचैवगंधर्वोरगरक्षसाम् ॥ वैष्णवानिचसर्वाणिनैर्ऋतानितथैवच ३० मद्गतानिचजानीहिसर्वास्त्राणिकुरूद्वह ॥ एवमुक्त्वातुमांशक्रस्तत्रैवांतरधीयत ३१

१७ । १८ । १९ । २० । २१ । २२ । २३ । २४ त्वं क्रूरकर्माभविष्यसीतिसंबंधः २५ अस्त्रस्यैवप्रतिघातार्थमस्त्रंमोक्ष्ये नत्वन्यत्रमानुषे २६ । २७ । २८ । २९ । ३० । ३१

सर्पस्तुब्राह्मणपदेनजातिमात्रंविवक्षित्वा शूद्रेतल्लक्षणंव्यभिचारयति चातुर्वर्ण्यमितिसार्द्धेन । चतुर्णांवर्णानांहितं सत्यंप्रमाणंच धर्मव्यवस्थापकं ब्रह्मशूद्रेवेदः । शूद्राचारस्मृतेरपि वेदमूलत्वात्सर्वोप्याचारादिः श्रुतिमूलकइत्यर्थः । एवंचसत्यादिकं यदिशूद्रेऽप्यस्ति तर्हिसोपिब्राह्मणएवस्यादित्याह शूद्रेष्वपीति २३ सुखदुःखातीतंपदमेवनास्तीत्युक्तरूपंब्रह्माप्याक्षिपति वेद्यमिति । पदंपदनीयंप्राप्यस्थानम् २४ इतरस्तु ब्राह्मणपदेनब्रह्मविदंविवक्षित्वा शूद्रादेरपिब्राह्मणत्वमभ्युपगम्यपरिहरति शूद्रेत्विति । शूद्रलक्ष्मकामादिकंनब्राह्मणेऽस्ति नापिब्राह्मणलक्ष्मशमादिकंशूद्रेऽस्तीत्यर्थः । शूद्रोऽपिशमाद्युपेतोब्राह्मणएव ब्राह्मणोऽपिकामाद्युपेतःशूद्रएवेत्यर्थः २५ । २६ यदप्युक्तंसुखदुःखातीतंपदंनास्ति तदपिअनुवादपूर्वकमभ्युपगमेनैवपरिहरतिसार्धेन यत्पुनरिति । पदंपदनीयंप्रागप्राप्तंसत्कर्मणाप्राप्यंस्थानं तत्सुखदुःखाभ्यां हीनंनास्ति ब्रह्मलोकस्थानामपिऐश्वर्यतारतम्यकृतंदुःखमस्त्येव किंपुनर्लोकांतरस्थानाम् २७ एतदेवदृष्टांतेनापवदति यथेति। यथाशीतलस्यजलस्यमध्येऽभ्यंतरे उष्णंअग्निर्नास्ति। नापिउष्णेऽग्नौशीततायुक्तंजलं तयोःपरस्परविरोधेनसंयोगायोगात् २८ एवंपदंपदनीयं ज्ञेयंवस्तु क्वचिद्देशे कालेवासुखदुःखाभ्यांहीनं प्राप्तंनास्ति आध्यासिकयोःसुखदुःखयोरधिष्ठानेन ज्ञेयवस्तुनासह सर्पस्यरज्ज्वेव कालत्रयेऽपि संबंधो नास्तीत्यर्थः । ओहाङ्गतौअस्यओदितश्चेतिनिष्ठा तस्यनःघुमास्थेतिसूत्रेणआतईत्वं हाङःपद्यतेश्चगत्यर्थत्वात्ज्ञानार्थत्वाच्चहीनंप्राप्तमितिपदंज्ञेयमितिचव्याख्यातं अन्यथातुप्रश्नोत्तरयोरेकरूपत्वादेषामम

॥ सर्पउवाच ॥ चातुर्वर्ण्यप्रमाणंचसत्यंचब्रह्मचैवहि ॥ शूद्रेष्वपिचसत्यंचदानमक्रोधएवच ॥ आनृशंस्यमहिंसाचघृणाचैवयुधिष्ठिर २३ वेद्यंयच्चात्रनिर्दुःखम सुखंचनराधिप ॥ ताभ्यांहीनंपदंचान्यन्नतदस्तीतिलक्षये २४ ॥ युधिष्ठिरउवाच ॥ शूद्रेतुयद्भवेल्लक्ष्मद्विजेतच्चनविद्यते ॥ नवैशूद्रोभवेच्छूद्रोब्राह्मणोनचब्राह्मणः २५ यत्रैतल्लक्ष्यतेसर्पवृत्तंसब्राह्मणःस्मृतः ॥ यत्रैतन्नभवेत्सर्पतंशूद्रमितिनिर्दिशेत् २६ यत्पुनर्भवतामोक्तंनवेद्यंविद्यतीतिच ॥ ताभ्यांहीनमतोऽन्यत्रपदंनास्तीतिचेदपि २७ एवमेतन्मतंसर्पताभ्यांहीनंनविद्यते ॥ यथाशीतोष्णयोर्मध्येभवेन्नोष्णंनशीतता २८ एवंवैसुखदुःखाभ्यांहीनंनास्तिपदंक्वचित् ॥ एषामममतिः सर्पयथावामन्यतेभवान् २९ ॥ सर्पउवाच ॥ यदितेवृत्ततोराजन्ब्राह्मणःप्रसमीक्षितः ॥ वृथाजातिस्तदाऽऽयुष्मन्कृतिर्यावन्नविद्यते ३० ॥ युधिष्ठिरउवाच ॥ जातिरत्रमहासर्पमनुष्यत्वेमहामते ॥ संकरात्सर्ववर्णानांदुष्परीक्ष्येतिमेमतिः ३१ सर्वेसर्वास्वपत्यानिजनयंतिसदानराः ॥ वाङ्मैथुनमथोजन्ममरणंचसमंनृणाम् ३२ इदमार्षंप्रमाणंचयेयजामहइत्यपि ॥ तस्माच्छीलंप्रधानेष्टंविदुर्येतत्त्वदर्शिनः ३३

मतिरितिवाक्यशेषे स्वमतेःपृथक्करणंनोपपद्यते । अन्येतु सिद्धांते ताभ्यांहीनंपदंकिंनास्तिअपितुअस्त्येवेतिकाक्काव्याचक्षते । अयंभावः यत्कर्मप्राप्यंस्थानं तत्सुखदुःखवर्जितंकदाचिदपिनास्ति यत्तुज्ञेयंवस्तु नित्यप्राप्तं प्रमाणसामर्थ्यात्कंठगतविस्मृतचामीकरवत् तत्रकंठेचामीकरं त्वमेवब्रह्मेतिच वाक्यैकसिद्धमज्ञानापनयनमात्रमपेक्षते नतत्रसुखदुःखसंबंधोऽस्ति अकर्मजत्वात्तत्प्राप्तेः अतएवच तस्यानित्यत्वमपिनअजन्यत्वादिति २९ प्रथमप्रश्नस्योत्तरमाक्षिपति यदीति ३० उत्तरमाह जातिरिति ३१ वागादीनामिवमैथुनस्यापिसाधारण्याज्जातिर्दुर्ज्ञेया तथाचश्रुतिः । 'नचैतद्विद्मोब्राह्मणाः स्मोवयमब्राह्मणावा' इतिब्राह्मण्येसंशयमुपन्यस्यति ३२ ननुजात्यनिश्चयेकथंब्राह्मणोऽहमित्याद्यभिमानपुरःसरंयागादौप्रवर्तेतेत्याशंक्याह इदमार्षमिति । अत्र येयजामहइत्यनेनच येवयंस्मो ब्राह्मणाअन्येवातेवयंयजामहइतिब्राह्मण्येऽनवधारणंदर्शितं मंत्रलिंगमपि 'यएवास्मिसन्सन्यजे' इति । नन्वेवंस्वस्याब्राह्मणत्वपक्षे यज्ञस्यानिष्टकरत्वमापततीत्याशंक्य तत्परिहाराय यागेयजमानस्यप्रवरवरणंक्रियतेयाज्ञिकैः तच्चाग्निर्होतेतिमंत्रे गौतमवदयास्यवदंगिरोवद्ब्राह्मणवदितिकुर्वंति तस्यचप्रयोजनमब्राह्मणस्यापियजमानस्यब्राह्मणत्वसंपादनं तस्मादाचारएवब्राह्मण्यनिश्चयेहेतुर्वेदप्रामाण्यादित्युपसंहरति तस्मादिति । प्रधानंचतदिष्टंचेतिकर्मधारयः ३३

कर्मैवब्राह्मण्यहेतुरित्याह प्रागिति । नाभिवर्धनान्नालच्छेदनात् ३४ जायतेसंयुज्यते वेदसंयोगानंतरमेवब्राह्मण्यमुदेति तद्वत्प्रवरणेनापीतिभावः । द्वैधेजातोसंशयेसति ३५ वृत्तंवैदिकसंस्कारोयदिनविद्य तेतर्हि सर्वाःप्रजाः कृतकृत्याः शूद्रतुल्याः तथाचस्मृतिः । 'नशूद्रेपातकंकिंचिन्नचसंस्कारमर्हति' इतितेषांसंस्कारानर्हत्वनिष्पापत्वाभिधानात्कृतकृत्यत्वंदर्शयति तद्वत् त्रैवर्णिकाअपिस्युरित्यर्थः । अत्र वृत्ताभावे ३६ उपसंहरति यत्रेति ३७ । ३८ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ एवंयुधिष्ठिरमुखेनब्रह्मविलक्षणानिब्रह्मचनिरूप्य सर्पमुखे नचित्तशुद्धिद्वारा आत्मविविदिषोत्पादनद्वारावा ब्रह्मप्राप्त्युपायान्दानादीन्विधातुमयमध्यायआरभ्यते भवानेतादृशइति । अनुत्तमागतिःस्वर्गावाप्तिः १ । २ । ३ गुरुलाघवंगौरवंलाघवंचेत्यर्थः ४ कार्यगरीयस्त्वमेवसामान्यतोविवृणोति कस्माच्चिदिति । अयमत्रनिर्णयः । 'पिशुनायाभयंदातुंनसत्यंमतिमांस्त्यजेत् । साधूनामभयायेहत्यजेत्सत्यमपिध्रुवम् । स्तेनेषुचप्रियाख्यानादहिंसाश्रेयसीमता । अहिं

प्राङ्नाभिवर्धनात्पुंसोजातकर्मविधीयते ॥ तत्रास्यमातासावित्रीपितात्वाचार्यउच्यते ३४ तावच्छूद्रसमोह्येषयावद्वेदेनजायते ॥ तस्मिन्नेवंमतिद्वैधेमनुःस्वायंभुवो ऽब्रवीत् ३५ कृतकृत्याःपुनर्वर्णायदिवृत्तंनविद्यते ॥ संकरस्त्वत्रनागेंद्रबलवान्प्रसमीक्षितः ३६ यत्रेदानींमहासर्पसंस्कृतंवृत्तमिष्यते ॥ तंब्राह्मणमहंपूर्वमुक्तवान्भुज गोत्तम ३७ ॥ सर्पउवाच ॥ श्रुतंविदितवेद्यस्यतववाक्यंयुधिष्ठिर ॥ भक्षयेयमहंकस्माद्भ्रातरंतेवृकोदरम् ३८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिआजगरपर्व णिअजगरयुधिष्ठिरसंवादेअशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ युधिष्ठिरउवाच ॥ भवानेतादृशोलोकेवेदवेदांगपारगः ॥ ब्रूहिकिंकुर्वतःकर्मभवेद्गतिरनु त्तमा १ ॥ सर्पउवाच ॥ पात्रेदत्वाप्रियाण्युक्त्वासत्यमुक्त्वाचभारत ॥ अहिंसानिरतःस्वर्गंगच्छेदितिमतिर्मम २ ॥ युधिष्ठिरउवाच ॥ दानाद्वासर्पसत्याद्वाकिमतोगुरु दृश्यते ॥ अहिंसाप्रिययोश्चैवगुरुलाघवमुच्यताम् ३ ॥ सर्पउवाच ॥ दानंचसत्यंतत्त्वंवाअहिंसाप्रियमेवच ॥ एषांकार्यगरीयस्त्वाद्दृश्यतेगुरुलाघवम् ४ कस्माच्चिद्दान योगाद्धिसत्यमेवविशिष्यते ॥ सत्यवाक्याच्चराजेंद्रकिंचिद्दानंविशिष्यते ५ एवमेवमहेष्वासप्रियवाक्यान्महीपते ॥ अहिंसादृश्यतेगुर्वीततश्चप्रियमिष्यते ६ एवमेत द्भवेद्राजन्कार्यापेक्षमनंतरम् ॥ यदभिप्रेतमन्यत्तेब्रूहियावद्ब्रवीम्यहम् ७ ॥ युधिष्ठिरउवाच ॥ कथंस्वर्गेगतिःसर्पकर्मणांचफलंध्रुवम् ॥ अशरीरस्यदृश्येतप्रब्रूहिविषयां श्चमे ८ ॥ सर्पउवाच ॥ तिस्रोवैगतयोराजन्परिदिष्टाःस्वकर्मभिः ॥ मानुषंस्वर्गवासश्चतिर्यग्योनिश्चतत्त्रिधा ९

सानःपरात्माख्यप्रियाख्यानंविशिष्यते' । एतच्चपुत्रांस्तत्त्वोपदेशेनप्रव्राज्य पितरंदुःखयतानारदेन मदालसयाचकृतम् ५ तदेतदाह ततश्चप्रियमिष्यते अहिंसातोपिप्रियंगुरुतरमित्यर्थः ६ । ७ देहातिरिक्तमा त्मानंसाधयितुं प्राक्कर्मसद्भावंदर्शयिष्यन् कर्मणानिष्फलत्वंतावदाशंकते कथमिति । अशरीरस्यनष्टदेहस्यकथंस्वर्गतिःकथंवातत्रविषयोपभोगः कथंवाकर्मफलस्यध्रुवत्वमप्रत्याख्येयत्वमित्यर्थः सदेहस्यह्येतत्रयं युज्यते नतुदेहहीनस्येतिभावः ८ अत्रोत्तरमाह तिस्रइति । यथामृद्विकारेष्वपिघटशरावोदंचनादिषु कुलालगतौ संकल्पक्रियाभेदौ वैषम्यहेतूभवतः एवंभौतिकेष्वपि सुरनरतिर्यक्शरीरेषु तदन्यकर्त्रात्मगतसं कल्पक्रियाभेदौ वैषम्यहेतूभवतइतिभावः तथाचश्रुतयः । 'तंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच । योनिमन्येप्रपद्यंतेशरीरत्वायदेहिनः । स्थाणुमन्येनुसंयंतियथाकर्मयथाश्रुतम्'इत्याद्याः । तंत्यक्तदेहं विद्या उपासनाकर्मयज्ञादि पूर्वप्रज्ञाप्राग्भवीयसंस्कारः समन्वारभेतेअनुगच्छतइतिश्रुतिपदानामर्थः । स्थाणुंस्थाणुत्वं योनिंसुरनरतिर्यग्रूपां तद्गतित्रयं त्रिधाप्रत्येकमुत्तममध्यमाधमभावेनत्रिप्रकारम् ९

एतदेवविवृणोति तत्रेत्यादिना । कारणैःकर्मभिः १० विपरीतैरिति । अयमर्थः पुण्यपापयोःसाम्येनमानुषत्वंप्राप्य पुण्याधिक्येस्वर्गंगच्छति पापाधिक्येनरकं तत्रच तदधिकांशयोर्भोगेनक्षयेजातेसति पुण्यपापयोःसाम्येस्वर्गादधस्तनं तिर्यग्योनेरुपरितनंचपुनर्मानुषत्वंगच्छतीति ११ । १२ तत्रापितिर्यग्योनौविशेषमाह तिर्यग्योन्याइति पृथग्भावस्ततोमुक्तिर्मनुष्यार्थेमनुष्यजन्मलाभायविधीयतेवेदेनबोध्यते यतोगवादिभ्योगोजातितएवयज्ञेउपयुक्तादेवत्वमपिदृश्यते प्रत्यक्षमुपलभ्यतेबह्वृचब्राह्मणे । 'पशुर्वैनीयमानःसमृत्युंप्रापश्यत्सदेवान्नान्वकामयतैतुंतंदेवा अब्रुवन्नेहिस्वर्गंवैत्वालोकंगमयिष्यामः' इति १३ सोऽयमिति । यथालोकेकार्यवांश्चरतिइतस्ततःपर्यटनंकरोति तद्रहितस्तुस्वस्थानेसुखमास्ते एवमिहापिसंसारमोक्षाविविभावः । महतिब्रह्मण्यात्मानंजीवमवस्थापयते उपाधित्यागेनमहाकाशेघटाकाशमिवप्रलीनंकरोति १४ एतदकरणेदोषमाह जातइति । सचदेहवान्देहाभिमानीआत्माजीवः बलवानदृष्टोपगृहीतः जातोजातःपुनःपुनर्लब्धजन्मा फलार्थःसुखकामः भुंक्तेदेहयोगजंफलमितिशेषः एतेनफलार्थिनःप्रवृत्तिस्ततःकर्म ततोजन्म ततःफलभोगस्ततोरागोऽभुक्तेरागानुदयात्ततःफलार्थितेतिसंसाराविच्छेदोदर्शितः । यस्तुनिष्पृक्तःनिर्गतंपृक्तंफलसंयोगोयस्मात्सफलासंगीत्यर्थः सप्रजानांलक्षणंज्ञापकंजन्ममरणादिकमसाधारणं धर्मंभावयतीतितथा निष्कामकर्मकर्ता चित्तशुद्ध्यतिशयाज्जन्ममरणादीन्दोषान्पश्यतीत्यर्थः । यद्वा प्रजानांकार्यमात्रस्यलक्षणमनिर्वचनीयत्वंभावयतीतितथा असंगःपुमानधिष्ठानज्ञानेन तत्राध्यस्तस्यसंसा

तत्रवैमानुषाल्लोकाद्दानादिभिरतंद्रितः ॥ अहिंसार्थसमायुक्तैःकारणैःस्वर्गमश्नुते १० विपरीतैश्चराजेंद्रकारणैर्मानुषोभवेत् ॥ तिर्यग्योनिस्तथाताताविशेषश्चात्रवक्ष्यते ११ कामक्रोधसमायुक्तोहिंसालोभसमन्वितः ॥ मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौप्रसूयते १२ तिर्यग्योन्याःपृथग्भावोमनुष्यार्थेविधीयते ॥ गवादिभ्यस्तथाश्वेभ्यो देवत्वमपिदृश्यते १३ सोयमेतागतीस्तातजंतुश्चरतिकार्यवान् ॥ नित्येमहतिचात्मानमवस्थापयतेद्विजः १४ जातोजातश्चबलवान्भुंक्तेचात्मासदेहवान् ॥ फलार्थस्तातनिष्पृक्तःप्रजालक्षणभावनः १५ ॥ युधिष्ठिरउवाच ॥ शब्देस्पर्शेचरूपेचतथैवरसगंधयोः ॥ तस्याधिष्ठानमव्यग्रोब्रूहिसर्पयथातथम् १६ किंनगृह्णासिविषयान्युगपत्त्वंमहामते ॥ एतावदुच्यतांचोक्तंसर्वंपन्नगसत्तम १७ ॥ सर्पउवाच ॥ यदात्मद्रव्यमायुष्मन्देहसंश्रयणान्वितम् ॥ करणाधिष्ठितंभोगानुपभुंक्तेयथाविधि १८ ज्ञानंचैवात्रबुद्धिश्चमनश्चभरतर्षभ ॥ तस्यभोगाधिकरणेकरणानिनिबोधमे १९

रस्यमिथ्यात्वं शुक्तिरजतस्येवपश्यतीत्यर्थः १५ इदमाक्षिपति शब्देइति । तस्यप्रजालक्षणलक्ष्यस्यानिर्वचनीयस्याहमर्थप्रसिद्धप्रजारूपकार्यस्यकिमधिष्ठानं तदाइदमर्थंप्रसिद्धेशब्दादौविषयेग्राह्येसति किंतस्याधिष्ठानम् । यथाप्रकाश्यप्रकाशकयोर्घटसूर्ययोरधिष्ठानेभूनभसीभिन्नेदृष्टे तद्वदहमिदमर्थयोरप्यधिष्ठानेपृथक्त्वाच्येइतिभावः १६ यदितुतर्कमतेइवप्रकाश्यप्रकाशकयोःसुखज्ञानयोरेकात्माधिष्ठानत्वमिष्टं तर्हि तद्वदेवयुगपज्ज्ञानानुपलब्धिलिंगेनसिद्धंमनोनामकमात्मातिरिक्तंद्रव्यान्तरमभ्युपेयं तेनविनाऽऽत्मनितत्संयोगवैजात्यसिद्धस्यकार्यवैजात्यस्योदयासंभवादितिशंकते किंनेति १७ उत्तरमाह यदिति । यत्परमतप्रसिद्धमात्मरूपंद्रव्यंसुखदुःखादिगुणानामाश्रयभूतं तद्देहसंश्रयणेनस्थूलसूक्ष्मशरीररूपोपाध्यालंबनेनहेतुनाअन्वितं बुद्ध्यादियुक्तंभवति आत्मनिसुखादिभानमवस्थात्रयोपाधिकंनस्वाभाविकमवस्थांतरगतस्यसुखादेरवस्थांतरेदर्शनाभावात् । ततउपाधिविशिष्टमात्मद्रव्यं करणैर्वक्ष्यमाणैरधिष्ठितंसत्भोगान्भुंक्ते तथाचश्रुतिः । 'आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः' इति यथाविधिकर्मानुरूपम् १८ ज्ञानंरूपाद्याकाराधीवृत्तिस्तेनतत्साधनानींद्रियाणिगृह्यंते बुद्धिःकर्त्रादिधर्मकंविज्ञानम् 'विज्ञानंयज्ञंतनुते' इतिश्रुतेः। मनःसर्वबाह्यकरणानुग्राहकमंतःकरणं भोगाधिकरणेदेहे एतेनविकारभाजांकर्त्रादीनांकरणत्ववचनेन तद्भिन्नस्यकर्त्रात्मकमधिष्ठानंविवेचितम् १९

द्वितीयप्रश्नोत्तरमाह मनसेति । विषयस्यग्राहकत्वेनायतनंस्थानमिंद्रियं तत्स्थेनमनसाकरणेन भूतात्माजीवः क्षेत्राद्देहात्तेनद्वारेणनिःसृतः क्रमशइमान्रूपादीन्पर्येति । अनेनान्यत्रमनाअभूवंनाश्रौषमन्यत्रमना अभूवंनापश्यमित्याद्यनुभवस्यश्रुत्यैवप्रदर्शितत्वान्मनोनामव्यापकंकरणंसिद्धम् २० तत्रेति । तत्रमनस्तत्रविषयग्रहणेकर्तव्येसतिविधीयते बुद्ध्याकर्म्याव्यापाराविष्टंक्रियतेऽतोव्यापारकालभेदान्मनोयुगपद्विष यान्नगृण्हातीत्यर्थः २१ बुद्धेरपिपरप्रेर्यत्वमाह सइति । योबुद्धिमनइंद्रियैः करणैरुपेतःसन् भोक्तास्वतस्त्वभोक्तेत्युक्तः सआत्माभ्रुवोरंतरमाश्रितइतिगुरूक्तयुक्त्यातदुपासकस्यतदुपलब्धिस्थानमुक्तं । बुद्धिद्र व्येषुरूपादिमत्सुग्राह्येषुसृजतिप्रेरयति अयस्कांतइवलोहं परावरामात्मानात्मविषयत्वेनोत्तमाधमां कुलालश्चक्रमिव बुद्धिर्व्यापाराविष्टवमनोव्यापारयत्यात्मातुनतथेत्यर्थः २२ ननुबुद्धेरेवकर्तृत्वेनसर्वव्यवहार निर्वाहेसति किंक्लीबसदृशेनात्मांतरेणेत्याशंक्याह बुद्धेरिति । बुद्धितदभावयोर्यावेदनाज्ञानंसाक्षिरूपं बुधैर्योगिभिर्बुद्धेःसकाशाद्विविक्ततयादृश्यते युक्त्यानुभवेनचगृह्यते एषतदेवज्ञानं क्षेत्रज्ञभावनआत्मप्रकाशकोवि धिरज्ञातज्ञापनंस्वप्रकाशमित्यर्थः नहिलयोदयवत्याबुद्धेरात्मत्वंसंभवति कृतनाशाकृताभ्यागमप्रसंगादित्यन्यत्रविस्तरः २३ मनसइति । बुद्धिमनसोरन्यतरस्यकर्तृत्वंकरणत्वंवाऽस्तु किमुभयकल्पनयेत्याश यः २४ कार्यभेदाद्द्वयंकल्प्यतइत्याह बुद्धिरिति । बुद्धिरतीवात्मानुगा अत्यंतमात्मनासहतादात्म्यंप्राप्तालोहपिंडइवाग्निना अतःसाआत्मचैतन्यानुविद्धा उत्पातेनोत्क्रांत्यादिनाविधीयते वशीक्रियते । तथाचो त्पातवत्याअनुगतआत्माप्युत्पातवान्जलचंद्रचांचल्यन्यायेनभवति एतेनबुद्ध्यात्मनोरन्योन्याध्यासोदर्शितः इममेवाश्रित्यतार्किकास्तयोर्धर्मधर्मिभावमुपयंति । नन्वध्यस्यंतामुपहितेषूपाधिधर्माः घटाकाशेइव

मनसातातपर्येतिक्रमशोविषयानिमान् ॥ विषयायतनस्थेनभूतात्माक्षेत्रनिःसृतः २० तत्रचापिनरव्याघ्रमनोजंतोर्विधीयते ॥ तस्माद्युगपदत्रास्यग्रहणंनोपप द्यते २१ सआत्मापुरुषव्याघ्रभ्रुवोरंतरमाश्रितः ॥ बुद्धिंद्रव्येषुसृजतिविविधेषुपरावराम् २२ बुद्धेरुत्तरकालाचवेदनादृश्यतेबुधैः ॥ एषवैराजशार्दूलविधिःक्षेत्र ज्ञभावनः २३ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ मनसश्चापिबुद्धेश्चब्रूहिमेलक्षणंपरम् ॥ एतदध्यात्मविदुषांपरंकार्यंविधीयते २४ ॥ सर्पउवाच ॥ बुद्धिरात्मानुगा तीवउत्पातेनविधीयते ॥ तदाश्रिताहिसाज्ञेयाबुद्धिस्तस्यैषिणीभवेत् २५ बुद्धिरुत्पद्यतेकार्यान्मनस्तूत्पन्नमेवहि ॥ बुद्धेर्गुणविधानेनमनस्तद्गुणवद्भवेत् २६

घटगतिर्नतुविपरीतमपि घटेआकाशगतस्यास्पर्शत्वादेरदर्शनादित्याशंक्याह तदाश्रिताहिसाज्ञेयेति प्रसिद्धंह्यात्मचैतन्यंबुद्ध्याश्रितमतएवबौद्धाबुद्धिरेवचेतनेतिवदंति घटशब्दोऽयमितिदृष्टान्तेऽपि शब्दवत्त्व स्याकाशधर्मस्यघटेऽऽध्यासदर्शनात् नन्वत्रान्योन्यस्मिन्नन्योन्यधर्मयोरेवाध्यासउतधर्मिणोरपि आद्ये धर्मिणोःसमसत्वेनद्वैतापत्तिः । अंत्ये द्वयोरपिमिथ्यात्वापत्त्याशून्यशेषतापत्तिरित्याशंक्याह बुद्धिस्तस्यै षिणीभवेदिति । बुद्धिःस्वरूपसिद्ध्यर्थमात्मानमधिष्ठानमिच्छति रज्जूरगइवरज्जुं । तथाचधर्माणामेवान्योन्याध्यासो नतुधर्मिणोः शुक्तौरजतस्येव रजतेशुक्तेरध्यासाभावात् अतोनोक्तदोषद्वयप्रसंगः २५ नन्वापद्यतांद्वैतंनतुसर्वप्रमाणसिद्धायाबुद्धेर्मिथ्यात्वंवक्तुंशक्यमित्याशंक्याह बुद्धिरुत्पद्यतेकार्यादिति विषयेंद्रियसंयोगादेःकार्याद्बुद्धिरुत्पद्यते तन्निवृत्तौनिवर्ततइतिबुद्धेरनित्यत्वंप्रसिद्धं नित्यानित्ययोश्चात्मबु द्ध्योर्नधर्मधर्मिभावःसिद्ध्यति घटेयावद्रूपाभावस्यादर्शनेनात्मनियावद्दुःखाभावलक्षणस्थमोक्षस्यासिद्धेः । नापिसंयोगः सहिउभयकर्मजोवाऽन्यतरकर्मजोवामल्लयोःपक्षिवृक्षयोर्वादृष्टो नचविभुनाऽऽत्मनाता दृशःसंयोगोबुद्धेरस्ति आकाशेनेवघटस्य । यत्तुतयोरपिसंयोगमभ्युपगच्छंति तद्युक्तिशून्यं परिभाषामात्रं । तस्माद्रज्जूरगयोरिवानिर्वचनीयस्तयोःसंबंधइतिरज्जुवदात्मानित्यो रज्जूरगवदाविर्भावतिरोभा ववतीबुद्धिर्मिथ्येतियुक्तमुत्पश्यामः । नन्वेवंबुद्धेराकस्मिकत्वे तद्धर्माणांदुःखादीनामप्याकस्मिकत्वापातात्कृतनाशाकृताभ्यागमस्तदवस्थएवेत्याशंक्याह मनस्तूत्पन्नमेवहीति बुद्धेर्नाशेऽपि तज्जन्यवासनातन्तुसं–

तानात्मकंमनोऽस्त्येव ततश्चपूर्ववासनयाबुद्धिरुत्पद्यते बुद्ध्याचवासनाविवर्धतइत्यनादिरनंताचैषाबुद्धिवासनयोर्बीजांकुरवत्संततिः तदेतदाहबुद्धेरिति । गुणविधानेनसुखाद्याकारपरिणामधारणेनगुणविधिर्नास्तीतिपाठे गुणविधिरुपादानत्वेनास्ति किंतूपादेयत्वमेव मनस्तूपादानंपटतंतुवदनयोर्भेदइत्यर्थः तद्गुणवत्तद्वासनायुक्तम् २६ विशेषणंव्यावर्तकं तस्मात्कार्यभेदान्मनोबुद्ध्योर्भेदस्तेनच वासनावीजनाशात् संसा

एतद्विशेषणंतातमनोबुद्ध्योर्यदंतरम् ॥ त्वमप्यत्राभिसंबुद्धःकथंवामन्यतेभवान् २७ ॥ युधिष्ठिरउवाच ॥ अहोबुद्धिमतांश्रेष्ठशुभाबुद्धिरियंतव ॥ विदितंवेदितव्यंतेकस्मात्समनुपृच्छसि २८ सर्वज्ञंत्वांकथंमोहआविशत्स्वर्गवासिनम् ॥ एवमद्भुतकर्माणमितिमेसंशयोमहान् २९ ॥ सर्पउवाच ॥ सुप्रज्ञमपिचेच्छूरमृद्धिर्मोहयतेनरम् ॥ वर्तमानःसुखेसर्वोमुह्यतीतिमतिर्मम ३० सोहमैश्वर्यमोहेनमदाविष्टोयुधिष्ठिर ॥ पतितःप्रतिसंबुद्धस्त्वांतुसंबोधयाम्यहम् ३१ कृतंकार्यंमहाराजत्वयाममपरंतप ॥ क्षीणःशापःसुकृच्छ्रोमेत्वयासंभाष्यसाधुना ३२ अहंहिदिविदिव्येनविमानेनचरन्पुरा ॥ अभिमानेनमत्तःसन्कंचिन्नान्यमचिंतयम् ३३ ब्रह्मर्षिदेवगंधर्वयक्षराक्षसपन्नगाः ॥ करान्ममप्रयच्छंतिसर्वेत्रैलोक्यवासिनः ३४ चक्षुषायंप्रपश्यामिप्राणिनंपृथिवीपते ॥ तस्यतेजोहराम्याशुतद्धिदृष्टेर्बलंमम ३५ ब्रह्मर्षीणांसहस्रंहिउवाहशिबिकांमम ॥ समामपनयोराजन्भ्रंशयामासवैश्रियः ३६ तत्रह्यगस्त्यःपादेनवहन्स्पृष्टोमयामुनिः ॥ अगस्त्येनततोऽस्म्युक्तोध्वंससर्पेतिवैरुषा ३७ ततस्तस्माद्विमानाग्र्यात्प्रच्युतश्च्युतलक्षणः ॥ प्रपतन्बुबुधेत्मानंव्यालीभूतमधोमुखम् ॥ अयाचंतमहंविप्रंशापस्यांतोभवेदिति ३८ ॥ सर्पउवाच ॥ प्रमादात्संप्रमूढस्यभगवन्क्षंतुमर्हसि ॥ ततःसमामुवाचेदंप्रपतंतंकृपान्वितः ३९ युधिष्ठिरोधर्मराजःशापात्त्वांमोक्षयिष्यति ॥ अभिमानस्यघोरस्यपापस्यचनराधिप ४० फलेक्षीणेमहाराजफलंपुण्यमवाप्स्यसि ॥ ततोमेविस्मयोजातस्तद्दृष्ट्वातपसोबलम् ४१ ब्रह्मचब्राह्मणत्वंचयेनत्वाहमचूचुदम् ॥ सत्यंदमस्तपोदानमहिंसाधर्मनित्यता ४२ साधकानिसदापुंसांनजातिर्नकुलंनृप ॥ अरिष्टएषतेभ्राताभीमसेनोमहाबलः ॥ स्वस्तितेऽस्तुमहाराजगमिष्यामिदिवंपुनः ४३ ॥ वैशंपायनउवाच ॥ इत्युक्त्वाऽऽजगरंदेहंमुक्त्वासनहुषोनृपः ॥ दिव्यंवपुःसमास्थायगतस्त्रिदिवमेवह ४४ युधिष्ठिरोपिधर्मात्माभ्रात्राभीमेनसंगतः ॥ धौम्येनसहितःश्रीमानाश्रमंपुनरागमत् ४५ ततोद्विजेभ्यःसर्वेभ्यःसमेतेभ्योयथातथम् ॥ कथयामासतत्सर्वंधर्मराजोयुधिष्ठिरः ४६ तच्छ्रुत्वातेद्विजाःसर्वेभ्रातरश्चास्ययेत्रयः ॥ आसन्सुव्रीडिताराजन्द्रौपदीचयशस्विनी ४७ तेतुसर्वेद्विजश्रेष्ठाःपांडवानांहितेप्सया ॥ मैवमित्यब्रुवन्भीमंगर्हयंतोऽस्यसाहसम् ४८ पांडवास्तुभयान्मुक्तंप्रेक्ष्यभीमंमहाबलम् ॥ हर्षमाहारयांचक्रुर्विजह्रुश्चमुदायुताः ४९ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिआजगरपर्वणिभीममोचनेएकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ ॥ समाप्तंचेदमाजगरंपर्व ॥

रांकुरोनजायतइतिसिद्धम् २७ । २८ । २९ । ३० जातमपिज्ञानमैश्वर्यजादर्पोभ्रंशयतीविज्ञाततत्त्वोऽपिशमादीनाश्रयेदितिविशेषग्रंथतात्पर्यम् ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ ब्राह्मणत्वंब्रह्मविलक्षणं स्पष्टार्थमन्यत् ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ ॥

उक्तामेवब्रह्मविद्यांमार्कंडेयमुखेननानाख्यानपूर्वकंप्रपंचयिष्यंस्तदुपोद्घातत्वेनकाम्यकप्रवेशंतावदाह निदाघांतकरःकालइत्यादिना १ असिताःकृष्णवर्णाः २ तपात्ययेवर्षासु निकेताइवमंडपीभूताइत्यर्थः ३ । ४ समवस्तृतेआच्छादिते स्थावराणिभूतलादीनि ५ आशुगाश्चाणवत्तीव्रवेगाः सिंधवोनद्यःशोणघर्घराद्याः ६ । ७ स्तोकाएवस्तोककाश्चातकाः । 'स्तोकंतुच्छ्वल्पेचातकेपुमान' इतिमेदिनी । दर्दुरामंडूकाः ८ मरुधन्वसुगिरेःशुष्कस्थानेषु ९ रूढकक्षाणिबहुतृणानिवनानि प्रस्थशब्दोदितानिसानूनिचयस्यांसातथा । 'प्रस्थोस्त्रियांमानभेदेसानावस्तुचवस्तुनि' इतिमेदिनी १० । ११

अथमार्कंडेयसमास्यापर्व ॥ ॥ वैशंपायनउवाच ॥ निदाघांतकरःकालःसर्वभूतसुखावहः ॥ तत्रैववसतांतेषांप्रावृट्समभिपद्यत १ छादयंतोमहाघोषाःखंदिशश्च बलाहकाः ॥ प्रववर्षुर्दिवारात्रमसिताःसततंतदा २ तपात्ययनिकेताश्चशतशोऽथसहस्रशः ॥ अपेतार्कप्रभाजालाःसविद्युद्विमलप्रभाः ३ विरूढशष्पाधरणीमत्त दंशसरीसृपा ॥ बभूवपयसासिक्ताशांतासर्वमनोरमा ४ नस्मप्रज्ञायतेकिंचिदंभसासमवस्तृते ॥ समंवाविषमंवाऽपिनद्योवास्थावराणिच ५ क्षुब्धतोयामहावेगाः श्वसमानाइवाशुगाः ॥ सिंधवःशोभयांचक्रुःकाननानितपात्यये ६ नदतांकाननांतेषुश्रूयंतेविविधाःस्वनाः ॥ वृष्टिभिश्छाद्यमानानांवराहमृगपक्षिणाम् ७ स्तोककाःशिखिनश्चैवपुंस्कोकिलगणैःसह ॥ मत्ताःपरिपतंतिस्मदर्दुराश्चैवदर्पिताः ८ तथाबहुविधाकाराप्रावृण्मेघानुनादिता ॥ अभ्यतीताशिवातेषांचरतांमरु धन्वसु ९ क्रौंचहंससमाकीर्णाशरत्प्रमुदिताऽभवत् ॥ रूढकक्षवनप्रस्थाप्रसन्नजलनिम्नगा १० विमलाकाशनक्षत्राशरत्तेषांशिवाऽभवत् ॥ मृगद्विजसमाकीर्णा पांडवानांमहात्मनाम् ११ दृश्यंतेशांतरजसःक्षपाजलदशीतलाः ॥ ग्रहनक्षत्रसंघैश्चसोमेनचविराजिताः १२ कुमुदैःपुंडरीकैश्चशीतवारिधराःशिवाः ॥ नदीःपुष्क रिणीश्चैवददृशुःसमलंकृताः १३ आकाशनीकाशतटांतीरवानीरसंकुलाम् ॥ बभूवचरतांहर्षःपुण्यतीर्थांसरस्वतीम् १४ तेवैमुमुदिरेवीराःप्रसन्नसलिलांशिवाम् ॥ पश्यंतोदृढधन्वानःपरिपूर्णांसरस्वतीम् १५ तेषांपुण्यतमारात्रिःपर्वसंधौस्मशारदी ॥ तत्रैववसतामासीत्कार्तिकीजनमेजय १६ पुण्यकृद्भिर्महासत्वैस्तापसैःसह पांडवाः ॥ तत्सर्वंभरतश्रेष्ठाःसमूहुर्योगमुत्तमम् १७ तस्मिंश्चाभ्युदयेतस्मिन्धौम्येनसहपांडवाः ॥ सूतैःपौरोगवैश्चैवकाम्यकंप्रययुर्वनम् १८ ॥ ॥ इतिश्रीमहा भारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिकाम्यकवनप्रवेशेद्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥ ॥ ॥ वैशंपायनउवाच ॥ काम्यकंप्राप्यकौरव्य युधिष्ठिरपुरोगमाः ॥ कृतातिथ्यामुनिगणैर्निषेदुःसहकृष्णया १ ततस्तान्परिविश्वस्तान्वसतःपांडुनंदनान् ॥ ब्राह्मणाबहवस्तत्रसमंतात्पर्यवारयन् २ अथाब्रवीद्द्विजः कश्चिदर्जुनस्यप्रियःसखा ॥ सएष्यतिमहाबाहुर्वशीशौरिरुदारधीः ३ विदिताहिहरेर्यूयमिहायाताःकुरूद्वहाः ॥ सदाहिदर्शनाकांक्षीश्रेयोन्वेषीचवोहरिः ४ बहुवत्सरजीवीचमार्कंडेयोमहातपाः ॥ स्वाध्यायतपसायुक्तःक्षिप्रंयुष्मान्समेष्यति ५

१२ । १३ नीकाशःसदृशः १४ । १५ कार्तिकीकृत्तिकायुक्तापौर्णमासी १६ योगंयुज्यतेरथादावितिव्युत्पत्त्यावाहनादिकं समूहुरारोपितभारंकृतवंतः १७ । १८ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥ काम्यकमिति १ । २ शौरिःकृष्णः ३ आयाताविदिताइत्यन्वयः वोयुष्माकंश्रेयोऽन्वेषी ४ । ५

६ । ७ । ८ । ९ । १० । ११ । १२ भूतपतीरुद्रः गुहेनकार्तिकेयेन १३ । १४ मधुहामधुसूदनः १५ तस्यार्थधर्मस्यनृद्ध्यर्थम १६ । १७ । १८ एषादानादिरूपासदारतिर्नित्यंप्रीतिविषयः १९ । २०

तथैवब्रुवतस्तस्यप्रत्यदृश्यतकेशवः ॥ शैब्यसुग्रीवयुक्तेनरथेनरथिनांवरः ६ मघवानिवपौलोम्यासहितःसत्यभामया ॥ उपायाद्देवकीपुत्रोदिदृक्षुःकुरुसत्तमान् ७ अवतीर्यरथात्कृष्णोधर्मराजंयथाविधि ॥ ववंदेमुदितोधीमान्भीमंचबलिनांवरम् ८ पूजयामासधौम्यंचयमाभ्यामभिवादितः ॥ परिष्वज्यगुडाकेशंद्रौपदींपर्य सांत्वयत् ९ सदृष्ट्वाफाल्गुनंवीरंचिरस्यप्रियमागतम् ॥ पर्यष्वजतदाशार्हःपुनःपुनररिंदमः १० तथैवसत्यभामाऽपिद्रौपदींपरिषस्वजे ॥ पांडवानांप्रियांभार्यां कृष्णस्यमहिषीप्रिया ११ ततस्तेपांडवाःसर्वेसभार्याःसपुरोहिताः ॥ आनर्चुःपुंडरीकाक्षंपरिवव्रुश्चसर्वशः १२ कृष्णस्तुपार्थेनसमेत्यविद्वान्धनंजयेनासुरतर्जनेन ॥ बभौयथाभूतपतिर्महात्मासमेत्यसाक्षाद्भगवान्गुहेन १३ ततःसमस्तानिकिरीटमालीवनेषुवृत्तानिगदाग्रजाय ॥ उक्त्वायथावत्पुनरन्वपृच्छत्कथंसुभद्राचसचाभिमन्युः १४ सपूजयित्वामधुहायथावत्पार्थंचकृष्णांचपुरोहितंच ॥ उवाचराजानमभिप्रशंसन्युधिष्ठिरंतत्रसहोपविश्य १५ धर्मःपरःपांडवराज्यलाभात्तस्यार्थमाहुस्तपएव राजन् ॥ सत्यार्जवाभ्यांचरतास्वधर्मंजितस्त्वयाऽयंचपरश्चलोकः १६ अधीतमग्रेचरताव्रतानिसम्यग्धनुर्वेदमवाप्यकृत्स्नम् ॥ क्षात्रेणधर्मेणवसूनिलब्ध्वासर्वेह्यवाप्ताः क्रतवःपुराणाः १७ नग्राम्यधर्मेषुरतिस्तवास्तिकामान्नकिंचित्कुरुषेनरेंद्र ॥ नचार्थलोभात्प्रजहासिधर्मंतस्मात्प्रभावादसिधर्मराजः १८ दानंचसत्यंचतपश्चराजञ्श्रद्धा चबुद्धिश्चक्षमाधृतिश्च ॥ अवाप्यराष्ट्राणिवसूनिभोगानेषापरापार्थसदारतिस्ते १९ यदाजनौघःकुरुजांगलानांकृष्णांसभायामवशामपश्यत् ॥ अपेतधर्मव्यवहारवृत्तं सहेततत्पांडवकस्त्वदन्यः २० असंशयंसर्वसमृद्धकामःक्षिप्रंप्रजाःपालयिताऽसिसम्यक् ॥ इमेवयंनिग्रहणेकुरूणांयदिप्रतिज्ञाभवतःसमाप्ता २१ धौम्यंचभीमंचयु धिष्ठिरंचयमौचकृष्णांचदशार्हसिंहः ॥ उवाचदिष्ट्याभवतांशिवेनप्राप्तःकिरीटीमुदितःकृतास्त्रः २२ प्रोवाचकृष्णामपियाज्ञसेनींदशार्हभर्तासहितःसुहृद्भिः ॥ दिष्ट्या समग्राऽसिधनंजयेनसमागतेत्येवमुवाचकृष्णः २३ कृष्णेधनुर्वेदरतिप्रधानास्तवात्मजास्तेशिशवःसुशीलाः ॥ सद्भिःसदैवाचरितंसुहृद्भिश्चरंतिपुत्रास्तवयाज्ञसेनि २४ राज्येनराष्ट्रैश्चनिमंत्र्यमाणाःपित्राचकृष्णेतवसोदरैश्च ॥ नयज्ञसेनस्यनमातुलानांगृहेषुबालारतिमाप्नुवंति २५ आनर्तमेवाभिमुखाःशिवेनगत्वाधनुर्वेदरतिप्रधानाः ॥ तवात्मजावृष्णिपुरंप्रविश्यतदैवतेभ्यःस्पृहयंतिकृष्णे २६ यथात्वमेवार्हसितेषुवृत्तंप्रयोक्तुमार्याचयथैवकुंती ॥ तेष्वप्रमादेनतथाकरोतितथैवभूयश्चतथासुभद्रा २७ यथाऽनिरुद्धस्ययथाऽभिमन्योर्यथासुनीथस्ययथैवभानोः ॥ तथाविनेताचगतिश्चकृष्णेतवात्मजानामपिरौक्मिणेयः २८

निग्रहणेयत्ताःस्मइतिशेषः २१ । २२ । २३ तवात्मजाःप्रतिविंध्यादयः २४ । २५ आनर्तंद्वारकादेशम २६ यथात्वमर्हसितथासुभद्राऽर्हति यथाकुंतीप्रयोक्तुमर्हतितथासुभद्राप्यर्हति यथाचार्ह तितथैवकरोतिचेतिसंबंधः २७ विनेताशिक्षयिता रौक्मिणेयःप्रद्युम्नः २८

२९ । ३० । ३१ । ३२ मधूनांमाथुराणां हलायुधःप्रग्रहणोनियंतायस्याःसासेना यत्तासन्नद्धा ३३ भौमस्यनरकासुरस्य सौभाधिपतेःशाल्वस्य ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

गदासिचर्मग्रहणेषुशूरानस्त्रेषुशिक्षासुरथाश्वयाने ॥ सम्यग्विनेताविनयेदतंद्रीस्तांश्चाभिमन्युःसततंकुमारः २९ सचापिसम्यक्प्रणिधायशिक्षांशस्त्राणिचैषां विधिवत्प्रदाय ॥ तवात्मजानांचतथाऽभिमन्योःपराक्रमैस्तुष्यतिरौक्मिणेयः ३० यथाविहारंप्रसमीक्षमाणाःप्रयांतिपुत्रास्तवयाज्ञसेनि ॥ एकैकमेषामनुयांतितत्ररथाश्वयानानिचदंतिनश्च ३१ अथाब्रवीद्धर्मराजंतुकृष्णोदशार्हयोधाःकुकुरांधकाश्च ॥ एतेनिदेशंतवपालयंतस्तिष्ठंतुयत्रेच्छसितत्रराजन् ३२ आवर्ततांकार्मुकवेगवाताहलायुधप्रग्रहणामधूनाम् ॥ सेनातवार्थेषुनरेंद्रयत्तासप्तादिपत्त्यश्वरथासनागा ३३ प्रस्थाप्यतांपांडवधार्तराष्ट्रःसुयोधनःपापकृतांवरिष्ठः ॥ सपानुबंधःससुहृद्गणश्चभौमस्यसौभाधिपतेश्चमार्गम् ३४ कामंतथातिष्ठनरेंद्रतस्मिन्यथाकृतस्तेसमयःसभायाम् ॥ दाशार्हयोधैस्तुहतारियोधंप्रतीक्षतांनागपुरंभवंतम् ३५ व्यपेतमन्युर्व्यपनीतपाप्माविहृत्ययत्रेच्छसितत्रकामम् ॥ ततःप्रसिद्धंप्रथमंविशोकःप्रपत्स्यसेनागपुरंसराष्ट्रम् ३६ ततस्तदाज्ञायमतंमहात्मायथावदुक्तंपुरुषोत्तमेन ॥ प्रशस्यविप्रेक्ष्यचधर्मराजःकृतांजलिःकेशवमित्युवाच ३७ असंशयंकेशवपांडवानांभवान्गतिस्त्वच्छरणाहिपार्थाः ॥ कालोदयेतच्चततश्चभूयःकर्ताभवान्कर्मनसंशयोऽस्ति ३८ यथाप्रतिज्ञंविहृतश्चकालःसर्वाःसमाद्वादशनिर्जनेषु ॥ अज्ञातचर्यांविधिवत्समाप्यभवद्गताःकेशवपांडवेयाः ३९ एषैवबुद्धिर्जुषतांसदात्वांसत्येस्थिताःकेशवपांडवेयाः ॥ सदानधर्माःसजनाःसदाराःसबांधवास्त्वच्छरणाहिपार्थाः ४० ॥ वैशंपायनउवाच ॥ तथावदतिवार्ष्णेयेधर्मराजेचभारत ॥ अथपश्चात्तपोवृद्धोबहुवर्षसहस्रधृक् ४१ प्रत्यदृश्यतधर्मात्मामार्कंडेयोमहातपाः ॥ अजरश्चामरश्चैवरूपौदार्यगुणान्वितः ४२ व्यदृश्यततथायुक्तोयथास्यात्पंचविंशकः ॥ तमागतमृषिंवृद्धंबहुवर्षसहस्रिणम् ४३ आनर्चुर्ब्राह्मणाःसर्वेकृष्णश्चसहपांडवैः ॥ तमर्चितंसुविश्वस्तमासीनमृषिसत्तमम् ॥ ब्राह्मणानांमतेनाहपांडवानांचकेशवः ४४ ॥ कृष्णउवाच ॥ शुश्रूषवःपांडवास्तेब्राह्मणाश्चसमागताः ॥ द्रौपदीसत्यभामाचतथाऽहंपरमंवचः ४५ पुरावृत्ताःकथाःपुण्याःसदाचारान्सनातनान् ॥ राज्ञांस्त्रीणामृषीणांचमार्कंडेयविचक्ष्वनः ४६ ॥ वैशंपायनउवाच ॥ तेषुतत्रोपविष्टेषुदेवर्षिरपिनारदः ॥ आजगामविशुद्धात्मापांडवानवलोककः ४७ तमप्यथमहात्मानंसर्वेतेपुरुषर्षभाः ॥ पाद्यार्घ्याभ्यांयथान्यायमुपतस्थुर्मनीषिणः ४८ नारदस्त्वथदेवर्षिर्ज्ञात्वातांस्तुकृतक्षणान् ॥ मार्कंडेयस्यवदतस्तांकथामन्वमोदत ४९ उवाचचैनंकालज्ञःस्मयन्निवसनातनः ॥ ब्रह्मर्षेकथ्यतांयत्तेपांडवेषुविवक्षितम् ५० एवमुक्तःप्रत्युवाचमार्कंडेयोमहातपाः ॥ क्षणंकुरुध्वंविपुलमाख्यातव्यंभविष्यति ५१

पंचविंशकःवर्षैरितिशेषः ४३ सुविश्वस्तंभगवन्मायादौहृदनिश्चयम् ४४ । ४५ । ४६ अवलोककःअवलोकनार्थी ४७ । ४८ । ४९ सनातनः कृष्णः ५० । ५१

५२ । ५३ । ५४ । ५५ भवत्येवहीति । धर्माधर्मफलयोर्विपर्ययंदृष्ट्वापुरुषःकर्मणःफलंकथंस्विदश्नाति ईश्वरोवाकथंस्वित्कर्तास्तीतिधर्मेश्वरयोराक्षेपः ऋध्यतःसमृद्धियुतान् ५६ कथंस्विदित्यस्योभयत्रसंबंधः ५७ कुतोवेति । स्वभावात्कर्मणोवा अत्येइहैवपरत्रापिवा कृतंकर्मणासाधितंसुखमन्वेतीत्यर्थः ५८ शुभाशुभैःकर्मभिः सद्योविनाशिभिरिहवाकारीर्यादिभिर्वृष्ट्याद्यर्थविहितैः परत्रवादेहत्यागेसति कथंसंयुज्यते किमाश्रित्यचकर्माणितिष्ठंतीतिफलस्यव्यभिचारादाशुविनाशित्वादाश्रयाभावाच्चेतित्रेधाप्राक्कर्मसद्भावाक्षेपः ५९ । ६० स्थित्यर्थंलोकरक्षार्थम् ६१ । ६२ । ६३ तत्रधर्माधर्मफलयोस्तावदव्यभिचारंदर्शय

एवमुक्ताःक्षणंचक्रुःपांडवाःसहतैर्द्विजैः ॥ मध्यंदिनेयथाऽऽदित्यंप्रेक्षंतस्तेमहामुनिम् ५२ ॥ वैशंपायनउवाच ॥ तंविवक्षंतमालक्ष्यकुरुराजोमहामुनिम् ॥ कथासंजननार्थायचोदयामासपांडवः ५३ भवान्दैवतदैत्यानामृषीणांचमहात्मनाम् ॥ राजर्षीणांचसर्वेषांचरितज्ञःपुरातनः ५४ सेव्यश्चोपासितव्यश्चमतोनःकांक्षितश्चिरम् ॥ अयंचदेवकीपुत्रःप्राप्तोऽस्मानवलोककः ५५ भवत्येवहिमेबुद्धिर्दृष्ट्वाऽऽत्मानंसुखाच्च्युतम् ॥ धार्तराष्ट्रांश्चदुर्वृत्तानृद्ध्यतःप्रेक्ष्यसर्वशः ५६ कर्मणःपुरुषःकर्ताशुभस्याप्यशुभस्यवा ॥ सफलंतदुपाश्नातिकथंकर्तास्विदीश्वरः ५७ कुतोवासुखदुःखेषुनृणांब्रह्मविदांवर ॥ इहवाकृतमन्वेतिपरदेहेऽथवापुनः ५८ देहीचदेहंसंत्यज्यमृग्यमाणःशुभाशुभैः ॥ कथंसंयुज्यतेप्रेत्यइहवाद्विजसत्तम ५९ ऐहलौकिकमेवेहउताहोपारलौकिकम् ॥ क्वचकर्माणितिष्ठंतिजंतोःप्रेतस्यभागव ६० ॥ मार्कंडेयउवाच ॥ त्वद्युक्तोऽयमनुप्रश्नोयथावद्वदतांवर ॥ विदितंवेदितव्यंतेस्थित्यर्थंत्वंतुपृच्छसि ६१ अत्रतेकथयिष्यामितदिहैकमनाःशृणु ॥ यथेहामुत्रचनरःसुखदुःखमुपाश्नुते ६२ निर्मलानिशरीराणिविशुद्धानिशरीरिणाम् ॥ ससर्जधर्मतंत्राणिपूर्वोत्पन्नःप्रजापतिः ६३ अमोघफलसंकल्पाःसुव्रताःसत्यवादिनः ॥ ब्रह्मभूतानराःपुण्याःपुराणाःकुरुसत्तम ६४ सर्वेदेवैःसमायांतिस्वच्छंदेननभस्तलम् ॥ ततश्चपुनरायांतिसर्वेस्वच्छंदचारिणः ६५ स्वच्छंदमरणाश्चासन्नराःस्वच्छंदचारिणः ॥ अल्पबाधानिरातंकाःसिद्धार्थानिरुपद्रवाः ६६ द्रष्टारोदेवसंघानामृषीणांचमहात्मनाम् ॥ प्रत्यक्षाःसर्वधर्माणांदांताविगतमत्सराः ६७ आसन्वर्षसहस्रीयास्तथापुत्रसहस्रिणः ॥ ततःकालांतरेऽन्यस्मिन्पृथिवीतलचारिणः ६८ कामक्रोधाभिभूतास्तेमायाव्याजोपजीविनः ॥ लोभमोहाभिभूताश्चत्यक्तादेहैस्ततोनराः ६९ अशुभैःकर्मभिःपापास्तिर्यङ्निरयगामिनः ॥ संसारेषुविचित्रेषुपच्यमानाःपुनःपुनः ७० मोघेष्टामोघसंकल्पामोघज्ञानाविचेतसः ॥ सर्वाभिशंकिनश्चैवसंवृत्ताःक्लेशदायिनः ७१ अशुभैःकर्मभिश्चापिप्रायशःपरिचिह्निताः ॥ दौष्कुल्याव्याधिबहुलादुरात्मानोऽप्रतापिनः ७२ भवंत्यल्पायुषःपापारौद्रकर्मफलोदयाः ॥ नाथंतःसर्वकामानांनास्तिकाभिन्नचेतसः ७३ जंतोःप्रेतस्यकौन्तेयगतिःस्वैरिहकर्मभिः ॥ प्राज्ञस्यहीनबुद्धेश्चकर्मकोशःक्वतिष्ठति ७४ क्वस्थस्तत्समुपाश्नातिसुकृतंयदिवेतरत् ॥ इतितेदर्शनंयच्चतत्राप्यनुनयंशृणु ७५

न्प्रथमंदोषंनिरस्यति निर्मलानीत्यादिना ६४ । ६५ । ६६ । ६७ । ६८ मायाकूटकार्षापणादिर्व्याजंदंभस्तदेवोपजीवंति नतुधर्मं तेमायाव्याजोपजीविनः ६९ । ७० । ७१ । ७२ नाथंतःप्रार्थयमानाः कामानांकामान् ७३ अंत्यंप्रश्नमनुवदति जंतोःप्रेतस्येतिद्वाभ्याम् ७४ अनुनयंसिद्धान्तम् ७५

तस्योत्तरेणैत्रार्थात्कर्मणाप्राशुविनाशित्वदोषोनिरस्तोभवतीत्यभिसंधायाह अयमादीति । आदिशरीरेण लिंगदेहेन यावन्मोक्षंस्थायिना देवसृष्टेनधर्माधर्मसंसृष्टेन । यद्वाधर्माद्यनुरोधिनाईश्वरेणवासृष्टेनाविष्कृतेन सर्ववासनामयं लिंगमेव कर्मणामाश्रयइत्यर्थः ७६ कलेवरंस्थूलदेहंयुगपद्देहद्वयेनसंभवतिसंयुज्यते पूर्वत्यागात्प्रागेवतृणजलौकान्यायेनापरमादत्ते नतुतदनंतरं अतएवांतरामध्ये क्षणमात्रमप्यभवोऽसंसारोनास्ति ७७ तत्रस्थूलदेहांतरे यत्तुमरणानंतरं मध्ये यावद्गर्भवासमातिवाहिकशरीरारूढो दिविभुव्यंतरिक्षेनरकेवाभवतीतितत्स्थूलदृष्ट्यैवज्ञेयं उभयत्रभोगसाम्येन स्थूलातिवाहिकयोर्भेदाभावात् यथोक्तं वसिष्ठेन । ‘ आतिवाहिकएवायंत्वादृशैश्चित्तदेहकः ॥ आधिभौतिकयाबुद्ध्यागृहीतश्चिरभावनात् ’ इति ७८ कृतांतोयमस्तत्संबंधीविधिःपुण्यपापफलभोगेनियोगस्तेनसंयुक्तस्तमनुतिष्ठन् निरादानःप्राप्तंसुखंदुःखंवादूरीकर्तुमशक्तः । दोऽवखंडने इत्यस्यरूपम् ७९ अबुद्धीनांतत्त्वज्ञानहीनानांगतिः स्वर्गनरकरूपा उत्तमांपुनरावृत्तिवर्जितां ८० । ८१ शुक्लजातीयाःशुक्लोयोगजोधर्मस्तत्प्रकारास्तदेकार्जनपराः प्रकारवचनेजातीयर् । योन्यंतरमातिवाहिकयोन्यपेक्षयाऽन्यामाधिभौतिकीं योनिम् ८२ वशिनईश्वराः मंदरोगिणोनीरोगाः । ‘ नतत्रशोकोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरं ’ इतिश्रुतेः प्रारब्धकर्मप्राबल्या

अयमादिशरीरेणदेवसृष्टेनमानवः ॥ शुभानामशुभानांचकुरुतेसंचयंमहत् ७६ आयुषोंतेप्रहायेदंक्षीणप्रायंकलेवरम् ॥ संभवत्येवयुगपद्योनौनास्त्यंतराऽभवः ७७ तत्रास्यस्वकृतंकर्मच्छायेवानुगतंसदा ॥ फलत्यथसुखार्होवादुःखार्होवाऽथजायते ७८ कृतांतविधिसंयुक्तःसजंतुर्लक्षणैःशुभैः ॥ अशुभैर्वानिरादानोलक्ष्यतेज्ञानदृष्टिभिः ७९ एषातावदबुद्धीनांगतिरुक्तायुधिष्ठिर ॥ अतःपरंज्ञानवतांनिबोधगतिमुत्तमाम् ८० मनुष्यास्तप्ततपसःसर्वागमपरायणाः ॥ स्थिरव्रताःसत्यपरागुरुशुश्रूषणेरताः ८१ सुशीलाःशुक्लजातीयाःक्षांतादांताःसुतेजसः ॥ शुचियोन्यंतरगताःप्रायशःशुभलक्षणाः ८२ जितेंद्रियत्वाद्वशिनःशुक्लत्वान्मंदरोगिणः ॥ अल्पाबाधपरित्रासाद्भवंतिनिरुपद्रवाः ८३ च्यवंतंजायमानंचगर्भस्थंचैवसर्वशः ॥ स्वमात्मानंपरंचैवबुध्यंतेज्ञानचक्षुषा ८४ ऋषयस्तेमहात्मानःप्रत्यक्षागमबुद्धयः ॥ कर्मभूमिमिमांप्राप्यपुनर्यातिसुरालयम् ८५ किंचिद्दैवाद्धठात्किंचित्किंचिदेवस्वकर्मभिः ॥ प्राप्नुवंतिनराराजन्मातेऽस्त्वन्याविचारणा ८६ इमामत्रोपमांचापिनिबोधवदतांवर ॥ मनुष्यलोकेयच्छ्रेयःपरंमन्येयुधिष्ठिर ८७ इहवैकस्यनामुत्रअमुत्रैकस्यनोइह ॥ इहवाऽमुत्रचैकस्यनामुत्रैकस्यनोइह ८८

त्कदाचित्प्राप्तेमवचापक्वयोगिनांरोगादिकंचेत्तत्राह अल्पेति । अल्पं द्वैतदर्शनम् । ‘ अथयत्रान्यत्पश्यत्यन्यच्छृणोतितदल्पं ’ इतिश्रुतेः तस्मादाबाधो दुःखं ततस्त्रासात् निरुपद्रवाः उपसमीपेस्थित्वाद्रवतिस्त्रीयंधर्ममार्सिचतीत्युपद्रवोंऽतःकरणंतद्रहिताः एतेनप्रारब्धस्यापिप्रतिघातायनिर्बीजःसमाधिःप्रभवतीतिदर्शितम् ८३ ननुतादृशोऽप्यपांतरतमानामवेदाचार्यः कलिद्वापरयोः संधौ सत्यवत्यां व्यासतयासमजनीतिस्मर्यतेमोक्षधर्मेषु अतःशुक्लजातीयानामप्युत्क्रांतिगत्यागतयोऽपरिहार्याइत्याशंक्याहच्यवंतमिति । अधिकारिणांतेषांलोकानुग्रहार्थं स्वेच्छयागृहाद्गृहांतरप्रवेशवदिहपरत्रचसंचारो नकर्माधीनतयाऽस्माकमिवदुःखायभवतीत्याशयः । तथानिर्णीतं यावदधिकारमवस्थितिराधिकारिकाणामित्यत्र ८४ । ८५ दैवात्मूढोन्मत्तजडभरतादिभिर्यल्लभ्यतेतद्दैवादेव हठात्योगसिद्धैर्विश्वामित्रादिभिः इतरैः स्वकर्मभिः अन्यातेषामन्यतमाएकैवकाचित्स्थितिरस्तीतिविचारणा तेतवमास्तु ८६ एवमात्मविदांस्वातंत्र्यमुक्त्वेतरेषांस्थितिचातुर्विध्यमाह इमामिति ८७ इहवेति । परंश्रेयइत्यनुकृष्यते वाशब्दएवार्थे द्विरावर्तते । एकस्यइहैवपरंश्रेयोऽस्ति नामुत्रपरलोके । एकस्यामुत्रैवास्तिनत्विह इहचामुत्रचएकस्यश्रेयोऽस्ति एकस्यतूभयत्रापिनास्तीति ८८

इममेवश्लोकंव्याचष्टे धनानीत्यादिना ८९ येइति । तेषामसौ लोकएवनत्वयम् ९० । ९१ प्रजनेपुत्रोत्पादने ९२ भवंतस्तु लोकद्वयेऽपिश्रेयांसइत्याह सर्वेभवंतइति ९३ । ९४ तस्माद्धर्माधर्मफलयोर्वैपरीत्यं यत्त्वयाप्रागुक्तंतत्तथानमंतव्यमित्युपसंहरति माभूदिति ९५ मार्कंडेयसमास्यायां सहासने इत्यर्थः आसउपवेशनेऽस्माण्ण्यत् ॥ इत्यारण्यकेपर्वणिनैलकंठीये भारतभावदीपे त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

धनानियेषांविपुलानिसंतिनित्यंरमंतेसुविभूषितांगाः ॥ तेषामयंशत्रुवरघ्नलोकोनासौसदादेहसुखेरतानाम् ८९ येयोगयुक्तास्तपसिप्रसक्ताःस्वाध्यायशीलाजरयंति देहान् ॥ जितेंद्रियाःप्राणिवधेनिवृत्तास्तेषामसौनायमरिघ्नलोकः ९० येधर्ममेवप्रथमंचरंतिधर्मेणलब्ध्वाचधनानिकाले ॥ दारानवाप्यक्रतुभिर्यजंतेतेषामयंचैवपर श्चलोकः ९१ येनैवविद्यांनतपोनदानंनचापिमूढाःप्रजनेयतंति ॥ नचानुगच्छंतिसुखान्नभोगांस्तेषामयंचैवपरश्चलोकः ९२ सर्वेभवंतस्त्वतिवीर्यसत्वादिव्यौजसः संहननोपपन्नाः ॥ लोकादमुष्मादवनिंप्रपन्नाःस्वधीतविद्याःसुरकार्यहेतोः ९३ कृत्वैवकर्माणिमहांतिशूरास्तपोदमाचारविहारशीलाः ॥ देवानृषीन्प्रेतगणांश्च सर्वान्संतर्पयित्वाविधिनापरेण ९४ स्वर्गंपरंपुण्यकृतोनिवासंक्रमेणसंप्राप्स्यथकर्मभिःस्वैः ॥ माभूद्विशंकातवकौरवेंद्रदृष्ट्वात्मनःक्लेशमिमंसुखार्हम् ९५ ॥ इतिश्रीमहा भारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणित्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ ॥ ॥ वैशंपायनउवाच ॥ मार्कंडेयंमहात्मानमूचुःपांडुसुतास्तदा ॥ माहात्म्यंद्विजमुख्यानांश्रोतुमिच्छामकथ्यताम् १ एवमुक्तःसभगवान्मार्कंडेयोमहातपाः ॥ उवाचसुमहातेजाःसर्वशास्त्रविशारदः २ ॥ मार्कंडेयउवाच ॥ हैहयानांकुलकरोराजापरपुरंजयः ॥ कुमारोरूपसंपन्नोमृगयांव्यचरद्बली ३ चरमाणस्तुसोऽरण्येतृणवीरुत्समावृते ॥ कृष्णाजिनोत्तरासंगंददर्शमुनिमंतिके ४ सतेननिहतोऽरण्येमन्यमानेनवैमृगम् ॥ व्यथितःकर्मतत्कृत्वाशोकोपहतचेतनः ५ जगामहैहयानांवैसकाशंप्रथितात्मनाम् ॥ राज्ञांराजीवनेत्रोऽसौकुमारःपृथिवी पतिः ॥ तेषांचतद्यथावृत्तंकथयामासवैतदा ६ तंचापिहिंसितंतातमुनिंमूलफलाशिनम् ॥ श्रुत्वादृष्ट्वाचतेतत्रबभूवुर्दीनमानसाः ७ कस्यायमितितेसर्वेमार्गमाणास्तत स्ततः ॥ जग्मुश्चारिष्टनेम्नोऽथताक्ष्र्यस्याश्रममंजसा ८ तेऽभिवाद्यमहात्मानंतंमुनिंनियतव्रतम् ॥ तस्थुःसर्वेसतुमुनिस्तेषांपूजामथाहरत् ९ तेतमूचुर्महात्मानंनवयं सत्क्रियांमुने ॥ त्वत्तोर्हाःकर्मदोषेणब्राह्मणोहिंसितोहिनः १० तानब्रवीत्सविप्रर्षिःकथंवोब्राह्मणोहतः ॥ क्वचासौब्रूतसहिताःपश्यध्वंमेतपोबलम् ११ तेतुतत्सर्वम खिलमाख्यायास्मैयथातथम् ॥ नापश्यंस्तमृषिंतत्रगतासुंतेसमागताः १२ अन्वेषमाणाःसव्रीडाःस्वप्नवद्गतचेतनाः ॥ तानब्रवीत्तत्रमुनिस्ताक्ष्र्यःपरपुरंजयः १३ स्यादयंब्राह्मणःसोऽथयुष्माभिर्योविनाशितः ॥ पुत्रोह्ययंममनृपास्तपोबलसमन्वितः १४ तेचदृष्ट्वैवतमृषिंविस्मयंपरमंगताः ॥ महदाश्चर्यमितिवैतेब्रुवाणामहीपते १५

॥ ॥ ॥ ब्रह्मविदांशुक्लजातीयानांस्वच्छंदमरणंतेषामित्यादिनाप्रोक्तंमहाभाग्यंप्रश्नपूर्वकंविवरीतुमयमध्यायआरभ्यते मार्कंडेयमिति कथ्यतांत्वया १ । २ कुमारत्वादविवेकत्वं सूचितं ३ उत्तरासंगः प्रावरणम् ४ । ५ । ६ । ७ अरिष्टनेमिशब्दइकारांतोऽप्यत्रमन्नंतोऽपिज्ञेयः ८ । ९ । १० । ११ । १२ ताक्ष्र्यः तृक्षस्यकश्यपस्यापत्यं १३ स्यादयमित्यंगुल्यानिर्दिशति १४ । १५

१६ । १७ हेतुयोगःमुक्तिसंबंधः समासःसंक्षेपस्ताभ्यामितिपंचम्यर्थेतसिः । सत्यमेवाभिजानीमइत्यादिना सत्यादीनिमृत्युजयसाधनान्युच्यंते १८ यदिति । ब्राह्मणानदाशून्याःस्तुतिपराश्चस्मइत्यर्थः १९ भृत्यान्भार्यादीन् अत्यशनेनअशनादधिकेनदानमानादिना २० पुण्यदेशःगंगातीरादिःतेजस्विनांयोगसिद्धानांदेशःसमीप्यंतत्संगादिरर्थः २१ एतद्वैइति । यौष्माकीणंहत्यादोषमपिसंलापमात्राद्वयंहंतुंसमर्थाःस्मइत्यर्थः २२ । २३ ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ ॥ मृत्युजयहेतुःपूर्वोक्तःसत्यादिर्धर्मोवनस्थानामेवयुज्यते नतुगृहस्थानां तेषांदुष्प्रतिग्रहब्रह्मविद्वेषादिनादोषप्रसक्त्या तादृशधर्मसंभवादित्याशयवानध्यायमारभतेभूयइति १ सोऽत्रिरर्थंभूयोनानुरुध्यत्अत्यंतमर्थार्थीनबभूव कुतः धर्मव्यक्तिर्धर्मस्यफलद्वाराऽभिव्यक्तिः फलव्य

मृतोह्ययमुपानीतःकथंजीवितमाप्तवान् ॥ किमेतत्तपसोवीर्यंयेनायंजीवितःपुनः १६ श्रोतुमिच्छामहेविप्रयदिश्रोतव्यमित्युत ॥ सतानुवाचनास्माकंमृत्युःप्रभवतेनृपाः १७ कारणंवःप्रवक्ष्यामिहेतुयोगसमासतः ॥ सत्यमेवाभिजानीमोनानृतेकुर्महेमनः ॥ स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयंननः १८ यद्ब्राह्मणानांकुशलंतदेषांकथयामहे ॥ नैषांदुश्चरितंब्रूमस्तस्मान्मृत्युभयंननः १९ अतिथीनन्नपानेनभृत्यानत्यशनेनच ॥ संभोज्यशेषमश्नीमस्तस्मान्मृत्युभयंननः २० शांतादांताःक्षमाशीलास्तीर्थदानपरायणाः ॥ पुण्यदेशनिवासाच्चतस्मान्मृत्युभयंननः ॥ तेजस्विदेशवासाच्चतस्मान्मृत्युभयंननः २१ एतद्वैलेशमात्रंवःसमाख्यातंविमत्सराः ॥ गच्छध्वंसहिताःसर्वेनपापाद्भयमस्तिवः २२ एवमस्त्वितितेसर्वेप्रतिपूज्यमहामुनिम् ॥ स्वदेशमगमन्हृष्टाराजानोभरतर्षभ २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिब्राह्मणमाहात्म्यकथनेचतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ ॥ मार्कंडेयउवाच ॥ ॥ भूयएवमहाभाग्यंब्राह्मणानांनिबोधमे ॥ वैन्योनामेहराजर्षिरश्वमेधायदीक्षितः १ तमत्रिर्गंतुमारेभेवित्तार्थमितिनःश्रुतम् ॥ भूयोर्थंनानुरुध्यत्सधर्मव्यक्तिनिदर्शनात् २ सविचिंत्यमहातेजावनमेवान्वरोचयत् ॥ धर्मपत्नींसमाहूयपुत्रांश्चेदमुवाचह ३ प्राप्स्यामःफलमत्यंतंबहुलंनिरुपद्रवम् ॥ अरण्यगमनंक्षिप्रंरोचतांवोगुणाधिकम् ४ तंभार्याप्रत्युवाचाथधर्ममेवानुतन्वती ॥ वैन्यंगत्वामहात्मानमर्थयस्वधनंबहु ५ सतेदास्यतिराजर्षिर्यजमानोऽर्थितोधनम् ॥ ततआदायविप्रर्षेप्रतिगृह्यधनंबहु ६ भृत्यान्सुतान्संविभज्यततोव्रजयथेप्सितम् ॥ एषवैपरमोधर्मोधर्मविद्भिरुदाहृतः ७ ॥ ॥ अत्रिरुवाच ॥ ॥ कथितोसौमहाभागगौतमेनमहात्मना ॥ वैन्योधर्मार्थसंयुक्तःसत्यव्रतसमन्वितः ८ किंत्वस्तितत्रद्वेष्टारोविवसंतिहिमेद्विजाः ॥ यथामेगौतमःप्राहततोनव्यवसाम्यहम् ९ तत्रस्मवाचंकल्याणींधर्मकामार्थसंहिताम् ॥ मयोक्तामन्यथाब्रूयुस्ततस्तेवैनिरर्थिकाम् १०

क्त्याहिधर्मोनश्यत्यतस्तद्रक्षणार्थंनैच्छद्दित्यर्थः २ वनंगंतुमितिशेषः ३ निरुपद्रवमक्षयंमोक्षाख्यम् ४ धर्मंयज्ञादिकमनुतन्वतीविस्तारयंती हेतौशतृप्रत्ययः धर्मार्थेधनमेवार्जस्वेत्युवाचेत्यर्थः ५ । ६ भृत्यानि सतिथिदेवतादीनां सुतानितिभार्यादीनांचोपलक्षणं धर्मविद्भिर्मन्वादिभिः । ‘ अनधीत्यद्विजोवेदाननुत्पाद्यसुतानपि । अनिष्ट्वाविधिवद्यज्ञैर्मोक्षमिच्छन्व्रजत्यधः ’ इतिवदद्भिः ७ ‘ दशसूनासहस्राणिनित्यंवहतिसौनिकः । तेनतुल्यःस्मृतोराजाघोरस्तस्यप्रतिग्रहः ’ इतिमनुवाक्यादेवराजप्रतिग्रहेदोषंजानन्नत्रिस्तत्रविघ्नमुपन्यस्यतिकथितइत्यादिना ८ व्यवसामिउद्यमंकरोमि ९ निरर्थिकामपित्राचंवदतांपराजयोऽपि पापावहइतिभावः तथाचस्मृतिः । गुरुंत्वंकृत्यहुंकृत्यविप्रंनिर्जित्यवादतः । अरण्येनिर्जलेदेशेभवतिब्रह्मराक्षसः ’ इति १०

एवंजानन्नपिस्नेहदोषात्तत्कर्तुंप्रतिजानीतेगमिष्यामीति ११ । १२ पूजयानइतितङ् कर्तृगामित्वात्स्तुतिफलस्ययुक्तः धन्योधनार्हः ईशईशितानियंता प्रथमःहिरण्यगर्भइवअग्रजः नृपःमनुष्याणांरक्षकः १३ । १४ अत्रपरलोकमेवबहुमन्वानोगौतमआह मैवमिति १५ तत्रेंद्रइवात्रराजैवमहेंद्रइतिवित्तार्थीअत्रिःपरपक्षंदूषयति अथेति १६ । १७ । १८ दर्शनेदृष्टिपथे १९ । २० । २१ । २२ नौआवयोः २३ । २४ ब्राह्मेणबलेनराज्ञोबलंनतुस्वकीयमितिसमाधानग्रंथार्थस्तेनगौतमोक्तानिंदाऽपिव्यर्था नाप्यत्रिमोक्तास्तुतिरपिनिर्मूलेतिज्ञेयं यद्यपिलोभमूलकत्वंस्तुतिपक्षेस्पष्टमप्रामाण्यकारणंतथाऽप्यविद्यमानै

गमिष्यामिमहाप्राज्ञेरोचतेमेवचस्तव ॥ गाश्चमेदास्यतेवैन्यःप्रभूतंचार्थसंचयम् ११ एवमुक्त्वाजगामाशुवैन्ययज्ञंमहातपाः ॥ गत्वाचयज्ञायतनमत्रिस्तुष्टावतं नृपम् १२ वाक्यैर्मंगलसंयुक्तैःपूजयानोऽब्रवीद्वचः ॥ अत्रिरुवाच ॥ राजन्धन्यस्त्वमीशश्चभुवित्वंप्रथमोनृपः १३ स्तुवंतित्वांमुनिगणास्त्वदन्योनास्तिधर्मवित् ॥ तमब्रवीदृषिःक्रुद्धोवचनंवैमहातपाः १४ ॥ गौतमउवाच ॥ मैवमत्रेपुनर्ब्रूयानतेप्रज्ञासमाहिता ॥ अत्रनःप्रथमंस्थातामहेंद्रोवैप्रजापतिः १५ अथात्रिरपिराजेंद्रगौतमं प्रत्यभाषत ॥ अयमेवविधाताहियथैवेंद्रःप्रजापतिः ॥ त्वमेवमुह्यसेमोहान्नप्रज्ञानंतवास्तिह १६ ॥ गौतमउवाच ॥ जानामिनाहंमुह्यामित्वमेवात्रविमुह्यसे ॥ स्तौषित्वंदर्शनप्रेप्सूराजानंजनसंसदि १७ नवेत्थपरमंधर्मंनचावैषिप्रयोजनम् ॥ बालस्त्वमसिमूढश्चवृद्धःकेनापिहेतुना १८ विवदंतौतथातौतुमुनीनांदर्शने स्थितौ ॥ येतस्ययज्ञेसंवृत्तास्तेऽपृच्छंतकथंत्विमौ १९ प्रवेशःकेनदत्तोऽयमुभयोर्वैन्यसंसदि ॥ उच्चैःसमभिभाषंतौकेनकार्येणधिष्ठितौ २० ततःपरमधर्मात्माका श्यपःसर्वधर्मवित् ॥ विवादिनावनुप्राप्तौतावुभौप्रत्यवेदयत् २१ अथाब्रवीत्सदस्यांस्तुगौतमोमुनिसत्तमान् ॥ आवयोर्व्याहृतंप्रश्नंशृणुतद्विजसत्तमाः २२ वैन्यं विधातेत्याहात्रिरत्रनौसंशयोमहान् ॥ श्रुत्वैवतुमहात्मानोमुनयोऽभ्यद्रवन्द्रुतम् २३ सनत्कुमारंधर्मज्ञंसंशयच्छेदनायवै ॥ सचतेषांवचःश्रुत्वायथातत्त्वंमहातपाः ॥ प्रत्युवाचाथतानेवंधर्मार्थसहितंवचः २४ ॥ सनत्कुमारउवाच ॥ ब्रह्मक्षत्रेणसहितंक्षत्रंचब्रह्मणासह ॥ संयुक्तौदहतःशत्रून्वनानीवाग्निमारुतौ २५ राजावैप्रथितो धर्मःप्रजानांपतिरेवच ॥ सएवशक्रःशुक्रश्चसधाताचबृहस्पतिः २६ प्रजापतिर्विराट्सम्राट्क्षत्रियोभूपतिर्नृपः ॥ यएभिःस्तूयतेशब्दैःकस्तंनार्चितुमर्हति २७ पुरायोनिर्युधाजिच्चअभियामुदितोभवः ॥ स्वर्णेतासहजिब्दभ्रुरितिराजाऽभिधीयते २८ सत्ययोनिःपुराविद्भिसत्यधर्मप्रवर्तकः ॥ अधर्मादृषयोभीताबलंक्षत्रेसमा दधन् २९ आदित्योदिविदेवेषुतमोनुदतितेजसा ॥ तथैवनृपतिर्भूमावधर्मान्नुदतेभृशम् ३०

रपिविशेषणैर्धनार्थिनाराजास्तोतव्यइतिसनत्कुमाराशयः २५ प्रथितःप्रथांगतः । धर्मोधर्मस्थापकः । शक्रोरक्षिता । शुक्रोनीतिवित् । धाताअतएवजनकः । बृहस्पतिर्हितोपदेष्टा २६ । २७ पुरायो निर्धर्मप्रवर्तकत्वेनप्रथमंकारणम् । युधाजित्संग्रामेजयकर्तृत्वेनोपद्रवनाशकः । अभियाःअभितोयातियाभिकवद्रक्षणार्थमित्यभियाः मुदितः भवःईश्वरः । स्वर्णेतास्वर्गंप्रतिगमयिता । सहजित्सद्योजयशीलः । बभ्रुर्विष्णुः । 'बभ्रुर्नानकुलेविष्णौविपुलेपिंगलेत्रिषु' इतिबलशर्मा २८ अधर्मादिति । सर्वंब्राह्मंबलंक्षत्रेऽस्तीत्यर्थः २९ । ३०

३१ । ३२ । ३३ । ३४ । ३५ । ३६ सत्यादिधर्मफलत्वेनएत्रसिद्ध्यतीत्याख्यायिकावसानमुखेनोपसंहरति प्रदायचेति ३७ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे पंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ ॥ वनेसत्यादिधर्मवतायत्कर्तव्यंयत्प्राप्यंयच्चज्ञेयंतदाहाध्यायेन अत्रैवचसरस्वत्येत्यादिना । सरस्वतीयज्ञभोक्त्रीयज्ञफलदात्रीचदेवता अग्निहोत्रादहमभ्यागताऽस्मीतिवाक्यशेषात् १ कथंकुर्याच्छ्रेयइत्यावर्तते २ लोकान्कामान् विरजाआसक्तिहीनः चरेयमुपलभेयं । तेषांसर्वेषुलोकेषुकामचारोभवतीतिश्रुतिप्रसिद्धसर्वकामभाक्त्वरूपंफलंकेनोपायेनप्राप्नुयादित्यर्थः ३ । ४ ब्रह्मसगुणं

ततोराज्ञःप्रधानत्वंशास्त्रप्रामाण्यदर्शनात् ॥ उत्तरःसिद्ध्यतेपक्षोयेनराजेतिभाषितम् ३१ ॥ मार्कंडेयउवाच ॥ ततःसराजासंहृष्टःसिद्धेपक्षेमहामनाः ॥ तमत्रिमब्रवीत्प्रीतःपूर्वंयेनाभिसंस्तुतः ३२ यस्मात्पूर्वंमनुष्येषुज्यायांसंमामिहाब्रवीः ॥ सर्वदेवैश्वविप्रर्षेसंमितंश्रेष्ठमेवच ३३ तस्मात्तेऽहंप्रदास्यामिविविधंवसुभूरिच ॥ दासीसहस्रंश्यामानांसुवस्त्राणामलंकृतम् ३४ दशकोटिर्हिरण्यस्यरुक्मभारांस्तथादश ॥ एतद्ददामिविप्रर्षेसर्वज्ञस्त्वंमतोहिमे ३५ तदत्रिर्न्यायतःसर्वंप्रतिगृह्याभिसत्कृतः ॥ प्रत्युज्जगामतेजस्वीगृहानेवमहातपाः ३६ प्रदायचधनंप्रीतःपुत्रेभ्यःप्रयतात्मवान् ॥ तपःसमभिसंधायवनमेवान्वपद्यत ३७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिब्राह्मणमाहात्म्येपंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ ॥ ॥ ॥ मार्कंडेयउवाच ॥ अत्रैवचसरस्वत्यागीतंपरपुरंजय ॥ पृष्टयामुनिनावीरशृणुतार्क्ष्येणधीमता १ ॥ तार्क्ष्यउवाच ॥ किंनुश्रेयःपुरुषस्येहभद्रेकथंकुर्वन्नच्यवतेस्वधर्मात् ॥ आचक्ष्वमेचारुसर्वांगिकुर्यात्त्वयाशिष्टोनच्यवेयंस्वधर्मात् २ कथंवाग्निंजुहुयांपूजयेवाकस्मिन्कालेकेनधर्मोननश्येत् ॥ एतत्सर्वंसुभगेप्रब्रवीहियथालोकान्विरजाःसंचरेयम् ३ ॥ मार्कंडेयउवाच ॥ ॥ एवंपृष्टाप्रीतियुक्तेनतेनशुश्रूषुमीक्ष्योत्तमबुद्धियुक्तम् ॥ तार्क्ष्यंविप्रंधर्मयुक्तंहितंचसरस्वतीवाक्यमिदंबभाषे ४ ॥ सरस्वत्युवाच ॥ योब्रह्मजानातियथाप्रदेशंस्वाध्यायनित्यःशुचिरप्रमत्तः ॥ सवैपारंदेवलोकस्यगंतासहामरैःप्राप्नुयात्प्रीतियोगम् ५ तत्रस्मरम्याविपुलाविशोकाःसुपुष्पिताःपुष्करिण्यःसुपुण्याः ॥ अकर्दमामीनवत्यःसुतीर्थाहिरण्मयैरावृताःपुंडरीकैः ६ तासांतीरेष्वासतेपुण्यभाजोनहीयमानाःपृथगप्सरोभिः ॥ सुपुण्यगंधाभिरलंकृताभिर्हिरण्यवर्णाभिरतीवहृष्टाः ७ परंलोकंगोप्रदास्त्वाप्नुवंतिदत्वाऽनड्वाहंसूर्यलोकंव्रजंति ॥ वासोदत्वाचांद्रमसंतुलोकंदत्वाहिरण्यममरत्वमेति ८ धेनुंदत्वासुप्रभांसुप्रदोहांकल्याणवत्सामपलायिनींच ॥ यावंतिरोमाणिभवंतितस्यास्तावद्वर्षाण्यासतेदेवलोके ९ अनड्वाहंसुव्रतंयोददातिहलस्यवोढारमनंतवीर्यम् ॥ धुरंधरंबलवंतंयुवानंप्राप्नोतिलोकान्दशधेनुदस्य १० ददातियोवैकपिलांसचैलांकांस्योपदोहांद्रविणैरुत्तरीयैः ॥ तैस्तैर्गुणैःकामदुहाऽथभूत्वानरंप्रदातारमुपैतिसागौः ११

हार्दाकाशाख्यं यथाप्रदेशं देशभेदमनतिक्रांतमर्चिरादिमार्गेणलभ्यमित्यर्थः । निर्गुणविदोनतस्यप्राणाउत्क्रामंतीतिगतिनिषेधात् । स्वाध्यायःप्रणवजपः देवलोकस्यपारं कार्यब्रह्मलोकं ५ एनमेवस्तौतिद्वाभ्यां तत्रेति ६ । ७ देवलोकस्य पारस्तावद्दूरेऽस्तु मएवतुकथंप्राप्यतइत्यतआह परमित्यादिना । अनडुहमनड्वाहं शकटवहनसमर्थंबलीवर्दं ८ धेनुंदोग्ध्रींगां ९ । १० उत्तरीयैःपश्चाद्भवैर्दक्षिणादिभिर्द्रव्यैःसहितां ११

१२ तिलधेनुर्दानकांडेप्रसिद्धा १३ दानवैःकामक्रोधादिभिःसंनिरुद्धेऽव्यात्ते तीव्रांधकारेअंधेतमसि देहाभिनिवेशाख्ये तारयतेयोगविघ्नान्नाशयति १४ ब्राह्मदेयां ब्राह्मेणालंकृत्यकन्यामुदकपूर्वांदद्यादे पत्राह्मोविवाहइति गृह्योक्तेनविधिनादेयां १५ यःसप्तेति । श्रौतंधर्ममनुतिष्ठन्नात्मनासहपूर्वानपरांश्चतारयतीत्यर्थः १६ अग्निहोत्रंजुह्वानोलोभजालंभिनत्त्यतःसंमोहंछित्वेत्यादिना मैत्रायणीयोपनिषद्य ग्निहोत्रस्यज्ञानांतरंगत्वमुक्तमतस्तदाश्रितमेवविशेषंव्रतादिकंपृच्छति किमिति । पुराणंवेदोदितम् १७ अनिर्णिक्तपादोऽप्रक्षालितपाणिपादोऽनाचांतश्च अब्रह्मवित्वेदंपाठतोऽर्थतश्चाविद्वान् अविपश्चित् वेदादधिगतस्यार्थस्यानुभवहीनः बुभुत्सवःपरचित्तंज्ञातुमिच्छवः यस्मात्शुचिकामाजुषंतिसेवंते १८ ऋत्विगप्येवंविधएवकर्तव्यइत्याह नाश्रोत्रियमिति । देवहव्येदेवानांहव्यदानादौ मोघंनिष्फलं पुरेतिशी लगोत्रादिज्ञानात्प्राक् अपूर्वमज्ञातकुलशीलं आह्वेदइतिशेषः १९ कृशाःधनादिप्रभवेनदर्पेण हीनाः ऋत्विजोयजमानावा गवांलोकंकार्यब्रह्मलोकसमीपस्थं परमंचदेवंब्रह्माणं ततःक्रमेण सत्यंचपरमं

यावंतिरोमाणिभवंतिधेन्वास्तावत्फलंभवतिगोप्रदाने ॥ पुत्रांश्चपौत्रांश्चकुलंचसर्वमासप्तमंतारयतेपरत्र १२ सदक्षिणांकांचनचारुशृंगींकांस्योपदोहांद्रविणैरु त्तरीयैः ॥ धेनुंतिलानांददतोद्विजायलोकावसूनांसुलभाभवंति १३ स्वकर्मभिर्दानवसंनिरुद्धेतीव्रांधकारेनरकेसंपतंतम् ॥ महार्णवेनौरिववातयुक्तादानंगवां तारयतेपरत्र १४ योब्राह्मदेयांतुददातिकन्यांभूमिप्रदानंचकरोतिविप्रे ॥ ददातिदानंविधिनाचयश्चसलोकमाप्नोतिपुरंदरस्य १५ यःसप्तवर्षाणिजुहोतितार्क्ष्य हव्यंत्वग्नौनियतःसाधुशीलः ॥ सप्तावरान्सप्तपूर्वान्पुनातिपितामहानात्मनाकर्मभिःस्वैः १६ ॥ तार्क्ष्यउवाच ॥ ॥ किमग्निहोत्रस्यव्रतंपुराणमाचक्ष्वमेपृच्छत श्चानुरूपे ॥ त्वयाऽनुशिष्टोऽहमिहाद्यविद्यांयदग्निहोत्रस्यव्रतंपुराणम् १७ ॥ सरस्वत्युवाच ॥ नवाऽशुचिर्नाप्यनिर्णिक्तपाणिर्नाब्रह्मविज्जुहुयान्नाविपश्चित् ॥ बुभुत्सवःशुचिकामाहिदेवानाश्रद्दधानाद्धिहविर्जुषंति १८ नाश्रोत्रियंदेवहव्येनियुंज्यान्मोघंपुरासिंचतितादृशोहि ॥ अपूर्वमश्रोत्रियमाहतार्क्ष्यनवैतादृक्जुहुयाद ग्निहोत्रम् १९ कृशाश्चयेजुह्वतिश्रद्दधानाःसत्यव्रताहुतशिष्टाशिनश्च ॥ गवांलोकंप्राप्यतेपुण्यगंधंपश्यंतिदेवंपरमंचापिसत्यम् २० ॥ तार्क्ष्यउवाच ॥ क्षेत्रज्ञभूतां परलोकभावेकर्मोदयेबुद्धिमतिप्रविष्टाम् ॥ प्रज्ञांचदेवींसुभगेविमृश्यपृच्छामित्वांकाह्यसिचारुरूपे २१ ॥ सरस्वत्युवाच ॥ ॥ अग्निहोत्रादहमभ्यागताऽस्मिविप्र र्षभाणांसंशयच्छेदनाय ॥ त्वत्संयोगादहमेतमब्रुवंभावेस्थितातथ्यमर्थंयथावत् २२ ॥ तार्क्ष्यउवाच ॥ ॥ नहित्वयासदृशीकाचिदस्तिविभ्राजसेह्यतिमात्रं यथाश्रीः ॥ रूपंचतेदिव्यमनंतकांतिप्रज्ञांचदेवींसुभगेबिभर्षि २३

ब्रह्माख्यंपश्यंति एतेनसर्वगुणयुक्तस्याग्निहोत्रस्य परंपरयाकैवल्यजनकत्वमुक्तम् २० क्षेत्रज्ञभूतांपरमात्मरूपांत्वांप्रज्ञांपृच्छामि त्वंचकाऽसीतिपृच्छामि प्रज्ञांविशिनष्टि परोलोकआत्मातस्यभावेस्वरूपे विषये कर्मोदये कर्मफलेब्रह्मलोकांतेचविषये बुद्धिमतिउत्कृष्टतरांबुद्धिंप्रविष्टां कर्मब्रह्मतत्त्वयोर्निविष्टामित्यर्थः किंकृत्वात्वांदेवींउभयतत्त्वंद्योतयंतीं विमृश्यज्ञात्वा २१ अग्निहोत्रात्सत्कर्मणःसकाशादहंपरापरवि द्यारूपा सरस्वत्यभ्यागताआविर्भूताऽस्मि त्वत्संयोगात्त्वत्संनिधिंप्राप्यएतमर्थंकर्मणांपारंपर्येणकैवल्यहेतुत्वंसगुणब्रह्मविद्यांचाब्रुवं यतोहंभावेस्थिता श्रद्धावानग्निहोत्रादिनादेवताप्रसादंप्राप्य कर्मोपास्तिज्ञान फलानिविंदतीत्यर्थः २२ नहित्वयेतिश्लोकत्रयतात्पर्यंसोपासनेनकर्मणाविद्यासमुल्लसतीति २३

यज्ञेषुश्रेष्ठानिकर्मांगावबद्धोपासनानि उपासनास्वरूपंच । ‘ अहंक्रतुरहंयज्ञःस्वधाऽहमहमौषधम् ॥ मंत्रोऽहमहमेवाज्यमहमग्निरहंहुतम् ’ इतिभगवदुपदिष्टंसर्वेषुयज्ञांगेषुब्रह्मदृष्टिकरणम् २४ वानस्पत्यंसमिज्जुह्वादि । आयसंसौवर्णादि । पार्थिवंव्रीह्यादि । दिव्येनदिवेस्वर्गायहितेनरूपेण । प्रज्ञया अहंक्रतुरित्यादिनाउक्तविधप्रज्ञात्मकेन तवैवप्रत्यगात्मनःसिद्धिःप्राप्तिर्मुक्तिर्वा नत्वनात्मभूतस्थानांतरसिद्धिरिति विद्धि २५ इदंतत्रैवसिद्धिरित्यनेनोपक्षिप्तंप्रत्यग्रूपंव्यायच्छंतेनिगृह्णंतिइंद्रियादीनीतिशेषः संप्रतीताःसम्यग्विश्वासयुक्ताः २६ वेदविदएवप्रपन्नानत्ववैदिकाः । ‘ नावेदविन्मनुतेतंबृहंतम् ’ इतिश्रुतेः परंब्रह्म परेभ्योविराट्सूत्रांतर्यामिभ्यःसोपाधिकेभ्यःपरं निरुपाधिकत्वाच्छ्रेष्ठं प्रथितंसच्चिदानंदरूपेणसर्वत्रप्रथांगतं यथोक्तं । ‘ अस्तिभातिप्रियंरूपंनामचेत्यर्थपंचकम् । आद्यंत्रयंब्रह्मरूपंजगद्रूपंततो द्वयम् ’ इति । पुराणं पुरापिनवं तेनसोपाधिकानामुत्पत्तिःसूचिता । व्रतमहिंसादि पुण्यंजपादि योगश्चित्तवृत्तिनिरोधस्तैः तपःस्वधर्माचरणमेवधनंयेषांतेप्राप्नुवंतीतिशेषः २७ अस्यप्रत्यग्वस्तुनोऽद्वयत्वसिद्ध्यर्थमितएवांतर्याम्यादिनासमुत्थानमाह तस्येति । तस्यचिदात्मनोमध्ये वेतसोवंजुलतरुरिवसबीजांकुरोब्रह्मांडवृक्षश्चितापरिच्छेद्यत्वात्तन्मध्यस्थः पुण्योरमणीयोगंधइवगंधादिर्विषयोधर्मज्ञानवैराग्यैश्वर्यवतियस्मिन्नस्तीतिपुण्यगंधः सहस्रमनंतंशाखाइवभोगस्थानानियस्मिन् विपुलोऽपरिच्छिन्नोविभाति तस्यमूलादविद्यारूपात्सरितइवसंततप्रवाहवत्योभोगवासनाःप्रस्रवंत्युत्तिष्ठंति । मधुव

॥ सरस्वत्युवाच ॥ श्रेष्ठानियानिद्विपदांवरिष्ठयज्ञेषुविद्वन्नुपपादयंति ॥ तैरेवचाहंसंप्रवृद्धाभवामिचाप्यायितारूपवतीचविप्र २४ यत्रापिद्रव्यमुपयुज्यतेहवानस्पत्यमायसंपार्थिवंवा ॥ दिव्येनरूपेणचप्रज्ञयाचतवैवसिद्धिरितिविद्धिविद्वन् २५ ॥ तार्क्ष्यउवाच ॥ इदंश्रेयःपरमंमन्यमानाव्यायच्छंतेमुनयःसंप्रतीताः ॥ आचक्ष्वमेतंपरमंविशोकंमोक्षंपरंयंप्रविशंतिधीराः ॥ सांख्यायोगाःपरमंयंविदंतिपरंपुराणंतमहंनवेद्मि २६ ॥ सरस्वत्युवाच ॥ तंवैपरंवेदविदःप्रपन्नाःपरंपरेभ्यःप्रथितंपुराणम् ॥ स्वाध्यायवंतोव्रतपुण्ययोगैस्तपोधनावीतशोकाविमुक्ताः २७ तस्याथमध्येवेतसःपुण्यगंधःसहस्रशाखोविपुलोविभाति ॥ तस्यमूलात्सरितःप्रस्रवंतिमधूदकप्रस्रवणाःसुपुण्याः २८ शाखांशाखांमहानद्यःसंयांतिसिकताशयाः ॥ धानापूपामांसशाकाःसदापायसकर्दमाः २९ यस्मिन्नग्निमुखादेवाःसेंद्राःसहमरुद्गणाः ॥ ईजिरेक्रतुभिःश्रेष्ठैस्तत्पदंपरमंमम ३० ॥ इतिश्रीम० आ० प० मार्कंडेयसमास्यापर्वणिसरस्वतीतार्क्ष्यसंवादेषडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

न्मृष्टमुदकवदाप्यायनकरंभोगजंसुखंप्रस्रवंतितामधूदकप्रस्रवणाः भोगवासनाह्युत्तरकालीनंभोगसुखंप्रवृत्तिजननादिद्वाराप्रस्रवतीतिप्रसिद्धम् २८ शाखामिति । महानद्योवासनाः पुराशाखांशाखांतत्तद्भोगस्थानं संयांति स्वप्रवाहपतितंपुरुषंनयंतीत्यर्थः । पुण्यवासनया पुण्यमाचरन्स्वर्गंगच्छत्येवमन्यत्रापि । सिकताइवपरस्परमसंश्लिष्टाःपुत्रपश्वादयस्तासुशेरते ताःसिकताशयाः पुत्रादिविषयाइत्यर्थः । धानाभृष्टयवाः अपूपाःसच्छिद्रंभक्ष्यं शेषंप्रसिद्धं । धानादिकं मधूदकस्थानीयस्यसुखस्यविशेषणं विषयसुखंहिधानावन्नस्वसजातीयंप्रसूते अपूपवदनेकच्छिद्रयुक्तं मांसवद्धिंसालभ्यं नानुपहत्यभूतानिभोगःसंभवतीतिप्रसिद्धेः । शाकवदल्पसारं पायसवन्मुखमधुरं पाकेगुरुतरंच कर्दमवच्चित्तपटस्यमलिनीकरणंचेति परचैतन्यभूमावनाद्यविद्यामूलादुत्थितोऽयंसंसारवृक्षोऽतिविरसफलोऽविद्ययाविद्यानाशात्समूलमुन्मूलनीयइत्यर्थः तथाचचिदद्वैतमव्याहतम् २९ यस्मिन्यत्प्राप्तिनिमित्तं श्रेष्ठैःक्रतुभिर्योगयज्ञैरग्न्यादयोयद्गच्छंति तन्ममविद्यारूपायाःसरस्वत्याःपदंपदनीयंप्रापणीयंस्थानं परमंसर्वोत्कृष्टं ज्ञातृज्ञानज्ञेयभानशून्यं ब्रह्माद्वैतम् ३० ॥ ॥ इत्यारण्यकेपर्वणि नैलकंठीये भारतभावदीपे षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सृज्यतेसंसृज्यते यद्वा प्राणेभ्योदेवादेवेभ्योलोका इतिश्रूयमाणदृष्टिसृष्ट्यभिप्रायेण चक्षुरादिभिःसूर्यादिसृष्टिद्वारालोकःसृज्यतइतियथाश्रुतमेव व्यक्तंघटादि अव्यक्तंइंद्रियादि लिंगंरूपादिप्रकाशस्तेनग्राह्य अनुमेयं १२ यथास्वंस्वविषयानतिक्रमेणइमानिइंद्रियाणिधारयन्निगृह्णन्तप्यतइव आत्मानमविषयमप्यालोचयतइव मनआदीनांनिग्रहएवआत्मालोचनमित्यर्थः १३ आत्मनःसोपाधिकंरूपमपेक्ष्याह लोके इति । विततंकुंडलेकनकमिवउपादानत्वेनव्यापकं निरुपाधिकंरूपमपेक्ष्याह लोकमिति । लोकंचसैंधवखिल्यवदात्मनिचिदेकरसेविलीनंपश्यति तथाचश्रुती ब्रह्मविदांद्वेअवस्थेनिरूपयतः 'यएवंवेदाहंब्रह्मास्मीति सइदंसर्वंभवति । यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदिति' । उक्तंचाभियुक्तैः । 'सोपाधिर्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते ॥ सोपाधिकःस्यात्सर्वात्मानिरुपाख्योऽनुपाधिकः' इति । परापरज्ञः परंनिरुपाधिअपरंसोपाधि सक्तःप्रारब्धकर्मणाबद्धःसन्यावद्देहपातमेवसमाधौसोपाधिकावस्थामनुभवति नतुविदेहकैवल्येऽपीत्यर्थः १४ विद्याफलमाहपश्यतइति । 'ब्रह्मवेदब्रह्मैवभवति' इतिश्रुतेर्ब्रह्मभूतस्यउपाधित्यागादित्यर्थः अशुभेनपुण्यपापयोःफलेनसंप्रज्ञातसमाधाविवैकात्म्यधीदार्ढ्याज्जाग्रत्स्वप्नयोरपितदेवपश्यन्कर्मणानलिप्यतइत्यर्थः १५ ज्ञानमूलेति । ज्ञानंविद्यातस्याःमूलंमाया ब्रह्माकारांतःकरणवृत्तेरपिमायाकार्यत्वात् मायात्मकंमिथ्यारूपंक्लेशंअविद्यादिरूपं अतिवृत्तस्यअतिक्रम्यगतस्य योगिनःलोकसंबंधिन्याःवृत्तेर्वर्तनजीवनात्मिकायाःप्रकाशोयेनतादृशेनज्ञानरूपेणज्ञानमार्गेण पौरुषंपरमपुरुषार्थ

इंद्रियैःसृज्यतेयद्यत्तत्तद्व्यक्तमितिस्मृतम् ॥ तदव्यक्तमितिज्ञेयंलिंगग्राह्यमतींद्रियम् १२ यथास्वंग्राहकान्येषांशब्दादीनामिमानितु ॥ इंद्रियाणियदादेहीधारयन्निवतप्यते १३ लोकेविततमात्मानंलोकंचात्मनिपश्यति ॥ परापरज्ञःसक्तःसन्सतुभूतानिपश्यति १४ पश्यतःसर्वभूतानिसर्वावस्थासुसर्वदा ॥ ब्रह्मभूतस्यसंयोगोनाशुभेनोपपद्यते १५ ज्ञानमूलात्मकंक्लेशमतिवृत्तस्यपौरुषम् ॥ लोकवृत्तिप्रकाशेनज्ञानमार्गेणगम्यते १६ अनादिनिधनंजंतुमात्मयोनिंसदाव्ययम् ॥ अनौपम्यममूर्तंचभगवानाहबुद्धिमान् १७ तपोमूलमिदंसर्वंयन्मांविप्रानुपृच्छसि ॥ इंद्रियाण्येवसंयम्यतपोभवतिनान्यथा १८ इंद्रियाण्येवतत्सर्वंयत्स्वर्गनरकावुभौ ॥ निगृहीतविसृष्टानिस्वर्गायनरकायच १९ एषयोगविधिःकृत्स्नोयावदिंद्रियधारणम् ॥ एतन्मूलंहितपसःकृत्स्नस्यनरकस्यच २० इंद्रियाणांप्रसंगनदोषमार्च्छत्यसंशयम् ॥ सन्नियम्यतुतान्येवततःसिद्धिंसमाप्नुयात् २१ षण्णामात्मनिनित्यानामैश्वर्यंयोऽधिगच्छति ॥ नसपापैःकुतोऽनर्थैर्युज्यतेविजितेंद्रियः २२

रूपो मोक्षो गम्यतेप्रकाशते मायिक्येवाविद्यामायिक्यैवविद्ययानष्टाचेन्मुच्यतेइत्यर्थः यथोक्तंश्रीभागवते । 'विद्याविद्येममतनूविद्ध्युद्धवशरीरिणां ॥ मोक्षबंधकरीआद्येमाययामेविनिर्मिते'इति । ज्ञानपूर्वात्मकमितिपाठेऽपिसएवार्थः १६ मुक्तजीवस्यस्वरूपमाह अनादीति । आद्यविशेषणेनलोकायतसंमतंदेहस्यात्मत्वंनिरस्तं जंतुंपुत्तिकादिब्रह्मांतंजीवंआत्मयोनिं जीवस्यात्मयोनित्वंवदताजीवत्वहेतोरविद्यादेःपृथक्सत्तासांख्याद्यभिमतानिरस्ता अव्ययमितितार्किकाभिमतंसुखदुःखादिविकारवत्त्वंनिरस्तं सदेतिआगंतुकविकारास्पर्शित्वमुक्तं एतेनैवक्षणिकशून्यवादावपिनिरस्तौ अमूर्तमिति । अतएवात्मवादोदेहसंमितात्मवादश्चपरास्तः अनौपम्यंतर्कागम्यमित्यर्थः भगवानाह । स्वनिःश्वसितरूपेणवेदेन हेतुदृष्टांतवर्जितं 'नित्यंविभुंसर्वगतंसुसूक्ष्मंयद्भूतयोनिंपरिपश्यंतिधीराः' इत्यादिना । बुद्धिमान्बुद्धिःनियम्यत्वेनास्यास्तीतिसतथा १७ तपोध्यानम् १८ इंद्रियाणिनिगृहीतानिस्वर्गायविसृष्टानिनरकायेतियोजनयापूर्वार्धस्यैवव्याख्या १९ । २० एतन्मूलमित्येतद्व्याचष्टे इंद्रियाणामिति । दोषंरागद्वेषादिरूपं आर्च्छतिप्राप्नुवंति २१ षण्णांमनःषष्ठानामिंद्रियाणांनित्यानां आत्मनिकल्पितत्वेन रज्जुभुजंगवदाद्यंतशून्यानां ऐश्वर्यंनियंतृत्वं अनर्थैःप्रमातृत्वादिकर्तव्यभोक्तृत्वरूपैः २२

उक्तेऽर्थेप्रमाणसूचनार्थं 'आत्मानंरथिनंविद्धिशरीरंरथमेवच' इत्यादिकठवल्लीनामर्थंसंगृह्णाति रथइत्यादिना २३ आत्माबुद्धिः २४ इंद्रियाणामजयेशास्त्रजाऽपिप्रज्ञानश्यतीत्याह इंद्रियाणामिति २५ अनुविधीयतइतिकर्मकर्तरिलकारः यस्येंद्रियस्याधीनंमनोभवतितदेवप्रज्ञांनाशयतीत्यर्थः २६ षट्सुससंकल्पेषुशब्दादिषु फलागमेतज्जन्येसुखाद्युपलंभेविषये विप्रतिपद्यंतेरागिणः सुखमुपादेयमित्याहुर्वीत रागाहेयमित्यादिरूपाविप्रतिपत्तिः तत्रयस्तेषुअध्यवसितंवस्तुदृष्ट्यानिश्चितंयद्धेयत्वंतदेवाध्यातुंशीलंयस्यसः विषयदोषदर्शनेनवीतरागइत्यर्थः २७ ॥ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥ ॥ पूर्वाध्यायांतोक्तविप्रतिपत्तिकारणंगुणत्रयंसकार्यंवक्तुमारभते एवमिति । सूक्ष्मेब्रह्मणि सूक्ष्मंतत्प्राप्तिकारणंगुणत्रयविभागं तेनार्थाद्गुणेभ्योब्रह्मविवि

रथःशरीरंपुरुषस्यदृष्टमात्मानियंतेंद्रियाण्याहुरश्वान् ॥ तैरप्रमत्तःकुशलीसदश्वैर्दान्तैःसुखंयातिरथीवधीरः २३ षण्णामात्मनियुक्तानामिंद्रियाणांप्रमाथिनाम् ॥ योधीरोधारयेद्रश्मीन्सस्यात्परमसारथिः २४ इंद्रियाणांप्रसृष्टानांहयानामिववर्त्मसु ॥ धृतिंकुर्वीतसारथ्येधृत्यातानिजयेद्ध्रुवम् २५ इंद्रियाणांविचरतांयन्मनोऽनुविधीयते ॥ तदस्यहरतेबुद्धिंनावंवायुरिवांभसि २६ येषुविप्रतिपद्यंतेषट्सुमोहात्फलागमम् ॥ तेष्वध्यवसिताध्यायीविंदतेध्यानजंफलम् २७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिब्राह्मणव्याधसंवादेएकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥ ॥ ॥ ॥ मार्कंडेयउवाच ॥ एवंतु सूक्ष्मेकथितेधर्मेव्याधेनभारत ॥ ब्राह्मणःसपुनःसूक्ष्मंपप्रच्छसुसमाहितः १ ॥ ब्राह्मणउवाच ॥ सत्त्वस्यरजसश्चैवतमसश्चयथातथम् ॥ गुणांस्तत्त्वेनमेब्रूहियथावदिहपृच्छतः २ ॥ व्याधउवाच ॥ हंततेकथयिष्यामियन्मांत्वंपरिपृच्छसि ॥ एषांगुणान्पृथक्त्वेननिबोधगदतोमम ३ मोहात्मकंतमस्तेषांरजएषांप्रवर्तकम् ॥ प्रकाशबहुलत्वाच्चसत्त्वंज्यायइहोच्यते ४ अविद्याबहुलोमूढःस्वप्नशीलोविचेतनः ॥ दुर्हृषीकस्तमोध्यस्तःसक्रोधस्तामसोऽलसः ५ प्रवृत्तवाक्योमंत्रीचयोनराग्र्योऽनसूयकः ॥ विधित्समानोविप्रर्षेस्तब्धोमानीसराजसः ६ प्रकाशबहुलोधीरोनिर्विधित्सोऽनसूयकः ॥ अक्रोधनोनरोधीमान्दांतश्चैवससात्विकः ७ सात्त्विकस्त्वथसंबुद्धोलोकवृत्तेनक्लिश्यते ॥ यदाबुध्यतिबोद्धव्यंलोकवृत्तंजुगुप्सते ८ विरागस्यचरूपंतुपूर्वमेवप्रवर्तते ॥ मृदुर्भवत्यहंकारःप्रसीदत्यार्जवंचयत् ९ ततोऽस्यसर्वद्वंद्वानिप्रशाम्यंतिपरस्परम् ॥ नचास्यसंशयोनामकश्चिद्भवतिकश्चन १० शूद्रयोनौहिजातस्यसद्गुणानुपतिष्ठतः ॥ वैश्यत्वंलभतेब्रह्मन्क्षत्रियत्वंतथैवच ११ आर्जवेवर्तमानस्यब्राह्मण्यमभिजायते ॥ गुणास्तेकीर्तिताःसर्वेकिंभूयःश्रोतुमिच्छसि १२ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिब्राह्मणव्याधसंवादेद्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

क्तमित्युक्तंभवति १ । २ । ३ । ४ दुर्हृषीकः दुःस्थेंद्रियः ५ विवित्साविशेषतृष्णा धेट्पानेअस्यरूपं प्रवृत्तवाक्यःप्रवृत्तिवाक् अनसूयकःपरदोषादर्शी तत्रहेतुः विधित्समानइति । स्तंभोनमस्काराद्यकरणं मानस्तद्धेतुमहत्त्वाभिमानस्तदुभयवान् ६ । ७ लोकवृत्तेरजस्तमःकार्येयदायतःतज्जुगुप्सतेनिंदति ८ विरागस्यरागहीनस्यरूपंलक्षणंमृदुःस्तंभादिहीनः आर्जवमकौटिल्यं ९ द्वंद्वानिमानापमानादीनि १० जातस्येतिकर्मणिषष्ठी वैश्यत्वंकर्तृ सद्गुणवंतंवैश्यत्वादयःस्वयमायांतीतिगुणकृतएववर्णविभागोनजातिकृतइतिभावः ११ ब्राह्मण्यंब्रह्मवित्त्वं १२ ॥ इत्यारण्यकेपर्वणिनी०भा०द्वादशाधिकद्विशततमोऽध्यायः॥२१२॥

ज्ञानक्रियाशक्तिमनोर्धीप्राणयोरात्मान्यत्वं 'अग्निर्मूर्धादिवः ककुत्पतिःपृथिव्याअयम् । अपांरेतांसिजिन्वति' इतिमंत्रप्रकाशितंवक्तुमारभते पार्थिवमिति । पार्थिवंपृथिवीबाहुल्यातधातुंत्वगादिमयंदेहंआसाद्य प्राप्यप्रकाशनवृत्तिमोहाद्याश्रयोऽग्निर्विज्ञानाख्यस्तेजोधातुशरीरःशरीराभिमानीकथंभवेत् अवकाशविशेषेणनाडीमार्गभेदेनवर्तयतेशरीरंचेष्टयते १ । २ मूर्धनिसहस्रारेस्थितत्वात्श्रेष्ठत्वाद्वामूर्धानंचिदात्मानं अग्निर्विज्ञानात्माऽऽश्रितस्तदुपाधितांप्राप्तःसन् शरीरंपरिपालयन् चित्प्रतिबिंबंप्राप्यधीधातुःशरीरंचेतयतीत्यर्थः एतेनाग्निर्मूर्द्धेतिपदद्वयंव्याख्यातं । प्राणस्तुतयोरुभयोरप्युपाधिरित्याह प्राणइति । एतेनचिद्विज्ञानं द्वयंवायुशब्दितंतस्यककुदिवककुत्चालकतयाश्रेष्ठःप्राणइत्युक्तम् ३ अस्यककुत्त्वंव्याचष्टे भूतमिति । प्राणेचिद्विज्ञानाभ्यांयुक्तेसूत्रात्मरूपे ब्रह्मकार्यरूपंयोर्निविराडादेः ४ सःचिद्विज्ञानप्राणानांसंघातोजंतुःममर्ष्टिजीवः सर्वेषांभूतानांकार्यकारणरूपाणांआत्माचेतयिता सनातनःपुरुषःपरंब्रह्मचसएव निरस्तोपाधिःसन् सएवोपाधिपक्षपातीसन्महदाद्यात्माभवति विषयश्चशब्दादिःसएव । एतेनपतिःपृथिव्याअयमितिद्वितीयःपादोव्याख्यातः । अयंचिद्विज्ञानप्राणसंघातःपृथिव्याःक्षेत्रस्येतिश्रुतिपदयोरर्थः ५ एवमिति । सर्वत्रअन्तर्बहिश्चस्थितंसर्वंप्राणेनदेहलीदीपवन्मध्यस्थेनआंतरंविज्ञानंबाह्यंदेहेंद्रियादिकंचपाल्यतइत्यर्थः

॥ ब्राह्मणउवाच ॥ पार्थिवंधातुमासाद्यशारीरोऽग्निःकथंभवेत् ॥ अवकाशविशेषेणकथंवर्तयतेऽनिलः १ ॥ मार्कंडेयउवाच ॥ प्रश्नमेतंसमुद्दिष्टंब्राह्मणेनयुधिष्ठिर ॥ व्याधस्तुकथयामासब्राह्मणायमहात्मने २ ॥ व्याधउवाच ॥ मूर्धानमाश्रितोवह्निःशरीरंपरिपालयन् ॥ प्राणोमूर्धनिचाग्नौचवर्तमानोविचेष्टते ३ भूतंभव्यंभविष्यंचसर्वंप्राणेप्रतिष्ठितम् ॥ श्रेष्ठंतदेवभूतानांब्रह्मयोनिमुपास्महे ४ सजंतुःसर्वभूतात्मापुरुषःससनातनः ॥ महान्बुद्धिरहंकारोभूतानांविषयश्चसः ५ एवंत्विहससर्वत्रप्राणेनपरिपाल्यते ॥ पृष्ठतस्तुसमानेनस्वांस्वांगतिमुपाश्रितः ६ बस्तिमूलंगुदंचैवपावकंसमुपाश्रितः ॥ वहन्मूत्रंपुरीषंवाऽप्यपानःपरिवर्तते ७ प्रयत्नेकर्मणिबलेसएषत्रिषुवर्तते ॥ उदानमितितंप्राहुरध्यात्मविदुषोजनाः ८ संधौसंधौसंनिविष्टःसर्वेष्वपितथाऽनिलः ॥ शरीरेषुमनुष्याणांव्यानइत्युपदिश्यते ९ धातुष्वग्निस्तुविततःसतुवायुसमीरितः ॥ रसान्धातूंश्चदोषांश्चवर्तयन्परिधावति १० प्राणानांसंनिपातात्तुसन्निपातःप्रजायते ॥ ऊष्माचाग्निरितिज्ञेयोयोन्नंपचतिदेहिनाम् ११ समानोदानयोर्मध्ये प्राणापानौसमाहितौ ॥ समर्थितस्त्वधिष्ठानंसम्यक्पचतिपावकः १२

अपांरेतांसिजिन्वतीत्यंतपादंव्याचष्टे पृष्ठतइत्यादिना । 'अन्नमयंहिसोम्यमनआपोमयःप्राणस्तेजोमयीवाक्' इतिश्रुतेःसाक्षात्परंपरयावाप्राणमनइंद्रियाण्यपांरेतांसिजिन्वतितर्पयतिसंघातात्मेतिश्रुतिपदानामर्थः पृष्ठतःउपाध्यावेशाज्जीवत्वप्राप्त्यनंतरंसमानेनइत्थंभावेतृतीया स्वांस्वांपृथक्गम्यांगतिंआश्रितोभवति समानवायुत्वंप्राप्तःपावकंजाठरमाश्रितःसन् बस्तिमूलंमूत्राशयंगुदंपुरीषाश्रयंच जाठरस्थःसमानोऽशितपीतादिकंपाचयित्वाऽपानरूपीभूत्वास्वंस्वंस्थानंनयतीत्यर्थः । श्लोकद्वयं ६ । ७ कर्मगमनादि प्रयत्नस्तदनुकूलाचेष्टा बलंभारोद्यमनादौसामर्थ्यं विदुषःसकाशात्श्रुत्वेतिशेषः ८ । ९ धातुषुत्वगादिषुअग्निर्जाठरःविततोव्याप्तः रसादीन्परिवर्तयन्परिणामयन् रसान्अन्नादीन् धातूंस्त्वगादीन् दोषान्पित्तादीन् १० कथंवर्तयतेऽनिलइतिपृष्टंतत्राह प्राणानामिति । सन्निपातःसंघर्षस्तज्जऊष्माऽग्निर्जाठरोभवति ११ संनिपातंव्याकरोति समानेति । नाभिस्थंसमानं हृदिस्थःप्राणएति गुदस्थोऽपानःकंठस्थमुदानमेति तेनप्राणापानसमानानांनाभिदेशेसंघर्षेणसमर्थितोनिष्पादितः अधिष्ठानंसप्तधातुमयंशरीरंसम्यक्पचतिवृद्ध्यादिपरिणामंनयति १२

अस्यपात्रकस्यपायुपर्यंतोगुदप्रवेशोगुदसंज्ञितोऽपानोभवति स्रोतांसिनाडीमार्गाः तस्मादपानात्प्राणेषुप्राणादिषुपंचसु प्राणादिभ्यःपावकोत्पत्तिः पावकाच्चापानद्वाराप्राणाद्युत्पत्तिर्भवतीतिप्रघट्टकार्थः १३
एतदेवोपपादयति अग्नीति । अग्निवेगात्कंदुकवदूर्ध्वमुत्प्लुतःप्राणोगुदांतेप्रतिहतःपुनरुत्पतन्नग्निमप्युत्क्षिपतीत्यर्थः दृश्यतेचाग्निवेगात्बाष्पवायुवृद्धिर्वायुवेगाच्चाग्निवृद्धिःतथाचप्राणरोधेसतिजाठरंभयंनिवर्ततेऽतः
प्राणोरोद्धव्यइतिभावः १४ जाठरनिरोधेसर्वेषामिंद्रियाणांनिरोधोभवतीत्याशयेनाह पक्वेति । पक्वाशयःपक्वान्नस्थानं आमाशयःअपक्वान्नस्थानं नाभिमध्येइति । तात्स्थ्याज्जाठरःप्राणइंद्रियाणि प्रतिष्ठितालीं
नाभवंतीत्यर्थः १५ सर्वेरसाःहृदयाद्हृदयंप्राप्यदशभिःप्राणैःप्रेरिताः तेचप्राणादयःपंच नागकूर्मकृकलदेवदत्तधनंजयाश्चपंच १६ एवमूर्द्धादिपायुपर्यंतःतत्परंब्रह्म मूर्द्धनिसुषुम्नयानाड्यासहस्रारंप्राप्य येतत्रा
त्मानंप्राणोपाधिमाहितवंतस्तेगच्छंति देहिषुजीवदेहेषुसर्वेषामप्येषमार्गोगंतुंयोग्यइतिभावः १७ नकेवलंप्राणरोधएवपुरुषार्थःकिंतुतत्साध्यंविज्ञानमित्याह एकादशेत्यादिना । 'सप्राणन्नेवप्राणोनामभवति
वदन्वाक्पश्यन्चक्षुःशृण्वन्श्रोत्रंमन्वानोमनः' इतिश्रुतेरेकादशविकारालिंगशरीरंतदात्मातत्तादात्म्यंगतः । यद्यपि 'पंचप्राणमनोबुद्धिदशेंद्रियसमन्वितं । अपंचीकृतभूतोत्थंसूक्ष्मांगंभोगसाधनम्'
इतिसप्तदशात्मकंलिंगं तथाऽपिमनसिबुद्धेर्दशेंद्रियेषुसामान्याकरणवृत्तिःप्राणाद्यावायवःपंचेतिसांख्यमतेनप्राणपंचकस्यचान्तर्भावंविवक्षित्वाएकादशविकारात्मेतिज्ञेयं कलाःषोडश प्राणःश्रद्धाखंवायुर्ज्योति

अस्यापिपायुपर्यंतस्तथास्याद्गुदसंज्ञितः ॥ स्रोतांसितस्माज्जायंतेसर्वप्राणेषुदेहिनाम् १३ अग्निवेगवहःप्राणोगुदांतेप्रतिहन्यते ॥ सऊर्ध्वमागम्यपुनःसमुत्क्षि
पतिपावकम् १४ पक्वाशयस्त्वधोनाभ्यामूर्ध्वमामाशयःस्थितः ॥ नाभिमध्येशरीरस्यप्राणाःसर्वेप्रतिष्ठिताः १५ प्रवृत्ताहृदयात्सर्वेतिर्यगूर्ध्वमधस्तथा ॥
वहंत्यन्नरसान्नाड्योदशप्राणप्रचोदिताः १६ योगिनामेषमार्गस्तुयेनगच्छंतितत्परम् ॥ जितक्लमाःसमाधीरामूर्धन्यात्मानमादधुः ॥ एवंसर्वेषुविततौ
प्राणापानौहिदेहिषु १७ एकादशविकारात्माकलासंभारसंभृतः ॥ मूर्तिमंतंहितंविद्धिनित्यंयोगजितात्मकम् १८ तस्मिन्यःसंस्थितोह्यग्निर्नित्यंस्थाल्या
मिवाहितः ॥ आत्मानंतंविजानीहिनित्यंयोगजितात्मकम् १९ देवोयःसंस्थितस्तस्मिन्नब्बिंदुरिवपुष्करे ॥ क्षेत्रज्ञंतंविजानीहिनित्यंयोगजितात्मकम्
२० जीवात्मकानिजानीहिरजःसत्वंतमस्तथा ॥ जीवमात्मगुणंविद्धितथाऽऽत्मानंपरात्मकम् २१ सचेतनंजीवगुणंवदंतिसचेष्टतेचेष्टयतेचसर्वम् ॥ ततः
परंक्षेत्रविदोवदंतिप्राकल्पयद्योभुवनानिसप्त २२

रापःपृथिवींद्रियंमनोऽन्नंवीर्यंतपोमंत्राःकर्मलोकानामचेतिएतासांसंभारेणसंभृतः कलारूपोपाधिनामूर्तिहीनमपिमूर्त्तिमंतंसूक्ष्मस्थूलदेहवंतंआत्मानंविद्धिविजानीहि । ज्ञानसाधनमाह नित्यमिति । योगेनजित
आत्माबुद्धिर्येनतं आत्मानमित्युत्तरादपकृष्यते १८ प्राणादिभ्योजीवंविविनक्तितस्मिन्निति । तस्मिन्कलासंभारेअग्निवदात्माप्रकाशरूपः स्थालीवत्कलाअप्रकाशात्मिकाः आत्मानंत्वंपदार्थं १९ अस्यत
त्पदार्थाभेदमाह देवइति । अब्बिंदुदृष्टांतेनासंगत्वंदर्शितं क्षेत्रज्ञंपरमात्मानम् २० ननुत्वंपदार्थःसंगीतत्पदार्थोऽसंगःकथमनयोरभेदइत्याशंक्यबिंबप्रतिबिंबयोरिवेत्याशयेनाह जीवात्मकानीति । रजआदि
नाम्रवृत्त्यादयोधर्माजीवात्मकाउपाधिविशिष्टाश्रिताश्चांचल्यादयइवजलचंद्रे तंजीवं आत्मगुणंईश्वरस्यगुणभूतवत्प्रेष्यं आत्मानंईश्वरंपरात्मकंनिर्गुणंविद्धि अयमर्थः । तरंगतटाकप्रतिबिंबकल्पौधीमा
योपाधीजीवेश्वरौनियम्यनियामकौतयोर्जीवईश्वरात्मा ईश्वरस्तुबिंबस्थानीयासंगचिद्रूपइति तथाचश्रुतिः । 'एकएवतुभूतात्माभूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रवत्' इतिभूतात्मा
नित्यसिद्धश्चिदात्मा एकधेतिईश्वररूपेण बहुधेतिजीवरूपेण २१ अचेतनंजडंशरीरादि सचेतनमितितदेवग्राह्यं तत्जीवस्यगुणंभोग्यंवदंति सआत्माचेष्टतेजीवरूपेण चेष्टयतेईश्वररूपेण ततस्ताभ्यां–

जीवेश्वराभ्यांपरंउत्कृष्टंतंवदंति योभुवनानिसप्तभूरादीनिप्राकल्पयत्प्रावर्तयत् ननुकथंनिरुपाधेःप्रवर्तकत्वमुच्यते अधिष्ठानतयेतिब्रूमः तथाचश्रुतिः । 'यतोवाइमानिभूतानिजायंते' इतिब्रह्मणोलक्षण मुक्त्वा अन्नमयादिकोशकारणीभूतानामन्नादिशब्दितानांविराडादीनांजगत्कारणकत्वं 'अन्नाद्ध्येवखल्विमानिभूतानिजायंते' इत्यादिनास्थूलारुंधतीन्यायेन विराडादीनिसोपाधिकानिब्रह्माणि उक्त्वा । 'प्रज्ञानघनएवानंदभुक्चेतोमुखःप्राज्ञस्तृतीयःपादएषसर्वेश्वरः' इतिमांडूक्यश्रुतिप्रसिद्धस्यानंदमयस्यईश्वरस्यकारणीभूतेआनंदाख्येब्रह्मणि । 'आनंदाद्ध्येवखल्विमानिभूतानिजायंते' इतिमुख्यंकारणत्वंव्यवस्थापितं तथाप्रदेशांतरेऽपि । 'कोह्येवान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यात्' इतिश्रुतिराकाशाख्येकारणेयद्यानंदोनस्यात्तर्हितत्कार्येदेहादौकुतःप्राणनादिस्यादिति तत्रैव मुख्यंप्रवर्तकत्वंदर्शयति २२ ननुईश्वरसद्भावेभुवनप्रवृत्तिरेवकारणंदृश्यते नतुतदन्यस्यनिर्गुणस्य ईश्वरेणैवतस्यान्यथासिद्धत्वादित्याशंक्याह एवमिति । भूतात्मानित्यसिद्धआत्माआनंदाख्यः ऐश्वर्य स्यतुईशितव्यमापेक्षत्वान्ननित्यसिद्धत्वं सुप्तिप्रलययोरीशितव्याभावादनीश्वरत्वापत्तेरिसानंदस्यैवनित्यमैश्वर्यंमाययाऽभिव्यज्यतइतिभावः ज्ञानंब्रह्माकारावृत्तिस्तत्साक्षिभिस्तेनवेद्यादीशादन्यस्तत्प्रकाशक

एवंसर्वेषुभूतेषुभूतात्मासंप्रकाशते ॥ दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयाज्ञानवेदिभिः २३ चित्तस्यहिप्रसादेनहंतिकर्मशुभाशुभम् ॥ प्रसन्नात्माऽऽत्मनिस्थित्वासुखमानंत्य मश्नुते २४ लक्षणंतुप्रसादस्ययथातृप्तःसुखंस्वपेत् ॥ निवातेवायथादीपोदीप्येत्कुशलदीपितः २५ पूर्वरात्रेपरेचैवयुंजानःसततंमनः ॥ लघ्वाहारोविशुद्धात्मापश्य न्नात्मानमात्मनि २६ प्रदीप्तेनेवदीपेनमनोदीपेनपश्यति ॥ दृष्ट्वाऽऽत्मानंनिरात्मानंसतदाविप्रमुच्यते २७ सर्वोपायैस्तुलोभस्यक्रोधस्यचविनिग्रहः ॥ एतत्पवित्रंलो कानांतपोवैसंक्रमोमतः २८ नित्यंक्रोधात्तपोरक्षेद्धर्मंरक्षेच्चमत्सरात् ॥ विद्यांमानापमानाभ्यामात्मानंतुप्रमादतः २९ आनृशंस्यंपरोधर्मःक्षमाचपरमंबलम् ॥ आत्म ज्ञानंपरंज्ञानंसत्यंव्रतपरंव्रतम् ३० सत्यस्यवचनंश्रेयःसत्यंज्ञानंहितंभवेत् ॥ यद्भूतहितमत्यंतंतद्वैसत्यंपरंमतम् ३१ यस्यसर्वेसमारंभानिराशीर्बंधनाःसदा ॥ त्यागेय स्यहुतंसर्वंसत्यागीसचबुद्धिमान् ३२ यतोनगुरुरप्येनंश्रावयेदुपपादयेत् ॥ तंविद्याद्ब्रह्मणोयोगंवियोगंयोगसंज्ञितम् ३३ नहिंस्यात्सर्वभूतानिमैत्रायणगतश्चरेत् ॥ नेदंजीवितमासाद्यवैरंकुर्वीतकेनचित् ३४ आकिंचन्यंसुसंतोषोनिराशित्वमचापलम् ॥ एतदेवपरंज्ञानंसदाऽऽत्मज्ञानमुत्तमम् ३५ परिग्रहंपरित्यज्यभवेद्बुद्ध्या यतव्रतः ॥ अशोकंस्थानमाश्रित्यनिश्चलंप्रेत्यचेहच ३६

इतिदर्शितम् २३ प्रसन्नात्मावृत्तिजनितकालुष्यत्यागाद्विशुद्धचित्तः आत्मनिस्थित्वाचित्तसारूप्यमपित्यक्त्वा सुखंअनायासेन आनंत्यंमोक्षम् २४ यथाजलादुत्तीर्णस्यशरीरेसंश्लिष्टःसूक्ष्मतमःपटःसन्नप्य सन्निवभाति एवंसमाधौ विकल्पाभावात्सदपिचित्तंनभातीतिसुप्तितुल्यतांप्रसादस्याह लक्षणमिति २५ विशुद्धात्माशुद्धचित्तः आत्मानंब्रह्म आत्मनिहृदये २६ निरात्मानंनिर्गुणंनिलीनंचित्तंयस्मि न्भूतं 'तावन्मनोनिरोद्धव्यंहृदियावत्क्षयंगतम् । एतज्ज्ञानंचध्यानंचशेषोऽन्योग्रंथविस्तरः' इतिश्रुतिः चित्तक्षयएवात्मदर्शनमित्यर्थः २७ संक्रमःसेतुः पारप्रापकोमार्गः २८ । २९ । ३० भूतहितमनृत मपिसत्यमेवभूतानामहितकरंसत्यमप्यनृतमेवेत्यर्थः ३१ त्यागेफलत्यागे हुतंहोमयज्ञदानादि त्यागीसंन्यासी ३२ एनंब्रह्मणोयोगंनश्रावयेत् अपदार्थत्वात्किंतुउपपादयेल्लक्षणयाज्ञापयेत् तंचित्तवियोगमेव निरुद्धलक्षणयायोगसंज्ञितंप्राहुः । 'तंविद्याद्दुःखसंयोगवियोगंयोगसंज्ञितम्' इत्याद्यागमाइत्यर्थः ३३ मैत्रंमित्रभावस्तदेवायनंमार्गस्तद्गतश्चरेत् ३४ ज्ञानंज्ञानसाधनं ज्ञानमपिस्तौतिसाधनेप्रवृत्त्यर्थं सदाऽऽत्मज्ञानमुत्तममिति ३५ अशोकंस्थानंवैराग्यं प्रेत्यमृत्वास्वर्गादौ इहचराज्यादौ आश्रित्य यतव्रतोभवेत् ३६

३७ गुणाःलोकवेदादयःअगुणायस्मिन्तंगुणागुणं 'अत्रलोकाअलोकावेदाअवेदाः'इत्यादिश्रुतेः । अनासंगंकयादिसंगहीनंअतएवएककार्यंएकेनप्रत्यगात्मनैवनिष्पाद्यं अनंतरं अज्ञानमात्रापनयाद्गम्यं नतु क्रियाव्यवहितंस्वर्गादिसुखवत् वृत्तंप्राक्सिद्धं एकमेवपद्यतेगम्यते नतुज्ञानज्ञेयविभागोयस्मिन्तत्एकपदम् ३८ । ३९ । ४० ॥ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे ब्राह्मणव्याधसंवादे त्रयोदशा

तपोनित्येनदांतेनमुनिनासंयतात्मना ॥ अजितंजेतुकामेनभाव्यंसंगेष्वसंगिना ३७ गुणागुणमनासंगमेककार्यमनंतरम् ॥ एतद्ब्राह्मणोवृत्तमाहुरेकपदंसुखम् ३८ परित्यजतियोदुःखंसुखंचाप्युभयंनरः ॥ ब्रह्मप्राप्नोतिसोऽत्यंतमसंगेनचगच्छति ३९ यथाश्रुतमिदंसर्वंसमासेनद्विजोत्तम ॥ एतत्तेसर्वमाख्यातंकिंभूयः श्रोतुमिच्छसि ४० ॥ इतिश्रीम० आरण्यकेप० मार्कंडेयसमास्याप० ब्राह्मणव्याधसंवादे त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥ ॥ मार्कंडेयउवाच ॥ एवंसंकथितेकृत्स्नेमोक्षधर्मेयुधिष्ठिर ॥ दृढप्रीतमनाविप्रोधर्मव्याधमुवाचह १ न्याययुक्तमिदंसर्वंभवतापरिकीर्तितम् ॥ नतेऽस्त्यविदितंकिंचिद्धर्मेष्विहहिदृश्यते २ ॥ व्याधउवाच ॥ प्रत्यक्षंममयोधर्मस्तंचपश्यद्विजोत्तम ॥ येनसिद्धिरियंप्राप्तामयाब्राह्मणपुंगव ३ उत्तिष्ठभगवन्क्षिप्रंप्रविश्याभ्यंतरंगृहम् ॥ द्रष्टुमर्हसिधर्मज्ञमातरंपितरंचमे ४ ॥ मार्कंडेयउवाच ॥ इत्युक्तःसप्रविश्याथददर्शपरमार्चितम् ॥ सौधंहृद्यंचतुःशालमतीवचमनोरमम् ५ देवतागृहसंकाशंदैवतैश्चसुपूजितम् ॥ शयनासनसंबाधंगंधैश्चपरमैर्युतम् ६ तत्रशुक्लांबरधरौपितरावस्यपूजितौ ॥ कृताहारौतुसंतुष्टावुपविष्टौवरासने ॥ धर्मव्याधस्तुतौदृष्ट्वापादेषुशिरसाऽपतत् ७ ॥ वृद्धावूचतुः ॥ उत्तिष्ठोत्तिष्ठधर्मज्ञधर्मस्त्वामभिरक्षतु ॥ प्रीतौस्वस्तवशौचेनदीर्घमायुरवाप्नुहि ८ गतिमिष्टांतपोज्ञानंमेधांचपरमांगतः ॥ सत्पुत्रेणत्वयापुत्रनित्यंकालेसुपूजितौ ९ नतेऽन्यद्दैवतंकिंचिद्दैवतेष्वपिवर्तते ॥ प्रयतत्वाद्द्विजातीनांदमेनासिसमन्वितः १० पितुःपितामहायेचतथैवप्रपितामहाः ॥ प्रीतास्तेसततंपुत्रदमेनावांचपूजया ११ मनसाकर्मणावाचाशुश्रूषानैवहीयते ॥ नचान्याहितथाबुद्धिर्दृश्यतेसांप्रतंतव १२ जामदग्न्येनरामेणयथावृद्धौसुपूजितौ ॥ तथात्वयाकृतंसर्वंतद्विशिष्टंचपुत्रक १३ ततस्तंब्राह्मणंताभ्यांधर्मव्याधोन्यवेदयत् ॥ तौस्वागतेनतंविप्रमर्चयामासतुस्तदा १४ प्रतिपूज्यचतांपूजांद्विजःपप्रच्छतावुभौ ॥ सुपुत्राभ्यांसभृत्याभ्यांकच्चिद्वांकुशलंगृहे ॥ अनामयंचवांकच्चित्सदैवेहशरीरयोः १५ ॥ वृद्धावूचतुः ॥ कुशलंनौगृहेविप्रभृत्यवर्गेचसर्वशः ॥ कच्चित्त्वमप्यविघ्नेनसंप्राप्तोभगवन्निति १६ ॥ मार्कंडेयउवाच ॥ बाढमित्येवतौविप्रःप्रत्युवाचमुदाऽन्वितः ॥ धर्मव्याधोनिरीक्ष्याथततस्तंवाक्यमब्रवीत् १७ ॥ व्याधउवाच ॥ पितामाताचभगवन्नेतौमेदैवतंपरम् ॥ यद्दैवतेभ्यःकर्तव्यंतदेताभ्यांकरोम्यहम् १८ त्रयस्त्रिंशद्यथादेवाःसर्वेशक्रपुरोगमाः ॥ संपूज्याःसर्वलोकस्यतथावृद्धाविमौमम १९ उपहारानाहरंतोदेवतानांयथाद्विजाः ॥ कुर्वंतितद्वदेताभ्यांकरोम्यहमतंद्रितः २०

धिकद्विशततमोऽध्यायः ॥ २१३ ॥ एवमिति १ । २ । ३ । ४ । ५ शयनासनसंबाधं शयनादिसंकीर्णं ६ । ७ । ८ । ९ । १०।११ । १२ । १३ । १४ वांयुवयोः १५ नौ आवयोः १६ ।१७।१८।१९।२०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ ॥ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥ ॥ ॥

एतौमेपरमंब्रह्मन्पितामाताचदैवतम् ॥ एतौपुष्पैःफलैरत्नैस्तोषयामिसदाद्विज २१ एतावेवाग्नयोमह्यंयान्वदंतिमनीषिणः ॥ यज्ञावेदाश्चचत्वारःसर्वमेतौममद्विज २२ एतदर्थंममप्राणाभार्यापुत्रःसुहृज्जनः ॥ सपुत्रदारःशुश्रूषांनित्यमेवकरोम्यहम् २३ स्वयंचस्नापयाम्येतौतथापादौप्रधावये ॥ आहारंचप्रयच्छामिस्वयंचद्विजसत्तम २४ अनुकूलंतथावच्मिविप्रियंपरिवर्जये ॥ अधर्मेणापिसंयुक्तंप्रियमाभ्यांकरोम्यहम् २५ धर्ममेवंगुरुंज्ञात्वाकरोमिद्विजसत्तम ॥ अतंद्रितःसदाविप्रशुश्रूषांवैकरोम्यहम् २६ पंचवगुरवोब्रह्मन्पुरुषस्यबुभूषतः ॥ पितामाताऽग्निरात्माचगुरुश्चद्विजसत्तम २७ एतेषुयस्तुवर्तेतसम्यगेवद्विजोत्तम ॥ भवेयुरग्नयस्तस्यपरिचीर्णास्तुनित्यशः ॥ गार्हस्थ्येवर्त्तमानस्यएषधर्मःसनातनः २८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिद्विजव्याधसंवादेचतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥ ॥ ॥ ॥ मार्कंडेयउवाच ॥ गुरूनिवेद्यविप्रायतौमातापितरावुभौ ॥ पुनरेवसधर्मात्माव्याधोब्राह्मणमब्रवीत् १ प्रवृत्तचक्षुर्जातोऽस्मिसंपश्यतपसोबलम् ॥ यदर्थमुक्तोऽसितयागच्छत्वंमिथिलामिति २ पतिशुश्रूषपरयादांतयासत्यशीलया ॥ मिथिलायांवसेद्व्याधःसतेधर्मान्प्रवक्ष्यति ३ ॥ ब्राह्मणउवाच ॥ पतिव्रतायाःसत्यायाःशीलाढ्यायायतव्रत ॥ संस्मृत्यवाक्यंधर्मज्ञगुणवानसिमेमतः ४ ॥ व्याधउवाच ॥ ॥ यत्तदात्वंद्विजश्रेष्ठतयोक्तोमांप्रतिप्रभो ॥ दृष्टमेवतयासम्यगेकपत्न्यानसंशयः ५ त्वदनुग्रहबुद्ध्यातुविप्रैतद्दर्शितंमया ॥ वाक्यंचशृणुमेतातयत्तेवक्ष्येहितंद्विज ६ त्वयाविनिकृतामातापिताचद्विजसत्तम ॥ अनिसृष्टोऽसिनिष्क्रांतोगृहात्ताभ्यामनिंदित ७ वेदोच्चारणकार्यार्थमयुक्तंतत्त्वयाकृतम् ॥ तवशोकेनवृद्धौतावंधीभूतौतपस्विनौ ८ तौप्रसादयितुंगच्छमात्वांधर्मोऽत्यगादयम् ॥ तपस्वीत्वंमहात्माचधर्मेचनिरतःसदा ९ सर्वमेतदपार्थंतेक्षिप्रंतौसंप्रसादय ॥ श्रद्दधस्वममब्रह्मन्नान्यथाकर्तुमर्हसि ॥ गम्यतामद्यविप्रर्षेश्रेयस्तेकथयाम्यहम् १० ॥ ब्राह्मणउवाच ॥ यदेतदुक्तंभवतासर्वंसत्यमसंशयम् ॥ प्रीतोऽस्मितवभद्रंतेधर्माचारगुणान्वित ११ ॥ व्याधउवाच ॥ दैवतप्रतिमोहित्वंयस्त्वंधर्ममनुव्रतः ॥ पुराणंशाश्वतंदिव्यंदुष्प्राप्यमकृतात्मभिः १२ मातापित्रोःसकाशंहिगत्वात्वंद्विजसत्तम ॥ अतंद्रितःकुरुक्षिप्रंमातापित्रोर्हिपूजनम् ॥ अतःपरमहंधर्मंनान्यंपश्यामिकंचन १३ ॥ ब्राह्मणउवाच ॥ इहाहमागतोदिष्ट्यादिष्ट्यामेसंगतंत्वया ॥ ईदृशादुर्लभालोकेनराधर्मप्रदर्शकाः १४ एकोनरसहस्रेषुधर्मविद्विद्यतेनवा ॥ प्रीतोऽस्मितवसत्येनभद्रंतेपुरुषर्षभ १५ पतमानोऽद्यनरकेभवताऽस्मिसमुद्धृतः ॥ भवितव्यमथैवंचयद्दृष्टोऽसिमयाऽनघ १६ राजाययातिर्दौहित्रैःपतितस्तारितोयथा ॥ सद्भिःपुरुषशार्दूलतथाऽहंभवताद्विजः १७ मातापितृभ्यांशुश्रूषांकरिष्येवचनात्तव ॥ नाकृतात्मावेदयतिधर्माधर्मविनिश्चयम् १८

॥ गुरुइति १ प्रवृत्तचक्षुर्दिव्यदृष्टिः तपसः पित्रोःशुश्रूषात्मकस्य २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

दुर्ज्ञेयःशाश्वतोधर्मःशूद्रयोनौहिवर्तते ॥ नत्वांशूद्रमहंमन्येभवितव्यंहिकारणम् १९ येनकर्मविशेषेणप्राप्तेयंशूद्रतात्वया ॥ एतदिच्छामिविज्ञातुंतत्त्वेनहिमहामते ॥ कामयाब्रूहिमेसर्वंसत्येनप्रयतात्मना २० ॥ व्याधउवाच ॥ अनतिक्रमणीयावैब्राह्मणामेद्विजोत्तम ॥ शृणुसर्वमिदंवृत्तंपूर्वदेहेममाऽनघ २१ अहंहिब्राह्मणःपूर्वमासंद्विजवरात्मजः ॥ वेदाध्यायीसुकुशलोवेदांगानांचपारगः २२ आत्मदोषकृतैर्ब्रह्मन्नवस्थामाप्तवानिमाम् ॥ कश्चिद्राजाममसखाधनुर्वेदपरायणः २३ संसर्गाद्धनुषिश्रेष्ठस्ततोऽहमभवंद्विज ॥ एतस्मिन्नेवकालेतुमृगयांनिर्गतोनृपः २४ सहितोयोधमुख्यैश्चमंत्रिभिश्चसुसंवृतः ॥ ततोऽभ्यहन्मृगांस्तत्रसुबहूनाश्रमंप्रति २५ अथक्षिप्तःशरोघोरोमयाऽपिद्विजसत्तम ॥ ताडितश्चऋषिस्तेनशरेणानतपर्वणा २६ भूमौनिपतितोब्रह्मन्नुवाचप्रतिनादयन् ॥ नापराध्याम्यहंकिंचित्केनपापमिदंकृतम् २७ मन्वानस्तंमृगंचाहंसंप्राप्तःसहसाप्रभो ॥ अपश्यंतमृषिंविद्धंशरेणानतपर्वणा २८ अकार्यकरणाच्चापिभृशंमेव्यथितंमनः ॥ तमुग्रतपसंविप्रंनिष्टनंतंमहीतले २९ अजानताकृतमिदंमयेत्यहमथाब्रुवम् ॥ क्षंतुमर्हसिमेसर्वमितिचोक्तोमयामुनिः ३० ततःप्रत्यब्रवीद्वाक्यमृषिर्मांक्रोधमूर्च्छितः ॥ व्याधस्त्वंभविताक्रूरशूद्रयोनावितिद्विज ३१ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेप० मार्कंडेयसमास्यापर्वणिब्राह्मणव्याधसंवादेपंचदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥ ॥ ॥ ॥ व्याधउवाच ॥ एवंशप्तोऽहमृषिणातदाद्विजवरोत्तम ॥ अभिप्रसादयमृषिंगिरात्राहीतिमांतदा १ अजानतामयाऽकार्यमिदमद्यकृतंमुने ॥ क्षंतुमर्हसितत्सर्वंप्रसीदभगवन्निति २ ॥ ऋषिरुवाच ॥ नान्यथाभविताशापएवमेतदसंशयम् ॥ आनृशंस्यात्त्वहंकिंचित्कर्ताऽनुग्रहमद्यते ३ शूद्रयोन्यांवर्तमानोधर्मज्ञोहिभविष्यसि ॥ मातापित्रोश्चशुश्रूषांकरिष्यसिनसंशयः ४ तयाशुश्रूषयासिद्धिंमहत्त्वंसमवाप्स्यसि ॥ जातिस्मरश्चभवितास्वर्गंचैवगमिष्यसि ५ शापक्षयेतुनिर्वृत्तेभविताऽसिपुनर्द्विजः ॥ एवंशप्तःपुरातेनऋषिणाऽस्म्युग्रतेजसा ६ प्रसादश्चकृतस्तेनममैवंद्विपदांवर ॥ शरंचोद्धृतवानस्मितस्यवैद्विजसत्तम ७ आश्रमंचमयानीतोनचप्राणैर्व्ययुज्यत ॥ एतत्तेसर्वमाख्यातंयथाममपुराऽभवत् ८ अभितश्चापिगंतव्यंमयास्वर्गंद्विजोत्तम ९ ॥ ब्राह्मणउवाच ॥ एवमेतानिपुरुषादुःखानिचसुखानिच ॥ आप्नुवंतिमहाबुद्धेनोत्कंठांकर्तुमर्हसि १० दुष्करंहिकृतंकर्मजानताजातिमात्मनः ॥ लोकवृत्तांततत्त्वज्ञनित्यंधर्मपरायण ११ कर्मदोषश्चवैविद्वन्नात्मजातिकृतेनवै ॥ कंचित्कालमुष्यतावैततोऽसिभविताद्विजः १२ सांप्रतंचमतोमेऽसिब्राह्मणोनात्रसंशयः ॥ ब्राह्मणःपतनीयेषुवर्तमानोविकर्मसु १३ दांभिकोदुष्कृतःप्राज्ञःशूद्रेणसदृशोभवेत् ॥ यस्तुशूद्रोदमेसत्येधर्मेचसततोत्थितः १४

१५ । १६ । १७ । १८ गुणैःगुणकार्यैःसुखदुःखमोहैः १९ । २० । २१ । २२ गताध्वानःप्राप्तज्ञानमार्गाः २३ । २४ । २५ । २६ । २७ बुद्धेस्तत्त्वज्ञानात्परंब्रह्मगताःप्राप्ताः २८ । २९ । ३० । ३१ प्रदक्षिणंकृत्वाउपदेष्टागुरुरितिबुद्ध्या ३२ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ ॥ धर्मव्या

तंब्राह्मणमहंमन्ये वृत्तेनहिभवेद्द्विजः ॥ कर्मदोषेणविषमांगतिमाप्नोतिदारुणाम् १५ क्षीणदोषमहंमन्येचाभितस्त्वांनरोत्तम ॥ कर्तुमर्हसिनोत्कंठांत्वद्विधाह्यविषादिनः ॥ लोकवृत्तानुवृत्तज्ञानित्यंधर्मपरायणाः १६ ॥ व्याधउवाच ॥ प्रज्ञयामानसंदुःखंहन्याच्छारीरमौषधैः ॥ एतद्विज्ञानसामर्थ्यंनबालैःसमतामियात् १७ अनिष्टसंप्रयोगाच्चविप्रयोगात्प्रियस्यच ॥ मनुष्यामानसैर्दुःखैर्युज्यंतेचाल्पबुद्धयः १८ गुणैर्भूतानियुज्यंतेवियुज्यंतेतथैवच ॥ सर्वाणिनैतदेकस्यशोकस्थानंहिविद्यते १९ अनिष्टंचान्वितंपश्यंस्तथाक्षिप्रंविरज्यते ॥ ततश्चप्रतिकुर्वंतियदिपश्यंत्युपक्रमात् २० शोचतोनभवेत्किंचित्केवलंपरितप्यते ॥ परित्यजंतियेदुःखंसुखंवाऽप्युभयंनराः २१ तएवसुखमेधंतेज्ञानतृप्तामनीषिणः ॥ असंतोषपरामूढाःसंतोषंयांतिपंडिताः २२ असंतोषस्यनास्त्यंतस्तुष्टिस्तुपरमंसुखम् ॥ नशोचंतिगताध्वानःपश्यंतःपरमांगतिम् २३ नविषादेमनःकार्यंविषादोविषमुत्तमम् ॥ मारयत्यकृतप्रज्ञंबालंक्रुद्धइवोरगः २४ यंविषादोऽभिभवतिविक्रमेसमुपस्थिते ॥ तेजसातस्यहीनस्यपुरुषार्थोनविद्यते २५ अवश्यंक्रियमाणस्यकर्मणोदृश्यतेफलम् ॥ नहिनिर्वेदमागम्यकिंचित्प्राप्नोतिशोभनम् २६ अथाऽप्युपायंपश्येतदुःखस्यपरिमोक्षणे ॥ अशोचन्नारभेतैवंमुक्तश्चाव्यसनीभवेत् २७ भूतेष्वभावंसंचिंत्ययेतुबुद्धेःपरंगताः ॥ नशोचंतिकृतप्रज्ञाःपश्यंतःपरमांगतिम् २८ नशोचामिचवैविद्वन्कालाकांक्षीस्थितोह्यहम् ॥ एतैर्निदर्शनैर्ब्रह्मन्नवमीदामिसत्तम २९ ॥ ब्राह्मणउवाच ॥ कृतप्रज्ञोऽसिमेधावीबुद्धिर्हिविपुलातव ॥ नाहंभवंतंशोचामिज्ञानतृप्तोऽसिधर्मवित् ३० आपृच्छेत्वांस्वस्तितेऽस्तुधर्मस्त्वांपरिरक्षतु ॥ अप्रमादस्तुकर्तव्योधर्मेधर्मभृतांवर ३१ ॥ मार्कंडेयउवाच ॥ बाढमित्येवतंव्याधःकृतांजलिरुवाचह ॥ प्रदक्षिणमथोकृत्वाप्रस्थितोद्विजसत्तमः ३२ सतुगत्वाद्विजःसर्वांशुश्रूषांकृतवांस्तदा ॥ मातापितृभ्यांवृद्धाभ्यांयथान्यायंसुसंशितः ३३ एतत्तेसर्वमाख्यातंनिखिलेनयुधिष्ठिर ॥ पृष्टवानसियंतातधर्मंधर्मभृतांवर ३४ पतिव्रतायामाहात्म्यंब्राह्मणस्यचसत्तम ॥ मातापित्रोश्चशुश्रूषाधर्मव्याधेनकीर्तिता ३५ ॥ युधिष्ठिरउवाच ॥ अत्यद्भुतमिदंब्रह्मन्धर्माख्यानमनुत्तमम् ॥ सर्वधर्मविदांश्रेष्ठकथितंमुनिसत्तम ३६ सुखश्रव्यतयाविद्वन्मुहूर्तइवमेगतः ॥ नहितृप्तोऽस्मिभगवन्शृण्वानोधर्ममुत्तमम् ३७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिब्राह्मणव्याधसंवादेषोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ वैशंपायनउवाच ॥ श्रुत्वेमांधर्मसंयुक्तांधर्मराजःकथांशुभाम् ॥ पुनःपप्रच्छतमृषिंमार्कंडेयमिदंतदा १

धोक्तधर्मेषु ' मातापिताग्निरात्माचगुरुश्चद्विजसत्तम ' इतिमुमुक्षूणांपंचसेव्यत्वेनप्रोक्तास्तत्रपतिव्रतोपाख्यानेधर्मव्याधनिदर्शनेनमातापित्रोःपतिव्रतानिदर्शनेनगुरोश्चशुश्रूषायाःफलंदर्शितं तत्रैवमोक्षधर्मप्रस्तावेआत्मसेवनंफलंचोक्तं । परिशिष्टस्याग्निसेवनस्यमोक्षहेतुत्वमकारंवक्तुंआंगिरसमारभतेश्रुत्वेमांधर्मसंयुक्तामित्यादिना १

कथमिति । ननु त्वमग्नेप्रथमोअंगिराऋषिरितिवेदेवह्वेरंगिरस्त्वंश्रूयते अत्रतुअंगिरसोवन्हित्वंकथंपृच्छति सत्यं उभयोरभेदेनबीजांकुरवत्परस्परजनकत्वेनवाऽदोषः तथाच ' अग्निर्वैब्राह्मणः ' इति । ' अहंत्वदस्मिमदसित्वमेतन्ममासियोनिस्तवयोनिरस्मि ' इतिचश्रुतीभवतः । वनंसलिलंयातःप्रविष्टः । प्रविवेशिथापइतिमंत्रवर्णात् । ' जीवनंभुवनंवनम् ' इत्यमरः २ अग्निरिति । एकस्याप्यग्नेःकर्मसुदृश्यमानमनेकत्वंकथमुपपद्यते । नहिआग्नेयोऽष्टाकपालःदर्शपूर्णमासचातुर्मास्यादिषुएकएवेतिवक्तुंशक्यं अन्यावयवत्वायोगात् । अन्यस्यचगुणस्यद्रव्यस्यवायागभेदकस्याभावादेवताभेदएवयागभेदहेतुरितिअवश्यंवाच्यं सचाग्नेरेवकथंसंभवतीत्यर्थः ३ अथएकस्यसंततौअनेकेऽग्निनामानःसंतीतितर्हिआग्नेयस्यस्कंदस्यकथंरुद्रादिपुत्रत्वमपिस्मर्यतइत्याह कुमारश्चेति ४ । ५ । ६ अंगिराऽभवत् संधिरडभावोवाआर्षः ७ तथेति । अग्नेरप्यधिकोभूत्वा सूर्यवत्जगत्प्रकाशितवान् ८ तपश्चरन्निति'महत्तदुल्बंस्थविरंतदासीद्येनाविष्टितःप्रविवेशिथापः'इतिश्रुतिप्रसिद्धेनकेनचिन्निमित्तेनजलेप्रविश्यतपश्चरन्नग्निरांगिरसेनतेजसासंतप्तोऽभूदित्यर्थः उल्बंउल्ब

युधिष्ठिरउवाच ॥ कथमग्निर्वनंयातःकथंचाप्यंगिराःपुरा ॥ नष्टेऽग्नौहव्यमवहदग्निर्भूत्वामहाद्युतिः २ अग्निर्यदात्वेकएवबहुत्वंचास्यकर्मसु ॥ दृश्यतेभगवन्सर्वमेतदिच्छामिवेदितुम् ३ कुमारश्चयथोत्पन्नोयथाचाग्नेःसुतोऽभवत् ॥ यथारुद्राच्चसंभूतोगंगायांकृत्तिकासुच ४ एतदिच्छाम्यहंत्वत्तःश्रोतुंभार्गवसत्तम ॥ कौतूहलसमाविष्टोयाथातथ्यंमहामुने ५ ॥ मार्कंडेयउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ यथाक्रुद्धोहुतवहस्तपस्तप्तुंवनंगतः ६ यथाचभगवानग्निःस्वयमेवांगिराऽभवत् ॥ संतापयंश्चप्रभयानाशयंस्तिमिराणिच ७ पुरांऽगिरामहाबाहोचचारतपउत्तमम् ॥ आश्रमस्थोमहाभागोहव्यवाहंविशेषयन् ॥ तथासभूत्वातुतदाजगत्सर्वंप्रकाशयत् ८ तपश्चरंस्तुहुतभुक्संतप्तस्तस्यतेजसा ॥ भृशंग्लानश्चतेजस्वीनचकिंचित्प्रजज्ञिवान् ९ अथसंचिंतयामासभगवान्हव्यवाहनः ॥ अन्योऽग्निरिहलोकानांब्रह्मणासंप्रकल्पितः १० अग्नित्वंविप्रनष्टंहितप्यमानस्यमेतपः ॥ कथमग्निःपुनरहंभवेयमितिचिंत्यसः ११ अपश्यदग्निवल्लोकांस्तापयंतंमहामुनिम् ॥ सोपासर्पच्छनैर्भीतस्तमुवाचतदांगिराः १२ शीघ्रमेवभवस्वाग्निस्त्वंपुनर्लोकभावनः ॥ विज्ञातश्चासिलोकेषुत्रिषुसंस्थानचारिषु १३ त्वमग्निःप्रथमंसृष्टोब्रह्मणातिमिरापहः ॥ स्वस्थानंप्रतिपद्यस्वशीघ्रमेवतमोनुद १४ ॥ अग्निरुवाच ॥ नष्टकीर्तिरहंलोकेभवान्जातोहुताशनः ॥ भवंतमेवज्ञास्यंतिपावकंनतुमांजनाः १५ निक्षिपाम्यहमग्नित्वंत्वमग्निःप्रथमोभव ॥ भविष्यामिद्वितीयोऽहंप्राजापत्यकएवच १६ ॥ अंगिराउवाच ॥ कुरुपुण्यंप्रजास्वर्ग्यंभवाग्निस्तिमिरापहः ॥ मांचदेवकुरुष्वाग्नेप्रथमंपुत्रमंजसा १७

णंस्थविरंप्राचीनं आविश्यतिष्ठतीत्याविष्टंभयंसंजातमस्यसआविष्ठितः ९ । १० । ११ । १२ संस्थानचारिषुस्थावरजंगमेषुसम्यक्स्थानंगतिनिवृत्तिर्येषुचरणशीलेषुचेतियोगात् त्रिषुअंतर्बहिर्दिविचउत्तमाधममध्यमेषुवा १३ । १४ । १५ निक्षिपामीति । अत्राग्निशब्देनदिग्देशकालकर्त्राद्यात्मासूत्रसंज्ञोहिरण्यगर्भउच्यते तस्यअग्नित्वत्यागः कारणात्मनाऽऽवस्थानं प्रथमःप्रथमजःसूत्रात्मेत्यर्थः हेप्राजापत्यप्रजापतिपुत्रहेअंगिरःअहंद्वितीयःकःकसंज्ञोविराडात्माभविष्यामि १६ कुर्विति । पुण्यंहविर्वहनंप्रजानांस्वर्ग्यंस्वर्गायहितं प्रथमंपुत्रंबृहस्पतिसंज्ञं । अयंभावः ईशसूत्रविराडुपासनाभिःसिद्धाः क्रमेणब्रह्मप्रजापतिबृहस्पतिसंज्ञाः पूर्वपूर्वस्यउत्तरउत्तरःशतांशसंमितैश्वर्यः तथाचश्रुतिरारोहक्रमेणाह । ' तेयेशतंबृहस्पतेरानंदाःसएकःप्रजापतेरानंदः । तेयेशतंप्रजापतेरानंदाःसएकोब्रह्मणआनंदः ' इति तत्रापिबीजांकुरन्यायेनाग्ने–

रंगिरः अंगिरसो बृहस्पत्याख्योऽग्निरितिबोध्यम् । 'तद्यदिदमाहुरमुंयजामुंयजेत्येतस्यैवसाविसृष्टिः । सुपर्णंविप्राः कवयोवचोभिरेकसंतं बहुधाकल्पयंति' इत्यादिश्रुतिप्रसिद्धं सूत्रात्मनःसर्वदेवतारूपत्वमांगिरसतात्पर्यं तदिदंज्ञात्वायजमानस्याग्निरपिमोक्षद्वारंभवतीत्यर्थः १७ तच्छ्रुत्वेति । अकरोत्अंगीचकार जातवेदाःस्वयंकारणंगत्वास्वपुत्रमंगिरसमकरोत्तस्यापिपुत्रःस्वयंबृहस्पतिर्नामाऽभवदिति १८ तत्रबृहस्पतेःकारणत्वं कारणज्ञानादेवयुज्यते 'ब्रह्मविद्ब्रह्मैवभवति' इतिश्रुतेरतस्तत्परीक्षार्थं देवाबृहस्पतिंप्रति कारणंब्रह्मपप्रच्छुः १९ तस्मिंश्चतेनोक्तेसतिप्रत्ययगृण्हन् अंगिरसोवचः अयंभवतां गुरुरितिअंगीकृतवंतः २० नानार्थान्पृथक्प्रयोजनान् ब्राह्मणेषुकर्मविधिवाक्येषु २१ ॥ इत्यारण्यकेपर्वणि नैलकंठीयेभारतभावदीपे सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥ ॥ कालाभिमानिन्योदेवताअपिअंगिरःसंज्ञात्सूत्रात्मनएवसकाशाज्जाताइतिवक्तुमध्यायमारभते ब्रह्मणइति । ब्रह्मणःकारणात्सूत्रं ततस्तदुपास्तिसिद्धोंगिराइतितस्यतृतीयत्वं । सुभाकालाभिमानिनीदेवता सुष्ठुसंवत्सराद्यात्मनाऽहोरात्राद्यात्मनावाभातीतिसुभा । शुभाइतिपाठेऽपिसैवग्राह्या १ बृहत्कीर्तित्वादीनिबृहस्पतेरेवविशेषणानि कीर्तिर्यशः ज्योतिःशारीरंतेजः ब्रह्मवेदाध्ययनं मनःसंकल्पादिरूपं मंत्रोविचारः भाःप्रति

मार्कंडेयउवाच ॥ तच्छ्रुत्वांऽगिरसोवाक्यंजातवेदास्तदाऽकरोत् ॥ राजन्बृहस्पतिर्नामतस्याप्यंगिरसःसुतः १८ ज्ञात्वाप्रथमजंतंतुवह्नेरांगिरसंसुतम् ॥ उपेत्यदेवाःपप्रच्छुःकारणंतत्रभारत १९ सतुपृष्टस्तदादेवैस्ततःकारणमब्रवीत् ॥ प्रत्ययगृह्णंस्तुदेवाश्चतद्वचोंगिरसस्तदा २० तत्रनानाविधानग्नीन्प्रवक्ष्यामिमहाप्रभान् ॥ कर्मभिर्बहुभिःख्यातान्नानार्थान्ब्राह्मणेष्विह २१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिआंगिरसेसप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥ ॥ ॥ मार्कंडेयउवाच ॥ ब्रह्मणोयस्तृतीयस्तुपुत्रःकुरुकुलोद्वह ॥ तस्याभवत्सुभाभार्याप्रजास्तस्यांचमेशृणु १ बृहत्कीर्तिर्बृहज्ज्योतिर्बृहद्ब्रह्माबृहन्मनाः ॥ बृहन्मंत्रोबृहद्भासस्तथाराजन्बृहस्पतिः २ प्रजासुतासुसर्वासुरूपेणाऽप्रतिमाभवत् ॥ देवीभानुमतीनामप्रथमांगिरसःसुता ३ भूतानामेवसर्वेषांयस्यांरागस्तदाऽभवत् ॥ रागाद्रागेतियामाहुर्द्वितीयांऽगिरसःसुता ४ यांकपर्दिसुतामाहुर्दृश्यादृश्येतिदेहिनः ॥ तनुत्वात्सासिनीवालीतृतीयांऽगिरसःसुता ५ पश्यत्यर्चिष्मतीभाभिर्हविर्भिश्चहविष्मती ॥ षष्ठीमंगिरसःकन्यांपुण्यामाहुर्महिष्मतीम् ६ महामखेष्वांगिरसीदीप्तिमत्सुमहामते ॥ महामतीतिविख्यातासप्तमीकथ्यतेसुता ७

भाविचार्यतत्त्वस्फूर्तिः एतानिबृहंतियस्यसतथा तथाशब्दःपादपूरणार्थः २ तासुवक्ष्यमाणत्वेनबुद्धिस्थासु भानुमतीसूर्ययुक्ता दिवसाभिमानिनीत्यर्थः ३ रात्रिमाह भूतानामिति । सुषुप्तिकालत्वेनश्रमनाशकत्वात्तस्यांरागोऽभवत् रागात् रागहेतुत्वात्संध्याद्वयेरागोपेतत्वाद्वा ४ कपर्दिनोरुद्रस्य सुतामिवसुतां चंद्रकलांललाटेधृतत्वात्दृश्यादृश्यरूपां तत्रहेतुः तनुत्वादिति । तेनसूक्ष्मचंद्रयुक्तत्वंलक्ष्यते चतुर्दशीयुक्ताऽमावास्यासिनीवाली । 'यापूर्वाऽमावास्यासासिनीवालीयोत्तरासाकुहूः' इतिश्रुतेः ५ अर्चिष्मतीपूर्णचंद्रोपेताशुद्धपौर्णमासीयस्यांभाभिर्जनोरात्रावपिपश्यति रूपादिकमितिशेषः साचतुर्थी यस्यांहविर्भिर्देवताइज्यंते साहविष्मतीप्रतिपद्युक्तापौर्णमासीराकानामपंचमी पुण्यांव्रतार्हांमहिष्मतींनाम चतुर्दशीयुक्तांपूर्वांपौर्णमासींअनुमतिंनाम । 'यापौर्णमासीसाऽनुमतिर्योत्तरासाराका' इतिश्रुतेः ६ शुद्धाममावास्यामाह महामखेष्विति । सोमयागादिषुदीप्तिमती अमावास्यायांहिदीक्षांकर्तुर्वर्धमानश्चंद्रोऽग्रेदृश्यते पौर्णमास्यांतुक्षीयमाणः अतोदीप्तिमत्सुदिनेषुएषामहामतीत्युच्यते यतोत्रमहत् महस्वान्वा अंतर्हितोविद्यतेऽस्यामितियोगात् पूर्वपदस्याकारोऽतादेशआर्षः ७

कुहुकुहायतेविस्मितोभवति । एकाकलाअनंशाअल्पांशवती अलवणायवागूरितिवदल्पार्थेनञ् । योत्तरासाकुहूरितिश्रुतेः प्रतिपद्युक्ताअमावास्याकुहूरितिप्रसिद्धम् ८ ॥ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ॥ ॥ तत्रक्रत्वंगभूतःकालःप्रागुक्तः अथ क्रत्वंगभूतादेवताःप्रपंचयितुं विराडुपास्तिफलावस्थस्यबृहस्पतेर्विभूतिरूपांसंततिंवक्तुमुपक्रमते बृहस्पतेरिति । चांद्रमसीचंद्रमसाआक्रांतातारानाम षडग्नीन्शंयुप्रभृतीन्वक्ष्यमाणान् एकांपुत्रिकांस्वाहाख्याम् १ आहुतिषुप्रधानाहुतिषु दर्शेपौर्णमासेचयस्यआद्यंहविः हविषेति तृतीयाप्रथमार्थे प्रथमंहविर्विधीयते ‘ यदाग्नेयोऽष्टाकपालोऽमावास्यायांचपौर्णमास्यांचाच्युतोभवति ’ इत्यादिश्रुत्याचोद्यते सशंयुर्नाम २ चातुर्मास्येषुचतुर्षुमासेषुकर्तव्येषु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यपर्वचतुष्टयेषु । आग्नेयमष्टाकपालंनिर्वपतिसौम्यंचरुमितिप्रतिपर्वतुल्यवदग्निराम्नायते तथाऽश्वमेधेचयस्यइष्टयांइष्टिसमीपेअग्रजःप्रथमःपशुर्भवति । ‘ तत्रयापशाविष्टिरुभयतोन्यतरोवाग्नेयीवाग्नावैष्णवीचेति ’ आश्वलायनाद्युक्ता । तथाचदर्शपूर्णमासचातुर्मास्यपश्वश्वमेधाः यत्पूर्वकाःसोग्निर्बार्हस्पत्यःशंयुर्नामेत्यर्थः ३ शंयुसंततिमाह शंयोरिति । अप्रतिमाअतिसुंदरीधर्मजाधर्मकन्यासत्यानाम दीप्तोदीप्तिमान् ४ तस्यनामाह प्रथमेनेति । अध्वरे दर्शादौ प्रथमाज्यभागदेवतायोऽग्निःसभरद्वाजइत्यर्थः । तस्यशंयोः ५ पौर्णमासेष्विति । स्रुवोद्यतंहविःप्रथमाघारस्तस्यदेवताभरतोनामशंयोःपुत्रः ।

यांतुदृष्ट्वाभगवतींजनःकुहुकुहायते ॥ एकानंशेतितामाहुःकुहूमंगिरसःसुताम् ८ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिआंगिरसोपाख्यानेअष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ॥ मार्कंडेयउवाच ॥ बृहस्पतेश्चांद्रमसीभार्याऽऽसीद्याशस्विनी ॥ अग्नीन्साऽजनयत्पुण्यान्षडेकांचापिपुत्रिकाम् १ आहुतिष्वेवयस्याग्नेर्हविषाज्यंविधीयते ॥ सोऽग्निर्बृहस्पतेःपुत्रःशंयुर्नाममहाव्रतः २ चातुर्मास्येषुयस्येष्ट्यामश्वमेधेऽग्रजःपशुः ॥ दीप्तोज्वालैरनेकाभैरग्निरेकोऽथवीर्यवान् ३ शंयोरप्रतिमाभार्यासत्यासत्याथधर्मजा ॥ अग्निस्तस्यसुतोदीप्तस्तिस्रःकन्याश्चसुव्रताः ४ प्रथमेनाज्यभागेनपूज्यतेयोऽग्निरध्वरे ॥ अग्निस्तस्यभरद्वाजःप्रथमःपुत्रउच्यते ५ पौर्णमासेषुसर्वेषुहविषाज्यंस्रुवोद्यतम् ॥ भरतोनामतःसोऽग्निर्द्वितीयःशंयुतःसुतः ६ तिस्रःकन्याभवंत्यन्यायासांसभरतःपतिः ॥ भरतस्तुसुतस्तस्यभरत्येकाचपुत्रिका ७ भरतोभरतस्याग्नेःपावकस्तुप्रजापतेः ॥ महानत्यर्थंमहितस्तथाभरतसत्तम ८ भरद्वाजस्यभार्यातुवीरावीरस्यपिंडदा ॥ प्राहुराज्येनतस्येज्यांसोमस्येवद्विजाःशनैः ९

पूर्णमासपदंसर्वतद्विकारपरं तेनदर्शोऽपिगृह्यते । ‘ पौर्णमासेनेष्टिपशुसोमाउपदिष्टाः ’ इत्याश्वलायनवचनात् । यद्यपिस्रौवाघारःप्राजापत्यस्तथापिसभरतसंज्ञएवप्रजापतिरितिज्ञेयम् ६ भवंति शंयुतइत्यनुकृष्यते पतिर्ज्येष्ठः अत्रकन्यानांनामधेयानिसंततिश्चानुक्ताऽपिअत्रैवांगप्रत्यंगदेवतात्वेनताबोध्याः विस्तरभयात्तुमुनिनानप्रदर्शिताः । तस्यभरतस्योर्जसंज्ञस्यपुत्रोभरतः ‘ ऊर्जःपुत्रंभरतंसृप्रदानुम् ’ इतिमंत्रवर्णात् ७ भरतःभरणंकुर्वतः तेनभरतशब्दस्यनिर्वचनंदर्शितं भरतस्यप्रजापतेः पावकःसुतः सःअत्यर्थं महितत्वात्महान् महितत्वंमहाफलप्रदातृत्वं यत्रकर्मणिआग्रयणादौ प्रथमोऽग्निर्नास्तितत्रापिअयंमहत्त्वात्कर्तव्यएवेत्यर्थः । पावकइत्यग्निपर्यायमात्रंनगुणः अग्निसंज्ञोऽग्निरित्यर्थः । तथाच ‘ येनयज्ञेनेत्सेत्कुर्यादेवतत्राग्नेयमष्टाकपालम् ’ इतिआपस्तंबोक्तिःसंगच्छते । ईत्सेत्वर्धितुमिच्छेत् ८ शंयोःकनिष्ठपुत्रसन्ततिमुक्त्वाज्येष्ठसंततिमाह भरद्वाजस्येति । वीरानामतः वीरस्यवन्हेःपिंडदाशरीरकर्त्री मातेत्यर्थः । भरद्वाजात्वीरायांवीरोजातइत्यर्थः । तस्यआज्येनइज्यांप्राहुः शनैः उपांशु सोमस्येवेतितत्साहित्यमुच्यते । तथाऽग्नीषोमावुपांशुयष्टव्यावजामित्वाय ’ इतिश्रुतयोरग्नीषोमयोर्मध्यस्थोऽग्निःसइत्यर्थः ९

एतदेवाह हविषेति । द्वितीयेनआग्नेयानंतरेण अस्यैवनामांतराणिरथेत्यादीनि १० सरथप्रभ्वादिनामा शरय्वांभार्यायां सिद्धिंनामपुत्रंजनयत् यःभानुं सूर्यं भाभिर्दीप्तिभिःआवृणोत्सूर्यआवृतेआग्नेयंअग्निदैवत्यंयागमानयन् । अग्निमग्नआवहेत्यत्रमंत्रेऽग्नियुक्तसंबुद्धया एषसूयतेसुष्टुऊयतेकीर्त्यते उङ्शब्देइतिधातुः ११ बृहस्पतेर्द्वितीयःपुत्रोनिश्च्यवनः पृथिवींस्तौतीतिपृथिवीसाहचर्यमुच्यतेतेन वागभिमानिदेवतारूपःसइत्यर्थः । 'तस्यवाचापृथिवीचाग्निश्च' इतिश्रुतेः १२ निश्च्यवनपुत्रःसत्यः समयधर्मोवाचकसंबंधस्तत्कर्ता १३ सत्यस्यैवनामांतरंनिष्कृतिः अभिसेवितेगृहारामादौशोभयति शोभांकरोति १४ रुजस्करःपीडाकरः स्वनोनामसत्यपुत्रः १५ एवंद्वयोर्बार्हस्पत्ययोःकर्मकर्मेंद्रियव्यापित्वमुक्तं तृतीयस्यबुद्धिव्यापकत्वमाह यस्त्विति १६ चतुर्थमाह अंतरिति १७ एनंविश्वभुजं पा

हविषायोद्वितीयेनसोमेनसहयुज्यते ॥ रथप्रभूरयाध्वानकुंभरेताःसउच्यते १० शरय्वांजनयत्सिद्धिंभानुंभाभिःसमावृणोत् ॥ आग्नेयमानयन्नित्यमाह्वानेह्येषसूयते ११ यस्तुनच्यवतेनित्यंयशसावर्चसाश्रिया ॥ अग्निर्निश्च्यवनोनामपृथिवींस्तौतिकेवलम् १२ विपाप्माकलुषैर्मुक्तोविशुद्धश्चार्चिषाज्वलन् ॥ विपापोऽग्निःसुतस्तस्यसत्यःसमयधर्मकृत् १३ आक्रोशतांहिभूतानांयःकरोतिहिनिष्कृतिम् ॥ अग्निःसनिष्कृतिर्नामशोभयत्यभिसेविते १४ अनुकूजंतियेनेहवेदनार्ताःस्वयंजनाः ॥ तस्यपुत्रःस्वनोनामपावकःसरुजस्करः १५ यस्तुविश्वस्यजगतोबुद्धिमाक्रम्यतिष्ठति ॥ तंप्राहुरध्यात्मविदोविश्वजिन्नामपावकम् १६ अंतराग्निःस्मृतोयस्तुभुक्तंपचतिदेहिनाम् ॥ सयज्ञेविश्वभुङ्नामसर्वलोकेषुभारत १७ ब्रह्मचारीयतात्माचसततंविपुलव्रतः ॥ ब्राह्मणाःपूजयंत्येनंपाकयज्ञेषुपावकम् १८ पवित्रागोमतीनामनदीयस्याभवत्प्रिया ॥ तस्मिन्कर्माणिसर्वाणिक्रियंतेधर्मकर्तृभिः १९ वडवाग्निःपिबत्यंभोयोऽसौपरमदारुणः ॥ ऊर्ध्वभागूर्ध्वभाङ्नामकविःप्राणाश्रितस्तुयः २० उदग्द्वारंहविर्यस्यगृहेनित्यंप्रदीयते ॥ ततःस्विष्टंभवेदाज्यंस्विष्टकृत्परमःस्मृतः २१ यःप्रशांतेषुभूतेषुमन्युर्भवतिपावकः ॥ क्रुद्धस्यतुरसोजज्ञेमन्येतांचाथपुत्रिकाम् २२ स्वाहेतिदारुणाक्रूरासर्वभूतेषुतिष्ठति ॥ त्रिदिवेयस्यसदृशोनास्तिरूपेणकश्चन ॥ अतुलत्वात्कृतोदेवैर्नाम्नाकामस्तुपावकः २३ संहर्षाद्धारयन्क्रोधंधन्वीस्रग्वीरथेस्थितः ॥ समरेनाशयेच्छत्रूनमोघोनामपावकः २४

कयज्ञेषुस्मार्तकर्मसु १८ कर्माणिगृह्याणि १९ पंचमंबार्हस्पत्यमाह वडवाग्निरिति । सएवाध्यात्मं ऊर्ध्वभागूर्ध्वगतिरुदानसंज्ञः अतएवोर्ध्वभाङ्नामकविर्ब्राह्मणः प्राणाश्रितःप्राणवाय्वभिमानी २० षष्ठंबार्हस्पत्यमाह उदग्द्वारमिति । 'उत्तरार्धात्स्विष्टकृतम्' इतिश्रुतेः । उदगागमनंगृहेस्त्रीसंबद्धेकर्मणिततस्तेनस्विष्टंसुष्ठुइष्टंभवति आज्यंआज्यादिद्रव्यंच तत्रोत्तरार्धायोगात्पृथग्ग्रहणं तत्रापिस्विष्टकृत्प्रापणार्थम् २१ सप्तमींकन्यामाह यइति । पावकोबृहस्पतिः मन्युःक्रोधरूपीभवतितदायोऽस्यरसस्तेजःप्रभवःप्रस्वेदःजज्ञेजातः तामेवतज्जामेवपुत्रिकांमन्ये । मन्यंतीचाथपुत्रिकेतिपाठेतु सरसएवपुत्रिकामन्यंती देवतोद्देशेनत्यक्तंहविरनुजानती २२ कासावित्यतआह स्वाहेत्यर्द्धेन । अस्यास्त्रिगुणात्मकत्वात्तादृशींतत्संततिमाह त्रिदिवेइति । एतेनराजस्याःस्वाहायाःकामरूपासंततिरुक्ता २३ तामस्याःसंततिंक्रोधाभिचाराद्यात्मिकामाह संहर्षादिति । जेष्याम्येवेत्युत्साहःसंहर्षः २४

सात्विक्याःस्वाहायाःसंततिमाह उक्थइति । उदउर्ध्वंमोक्षपदंनयत्युक्थः त्रिभिरुक्थैः उत्तिष्ठत्यस्मात्कर्मफलमित्युक्थं । तत्रशरीरादुत्थितंकर्मेतिशरीरमुक्थं । शरीरोत्थापकतयाप्राणउक्थं । प्राणोत्थापकतयापरमात्माऽप्युक्थं । सजन्योऽग्निस्त्रिभिरत्युक्थैरभिष्टुतस्तदाऽऽत्मनास्थितः महावाचंमहतींवाचंपराख्यांतुर्यब्रह्मकलांअजनयत्आविर्भावितवान् । पूर्वेषामभ्युपासकानांयंसमाश्वासंसमाश्वसितिविश्रामंप्राप्नोत्यनेनेतितंमोक्षेहेतुंविदुर्वेदाचार्याइतिशेषः २५ ॥ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥ ॥ ॥ काश्यपइतित्रयाणांसंबंधः अत्रपाठक्रमादर्थक्रमस्यबलीयस्त्वात् आद्ययोःश्लोकयोर्व्यत्यासेनार्थोग्राह्यः अचरदिति । सपूर्वाध्यायांतोक्तउक्थोनामकाश्यपः वासिष्ठःप्राणपुत्रइतिप्राणस्यैवविशेषणं अग्निरांगिरसश्च्यवनइत्येकः १ । २ महाव्याहृतिभिःभूरग्नयेपृथिव्यैस्वाहेत्यादिभिः । भूर्भुवःस्वर्महोअग्निवायुसूर्यचंद्रपृथिव्यंतरिक्षद्युदिगुपलक्षितेनसर्वात्मकेनरूपेणतंध्यातवंतइत्यर्थः । 'तस्यैवंविदुषोयज्ञस्यात्मायजमानः । वीतरागविषयंवाचित्तम्'इतिश्रुतिस्मृत्योर्विदुषोऽपिध्येयत्वदर्शनात् जज्ञेप्रदीपइवपुत्ररूपेणाविर्भूतः अतएवअर्चिष्मानग्निरिवेतिलुप्तोपमा प्रभावनः जगत्सृष्टिकर्त्ता ३ पंचवर्णत्वमेवाहसमिद्धइति । ज्वालावर्णंशि

उक्थोनाममहाभागत्रिभिरुक्थैरभिष्टुतः ॥ महावाचंत्वजनयत्समाश्वासंहियंविदुः २५ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिआंगिरसोपाख्यानेएकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥ ॥ ॥ ॥ मार्कंडेयउवाच ॥ काश्यपोह्यथवासिष्ठःप्राणश्चप्राणपुत्रकः ॥ अग्निरांगिरसश्चैवच्यवनस्त्रिसुवर्चकः १ अचरत्सतपस्तीव्रंपुत्रार्थेबहुवार्षिकम् ॥ पुत्रंलभेयंधर्मिष्ठंयशसाब्रह्मणासमम् २ महाव्याहृतिभिर्ध्यातःपंचभिस्तैस्तदात्वथ ॥ जज्ञेतेजोमहार्चिष्मान्पंचवर्णःप्रभावनः ३ समिद्धोऽग्निःशिरस्तस्यबाहूसूर्यनिभौतथा ॥ त्वङ्नेत्रेचसुवर्णाभेकृष्णेजंघेचभारत ४ पंचवर्णःसतपसाकृतस्तैःपंचभिर्जनैः ॥ पांचजन्यःश्रुतोदेवःपंचवंशकरस्तुसः ५ दशवर्षसहस्राणितपस्तप्त्वामहातपाः ॥ जनयत्पावकंघोरंपितॄणांसप्रजाःसृजन् ६ बृहद्रथंतरंमूर्ध्नोवक्त्राद्धातरसाहरौ ॥ शिवंनाभ्यांबलादिंद्रंवाय्वग्नीप्राणतोऽसृजत् ७ बाहुभ्यामनुदात्तौचविश्वेभूतानिचैवह ॥ एतान्सृष्ट्वाततःपंचपितॄणामसृजत्सुतान् ८ बृहद्रथस्यप्रणिधिःकाश्यपस्यमहत्तरः ॥ भानुरंगिरसोधीरःपुत्रोवर्चस्यसौभरः ९ प्राणस्यचानुदात्तस्तुव्याख्याताःपंचविंशतिः ॥ देवान्यज्ञमुषश्चान्यान्सृजन्पंचदशोत्तरान् १० सुभीममतिभीमंचभीमंभीमबलाबलम् ॥ एतान्यज्ञमुषःपंचदेवानांह्यसृजत्तपः ११

रस्तस्येत्यर्थः तथात्वगिति त्वचोऽपिसूर्यनिभत्वमुक्तम् ४ तपसाकृतइतितपोनामेत्यर्थः सएवपांचजन्यश्च यौगिकमस्यनामद्वयम् ५ पितॄणांपावकंदक्षिणाग्निं प्रजाःसृजन्प्रजास्रष्टा ६ बृहत्मूर्ध्नः रथंतरंवक्त्रात् वाशब्दश्चार्थः एतेअहोरात्रदेवते । 'राथंतरीवैराव्यहर्बार्हतम्' इतिश्रुतेः । अतएव तरसावेगेनहरतःआयुष्यादीतितरसाहरौ शिवंअहंकाराभिमानिनंरुद्रंनाभ्यांनाभितःप्राणतःप्राणंसृष्ट्वावाय्वग्नीअसृजदितिसर्वत्रसंबध्यते ७ अनुदात्तौमंत्रेप्राकृतोऽनुदात्तः शतपथब्राह्मणेचवैकृतोऽनुदात्तः 'उदात्तमनुदात्तमनंत्यम्' इतिभाषिकसूत्रेणप्राकृतोदात्तस्यब्राह्मणेऽनुदात्तत्वविधानात् तेनाभ्यांचतद्वान्मंत्रब्राह्मणभागात्मकोवेदोलभ्यते बाहुभ्यामितिहस्तस्वरेणतयोरनुदात्तयोःप्रदर्शनीयत्वंसूचितं एतच्चवेदांतराणामप्युपलक्षणं विश्वेसमनस्केंद्रियदेवताः भूतानिपंच एतान्विंशतिसंख्याकान् ८ बृहद्रथस्यवासिष्ठस्यप्रणिधिरंशतइतिशेषः अंगिरसश्च्यवनस्य वर्चस्यसुवर्चकस्य ९ असुरसृष्टिमाह देवानिति । उत्तरानपाश्वासान् १० भीमबलमबलंचेतिसमाहारः तपस्तपःसंज्ञःपांचजन्यः ११

१२ । १३ यज्ञयाजिनःइष्टमित्युत्तरश्लोकादपकृष्यते १४ । १५ तदादानंतेषामादेयोभागःबहिर्वेद्यामुत्करेदेशे । 'तुषैर्वैफलीकरणैर्देवाहविर्यज्ञेभ्योरक्षांसिनिरभजन्नस्नामहायज्ञात'इतिश्रुतेः अस्नालोहितेन तत्तस्माद्धेतोः यत्रचाग्निरंतर्वेद्यां १६ पक्षाभ्यामिवचक्राभ्यामुपलक्षितेतत्रचयनेप्रवर्त्तितेहविर्धानेशकटेप्रवर्त्तितेसति चिताग्नेश्चयनकर्त्तुर्यजमानस्यआज्यंतदुपलक्षितंहविःएतेउद्रहन्तुद्रहंत्युपर्यवहरंतीत्यर्थः मंत्रैरक्षोघ्नैःप्रशमिताःसंतइष्टंहविर्नमुष्णंति १७ एवमसुराणांनामानिभागधेयंनिवृत्त्युपायंचोक्त्वा पुनःपांचजन्यवंशमनुसंधत्ते बृहदुक्थइति। तपस्यतपसः भूमिमुपाश्रितइतितस्यैवपृथिव्यभिमानिदेवतात्वमुक्तम् १८ मित्रविंदोमहाविराड्बृहस्पत्यपेक्षयाश्रेष्ठः तस्मैतद्भावप्राप्तये। मित्रविंदामहावैराजीत्याश्वलायनवचनादिदमूहनीयम् १९ । २० ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे विंशत्यधिकद्विशततमोऽध्यायः



सुमित्रंमित्रवंतंचमित्रज्ञंमित्रवर्धनम् ॥ मित्रधर्माणमित्येतान्देवानभ्यसृजत्तपः १२ सुरप्रवीरंवीरंचसुरेशंचसुवर्चसम् ॥ सुराणामपिहंतारंपंचैतानसृजत्तपः १३ त्रिविधंसंस्थिताह्येतेपंचपंचपृथक्पृथक् ॥ मुष्णंत्यत्रस्थिताह्येतेस्वर्गतोयज्ञयाजिनः १४ तेषामिष्टंहरंत्येतेनिघ्नंतिचमहद्धविः ॥ स्पर्धयाहव्यवाहानांनिघ्नंत्येतेहरंतिच १५ बहिर्वेद्यांतदादानंकुशलैःसंप्रवर्तितम् ॥ तदेतेनोपसर्पंतियत्रचाग्निःस्थितोभवेत् १६ चिताग्नेरुद्वहन्नाज्यंपक्षाभ्यांतत्प्रवर्तिते ॥ मंत्रैःप्रशमिताह्येतेनेष्टंमुष्णंतियज्ञियम् १७ बृहदुक्थतपस्यैवपुत्रोभूमिमुपाश्रितः ॥ अग्निहोत्रेहूयमानेपृथिव्यांसद्भिरिज्यते १८ रथंतरश्चतपसःपुत्रोऽग्निःपरिपठ्यते ॥ मित्रविंदायवैतस्मैहविरध्वर्यवोविदुः १९ मुमुदेपरमप्रीतःसहपुत्रैर्महायशाः २० ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिमार्कंडेयसमास्यापर्वणिआंगिरसोपाख्यानेविंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥ ॥ मार्कंडेयउवाच ॥ गुरुभिर्नियमैर्जातोभरतोनामपावकः ॥ अग्निःपुष्टिमतिर्नामतुष्टःपुष्टिंप्रयच्छति ॥ भरत्येषप्रजाःसर्वास्ततोभरतउच्यते १ अग्निर्यश्चशिवोनामशक्तिपूजापरश्चसः ॥ दुःखार्तानांचसर्वेषांशिवकृत्सततंशिवः २ तपसस्तुफलंदृष्ट्वासंप्रवृद्धंतपोमहत् ॥ उद्धर्तुकामोमतिमान्पुत्रोजज्ञेपुरंदरः ३ ऊष्माचैवोष्मणोजज्ञेसोऽग्निर्भूतस्यलक्ष्यते ॥ अग्निश्चापिमनुर्नामप्राजापत्यमकारयत् ४ शंभुमग्निमथप्राहुर्ब्राह्मणावेदपारगाः ॥ आवसथ्यंद्विजाःप्राहुर्दीप्तमग्निंमहाप्रभम् ५ ऊर्जस्कारान्हव्यवाहान्सुवर्णसदृशप्रभान् ॥ ततस्तपोह्यजनयत्पंचयज्ञसुतानिह ६ प्रशांतेऽग्निर्महाभागपरिश्रांतोगवांपतिः ॥ असुराञ्जनयन्घोरान्मर्त्यांश्चैवपृथग्विधान् ७

॥ २२० ॥ ॥ सिंहावलोकनन्यायेनशंयोःपौत्रमूर्जपुत्रंभरतंस्तातिसार्धेन गुरुभिरिति। पुष्टिमतिरित्येकंनाम १ तथैवतपस्तृतीयंसुतंशिवंस्तौति अग्निर्यश्चेति। शक्तिश्चिच्छक्तिस्तस्याःपूजानिर्विकल्पसमाधिरूपा २ तपसएवपूर्वोक्तचत्वारिंशतोऽन्येपुरंदरऊष्मामनुःशंभुरावसथ्यइतिपंचपुत्रानाहचतुर्भिः तपसइति। तपसोऽग्नेःफलमैश्वर्यंसंप्रवृद्धंदृष्ट्वातदुद्धर्तुंपिप्स्यंदायंपुत्रएवलभतेइतिदर्शनात्तदीयमैश्वर्यंप्राप्तुंपुरंदरोऽस्यपुत्रोजातः ३ ऊष्माचतपसःसकाशाज्जज्ञे योभूतेषूष्मणोहेतोर्लक्ष्यते अकारयदकरोत् स्वार्थेणिच् ४ । ५ उपसंहरति ऊर्जस्करानिति। यज्ञसुतान्यज्ञेऽभिषुतान् आदिकर्मणिक्तः सोमभागिनइत्यर्थः यद्वा यज्ञःसोमःसुतोयेभ्यस्तेइतियोगः ६ प्रशांतेऽस्तकालेपरिश्रांतोगवांरश्मीनांपतिःसूर्योऽग्निर्भवति। 'आदित्योवाअस्तंयन्नग्निमनुप्रविशति'इतिश्रुतेः। यश्चघोरानसुरान्जनयन्भवतितंतपोऽजनयदितिपूर्वेणान्वयः ७

तपसइति । मनुमितिप्राजापत्यकर्तृत्वमुच्यते भानुंनामतः अंगिराश्चसृजदितिसंबंधः । तपःपुत्रस्याप्यंगिरःसृज्यत्वोक्तिर्भानुंप्रतिकुलालपितृवदंगिरसोऽन्यथासिद्धत्वंमाभूदितितेनमूलकारणमेवांशात्कार्यात्म टइवतत्तद्वेषेणस्फुरतीतिसिद्धम् । अतएवआकाशाद्वायुरित्यादावाकाशभावमापन्नआत्मैववायुमसृजन्नकेवलआकाशइतिव्याख्यातंसंप्रदायविद्भिः ८ एवंबृहदादीन्भान्वंतान्तपसःपुत्रानुक्त्वातत्पौत्रा नाह भानोरिति ९ । १० बलदोमन्युमान्विष्णुरितित्रयःसुप्रजायाःसुताः ११ तत्रोपांशुयाजदेवताविष्णुरुभयत्रस्मर्यमाणस्त्रयोदशामावास्यायामाहुतयोहूयंते । चतुर्दशपौर्णमास्या मितिलिंगदर्शनमन्यथयति दर्शेऽपिविष्णोःस्मरणेनचतुर्दशाहुतियोगात् अतएवांतरेणहविषीविष्णुमुपांश्वैतरेयिणइत्याश्वलायनः सप्रमाणमुभयत्रोपांशुयाजमवगमयति १२ भानुभार्यायाबृहद्भासायाः संततिराग्रयणस्थैंद्राग्नावयवोऽग्निरेकः १३ हविषामाग्नेयादीनामष्टानांयोनिरुद्धवस्थानंवैश्वदेवेपर्वणिमुख्योविश्वदेवसंज्ञकोऽग्निर्द्वितीयः स्तुभःस्तूयतेभातीतिस्तुभस्तृतीयः १४ निशानाम्नीभान्वपरना

तपसश्चमनुंपुत्रंभानुंचाप्यंगिराःसृजत् ॥ बृहद्भानुंतुतंप्राहुर्ब्राह्मणवेदपारगाः ८ भानोर्भार्यासुप्रजातुबृहद्भासातुसूर्यजा ॥ असृजेतांतुषट्पुत्रान्शृणुतासांप्रजा विधिम् ९ दुर्बलानांतुभूतानामसून्यःसंप्रयच्छति ॥ तमग्निंबलदंप्राहुःप्रथमंभानुतःसुतम् १० यःप्रशांतेषुभूतेषुमन्युर्भवतिदारुणः ॥ अग्निःसमन्युमान्नाम द्वितीयोभानुतःसुतः ११ दर्शेचपौर्णमासेचयस्येहहविरुच्यते ॥ विष्णुर्नामेहयोऽग्निस्तुधृतिमान्नामसोंऽगिराः १२ इंद्रेणसहितंयस्यहविराग्रयणंस्मृतम् ॥ अग्निराग्रयणोनामभानोरेवान्वयस्तुसः १३ चातुर्मास्येषुनित्यानांहविषांयोनिरग्रहः ॥ चतुर्भिःसहितःपुत्रैर्भानोरेवान्वयःस्तुभः १४ निशात्वजनयत्कन्यामग्नीषोमावुभौतथा ॥ मनोरेवाभवद्भार्यासुषुवेपंचपावकान् १५ पूज्यतेहविषाग्र्येणचातुर्मास्येषुपावकः ॥ पर्जन्यसहितःश्रीमानग्निर्वैश्वानरस्तुसः १६ अस्य लोकस्यसर्वस्ययःप्रभुःपरिपच्यते ॥ सोऽग्निर्विश्वपतिर्नामद्वितीयोवैमनोःसुतः १७ ततःस्विष्टंभवेदाज्यंस्विष्टकृत्परमस्तुसः ॥ कन्यासारोहिणीनामहिरण्य कशिपोःसुता १८ कर्मणासौबभौभार्यासवह्निःसप्रजापतिः ॥ प्राणानाश्रित्ययोदेहंप्रवर्त्तयतिदेहिनाम् ॥ तस्यसन्निहितोनामशब्दरूपस्यसाधनः १९ शुक्ल कृष्णगतिर्देवोयोबिभर्तिहुताशनम् ॥ अकल्मषःकल्मषाणांकर्त्ताक्रोधाश्रितस्तुसः २०

म्नोमनोरपरातृतीयाभार्याऽभवत् कन्यांवक्ष्यमाणांरोहिणीमग्निंसोममन्यान्पंचेत्यष्टावपत्यानिसुषुवे १५ शेषान्पंचक्रमेणाह पूज्यतइत्यादिना । चातुर्मास्यानामारंभात्पूर्वंद्युवैश्वानरपार्जन्येष्टिःक्रियते तत्रवैश्वानरःप्रथमोमनुपुत्रः १६ परिपच्यतेऽन्नंयेनेतिशेषः सविश्वपतिर्द्वितीयः १७ स्विष्टकृद्देवकन्यारोहिणीपंचभ्योऽधिका १८ तस्याश्चकिंचिद्दोषजंभार्यात्वं वस्तुतस्तुसवन्हिःप्रजापति र्मनुसंज्ञैव कर्मणामैथुनतःप्रजाजननाख्येननिमित्तेन तथाचश्रुतिः । ‘ सइममेवात्मानंद्वेधापातयत्ततःपतिश्चपत्नीचाभवताम् ’ इति । सन्निहितोनामतृतीयःशब्दरूपस्यशब्दरूपग्रहणस्यसाधनःप्रवर्त्तकः १९ चतुर्थमाहद्वाभ्यां शुक्लेति । यस्मादुपास्त्याकर्मणाऽऽराधिताद्क्रमेणशुक्लकृष्णेगती अर्चिरादिधूमादिमार्गावपुनरावृत्तिपुनरावृत्तिफलौप्राप्येतेसशुक्लकृष्णगतिः अकल्मषःशुक्लत्वात् कल्मषाणांकाम्यकर्मणाम् २०

८ अनुचक्रंसैन्यमनुलक्षीकृत्यप्रयांति । ' चक्रंसैन्यरथांगयोः'इतिविश्वः । पाठांतरेऽनुयात्रायात्रोपकरणपालाइत्यर्थः ९ । १० पदातिनःपद्भ्यामतितुंसततंगंतुंशीलंयेषांतेपदातयः ११ । १२ । १३ । १४
॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे पंचषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥ ॥ ॥ ॥ अथेति । शिबीनांशिबिवंश्यानांक्षत्रियाणां मंदंस्वैरं अवेक्ष्यसंकोच्य तदेवाहवि

निरीक्षतेत्वांविपुलायताक्षःसुपुष्पितःपर्वतवासनित्यः ॥ असौतुयःपुष्करिणीसमीपेश्यामोयुवातिष्ठतिदर्शनीयः ८ इक्ष्वाकुराज्ञःसुभवस्यपुत्रःसएवहंताद्विषतांसु
गात्रि ॥ यस्यानुचक्रंध्वजिनःप्रयांतिसौवीरकाद्वादशराजपुत्राः ९ शोणाश्वयुक्तेषुरथेषुसर्वेमखेषुदीप्ताइवहव्यवाहाः ॥ अंगारकःकुंजरोगुप्तकश्चशत्रुंजयःसंजय
सुप्रवृद्धौ १० भयंकरोऽथभ्रमरोरविश्चशूरःप्रतापःकुहनश्चनाम ॥ यंषट्सहस्रारथिनोऽनुयांतिनागाहयाश्चैवपदातिनश्च ११ जयद्रथोनामयदिश्रुतस्तेसौवीर
राजःसुभगेसएषः ॥ तस्यापरेभ्रातरोऽदीनसत्वाबलाहकानीकविदारणाद्याः १२ सौवीरवीराःप्रवरायुवानोराजानमेतेबलिनोऽनुयांति ॥ एतैःसहायैरुपयाति
राजामरुद्गणैरिंद्रइवाभिगुप्तः १३ अजानतांख्यापयनःसुकेशिकस्यासिभार्यादुहिताचकस्य १४ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिद्रौपदीहरणपर्वणिकोटि
कास्यप्रश्नेपंचषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥ ॥ वैशंपायनउवाच ॥ अथाब्रवीद्द्रौपदीराजपुत्रीपृष्टाशिबीनांप्रवरेणतेन ॥ अवेक्ष्यमंदंप्रविमुच्यशा
खांसंगृह्णतीकौशिकमुत्तरीयम् १ बुद्ध्याऽभिजानामिनरेंद्रपुत्रनमादृशीत्वामभिभाष्टुमर्हति ॥ नत्वेहवक्ताऽस्तितवेहवाक्यमन्योनरोवाऽप्यथवाऽपिनारी २ एका
ह्यहंसंप्रतितेनवाचंददानिवैभद्रनिबोधचेदम् ॥ अहंह्यरण्येकथमेकमेकात्वामालपेयंनिरतास्वधर्मे ३ जानामिचत्वांसुरथस्यपुत्रंयंकोटिकास्येतिविदुर्मनुष्याः ॥
तस्मादहंशैब्यतथैवतुभ्यमाख्यामिबंधून्प्रथितंकुलंच ४ अपत्यमस्मिद्रुपदस्यराज्ञःकृष्णेतिमांशैब्यविदुर्मनुष्याः ॥ साऽहंवृणेपंचजनान्पतित्वेयेखांडवप्रस्थगताः
श्रुतास्ते ५ युधिष्ठिरोभीमसेनार्जुनौचमाद्र्याश्चपुत्रौपुरुषप्रवीरौ ॥ तेमांनिवेश्येहदिशश्चतस्रोविभज्यपार्थामृगयांप्रयाताः ६ प्राचींराजादक्षिणांभीमसेनोजयःप्र
तीचींयमजावुदीचीम् ॥ मन्येतुतेषांरथसत्तमानांकालोऽभितःप्राप्तइहोपयातुम् ७ संमानितायास्यथतैर्यथेष्टंविमुच्यवाहानवरोहयध्वम् ॥ प्रियातिथिर्धर्मसुतो
महात्माप्रीतोभविष्यत्यभिवीक्ष्ययुष्मान् ८ एतावदुक्त्वाद्रुपदात्मजासाशैब्यात्मजंचंद्रमुखीप्रतीता ॥ विवेशतांपर्णशालांप्रशस्तांसंचिंत्यतेषामतिथित्वमर्थे ९
॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिद्रौपदीहरणपर्वणिद्रौपदीवाक्येषट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥ ॥ वैशंपायनउवाच ॥ तथासीनेषुसर्वेषुते
पुराजसुभारत ॥ यदुक्तंकृष्णयासार्धंतत्सर्वंप्रत्यवेदयत् १ कोटिकास्यवचःश्रुत्वाशैब्यंसौवीरकोऽब्रवीत् ॥ यदावाचंव्याहरंत्यामस्यांमेरमतेमनः २ सीमंतिनीनांमु
ख्यायांविनिवृत्तःकथंभवान् ॥ एतांदृष्ट्वास्त्रियोमेऽन्यायथाशाखामृगस्त्रियः ३

मुच्येति कौशिकंकोशजम् १ अभिभाष्टुंअभिभाषितुम् २ तेनकारणेन ३ । ४ पंचजनान् पंचपुरुषान् ५ । ६ जयोऽर्जुनः ७ । ८ तेषामर्थे अतिथिषुयोग्यंस्वधर्मपूजादिकंकर्तुंसंचिंत्यशालांविवेश ९ ॥ इत्यारण्य
केपर्वणि नीलकंठीये भारतभावदीपे षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥ तथेति । १ सौवीरकोजयद्रथः २ यदाअस्यांमेमनोरमते तदाभवान्कथंविनिवृत्तइतियोज्यम् ३

४ । ५ । ६ । ७ सिंहगोष्ठं सिंहसभां । 'गोष्ठंगोस्थानकंगोष्ठीसभासंलापयोःस्त्रियाम्' इतिमेदिनी । लिंगंत्वविवक्षितं गोष्ठमिवगोष्ठमितिवा स्थानमेव ८ सप्तमोबलाहकादीन्षड्भ्रातॄनुपलक्ष्य आत्मनाशरीरेण सप्तानांपूरणः ९ । १० अनुतिष्ठसिपालयसि विदितालब्धाः ११ । १२ । १३ । १४ । १५ । १६ । १७ श्रियःसंक्षयेसतीतिशेषः हीनलक्ष्मीकेइत्यर्थः १८ समाःसंवत्सरान् १९ । २० । २१ । २२ । २३

प्रतिभांतिमहाबाहोसत्यमेतद्ब्रवीमिते ॥ दर्शनादेवहिमनस्तयामेऽपहृतंभृशम् ४ तांसमाचक्ष्वकल्याणींयदिस्याच्छैब्यमानुषी ॥ कोटिकउवाच ॥ एषावैद्रौपदीकृष्णाराजपुत्रीयशस्विनी ५ पंचानांपांडुपुत्राणांमहिषीसंमताभृशम् ॥ सर्वेषांचैवपार्थानांप्रियाबहुमतासती ६ तयासमेत्यसौवीरसौवीराभिमुखोव्रज ॥ वैशंपायनउवाच ॥ एवमुक्तःप्रत्युवाचपश्यामिद्रौपदीमिति ७ पतिःसौवीरसिंधूनांदुष्टभावोजयद्रथः ॥ सप्रविश्याश्रमंपुण्यंसिंहगोष्ठंवृकोयथा ८ आत्मनासप्तमःकृष्णामिदंवचनमब्रवीत् ॥ कुशलंतेवरारोहेभर्त्तारस्तेऽप्यनामयाः ९ येषांकुशलकामाऽसितेऽपिकच्चिदनामयाः ॥ द्रौपद्युवाच ॥ अपितेकुशलंराजन्राष्ट्रेकोशेबलेतथा १० कच्चिदेकःशिबीनाढ्यान्सौवीरान्सहसिंधुभिः ॥ अनुतिष्ठसिधर्मेणयेचान्येविदितास्त्वया ११ कौरव्यःकुशलीराजाकुंतीपुत्रोयुधिष्ठिरः ॥ अहंचभ्रातरश्चास्ययांश्चान्यान्परिपृच्छसि १२ पाद्यंप्रतिगृहाणेदमासनंचनृपात्मज ॥ मृगान्पंचाशतंचैवप्रातराशंददानिते १३ ऐणेयान्पृषतान्न्यंकून्हरिणाञ्शरभाञ्शशान् ॥ ऋक्षान्रुरून्शंबरांश्चगवयांश्चमृगान्बहून् १४ वराहान्महिषांश्चैवयाश्चान्यामृगजातयः ॥ प्रदास्यतिस्वयंतुभ्यंकुंतीपुत्रोयुधिष्ठिरः १५ जयद्रथउवाच ॥ कुशलंप्रातराशस्यसर्वंमेदित्सितंत्वया ॥ एहिमेरथमारोहसुखमाप्नुहिकेवलम् १६ गतश्रीकान्हृतराज्यान्कृपणान्गतचेतसः ॥ अरण्यवासिनःपार्थान्नानुरोद्धुंत्वमर्हसि १७ नैवप्राज्ञागतश्रीकंभर्त्तारमुपयुंजते ॥ युंजानमनुयुंजीतनश्रियःसंक्षयेवसेत् १८ श्रियाविहीनाराष्ट्राच्चविनष्टाःशाश्वतीःसमाः ॥ अलंतेपांडुपुत्राणांभक्त्याक्लेशमुपासितुम् १९ भार्यामेभवसुश्रोणित्यजैनान्सुखमाप्नुहि ॥ अखिलान्सिंधुसौवीरानाप्नुहित्वंमयासह २० ॥ वैशंपायनउवाच ॥ इत्युक्तासिंधुराजेनवाक्यंहृदयकंपनम् ॥ कृष्णातस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी २१ अवमत्यास्यतद्वाक्यमाक्षिप्यचसुमध्यमा ॥ मैवमित्यब्रवीत्कृष्णालज्जस्वेतिचसैंधव २२ साकांक्षमाणाभर्तॄणामुपयातमनिंदिता ॥ विलोभयामासपरंवाक्यैर्वाक्यानियुंजती २३ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिद्रौपदीहरणपर्वणिजयद्रथद्रौपदीसंवादेसप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

॥ वैशंपायनउवाच ॥ सरोषरागोपहतेनवल्गुनासरागनेत्रेणनतोन्नतभ्रुवा ॥ मुखेनविस्फूर्यसुवीरराष्ट्रपंततोऽब्रवीत्तंद्रुपदात्मजापुनः १ यशस्विनस्तीक्ष्णविषान्महारथानभिब्रुवन्मूढनलज्जसेकथम् ॥ महेंद्रकल्पान्निरतान्स्वकर्मसुस्थितान्समूहेष्वपियक्षरक्षसाम् २

॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥ ॥ सरोषेति । रोषेणरागोरक्तिमातेनसहितंसरोषरागं तदुपहतंचम्लानंचतेनवल्गुनासुंदरेण नतेस्वभावतउन्नतेक्रोधेनभ्रुवौयस्यास्तथा विस्फूर्यफूत्कारंकृत्वा १ अभिअभिक्रम्यब्रुवन् स्थितानचलान् यक्षादिभिरप्यजेयानित्यर्थः २

ईडयंस्तुत्यं वनेचरंवानप्रस्थं पापंपापवचनं प्रवदंतिसंतइतिशेषः श्वनराःशुनकतुल्यानरास्त्वादृशास्तुएवमुक्तरीत्याभर्षंतिब्रुवंति ३ क्षत्रियसंनिवेशेनृपसमाजे पातालमुखेमहागर्ते प्रतिसंहरेत्प्रतिषेधेत ४ उपत्यका
मद्रिसमीपभूमिं दंडीदंडमात्रायुधोयूथात्समूहादपसेधसिअपकर्षसि ५ बाल्यात्मौढ्यात् पक्ष्माणिमुखोपरिस्थकेशान् पदासमाहत्यलुनासिछिनत्सि ६ । ७ । ८ वेण्वादयःफलिताएवनश्यंति कर्कटीचपरिणतग
र्भानश्यतीतिलोकप्रसिद्धं ९ विभीषणेनभयप्रदर्शनेन १० वयमिति। सप्तदशअष्टौकर्माणिनवशक्त्यादयश्चनित्यंसंतियेषुतानिसप्तदशानि नित्ययोगेमत्वर्थीयोर्शआद्यच् । तत्र कृषिर्वणिक्पथोदुर्गंसेतुःकुंजरबंधनं ॥
खन्याकरकरादानंशून्यानांचनिवेशनं ॥ अष्टौसंधानकर्माणिनियुक्तानिमनीषिभिः' इतिकर्माष्टकंकोशवृद्धिकरं तथा प्रभुशक्तिर्मंत्रशक्तिरुत्साहशक्तिः प्रभुसिद्धिर्मंत्रसिद्धिरुत्साहसिद्धिः प्रभूदयोमंत्रोदयउत्साहो
दयः प्रभुत्वादीनांस्वरूपतःसामर्थ्यतः फलतश्चयेषुनित्ययोगइत्यर्थः अनवमेषुअनीचेषु षड्भ्योगुणेभ्यः ल्यब्लोपेपंचमी षड्गुणान्प्राप्यपांडवेभ्योऽभ्यधिकाःतेचशौर्यंतेजोधृतिदाक्षिण्यदानैश्वर्याणि भवताऽप्यु

नोंकिंचिदीड्यंप्रवदंतिपापंवनेचरंवागृहमेधिनंवा ॥ तपस्विनंसंपरिपूर्णविद्यंभषंतिहैवंश्वनराःसुवीर ३ अहंतुमन्येतवनास्तिकश्चिदेतादृशेक्षत्रियसंनिवेशे ॥ यस्त्वद्यपा
तालमुखेपतंतंपाणौगृहीत्वाप्रतिसंहरेत ४ नागंप्रभिन्नंगिरिकूटकल्पमुपत्यकांहैमवतींचरंतम् ॥ दंडीवयूथादपसेधसित्वंयोजेतुमाशंससिधर्मराजम् ५ बाल्यात्प्रसुप्त
स्यमहाबलस्यसिंहस्यपक्ष्माणिमुखाल्लुनासि ॥ पदासमाहत्यपलायमानःक्रुद्धंयदाद्रक्ष्यसिभीमसेनम् ६ महाबलंघोरतरंप्रवृद्धंजातंहरिंपर्वतकंदरेषु ॥ प्रसुप्तमुग्रंप्रपदेनहं
सियःक्रुद्धमायोत्स्यसिजिष्णुमुग्रम् ७ कृष्णोरगौतीक्ष्णमुखौद्विजिह्वौमत्तःपदाऽऽक्रामसिपुच्छदेशे ॥ यःपांडवाभ्यांपुरुषोत्तमाभ्यांजघन्यजाभ्यांप्रयुयुत्ससेत्वम् ८
यथाचवेणुःकदलीनलोवाफलंत्यभावायनभूतयेऽऽत्मनः ॥ तथैवमांतैःपरिरक्ष्यमाणामादास्यसेकर्कटकीवगर्भम् ९ ॥ जयद्रथउवाच ॥ जानामिकृष्णेविदितंममैतद्य
थाविधास्तेनरदेवपुत्राः ॥ नत्वेवमेतेनविभीषणेनशक्यावयंत्रासयितुंत्वयाद्य १० वयंपुनःसप्तदशेषुकृष्णेकुलेषुसर्वेऽनवमेषुजाताः ॥ षड्भ्योगुणेभ्योऽभ्यधिकाविही
नान्मन्यामहेद्रौपदिपांडुपुत्रान् ११ साक्षिप्रमातिष्ठगजंरथंवानवाक्यमात्रेणवयंहिशक्याः ॥ आशंसवात्वंकृपणंवदंतीसौवीरराजस्यपुनःप्रसादम् १२ ॥ द्रौपद्युवाच ॥
महाबलाकिंत्विहदुर्बलेवसौवीरराजस्यमताऽहमस्मि ॥ नाहंप्रमाथादिहसंप्रतीतासौवीरराजंकृपणंवदेयम् १३ यस्याहिकृष्णौपदवींचरेतांसमास्थितावेकरथेसमेतौ ॥
इंद्रोऽपितांनापहरेत्कथंचिन्मनुष्यमात्रःकृपणःकुतोऽन्यः १४ यथाकिरीटीपरवीरघातीनिघ्नन्रथस्थोद्विषतांमनांसि ॥ मदंतरेत्वद्ध्वजिनींप्रवेष्टाकक्षंदहन्नग्निरिवोष्णगेषु
१५ जनार्दनःसांधकवृष्णिवीरामहेष्वासाकेकयाश्चापिसर्वे ॥ एतेहिसर्वेममराजपुत्राःप्रहृष्टरूपाःपदवींचरेयुः १६ मौर्वीविसृष्टाःस्तनयित्नुघोषागांडीवमुक्तास्त्वतिवेग
वंतः ॥ हस्तंसमाहत्यधनंजयस्यभीमाःशब्दंघोरतरंनदंति १७

क्ताः शौर्यंतजइतियत्रयुद्धेचाप्यपलायनंशौर्यं एवांतर्भूतमितिषडेवक्षत्रियकर्माणितस्यगुणत्वेनोच्यंते संधिविग्रहयानासनद्वैधीभावाश्रयाख्यास्तुगुणानीतिशास्त्रोक्तानिहगृह्यंतेतेषांसर्वेषांमुत्कर्षानाधायकत्वात हीनव
लएवसंधिद्वैधादीनिइच्छतिनप्रबलइति ११ शक्याःनिवारितुमितिशेषः पुनरितिपांडवपराजयानंतरंवाइदानीमेववा त्वंमत्प्रसादमाशंसप्रार्थय १२ प्रमाथात्निग्रहात प्रतीतासादराप्रख्यातावा सभायांवस्त्रराशिप्रदा
नेनभगवदनुगृहीतत्वात । 'प्रतीतःसादरेज्ञातेहृष्टे'इतिमेदिनी १३ कृष्णौवासुदेवार्जुनौ पदवींचरेतामन्वेषणंकुरुतएवेत्यर्थः १४ मदंतरेमन्निमित्तंप्रवेष्टाप्रकर्षेणवेष्टयिष्यति उष्णगेषुनिदाघेषु १५ । १६ गांडीवमु
क्ताइतिमूचनाच्छराइतिविशेष्यानिर्देशोनदोषाय १७

१.८ अभविष्यत्भविष्यतीत्यर्थे व्यत्ययेनलृङ् १.९. अधमेतिच्छेदः २० । २१. संभ्रमंभयंआगतैवास्मि नतुत्वद्वशेस्थास्यामीत्यर्थः २२ । २३ । २४ । २५ । २६ । २७ । २८ ॥ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥ ततइति १. महावनंकाम्यकं २ महावनंमहानालयः गृहिणीगृहमुच्यतइत्युक्तेर्गृहिणी । 'वनंनपुंसकंनीरेनिवासालयकानने' इतिमेदिनी। महाधनमितिपाठेमहच्चतद्धनंचेतिस्त्रीरूपमेवधनं ३ समाच्छाद्यमोहयित्वा समन्युःदैन्यसहितः प्राणानामाध्यात्मिकानामिंद्रियाणांपतिर्मुख्यःप्राणः ४ अराजकंराजहीनं शौंडैःशुंडयाविदितैर्गजैःपीतरसःपीतजलः



गांडीवमुक्तांश्चमहाशरौघान्पतंगसंगानिवशीघ्रवेगान् ॥ यदाद्रष्टाऽस्यर्जुनंवीर्यशालिनंतदास्वबुद्धिंप्रतिनिंदिताऽसि १८ सशंखघोषःसतलत्रघोषोगांडीवधन्वा मुहुरुद्वहंश्च ॥ यदाशरानर्पयितातवोरसितदामनस्तेकिमिवाभविष्यत् १९ गदाहस्तंभीममभिद्रवंतंमाद्रीपुत्रौसंपततौदिशश्च ॥ अमर्षजंक्रोधविषंवमंतौदृष्ट्वाचिरंतापमुपैष्यसेऽधम २० यथावाहंनातिचरेकथंचित्पतीन्महार्हान्मनसाऽपिजातु ॥ तेनाद्यसत्येनवशीकृतंत्वांद्रष्टाऽस्मिपार्थैःपरिकृष्यमाणम् २१ नसंभ्रमंगंतुमहंहिशक्ष्येत्वयानृशंसेनविकृष्यमाणा ॥ समागताऽहंहिकुरुप्रवीरैःपुनर्वनंकाम्यकमागताऽस्मि २२ ॥ वैशंपायनउवाच ॥ सातानुप्रेक्ष्यविशालनेत्रा जिघृक्षमाणानवभर्त्सयंती ॥ प्रोवाचमामास्पृशतेऽतिभीताधौम्यंप्रचुक्रोशपुरोहितंसा २३ जग्राहतामुत्तरवस्त्रदेशेजयद्रथस्तंसमवाक्षिपत्सा ॥ तयासमाक्षिप्ततनुःसपापःपपातशाखीवनिकृत्तमूलः २४ प्रगृह्यमाणातुमहाजवेनमुहुर्विनिःश्वस्यचराजपुत्री ॥ साऽऽकृष्यमाणारथमारुरोहधौम्यस्यपादावभिवाद्यकृष्णा ॥ २५ ॥ धौम्यउवाच ॥ नेयंशक्यात्वयानेतुमविजित्यमहारथान् ॥ धर्मंक्षत्रस्यपौराणमवेक्षस्वजयद्रथ २६ क्षुद्रंकृत्वाफलंपापंत्वंप्राप्स्यसिनसंशयः ॥ आसाद्यपांडवान्वीरान्धर्मराजपुरोगमान् २७ ॥ वैशंपायनउवाच ॥ इत्युक्त्वाह्रियमाणांतांराजपुत्रींयशस्विनीम् ॥ अन्वगच्छत्तदाधौम्यःपदातिगणमध्यगः २८ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिद्रौपदीहरणपर्वणिद्रौपदीहरणेअष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ ततोदिशःसंप्रविहृत्यपार्थामृगान्वराहान्महिषांश्चहत्वा ॥ धनुर्धराःश्रेष्ठतमाःपृथिव्यांपृथक्चरंतःसहिताबभूवुः १ ततोमृगव्यालगणानुकीर्णंमहावनंतद्विहगोपघुष्टम् ॥ भ्रातॄंश्चतानभ्यवदद्युधिष्ठिरःश्रुत्वागिरोव्याहरतांमृगाणाम् २ आदित्यदीप्तांदिशमभ्युपेत्यमृगाद्विजाःक्रूरमिमेवदंति ॥ आयासमुग्रंप्रतिवेदयंतोमहावनंशत्रुभिर्बाध्यमानम् ३ क्षिप्रंनिवर्तध्वमलंमृगैर्नोमनोहिमेदूयतिदह्यतेच ॥ बुद्धिंसमाच्छाद्यचमेसमन्युरुद्धूयतेप्राणपतिःशरीरे ४ सरःसुपर्णेनहृतोरगंयथाराष्ट्रंयथाऽराजकमात्तलक्ष्मि ॥ एवंविधंमेप्रतिभातिकाम्यकंशौंडैर्यथापीतरसश्चकुंभः ५ तेसैंधवैरत्यनिलोग्रवेगैर्महाजवैर्वाजिभिरुह्यमानाः ॥ युक्तैर्बृहद्भिःसुरथैर्नृवीरास्तदाऽऽश्रमायाभिमुखाबभूवुः ६ तेषांतुगोमायुरनल्पघोषोनिवर्त्ततांवाममुपेत्यपार्श्वम् ॥ प्रव्याहरत्तत्प्रविमृश्यराजाप्रोवाचभीमंचधनंजयंच ७

यथादासीमुदकुंभंनयंतीमनुलक्ष्यमहामात्रस्तयाऽज्ञानमेव गजंतत्रप्रहितो नीत्वा तेनतज्जलंशोषयति साचाकस्माद्धटंलघुतयारिक्तंपश्चाज्जानातितद्वत् अस्माभिरज्ञातोऽस्मद्धनंकश्चिद्धरिष्यति तदारिक्तकुंभवद्धनंपश्चाद्द्रक्ष्यामइत्यर्थः ५ सैंधवैःसिंधुदेशजैर्वाजिभिरश्वैः सुरथैःशोभनरथैः समानाधिकरणंतृतीयात्रयम् ६ । ७

८ प्रेष्यवधूंदासभार्याम ९ अंतितरःसमीतरः आर्ततरइतिपपाठः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ पुरायावदनर्हतेतनुंनददाति तावच्छीघ्रमनुयातेतिचतुर्थेनसंबंधः १९ । २० । २१

यथावदत्येषविहीनयोनिःशालावृकोवाममुपेत्यपार्श्वम् ॥ सुव्यक्तमस्मानवमन्यपापैःकृतोऽभिमर्दःकुरुभिःप्रसह्य ८ इत्येवतेतद्वनमाविशंतोमहत्यरण्येमृगयांच
रित्वा ॥ बालामपश्यंततदारुदंतींधात्रेयिकांप्रेष्यवधूंप्रियायाः ९ तामिंद्रसेनस्त्वरितोऽभिसृत्यरथादवप्लुत्यततोऽभ्यधावत् ॥ प्रोवाचचैनांवचनंनरेंद्रधात्रेयिकामंतितर
स्तदानीम् १० किंरोदिषित्वंपतिताधरण्यांकिंतेमुखंशुष्यतिदीनवर्णम् ॥ कच्चिन्नपापैःसुनृशंसकृद्भिःप्रमाथिताद्रौपदीराजपुत्री ११ अचिंत्यरूपासुविशालनेत्राशरीर
तुल्याकुरुपुंगवानाम् ॥ यद्येवदेवीपृथिवींप्रविष्टादिवंप्रपन्नाऽप्यथवासमुद्रम् १२ तस्यागमिष्यंतिपदेहिपार्थायथाहिसंतप्यतिधर्मपुत्रः ॥ कोहीदृशानामरिमर्दनानां
क्लेशक्षमानामपराजितानाम् १३ प्राणैःसमामिष्टतमांजिहीर्षेदनुत्तमंरत्नमिवप्रमूढः ॥ नबुध्यतेनाथवतीमिहाद्यबहिश्चरंहृदयंपांडवानाम् १४ कस्याद्यकायंप्रतिभिद्य
घोरामहींप्रवेक्ष्यंतिशिताःशराग्र्याः ॥ मात्वंशुचस्तांप्रतिभीरुविद्धियथाऽद्यकृष्णापुनरेष्यतीति १५ निहत्यसर्वान्द्विषतःसमग्रान्पार्थाःसमेष्यंत्यथयाज्ञसेन्या ॥ अथा
ब्रवीच्चारुमुखंविमृश्यधात्रेयिकासारथिमिंद्रसेनम् १६ जयद्रथेनापहृताप्रमथ्यपंचेंद्रकल्पान्परिभूयकृष्णा ॥ तिष्ठंतिवर्त्मानिनवान्यमूनिवृक्षाश्चनम्लांतितथैवभग्नाः
१७ आवर्तयध्वंह्यनुयातशीघ्रंनदूरयातैवहिराजपुत्री ॥ सन्नह्यध्वंसर्वएवेंद्रकल्पामहांतिचारूणिचदंशनानि १८ गृह्णीतचापानिमहाधनानिशरांश्चशीघ्रंपदवींचरध्वम् ॥
पुराहिनिर्भर्त्सनदंडमोहिताप्रमोहचित्तावदनेनशुष्यता १९ ददातिकस्मैचिदनर्हतेतनुंवराज्यपूर्णामिवभस्मनिस्रुचम् ॥ पुरातुषाग्नाविवहूयतेहविःपुराश्मशानेस्रगिवाप
विद्ध्यते २० पुराचसोमोऽध्वरगोऽवलिह्यतेशुनायथाविप्रजनेप्रमोहिते ॥ महत्यरण्येमृगयांचरित्वापुराशृगालोनलिनींविगाहते २१ मावःप्रियायाःसुनसंसुलोचनं
चंद्रप्रभाच्छंवदनंप्रसन्नम् ॥ स्पृश्याच्छुभंकश्चिदकृत्यकारीश्वावैपुरोडाशमिवाध्वरस्थम् ॥ एतानिवर्त्मान्यनुयातशीघ्रंमावःकालःक्षिप्रमिहात्यगाद्वै २२ ॥ युधिष्ठिर
उवाच ॥ भद्रेप्रतिक्रामनियच्छवाचंमाऽस्मत्सकाशेपरुषाण्यवोचः ॥ राजानोवायदिवाराजपुत्राबलेनमत्तावंचनांप्राप्नुवंति २३ ॥ वैशंपायनउवाच ॥ एतावदुक्त्वाप्रय
युर्हिशीघ्रंतान्येववर्त्मान्यनुवर्त्तमानाः ॥ मुहुर्मुहुर्व्यालवदुच्छ्वसंतोज्यांविक्षिपंतश्चमहाधनुर्भ्यः २४ ततोऽपश्यंस्तस्यसैन्यस्यरेणुमुद्धूतंवैवाजिखुरप्रणुन्नम् ॥ पदातीनां
मध्यगतंचधौम्यंविक्रोशंतंभीममभिद्रवेति २५ तेसांत्व्यधौम्यंपरिदीनसत्वाःसुखंभवानेत्वितिराजपुत्राः ॥ श्येनायथैवामिषसंप्रयुक्ताजवेनतत्सैन्यमथाभ्यधावन् २६
तेषांमहेंद्रोपमविक्रमाणांसंरब्धानांधर्षणाद्याज्ञसेन्याः ॥ क्रोधःप्रजज्वालजयद्रथंचदृष्ट्वाप्रियांतस्यरथेस्थितांच २७

२२ प्रतिक्रामदूरेभव परुषाणि अनर्हतेतनुंददातीत्यादीनिदुःश्राव्याणिमत्तत्वात् वंचनांस्वजनस्यतवैववधरूपाम् २३ । २४ । २५ । २६ धर्षणात्पराभवात् २७

२८ ॥ इत्या० प० नी० भा० ऊनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥ ततइति १ । २ । ३ अनायुष्यमायुर्नाशकंमृत्युदमित्यर्थः ४ । ५ । ६ । ७ परेहि शरणंगच्छ एनंधर्मराजम् ८ । ९ आजानेया



प्रचुक्रुशुश्चाप्यथसिंधुराजंवृकोदरश्चैवधनंजयश्च ॥ यमौचराजाचमहाधनुर्धरास्ततोदिशःसंमुमुहुःपरेषाम् २८ ॥ इतिश्रीमहाभारतेआरण्यकेप० द्रौ० ह० प० पार्थाग मनेऊनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥ वैशंपायनउवाच ॥ ततोघोरतरःशब्दोवनेसमभवत्तदा ॥ भीमसेनार्जुनौदृष्ट्वाक्षत्रियाणाममर्षिणाम् १ तेषांध्वजा ग्राण्यभिवीक्ष्यराजास्वयंदुरात्माकुरुपुंगवानाम् ॥ जयद्रथोयाज्ञसेनीमुवाचरथेस्थितांभानुमतींहतौजाः २ आयांतीमेपंचरथामहांतोमन्येचकृष्णेपतयस्तवैते ॥ साजा नतीख्यापयनःसुकेशिपरंपरंपांडवानांरथस्थम् ३ ॥ द्रौपद्युवाच ॥ किंतेज्ञातैर्मूढमहाधनुर्धरैरनायुष्यंकर्मकृत्वाऽतिघोरम् ॥ एतेवीराःपतयोमेसमेतानवःशेषःकश्चिदिहा स्तियुद्धे ४ आख्यातव्यंत्वेवसर्वंमुमूर्षोर्मयातुभ्यंपृष्टयाधर्मएषः ॥ नमेव्यथाविद्यतेत्वद्भयंवासंपश्यंत्याःसानुजंधर्मराजम् ५ यस्यध्वजाग्रेनदतोमृदंगौनंदोपनंदौमधुरौ युक्तरूपौ ॥ एतंस्वधर्मार्थविनिश्चयज्ञंसदाजनाःकृत्यवंतोऽनुयांति ६ यएषजांबूनदशुद्धगौरःप्रचंडघोणस्तनुरायताक्षः ॥ एतंकुरुश्रेष्ठतमंवदंतियुधिष्ठिरंधर्मसुतंपतिंमे ७ अप्येषशत्रोःशरणागतस्यदद्यात्प्राणान्धर्मचारीनृवीरः ॥ परेह्येनंमूढजवेनभूतयेत्वमात्मनःप्रांजलिर्न्यस्तशस्त्रः ८ अथाप्येनंपश्यसियंरथस्थंमहाभुजंशालमिवप्रवृद्धम्॥ संदष्टोष्ठंभ्रुकुटीसंहतभ्रुवंवृकोदरोनामपतिर्ममैषः ९ आजानेयाबलिनःसाधुदांतामहाबलाःशूरमुदावहंति ॥ एतस्यकर्माण्यतिमानुषाणिभीमेतिशब्दोऽस्यगतःपृथिव्याम् १० नास्यापराद्धाःशेषमवाप्नुवंतिनायंवैरंविस्मरतेकदाचित् ॥ वैरस्यांतंसंविधायोपयातिपश्चाच्छांतिंनचगच्छत्यतीव ११ धनुर्धराग्र्योधृतिमान्यशस्वीजितेंद्रियोवृद्ध सेवीनृवीरः ॥ भ्राताचशिष्यश्चयुधिष्ठिरस्यधनंजयोनामपतिर्ममैषः १२ योवैनकामान्नभयान्नलोभात्त्यजेद्धर्मंननृशंसंचकुर्यात् ॥ सएषवैश्वानरतुल्यतेजाःकुंतीसुतः शत्रुसहःप्रमाथी १३ यःसर्वधर्मार्थविनिश्चयज्ञोभयार्तानांभयहर्तामनीषी ॥ यस्योत्तमंरूपमाहुःपृथिव्यांयंपांडवाःपरिरक्षंतिसर्वे १४ प्राणैर्गरीयांसमनुव्रतंवैसएषवी रोनकुलःपतिर्मे ॥ यःखड्गयोधीलघुचित्रहस्तोमहांश्चधीमान्सहदेवोऽद्वितीयः १५ यस्याद्यकर्मद्रक्ष्यसेमूढसत्वशतक्रतोर्वादैत्यसेनासुसंख्ये ॥ शूरःकृतास्त्रोमतिमा न्मनस्वीप्रियंकरोधर्मसुतस्यराज्ञः १६ यएषचंद्रार्कसमानतेजाजघन्यजःपांडवानांप्रियश्च ॥ बुद्ध्यासमोयस्यनरोनविद्यतेवक्तातथासत्सुविनिश्चयज्ञः १७ सएष शूरोनित्यममर्षणश्चधीमान्प्राज्ञःसहदेवःपतिर्मे ॥ त्यजेत्प्राणान्प्रविशेद्धव्यवाहंनत्वेवैषव्याहरेद्धर्मबाह्यम् १८ सदामनस्वीक्षत्रधर्मेरतश्चकुंत्याःप्राणैरिष्टतमोनृवीरः ॥ विशीर्यतींनावमिवार्णवांतेरत्नाभिपूर्णांमकरस्यपृष्ठे १९

अश्वविशेषाः १० अपराद्धाःअपराधवंतः शेषंजीवनं वैरस्यांतंशत्रुनाशंसंविधाय आहत्योपयाति कुर्वन्नपिअतीवशांतिंनोपैतीति मरणांतानिवैराणीतिलोकेप्रसिद्धं अयंतुमारयित्वापिपुत्रपौत्रादिकमपिनशेषयती त्यस्यांतंदीर्घकोपित्वमुक्तम् ११ । १२ । १३ यंपरिरक्षंतिमनकुलःइतिद्वयोःसंबंधः १४ । १५ मूढसत्वमूढबुद्धे शतक्रतोर्वाशतक्रतोरिव १६ । १७ । १८ । १९

जीवएवजीवन्नेवअमृत्वैवपुनर्जन्मप्राप्स्यसे २०। २१ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥ संतिष्ठतेति १। २। ३। ४ अंतरमभ्यहारयत् भीमजयद्रथयो

सेनांतवेमांहतसर्वयोधांविक्षोभितांद्रक्ष्यसिपांडुपुत्रैः ॥ इत्येतेवैकथिताःपांडुपुत्रायांस्त्वंमोहादवमन्यप्रवृत्तः ॥ यद्येतेभ्योमुच्यसेऽरिष्टदेहःपुनर्जन्मप्राप्स्यसे जीवएव २० ॥ वैशंपायनउवाच ॥ ततःपार्थाःपंचपंचेंद्रकल्पास्त्यक्त्वात्रस्तान्प्रांजलींस्तान्पदातीन् ॥ यथानीकंशरवर्षांधकारंचक्रुःक्रुद्धाःसर्वतःसंनिगृह्य २१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिद्रौपदीहरणप० द्रौपदीवाक्येसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥ ॥ ॥ ॥ वैशंपायनउवाच ॥ संतिष्ठतप्रहरततूर्णंविपरिधावत ॥ इतिस्मसैंधवोराजाचोदयामासतान्नृपान् १ ततोघोरतमःशब्दोरणेसमभवत्तदा ॥ भीमार्जुनयमान्दृष्ट्वासैन्यानांसयुधिष्ठिरान् २ शिबिसौवीरसिंधूनांविषादश्चाप्यजायत ॥ तान्दृष्ट्वापुरुषव्याघ्रान्व्याघ्रानिवबलोत्कटान् ३ हेमचित्रसमुत्सेधांसर्वशैक्यायसींगदाम् ॥ प्रगृह्याभ्यद्रवद्भीमःसैन्धवंकालचोदितम् ४ तदंतरमथावृत्यकोटिकास्योऽभ्यहारयत् ॥ महतारथवंशेनपरिवार्यवृकोदरम् ५ शक्तितोमरनाराचैर्वीरबाहुप्रचोदितैः ॥ कीर्यमाणोऽपिबहुभिर्नस्मभीमोऽभ्यकंपत ६ गजंतुसगजारोहंपदातींश्चचतुर्दश ॥ जघानगदयाभीमःसैंधवध्वजिनीमुखे ७ पार्थःपंचशतान्शूरान्पार्वतीयान्महारथान् ॥ परीप्समानःसौवीरंजघानध्वजिनीमुखे ८ राजास्वयंसुवीराणांप्रवराणांप्रहारिणाम् ॥ निमेषमात्रेणशतंजघानसमरेतदा ९ ददृशेनकुलस्तत्ररथात्प्रस्कंद्यखड्गधृक् ॥ शिरांसिपादरक्षाणांबीजवत्प्रवपन्मुहुः १० सहदेवस्तुसंयायरथेनगजयोधिनः ॥ पातयामासनाराचैर्द्रुमेभ्यइवबर्हिणः ११ ततस्त्रिगर्तःसधनुरवतीर्यमहारथात् ॥ गदयाचतुरोवाहान्राज्ञस्तस्यतदाऽवधीत् १२ तमभ्याशगतंराजापदातिंकुंतिनंदनः ॥ अर्धचंद्रेणबाणेनविव्याधोरसिधर्मराट् १३ सभिन्नहृदयोवीरोवक्त्राच्छोणितमुद्वमन् ॥ पपाताभिमुखःपार्थंछिन्नमूलइवद्रुमः १४ इंद्रसेनद्वितीयस्तुरथात्प्रस्कंद्यधर्मराट् ॥ हताश्वःसहदेवस्यप्रतिपेदेमहारथम् १५ नकुलंत्वभिसंधायक्षेमंकरमहामुखौ ॥ उभावुभयतस्तीक्ष्णैःशरवर्षैरवर्षताम् १६ तोमरैरभिवर्षंतौजीमूताविववार्षिकौ ॥ एकैकेनविपाठेनजघ्नेमाद्रवतीसुतः १७ त्रिगर्तराजःसुरथस्तस्याथरथधूर्गतः ॥ रथमाक्षेपयामासगजेनगजयानवित् १८ नकुलस्त्वभीस्तस्माद्रथाच्चर्मासिपाणिमान् ॥ उद्भ्रांतंस्थानमास्थायतस्थौगिरिरिवाचलः १९ सुरथस्तंगजवरंवधायनकुलस्यतु ॥ प्रेषयामाससक्रोधमत्युच्छ्रितकरंततः २० नकुलस्तस्यनागस्यसमीपपरिवर्त्तिनः ॥ सविषाणंभुजंमूलेखड्गेननिरकृंतत २१ सविनद्यमहानादंगजःकिंकिणिभूषणः ॥ पतन्नवाक्शिराभूमौहस्त्यारोहमपोथयत् २२ सतत्कर्ममहत्कृत्वाशूरोमाद्रवतीसुतः ॥ भीमसेनरथंप्राप्यशर्मलेभेमहारथः २३ भीमस्त्वापततोराज्ञःकोटिकास्यस्यसंगरे ॥ सूतस्यनुदतोवाहान्क्षुरेणापाहरच्छिरः २४

मध्येप्रवेशेनव्यवधानंकृतवान् । रथवंशेनरथवर्गेण ५। ६। ७। ८। ९। १०। ११। १२। १३। १४। १५। १६। १७। १८। १९। २० सविषाणंभुजं सदंतंशुंडादंडं मूलेगंडप्रदेशे २१। २२। २३। २४

२५ तलयुक्तेनमुष्टियुक्तेन 'तलंस्वरूपे । इत्युपक्रम्य । चपेटेचत्सरौ' इतिमेदिनी त्सरुःखड्गादिमुष्टिः २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ आदिश्यनामविश्राव्य ३५ सैनिकान्

नबुबोधहतंसूतंसराजाबाहुशालिना ॥ तस्याश्वाव्यद्रवन्संख्येहतसूतास्ततस्ततः २५ विमुखंहतसूतंतंभीमःप्रहरतांवरः ॥ जघानतलयुक्तेनप्रासेनाभ्येत्य पांडवः २६ द्वादशानांतुसर्वेषांसौवीराणांधनंजयः ॥ चकर्तनिशितैर्भल्लैर्धनूंषिचशिरांसिच २७ शिबीनिक्ष्वाकुमुख्यांश्चत्रिगर्तान्सैंधवानपि ॥ जघानातिर थःसंख्येबाणगोचरमागतान् २८ सादिताःप्रत्यदृश्यंतबहवःसव्यसाचिना ॥ सपताकाश्चमातंगाःसध्वजाश्चमहारथाः २९ प्रच्छाद्यपृथिवींतस्थुःसर्वमायोध नंप्रति ॥ शरीराण्यशिरस्कानिविदेहानिशिरांसिच ३० श्वगृध्रकंककाकोलभासगोमायुवायसाः ॥ अतृप्यंस्तत्रवीराणांहतानांमांसशोणितैः ३१ हतेषुतेषु वीरेषुसिंधुराजोजयद्रथः ॥ विमुच्यकृष्णांसंत्रस्तःपलायनमनाऽभवत् ३२ सतस्मिन्संकुलेसैन्येद्रौपदीमवतार्यताम् ॥ प्राणप्रेप्सुरुपाधावद्वनंयेननराधमः ३३ द्रौपदींधर्मराजस्तुदृष्ट्वाधौम्यपुरस्कृताम् ॥ माद्रीपुत्रेणवीरेणरथमारोपयत्तदा ३४ ततस्तद्विद्रुतंसैन्यमपयातेजयद्रथे ॥ आदिश्यादिश्यनाराचैराजघानवृको दरः ३५ सव्यसाचीतुतंदृष्ट्वापलायंतंजयद्रथम् ॥ वारयामासनिघ्नंतंभीमंसैंधवसैनिकान् ३६ ॥ अर्जुनउवाच ॥ यस्यापचारात्प्राप्तोऽयमस्मान्क्लेशोदुरा सदः ॥ तमस्मिन्समरोद्देशेनपश्यामिजयद्रथम् ३७ तमेवान्विषभद्रंतेकिंतेयोधैर्निपातितैः ॥ अनामिषमिदंकर्मकथंवामन्यतेभवान् ३८ ॥ वैशंपायनउवाच ॥ इत्युक्तोभीमसेनस्तुगुडाकेशेनधीमता ॥ युधिष्ठिरमभिप्रेक्ष्यवाग्मीवचनमब्रवीत् ३९ हतप्रवीरारिपवोभूयिष्ठंविद्रुतादिशः ॥ गृहीत्वाद्रौपदींराजन्निवर्ततुभवानितः ४० यमाभ्यांसहराजेंद्रधौम्येनचमहात्मना ॥ प्राप्याश्रमपदंराजन्द्रौपदींपरिसांत्वय ४१ नहिमेमोक्ष्यतेजीवन्मूढःसैन्धवकोनृपः ॥ पातालतलसंस्थोऽपिय दिशक्रोऽस्यसारथिः ४२ ॥ युधिष्ठिरउवाच ॥ नहंतव्योमहाबाहोदुरात्माऽपिससैंधवः ॥ दुःशलामभिसंस्मृत्यगांधारींचयशस्विनीम् ४३ ॥ वैशंपायन उवाच ॥ तच्छ्रुत्वाद्रौपदीभीममुवाचव्याकुलेंद्रिया ॥ कुपिताह्रीमतीप्राज्ञापतीभीमार्जुनावुभौ ४४ कर्तव्यंचेत्प्रियंमह्यंवध्यःसपुरुषाधमः ॥ सैंधवापसदःपा पोदुर्मतिःकुलपांसनः ४५ भार्याभिहर्तावैरीयोयश्चराज्यहरोरिपुः ॥ याचमानोऽपिसंग्रामेनमोक्तव्यःकथंचन ४६ इत्युक्तौतौनरव्याघ्रौययतुर्यत्रसैंधवः ॥ राजानिववृतेकृष्णामादायसपुरोहितः ४७ सप्रविश्याश्रमपदमपविद्धबृसीमठम् ॥ मार्कंडेयादिभिर्विप्रैरनुकीर्णंददर्शह ४८ द्रौपदीमनुशोचद्भिर्ब्राह्मणैस्तैःसमा हितैः ॥ समियायमहाप्राज्ञःसभार्योभ्रातृमध्यगः ४९ तेस्मतंमुदिताद्दृष्ट्वापुनःप्रत्यागतंनृपम् ॥ जित्वातान्सिंधुसौवीरान्द्रौपदींचाहृतांपुनः ५०

निघ्नंतंभीमंवारयामास ३६ समरोद्देशेरणभूमौ ३७ अन्विषअन्विच्छ ३८ । ३९ । ४० । ४१ । ४२ दुःशलांदुर्योधनभगिनीम् ४३ । ४४ । ४५ । ४६ । ४७ अपविद्धाइतस्ततोविशीर्णा बृस्योऋषीणामासनानि मठाश्चच्छात्राणामालयायत्रतत् ४८ । ४९ । ५०

५१ । ५२ । ५३ । ५४ । ५५ अतिविक्रमयुक्तानिकर्माणि ५६ । ५७ । ५८ । ५९ । ६० ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥ जयद्रथस्त्विति १ । २ अत्रास्यजयद्रथस्यपरदारहर्तुःक्षत्रियाधमत्वात्पंचधामारणमुक्तंशिरोगृहीत्वेत्यादिना शिरःकेशेष्वित्यर्थः ताडयामासचपेटाभिरितिशेषः यथोक्तंनीतिशास्त्रे । 'वामपाणिकचोत्पीडाभूमौनिष्पेषणं

सतैःपरिवृतोराजातत्रैवोपविवेशह ॥ प्रविवेशाश्रमंकृष्णायमाभ्यांसहभाविनी ५१ भीमसेनार्जुनौचापिश्रुत्वाक्रोशगतंरिपुम् ॥ स्वयमश्वांस्तुदंतौतौजवेनैवाभ्यधावताम् ५२ इदमत्यद्भुतंचात्रचकारपुरुषोऽर्जुनः ॥ क्रोशमात्रगतानश्वान्सैंधवस्यजघानयत् ५३ सहिदिव्यास्त्रसंपन्नःकृच्छ्रकालेऽप्यसंभ्रमः ॥ अकरोद्दुष्करंकर्मशरैरस्त्रानुमंत्रितैः ५४ ततोऽभ्यधावतांवीरावुभौभीमधनंजयौ ॥ हताश्वंसैंधवंभीतमेकंव्याकुलचेतसम् ५५ सैंधवस्तुहतान्दृष्ट्वातथाऽश्वान्स्वान्सुदुःखितः ॥ अतिविक्रमकर्माणिकुर्वाणंचधनंजयम् ५६ पलायनकृतोत्साहःप्राद्रवद्येनवैवनम् ॥ सैंधवंत्वभिसंप्रेक्ष्यपराक्रांतंपलायने ५७ अनुयायमहाबाहुःफाल्गुनोवाक्यमब्रवीत् ॥ अनेनवीर्येणकथंस्त्रियंप्रार्थयसेबलात् ५८ राजपुत्रनिवर्तस्वनतेयुक्तंपलायनम् ॥ कथंह्यनुचरान्हित्वाशत्रुमध्येपलायसे ५९ इत्युच्यमानःपार्थेनसैंधवोनन्यवर्तत ॥ तिष्ठतिष्ठेतितंभीमःसहसाऽभ्यद्रवद्बली ॥ मावधीरितिपार्थस्तंदयावान्प्रत्यभाषत ६० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिद्रौपदीहरणपर्वणिजयद्रथपलायने एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥ ॥ समाप्तंचद्रौपदीहरणपर्व ॥ अथजयद्रथविमोक्षणपर्व ॥ वैशंपायनउवाच ॥ जयद्रथस्तुसंप्रेक्ष्यभ्रातरावुद्यतायुधौ ॥ प्राधावत्तूर्णमव्यग्रोजीवितेप्सुःसुदुःखितः १ तंभीमसेनोधावंतमवतीर्यरथाद्बली ॥ अभिद्रुत्यनिजग्राहकेशपक्षेह्यमर्षणः २ समुद्यम्यचतंभीमोनिष्पिपेषमहीतले ॥ शिरोगृहीत्वाराजानंताडयामासचैवह ३ पुनःसंजीवमानस्यतस्योत्पतितुमिच्छतः ॥ पदामूर्ध्निमहाबाहुःप्राहरद्विलपिष्यतः ४ तस्यजानूददौभीमोजघ्नेचैनमरत्निना ॥ समोहमगमद्राजाप्रहारवरपीडितः ५ सरोषंभीमसेनंतुवारयामासफाल्गुनः ॥ दुःशलायाःकृतेराजायत्तदाऽऽहेतिकौरव ६ ॥ भीमसेनउवाच ॥ नायंपापसमाचारोमत्तोजीवितुमर्हति ॥ कृष्णायास्तदनर्हायाःपरिक्लेष्टानराधमः ७ किंनुशक्यंमयाकर्तुंयद्राजासततंघृणी ॥ त्वंचबालिशयाबुद्ध्यासदैवास्मान्प्रबाधसे ८ एवमुक्त्वासटास्तस्यपंचचक्रेवृकोदरः ॥ अर्धचंद्रेणबाणेनकिंचिदब्रुवतस्तदा ९ विकत्थयित्वाराजानंततःप्राहवृकोदरः ॥ जीवितुंचेच्छसेमूढहेतुंमेगदतःशृणु १० दासोऽस्मीतितथावाच्यंसंसत्सुचसभासुच ॥ एवंतेजीवितंदद्यामेषयुद्धजितोविधिः ११ एवमस्त्वितितंराजाकृष्यमाणोजयद्रथः ॥ प्रोवाचपुरुषव्याघ्रंभीममाहवशोभिनम् १२

बलात् ॥ मूर्ध्निपादप्रहरणंजानुनोदरमर्दनं ॥ मालूराकारयामुष्ट्याकपोलेदृढताडनं ॥ कफोणिपातोप्यसकृत्सर्वतस्तलताडनं ॥'तालेनयुद्धेभ्रमणंमारणंस्मृतमष्टधा'इति ॥ चतुर्भिःक्षत्रियंहन्यात्पंचभिःक्षत्रियाधमम् ॥ षड्भिर्वैश्यंसप्तभिस्तुशूद्रंसंकरमष्टभिः' इति ३ । ४ । ५ । ६ । ७ घृणीदयावान् बालिशयास्वल्पया बाधसेशत्रुंहंतुंनददासि ८ सटाःजटाः केशसंन्निवेशोमध्येमध्येपंचसुस्थानेष्वर्धचंद्रेणबाणेनक्षौरवद्वापयामासेत्यर्थः ९ । १० । ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ बलिमुपहारं २६ । २७ । २८ नारायणःसहायोयस्यतंनारायणसहायकं २९ शरंशृणातिहिनस्तीतिशरमस्त्रं ३० नारायणसहायस्याजेयत्वंवक्तुंनारायणमाहात्म्यमेवाह देवदेवइत्यादिना । देवानांद्योतकानांसूर्यचंद्राग्निचक्षुर्मनोवाचांज्योतिषां देवःप्रकाशकः । 'येनसूर्यस्तपतितेजसेद्धःयेनचक्षूंषिपश्यंति' इत्यादिश्रुतिभ्यः । अनंतस्त्रिविधपरिच्छेदशून्यआत्मास्वरूपंयस्य । प्रधानंत्रिगुणात्मिकामाया पुरुषश्चिद्रूपस्तदुभयात्माचिदचिन्मयः । अव्यक्तोजगत्कारणरूपोबीजांतर्गतवटतुल्यःअतएवविश्वात्माविश्वएवात्माचेतनांशेन विश्वमूर्ति

ततएनंविचेष्टंतंबद्ध्वापार्थोवृकोदरः ॥ रथमारोपयामासविसंज्ञंपांसुगुंठितम् १३ ततस्तंरथमास्थायभीमःपार्थानुगस्तदा ॥ अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् १४ दर्शयामासभीमस्तुतदवस्थंजयद्रथम् ॥ तंराजाप्राहसद्दृष्ट्वामुच्यतामितिचाब्रवीत् १५ राजानंचाब्रवीद्भीमोद्रौपद्याःकथ्यतामिति ॥ दासभावंगतोह्येष पांडूनांपापचेतनः १६ तमुवाचततोज्येष्ठोभ्रातासप्रणयंवचः ॥ मुंचेममधमाचारंप्रमाणायदितेवयम् १७ द्रौपदीचाब्रवीद्भीममभिप्रेक्ष्ययुधिष्ठिरम् ॥ दासोऽयंमुच्यतांराज्ञस्त्वयापंचसटःकृतः १८ समुक्तोऽभ्येत्यराजानमभिवाद्ययुधिष्ठिरम् ॥ ववंदेविह्वलोराजंस्तांश्चदृष्ट्वामुनींस्तदा १९ तमुवाचघृणीराजाधर्मपुत्रोयुधिष्ठिरः ॥ तथाजयद्रथंदृष्ट्वागृहीतंसव्यसाचिना २० अदासोगच्छमुक्तोऽसिमैवंकार्षीःपुनःक्वचित् ॥ स्त्रीकामंवाधिगस्तुत्वांक्षुद्रःक्षुद्रसहायवान् २१ एवंविधंहिकःकुर्यात्त्वदन्यःपुरुषाधमः ॥ गतसत्वमिवज्ञात्वाकर्तारमशुभस्यतम् २२ संप्रेक्ष्यभरतश्रेष्ठःकृपांचक्रेनराधिपः ॥ धर्मेतेवर्धतांबुद्धिर्माचाधर्मेमनःकृथाः २३ साश्वःसरथपादातःस्वस्तिगच्छजयद्रथ ॥ एवमुक्तस्तुसव्रीडंतूष्णींकिंचिदवाङ्मुखः २४ जगामराजन्दुःखार्तोगंगाद्वारायभारत ॥ सदेवंशरणंगत्वाविरूपाक्षमुमापतिम् २५ तपश्चचारविपुलंतस्यप्रीतोवृषध्वजः ॥ बलिंस्वयंप्रत्यगृह्णात्प्रीयमाणस्त्रिलोचनः २६ वरंचास्मैददौदेवःसजग्राहचतच्छृणु ॥ समस्तान्सरथान्पंचजयेयंयुधिपांडवान् २७ इतिराजाऽब्रवीद्देवंनेतिदेवस्तमब्रवीत् ॥ अजय्यांश्चाप्यवध्यांश्चवारयिष्यसितान्युधि २८ ऋतेऽर्जुनंमहाबाहुंनरंनामसुरेश्वरम् ॥ बदर्यांतप्ततपसंनारायणसहायकम् २९ अजितंसर्वलोकानांदेवैरपिदुरासदम् ॥ मयादत्तंपाशुपतंदिव्यमप्रतिमंशरम् ॥ अवापलोकपालेभ्योवज्रादीन्समहाशरान् ३० देवदेवोह्यनंतात्माविष्णुःसुरगुरुःप्रभुः ॥ प्रधानपुरुषोऽव्यक्तोविश्वात्माविश्वमूर्तिमान् ३१ युगांतकालेसंप्राप्तेकालाग्निर्दहतेजगत् ॥ सपर्वतार्णवद्वीपंसशैलवनकाननम् ३२ निर्दहन्नागलोकांश्चपातालतलचारिणः ॥ अथांतरिक्षेसुमहन्नानावर्णाःपयोधराः ३३ घोरस्वराविनदिनस्तडिन्मालावलंबिनः ॥ समुत्तिष्ठन्दिशःसर्वाविवर्षंतःसमंततः ३४ ततोग्निंनाशयामासुःसंवर्ताग्निनियामकाः ॥ अक्षमात्रैश्चधाराभिस्तिष्ठंत्यापूर्वसर्वशः ३५

मान्जडांशेन ३१ एवंनारायणस्यजगद्धेतुत्वमुक्त्वातस्यजगत्संहर्तृत्वमाह युगांतेति । कालाग्निरूपोनारायणो निर्दहते ३२ । ३३ विनदिनोगर्जंतः समुत्तिष्ठन् समुदतिष्ठन् उत्तिष्ठंतीत्यर्थः ३४ नाशयामासुःपयोधराइतिपूर्वेणान्वयः अक्षमात्रैरथाक्षमात्राभिःस्थूलाभिः सामान्येनपुंसकं । यद्वाधाराभिरितिधाराशब्दआकारांतःसोमपाशब्दवत्पुंलिंगः धावमानाएवरांतिआददतेक्लेदनीयंवस्त्विति धाराः । राआदानेऽस्मात्क्विप् ३५

एकार्णवेइति । अवांतरप्रलयेऽस्मिन्पत्रननाशोक्तिर्निदाघइवतदनुपलंभमात्रपरा ३६ चतुर्युगसहस्रप्रमाणंब्रह्मणोदिनंतदंते आप्लुतासलिलैंतर्हितेत्यर्थः नारायणइत्याख्यानामयस्य । यद्वानारायणादेवआख्याप्रथाय स्यसहिरण्यगर्भःसूत्रात्माविश्वाभिमानीअतएवसहस्रपादादिमान् ३७ स्वप्नुकामः स्वदिनांते फटासहस्रंफणासहस्रमध्यतिष्ठदितिशेषः ३८ अमितद्युतिमत्यंतंद्योतमानं ३९ । ४० सत्वोद्रेकात्तमसोऽभिभवेसतिस त्वस्याविर्भावात् शून्यंप्राणिसंचाररहीनं ४१ नारायणपदंनिर्वक्तिआपइति । नराज्जातानाराः । नृनरयोर्वृद्धिश्चेतिगौरादिगणपाठात्प्राप्तोङीपगणकार्यस्यानित्यत्वान्न । तत्तनवस्तस्यनारायणस्यैवतनवः । यथा सौवर्णकुंडलंसुवर्णमेवैवंनरजाआपोनरएवेत्यर्थः नाराआपोदेहाद्याकारपरिणताअयनंनिवासस्थानंयस्य अथवा ताभिःसहतत्तादात्म्यंप्राप्याऽऽस्तेइतिवानारायणइति । 'तत्सृष्ट्वातदेवानुप्राविशत्'इति । 'आत्मेंद्रिय मनोयुक्तंभोक्तेत्याहुर्मनीषिणः'इतिचश्रुतिः परमात्मनएवसृष्टदेहेप्रवेशंदेहसंबंधेनभोक्तृत्वंचदर्शयति तेनचेतनाचेतनंसर्वंजगन्नारायणात्मकमित्युक्तंभवति ४२ प्रध्यानेति । ध्यानसमकालेप्रजाहेतोःप्रजानामुत्पत्त्यर्थं

एकार्णवेतदातस्मिन्नुपशान्तचराचरे ॥ नष्टचंद्रार्कपवनेग्रहनक्षत्रवर्जिते ३६ चतुर्युगसहस्रांतेसलिलेनाप्लुतामही ॥ ततोनारायणाख्यस्तुसहस्राक्षःसहस्रपात् ३७ सहस्रशीर्षापुरुषःस्वप्तुकामस्त्वतींद्रियः ॥ फटासहस्रविकटंशेषंपर्यंकभाजनम् ३८ सहस्रमिवतिग्मांशुसंघातममितद्युतिम् ॥ कुंदेंदुहारगोक्षीरमृणाल कुमुदप्रभम् ३९ तत्रासौभगवान्देवःस्वपन्जलनिधौतदा ॥ नैशेनतमसाव्याप्तांस्वांरात्रिंकुरुतेविभुः ४० सत्वोद्रेकात्प्रबुद्धस्तुशून्यंलोकमपश्यत ॥ इमंचो दाहरंत्यत्रश्लोकंनारायणंप्रति ४१ आपोनारास्तत्तनवइत्यपांनामशुश्रुम ॥ अयनंतेनचैवास्तेतेननारायणःस्मृतः ४२ प्रध्यानसमकालंतुप्रजाहेतोःसनातनः ॥ ध्यातमात्रेतुभगवन्नाभ्यांपद्मःसमुत्थितः ४३ ततश्चतुर्मुखोब्रह्मानाभिपद्माद्विनिःसृतः ॥ तत्रोपविष्टःसहसापद्मेलोकपितामहः ४४ शून्यंदृष्ट्वाजगत्कृत्स्नमानसानात्मनःसमान् ॥ ततोमरीचिप्रमुखान्महर्षीनसृजन्नव ४५ तेऽसृजन्सर्वभूतानित्रसानिस्थावराणिच ॥ यक्षराक्षसभूतानिपिशाचोरगमानुषान् ॥ ४६ सृज्यतेब्रह्ममूर्तिस्तुरक्षतेपौरुषीतनुः ॥ रौद्रीभावेनशमयेत्तिस्रोऽवस्थाःप्रजापतेः ४७ नश्रुतंतेसिंधुपतेविष्णोरद्भुतकर्मणः ॥ कथ्यमानानिमुनिभिर्ब्राह्मणैर्वेदपारगैः ४८ जलेनसमनुप्राप्तेसर्वतःपृथिवीतले ॥ तदाचैकार्णवेतस्मिन्नेकाकाशेप्रभुश्चरन् ४९ निशायामिवखद्योतःप्रावृट्कालेसमंततः ॥ प्रतिष्ठानाय पृथिवींमार्गमाणस्तदाऽभवत् ५० जलेनिमग्नांगांदृष्ट्वाचोद्धर्तुमनसेच्छति ॥ किंनुरूपमहंकृत्वासलिलादुद्धरेमहीम् ५१

सनातनश्चिरंतनोब्रह्मनाभिपद्माद्विनिःसृतस्तादृशेनरूपेणध्यातुर्दृष्टौप्रसभादित्यर्थः ततोध्यातमात्रेध्यानानंतरंविष्णोर्नाभ्यांपद्मःसमुत्थितः ४३ तस्मिंश्चपद्मेपितामहउपविष्टइतिक्रमभंगेनयोज्यं ४४ मरीचिप्रमुखान् 'मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः । वसिष्ठोनारदश्चैवभृगुर्नवमहर्षयः' ४५ त्रसानिजंगमानि ४६ प्रजापतेरीश्वरस्यमायाशबलस्यतिस्रोऽवस्थाएकैकगुणोत्कर्षनिमित्ताः । रजसउत्कर्षेब्रह्मासंसृज्यते । सत्वोत्कर्षे पौरुषींवैष्णवींतनुंप्रविश्यरक्षति । तमसउत्कर्षेरौद्रीभावेनरुद्रभावेनशमयेदिति ४७ हेसिंधुपते तेतवश्रुतंश्रवणंनास्ति यतोविष्णोरद्भुतकर्मणःकथ्यमानानिकथनीयानिकर्माणिनवेत्सीतिशेषः ४८ तान्येवकर्मा ण्याहएकार्णवेसत्येकाकाशेआकाशमात्रे वायुतेजःपृथिवीरहितेजलमात्रेसति ४९ खद्योतइतिप्रकाशमात्रत्वमुच्यते प्रतिष्ठानायलोकप्रतिष्ठापनार्थम् ५० । ५१

जलक्रीडायामभिरुचितंप्रीतिर्यस्य ५२ वराहवपुषमात्मानमितिशेषः वाङ्मयंचतुर्वेदमयंवेदसंमितं वेदप्रमितयज्ञरूपं ५३ वर्ष्मशरीरं ५४ दंष्ट्रेणदंष्ट्रयाम्यविशतन्यवेशयत् ५५ एवंवराहावतारमुक्त्वानरसिंहावतार माह पुनरेवेत्यादिना। अपूर्वांल्लोकेपूर्वंनदृष्टां ५६। ५७। ५८। ५९ मृगेंद्रेणापिसमुपेत्यदैत्यसमीपेगत्वासमुपाद्रवन् हिरण्यकशिपुःकरजैर्नखैर्दारितः ६० एवंनृसिंहावतारकथामुपसंहृत्यवामनानतारकथांप्रस्तौ तिएवमिति ६१. गर्भेधारितः गर्भधारितः सप्तमीतियोगविभागात्समासः ६२ दुर्दिनंप्रावृट्दिनंतत्रभवोंऽभोदःकृष्णमेघस्तत्सदृशः। 'मेघच्छन्नेऽह्निदुर्दिनम्' इत्यमरः श्रीवत्सेनोरसिभूषितइतिलुप्तविभक्तिकंपदं

एवंसंचिंत्यमनसादृष्ट्वादिव्येनचक्षुषा ॥ जलक्रीडाभिरुचितंवाराहंरूपमस्मरत् ५२ कृत्वावराहवपुषंवाङ्मयंवेदसंमितम् ॥ दशयोजनविस्तीर्णमायतंशतयोजनम् ५३ महापर्वतवर्ष्माभंतीक्ष्णदंष्ट्रंप्रदीप्तिमत् ॥ महामेघौघनिर्घोषंनीलजीमूतसन्निभम् ५४ भूत्वायज्ञवराहोवैअपःसंप्राविशत्प्रभुः ॥ दंष्ट्रेणैकेनचोद्धृत्यस्वेस्थानेन्यविशन्महीम् ५५ पुनरेवमहाबाहुरपूर्वांतनुमाश्रितः ॥ नरस्यकृत्वाऽर्धतनुंसिंहस्यार्धतनुंप्रभुः ५६ दैत्येंद्रस्यसभांगत्वापाणिंसंस्पृश्यपाणिना ॥ दैत्यानामादिपुरुषःसुरारिर्दितिनंदनः ५७ दृष्ट्वाचापूर्वपुरुषंक्रोधात्संरक्तलोचनः ॥ शूलोद्यतकरःस्रग्वीहिरण्यकशिपुस्तदा ५८ मेघस्तनितनिर्घोषोनीलाभ्रचयसन्निभः ॥ देवारिर्दितिजोवीरोनृसिंहंसमुपाद्रवत् ५९ समुपेत्यततस्तीक्ष्णैर्मृगेंद्रेणबलीयसा ॥ नारसिंहेनवपुषादारितःकरजैर्भृशम् ६० एवंनिहत्यभगवान्दैत्येंद्रंरिपुघातिनम् ॥ भूयोऽन्यःपुंडरीकाक्षःप्रभुर्लोकहितायच ६१ कश्यपस्यात्मजःश्रीमानदित्यागर्भधारितः ॥ पूर्णेवर्षसहस्रेतुप्रसूतागर्भमुत्तमम् ६२ दुर्दिनांभोदसदृशोदीप्ताक्षोवामनाकृतिः ॥ दंडीकमंडलुधरःश्रीवत्सोरसिभूषितः ६३ जटीयज्ञोपवीतीचभगवान्बालरूपधृक् ॥ यज्ञवाटंगतःश्रीमान्दानवेंद्रस्यवैतदा ६४ बृहस्पतिसहायोसौप्रविष्टोबलिनोमखे ॥ तंदृष्ट्वावामनतनुंप्रहृष्टोबलिरब्रवीत् ६५ प्रीतोऽस्मिदर्शनेविप्रब्रूहित्वंकिंददानिते ॥ एवमुक्तस्तुबलिनावामनःप्रत्युवाचह ६६ स्वस्तीत्युक्त्वाबलिंदेवःस्मयमानोऽभ्यभाषत ॥ मेदिनींदानवपतेदेहिमेविक्रमत्रयम् ६७ बलिर्ददौप्रसन्नात्माविप्रायामिततेजसे ॥ ततोदिव्याद्भुततमंरूपंविक्रमतोहरेः ६८ विक्रमैस्त्रिभिरक्षोभ्योजहाराशुसमेदिनीम् ॥ ददौशक्रायचमहींविष्णुर्देवःसनातनः ६९ एषतेवामनोनामप्रादुर्भावःप्रकीर्तितः ॥ तेनदेवाःप्रादुरासन्वैष्णवंचोच्यतेजगत् ७० असतांनिग्रहार्थायधर्मसंरक्षणायच ॥ अवतीर्णोमनुष्याणामजायतयदुक्षये ७१ सएवंभगवान्विष्णुःकृष्णेतिपरिकीर्त्यते ॥ अनाद्यंतमजंदेवंप्रभुंलोकनमस्कृतम् ७२ यंदेवंविदुषोगांति तस्यकर्माणिसैंधव ॥ यमाहुरजितंकृष्णंशंखचक्रगदाधरम् ७३ श्रीवत्सधारिणंदेवंपीतकौशेयवाससम् ॥ प्रधानंसोऽस्त्रविदुषांतेनकृष्णेनरक्ष्यते ७४ सहायःपुंडरीकाक्षःश्रीमानतुलविक्रमः ॥ समानस्यंदनेपार्थमास्थायपरवीरहा ७५

६३ बालःवामनः वाटंस्थानं ६४ बलिनोबलेःअयमिकारांतइन्नंतश्चशब्दोदृश्यते ६५ ददानित्वदीप्सितमितिशेषः ६६। ६७ दिव्यंचतदद्भुततमंचरूपंबभूवेतिशेषः ६८। ६९। ७० अवतीर्णोऽवतरणंकुर्वन्नजायत आविर्भूतःयदुक्षयेयदूनांगृहे ७१। ७२ तस्यकर्माणिविदुषोविद्वांसःगांतिगायंति ७३ सोऽर्जुनःअस्त्रविदुषांप्रधानंश्रेष्ठःयंअजितमाहुस्तेनकृष्णेनरक्ष्यते ७४। ७५

तेनकृष्णसहायत्वेनहेतुना भावःपूज्यतमः । ‘भावःपूज्यतमेलोके’ इत्यनेकार्थः ७६ दिनैकमेकदिनमेवनसर्वदा ७७ । ७८ । ७९ दक्षयज्ञेभगस्यनेत्रेनिपातितवान्भगनेत्रनिपातनः ८० । ८१ । ८२
॥ इत्यारण्यकेपर्वणिनीलकंठीयेभारतभावदीपेद्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥ ॥ एवमिति १ । २ । ३ । ४ । ५ दैवंधर्माधर्मौ विधिःसदसत्कर्मणी ताभ्यांनिर्मितं ६ ईदृशोभावःपरेणहरणं

नशक्यतेतेनजेतुंत्रिदशैरपिदुःसहः ॥ कःपुनर्मानुषोभावोरणेपार्थंविजेष्यति ७६ तमेकंवर्जयित्वातुसर्वंयौधिष्ठिरंबलम् ॥ चतुरःपांडवान्राजन्दिनैकंजेष्यसेरिपून् ७७ ॥ वैशंपायनउवाच ॥ इत्येवमुक्त्वानृपतिंसर्वपापहरोहरः ॥ उमापतिःपशुपतिर्यज्ञहात्रिपुरार्दनः ७८ वामनैर्विकटैःकुब्जैरुग्रश्रवणदर्शनैः ॥ वृतःपारिषदैर्देवैर्नानाप्रहरणोद्यतैः ७९ त्र्यंबकोराजशार्दूलभगनेत्रनिपातनः ॥ उमासहायोभगवांस्तत्रैवांतरधीयत ८० जयद्रथोऽपिमंदात्मास्वमेवभवनंययौ ॥ पांडवाश्ववनेतस्मिन्न्यवसन्काम्यकेतथा ८१ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिजयद्रथविमोक्षणपर्वणिद्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥ ॥ समाप्तंचजयद्रथविमोक्षणपर्व ॥ अथरामोपाख्यानपर्व ॥ जनमेजयउवाच ॥ एवंहृतायांकृष्णायांप्राप्यक्लेशमनुत्तमम् ॥ अतऊर्ध्वंनरव्याघ्राःकिमकुर्वतपांडवाः १ ॥ वैशंपायनउवाच ॥ एवंकृष्णांमोक्षयित्वाविनिर्जित्यजयद्रथम् ॥ आसांचक्रेमुनिगणैर्धर्मराजोयुधिष्ठिरः २ तेषांमध्येमहर्षीणांशृण्वतामनुशोचताम् ॥ मार्कंडेयमिदंवाक्यमब्रवीत्पांडुनंदनः ३ ॥ युधिष्ठिरउवाच ॥ भगवन्देवर्षीणांत्वंख्यातोभूतभविष्यवित् ॥ संशयंपरिपृच्छामिच्छिंधिमेहृदिसंस्थितम् ४ द्रुपदस्यसुताह्येषावेदिमध्यात्समुत्थिता ॥ अयोनिजामहाभागास्नुषापांडोर्महात्मनः ५ मन्येकालश्चभगवान्दैवंचविधिनिर्मितम् ॥ भवितव्यंचभूतानांयस्यनास्तिव्यतिक्रमः ६ इमांहिपत्नीमस्माकंधर्मज्ञांधर्मचारिणीम् ॥ संस्पृशेदीदृशोभावःशुचिंस्तैन्यमिवानृतम् ७ नहिपापंकृतंकिंचित्कर्मवानिंदितंक्वचित् ॥ द्रौपद्याब्राह्मणेष्वेवधर्मःसुचरितोमहान् ८ तांजहारबलाद्राजामूढबुद्धिर्जयद्रथः ॥ तस्याःसंहरणात्पापःशिरसःकेशपातनम् ९ पराजयंचसंग्रामेससहायःसमाप्तवान् ॥ प्रत्याहृतातथाऽस्माभिर्हत्वातत्सैंधवंबलम् १० तद्दारहरणंप्राप्तमस्माभिरवितर्कितम् ॥ दुःखश्चायंवनेवासोमृगयायांचजीविका ११ हिंसाचमृगजातीनांवनौकोभिर्वनौकसाम् ॥ ज्ञातिभिर्विप्रवासश्चमिथ्याव्यवसितैरियम् १२ अस्तिनूनंमयाकश्चिदल्पभाग्यतरोनरः ॥ भवतादृष्टपूर्वोवाश्रुतपूर्वोऽपिवाभवेत् १३ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिरामोपाख्यानपर्वणियुधिष्ठिरप्रश्नेत्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥ मार्कंडेयउवाच ॥ प्राप्तमप्रतिमंदुःखंरामेणभरतर्षभ ॥ रक्षसाजानकीतस्यहृताभार्याबलीयसा १ आश्रमाद्राक्षसेंद्रेणरावणेनदुरात्मना ॥ मायामास्थायतरसाहत्वागृध्रंजटायुषम् २ प्रत्याजहारतांरामःसुग्रीवबलमाश्रितः ॥ बद्ध्वासेतुंसमुद्रस्यदग्ध्वालंकांशितैःशरैः ३ ॥ युधिष्ठिरउवाच ॥ कस्मिन्रामःकुलेजातःकिंवीर्यःकिंपराक्रमः ॥ रावणःकस्यपुत्रोवाकिंवैरंतस्यतेनह ४

७ । ८ । ९ । १० । ११ मिथ्याव्यवसितैःवृथातापसवेषधरैःइयंहिंसाक्रियतइतिशेषः १२ मयासमइतिशेषः १३ ॥ ॥ इत्यारण्यकेपर्वणिनीलकंठीयेभारतभावदीपेत्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥
प्राप्तमिति १ मायांमंन्यासिवेषं २ । ३ । ४

५ । ६ । ७ । ८ त्वष्टाप्रजापतिः स्वयमेवसंकल्पेनचकार नतुमैथुनद्वारा अयोनिजामित्यर्थः ९ । १० ११ गविगोसंज्ञायांभार्यायां १२ तस्यवैश्रवणस्यकोपान्मांत्यक्त्वामत्पितरंसेवतइत्यातंज्वलनात

एतन्मेभगवन्सर्वंसम्यगाख्यातुमर्हसि ॥ श्रोतुमिच्छामिचरितंरामस्याक्लिष्टकर्मणः ५ ॥ मार्कंडेयउवाच ॥ अजोनामाऽभवद्राजामहानिक्ष्वाकुवंशजः ॥ तस्यपुत्रो दशरथःशश्वत्स्वाध्यायवाञ्छुचिः ६ अभवंस्तस्यचत्वारःपुत्राधर्मार्थकोविदाः ॥ रामलक्ष्मणशत्रुघ्नाभरतश्चमहाबलः ७ रामस्यमाताकौसल्याकैकेयीभरतस्यतु ॥ सुतौलक्ष्मणशत्रुघ्नौसुमित्रायाःपरंतपौ ८ विदेहराजोजनकःसीतातस्यात्मजाविभो ॥ यांचकारस्वयंत्वष्टारामस्यमहिषींप्रियाम् ९ एतद्रामस्यतेजन्मसीतायाश्चप्रकीर्तितम् ॥ रावणस्यापितेजन्मव्याख्यास्यामिजनेश्वर १० पितामहोरावणस्यसाक्षाद्देवःप्रजापतिः ॥ स्वयंभूःसर्वलोकानांप्रभुःस्रष्टामहातपाः ११ पुलस्त्योनामतस्यासीन्मानसोदयितःसुतः ॥ तस्यवैश्रवणोनामगविपुत्रोऽभवत्प्रभुः १२ पितरंससमुत्सृज्यपितामहमुपस्थितः ॥ तस्यकोपात्पिताराजन्ससर्जात्मानमात्मना १३ सजज्ञेविश्रवानामतस्यात्मार्धेनवैद्विजः ॥ प्रतीकारायसक्रोधस्ततोवैश्रवणस्यवै १४ पितामहस्तुप्रीतात्मादददौवैश्रवणस्यह ॥ अमरत्वंधनेशत्वंलोकपालत्वमेवच १५ ईशानेनतथासख्यंपुत्रंचनलकूबरम् ॥ राजधानीनिवेशंचलंकांरक्षोगणान्विताम् १६ विमानंपुष्पकंनामकामगंचददौप्रभुः ॥ यक्षाणामाधिपत्यंचराजराजत्वमेवच १७ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिरामोपाख्यानपर्वणिरामरावणयोर्जन्मकथनेचतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥ ॥ मार्कंडेयउवाच ॥ पुलस्त्यस्यतुयःक्रोधादर्धदेहोऽभवन्मुनिः ॥ विश्रवानामसक्रोधःसवैश्रवणमैक्षत १ बुबुधेतंतुसक्रोधंपितरंराक्षसेश्वरः ॥ कुबेरस्तत्प्रसादार्थंयततेस्मसदानृप २ सराजराजोलंकायांन्यवसन्नरवाहनः ॥ राक्षसीःप्रददौतिस्रःपितुर्वैपरिचारिकाः ३ ताःसदातंमहात्मानंसंतोषयितुमुद्यताः ॥ ऋषिंभरतशार्दूलनृत्यगीतविशारदाः ४ पुष्पोत्कटाचराकाचमालिनीचविशांपते ॥ अन्योन्यस्पर्धयाराजन्श्रेयस्कामाःसुमध्यमाः ५ सतासांभगवांस्तुष्टोमहात्माप्रददौवरान् ॥ लोकपालोपमान्पुत्रानेकैकस्यायथेप्सितान् ६ पुष्पोत्कटायांजज्ञातेद्वौपुत्रौराक्षसेश्वरौ ॥ कुंभकर्णदशग्रीवौबलेनाप्रतिमौभुवि ७ मालिनीजनयामासपुत्रमेकंविभीषणम् ॥ राकायांमिथुनंजज्ञेखरःशूर्पणखातथा ८ विभीषणस्तुरूपेणसर्वेभ्योऽभ्यधिकोऽभवत् ॥ सबभूवमहाभागोधर्मगोप्ताक्रियारतिः ९ दशग्रीवस्तुसर्वेषांश्रेष्ठोराक्षसपुंगवः ॥ महोत्साहोमहावीर्योमहासत्वपराक्रमः १० कुंभकर्णोबलेनासीत्सर्वेभ्योऽभ्यधिकोयुधि ॥ मायावीरणशौंडश्चरौद्रश्चरजनीचरः ११ खरोधनुषिविक्रांतोब्रह्मद्विट्पिशिताशनः ॥ सिद्धविघ्नकरीचापिरौद्रीशूर्पणखातदा १२

वैश्रवणंबाधितुंपुलस्त्यएवयोगबलेनविश्रवःसंज्ञंदेहांतरंचक्रेइत्यर्थः १३ । १४ । १५ । १६ । १७ ॥ इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥ पुलस्त्यस्येति १ पितरंविश्रवसं राक्षसेश्वरःकुबेरोरक्षःपुरीनायकत्वात् २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२

पित्राविश्रवसा १३ । १४ । १५ पंचदिक्षुचत्वारएकःसूर्यइतिपंचानामग्नीनांमध्यगःपंचाग्निः १६ विभीषणस्तपोऽतिष्ठदित्यन्वयः १७ । १८ । १९ । २० । २१ महदीप्सयाश्रेष्ठपदापेक्षया २२ । २३

सर्वेवेदविदःशूराःसर्वेसुचरितव्रताः ॥ ऊषुःपित्रासहरताःगंधमादनपर्वते १३ ततोवैश्रवणंतत्रददृशुर्नरवाहनम् ॥ पित्रासार्धंसमासीनमृद्ध्यापरमयायुतम् १४ जाता
मर्षास्ततस्तेतुतपसेधृतनिश्चयाः ॥ ब्रह्माणंतोषयामासुर्घोरेणतपसातदा १५ अतिष्ठदेकपादेनसहस्रंपरिवत्सरान् ॥ वायुभक्षोदशग्रीवःपंचाग्निःसुसमाहितः १६
अधःशायीकुंभकर्णोयताहारोयतव्रतः ॥ विभीषणःशीर्णपर्णमेकमभ्यवहारयन् १७ उपवासरतिर्धीमान्सदाजप्यपरायणः ॥ तमेवकालमातिष्ठत्तीव्रंतपउदारधीः
१८ खरःशूर्पणखाचैवतेषांवैतप्यतांतपः ॥ परिचर्यांचरक्षांचचक्रतुर्हृष्टमानसौ १९ पूर्णेवर्षसहस्रेतुशिरश्छित्त्वादशाननः ॥ जुहोत्यग्नौदुराधर्षस्तेनातुष्यज्जगत्प्रभुः
२० ततोब्रह्मास्वयंगत्वातपसस्तान्न्यवारयत् ॥ प्रलोभ्यवरदानेनसर्वानेवपृथक्पृथक् २१ ॥ ब्रह्मोवाच ॥ प्रीतोऽस्मिवोनिवर्तध्वंवरान्वृणुतपुत्रकाः ॥ यद्यदिष्टमृ
तेत्वेकममरत्वंतथास्तुतत् २२ यद्यदग्नौहुतंसर्वंशिरस्तेमहदीप्सया ॥ तथैवतानितेदेहेभविष्यंतियथेप्सया २३ वैरूप्यंचनतेदेहेकामरूपधरस्तथा ॥ भविष्यसिरणे
ऽरीणांविजेतानचसंशयः २४ ॥ रावणउवाच ॥ गंधर्वदेवासुरतोयक्षराक्षसतस्तथा ॥ सर्पकिंनरभूतेभ्योनमेभूयात्पराभवः २५ ॥ ॥ ब्रह्मोवाच ॥ ॥ यएते
कीर्तिताःसर्वेनतेभ्योऽस्तिभयंतव ॥ ऋतेमनुष्याद्भद्रंतेतथातद्विहितंमया २६ ॥ ॥ मार्कंडेयउवाच ॥ ॥ एवमुक्तोदशग्रीवस्तुष्टःसमभवत्तदा ॥ अवमेनेहिदु
र्बुद्धिर्मनुष्यान्पुरुषादकः २७ कुंभकर्णमथोवाचतथैवप्रपितामहः ॥ सवव्रेमहतींनिद्रांतमसाग्रस्तचेतनः २८ तथाभविष्यतीत्युक्त्वाविभीषणमुवाचह ॥ वरंवृ
णीष्वपुत्रत्वंप्रीतोऽस्मीतिपुनःपुनः २९ ॥ ॥ विभीषणउवाच ॥ ॥ परमापद्गतस्यापिनाधर्मेमेमतिर्भवेत् ॥ अशिक्षितंचभगवन्ब्रह्मास्त्रंप्रतिभातुमे ३०
॥ ब्रह्मोवाच ॥ ॥ यस्माद्राक्षसयोनौतेजातस्यामित्रकर्शन ॥ नाधर्मेधीयतेबुद्धिरमरत्वंददानिते ३१ ॥ मार्कंडेयउवाच ॥ राक्षसस्तुवरंलब्ध्वादशग्रीवोविशां
पते ॥ लंकायाश्च्यावयामासयुधिजित्वाधनेश्वरम् ३२ हित्वासभगवाँल्लंकामाविशद्गंधमादनम् ॥ गंधर्वयक्षानुगतोरक्षःकिंपुरुषैःसह ३३ विमानंपुष्पकंतस्यज
हाराक्रम्यरावणः ॥ शशापतंवैश्रवणोनत्वामेतद्वहिष्यति ३४ यस्तुत्वांसमरेहंतातमेवैतद्वहिष्यति ॥ अवमन्यगुरुंमांचक्षिप्रंत्वंनभविष्यसि ३५ विभीषणस्तुध
र्मात्मासतांमार्गमनुस्मरन् ॥ अन्वगच्छन्महाराजश्रियापरमयायुतः ३६ तस्मैसभगवांस्तुष्टोभ्राताभ्रात्रेधनेश्वरः ॥ सैनापत्यंददौधीमान्यक्षराक्षससेनयोः ३७ रा
क्षसाःपुरुषादाश्चपिशाचाश्चमहाबलाः ॥ सर्वेसमेत्यराजानमभ्यषिंचन्दशाननम् ३८

२४ । २५ । २६ । २७ तममेति । अनिष्टामपिनिद्रांमोहाद्वृतवानित्यर्थः २८ । २९ । ३० योनौक्षेत्रे नतुरेतोऽत्रराक्षसमस्ति तस्मान्मातृदोषादेवक्रौर्यंरावणादीनामित्यर्थः । नराणांमातुलक्रमइतिप्रसिद्धम्
३१ । ३२ । ३३ । ३४ नर्भविष्यसिमरिष्यसि ३५ अन्वगच्छत्कुबेरमितिशेषः ३६ । ३७ । ३८

रत्नानि । 'जातौजातौयदुत्कृष्टंतद्रत्नमभिधीयते' । विहंगमःखेचरः ३९ रावयामास हिंसार्थस्यरुङोरूपमिदम् ४० ॥ ॥इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे पंचसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥ ॥ततइति १ । २ विप्रकारैर्विविधैःप्रकारैः ३ ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ वज्रसंहननावज्रवद्दृढांगाः १३ यत्रेच्छातत्रैवनिवासोयेषां

दशग्रीवश्चदैत्यानांदेवानांचबलोत्कटः ॥ आक्रम्यरत्नान्यहरत्कामरूपीविहंगमः ३९ रावयामासलोकान्यत्तस्माद्रावणउच्यते ॥ दशग्रीवःकामबलोदेवानांभयमादधत् ४० ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिरामोपाख्यानपर्वणिरावणादिवरप्राप्तौपंचसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥ ॥ ॥ ॥ मार्कंडेयउवाच ॥ ॥ ततोब्रह्मर्षयःसर्वेसिद्धादेवर्षयस्तथा ॥ हव्यवाहंपुरस्कृत्यब्रह्माणंशरणंगताः १ ॥ ॥ अग्निरुवाच ॥ ॥ योसौविश्रवसःपुत्रोदशग्रीवोमहाबलः ॥ अवध्योवरदानेनकृतोभगवतापुरा २ सबाधतेप्रजाःसर्वाविप्रकारैर्महाबलः ॥ ततोनस्त्रातुभगवान्नान्यस्त्राताहिविद्यते ३ ॥ ॥ब्रह्मोवाच ॥ नसदेवासुरैःशक्योयुद्धेजेतुंविभावसो ॥ विहितंतत्रयत्कार्यमभितस्तस्यनिग्रहः ४ तदर्थमवतीर्णोऽसौमन्नियोगाच्चतुर्भुजः ॥ विष्णुःप्रहरतांश्रेष्ठःसतत्कर्मकरिष्यति ५ ॥ ॥ मार्कंडेयउवाच ॥ ॥ पितामहस्ततस्तेषांसंनिधौशक्रमब्रवीत् ॥ सर्वैर्देवगणैःसार्धंसंभवत्वंमहीतले ६ विष्णोःसहायानृक्षीषुवानरीषुचसर्वशः ॥ जनयध्वंसुतान्वीरान्कामरूपबलान्वितान् ७ ततोभागानुभागेनदेवगंधर्वदानवाः ॥ अवतर्तुंमहींसर्वेमंत्रयामासुरंजसा ८ तेषांसमक्षंगंधर्वींदुंदुभींनामनामतः ॥ शशासवरदोदेवोगच्छकार्यार्थसिद्धये ९ पितामहवचःश्रुत्वागंधर्वीदुंदुभीततः ॥ मंथरामानुषेलोकेकुब्जासमभवत्तदा १० शक्रप्रभृतयश्चैवसर्वेतेसुरसत्तमाः ॥ वानरर्क्षवरस्त्रीषुजनयामासुरात्मजान् ११ तेऽन्ववर्तन्पितॄन्सर्वेयशसाचबलेनच ॥ भेत्तारोगिरिशृंगाणांसालतालशिलायुधाः १२ वज्रसंहननाःसर्वेसर्वेचौघबलास्तथा ॥ कामवीर्यबलाश्चैवसर्वेयुद्धविशारदाः १३ नागायुतसमप्राणावायुवेगसमाजवे ॥ यत्रेच्छकनिवासाश्चकेचिदत्रवनौकसः १४ एवंविधायतत्सर्वंभगवाँल्लोकभावनः ॥ मंथरांबोधयामासयद्यत्कार्यंयथायथा १५ सातद्वचःसमाज्ञायतथाचक्रेमनोजवा ॥ इतश्चेतश्चगच्छंतीवैरसंधुक्षणेरता १६ ॥ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिरामोपाख्यानपर्वणिवानराद्युपत्तौषट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥ ॥ युधिष्ठिरउवाच॥ उक्तंभगवताजन्मरामादीनांपृथक्पृथक् ॥ प्रस्थानकारणंब्रह्मन्श्रोतुमिच्छामिकथ्यताम् १ कथंदाशरथीवीरौभ्रातरौरामलक्ष्मणौ ॥ संप्रस्थितौवनेब्रह्मन्मैथिलीचयशस्विनी २ ॥ मार्कंडेयउवाच ॥ जातपुत्रोदशरथःप्रीतिमानभवन्नृप ॥ क्रियारतिर्धर्मरतःसततंवृद्धसेविता ३ क्रमेणचास्यतेपुत्राव्यवर्धंतमहौजसः ॥ वेदेषुसरहस्येषुधनुर्वेदेषुपारगाः ४ चरितब्रह्मचर्यास्तेकृतदाराश्चपार्थिव ॥ यदातदादशरथःप्रीतिमानभवत्सुखी ५ ज्येष्ठोरामोभवत्तेषांरमयामासहिप्रजाः ॥ मनोहरतयाधीमान्पितुर्हृदयनंदनः ६

तेयत्रेच्छकनिवासाः १४ यद्यत्कार्यंकैकेयीप्रलोभनंरामप्रव्राजनादिच १५ संधुक्षणेदीपने १६ ॥ ॥इत्यारण्यकेपर्वणि नीलकंठीये भारतभावदीपे षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥ ॥ उक्तमिति १ । २ । ३ । ४ । ५ रामपदंनिर्वक्तिज्येष्ठइति ६

७ । ८ महांतौशत्रुजयक्षमौबाहूयस्यतं दीर्घावाजानुपर्यंतौबाहूयस्यतम् ९ । १० सर्वशोऽनुरक्ताःप्रकृतयःप्रजायस्मिंस्तंसर्वानुरक्तप्रकृतिम् ११ । १२ । १३ भद्रंतेइतियुधिष्ठिरंप्रत्याशीर्वचनं पुरोहितंवसिष्ठम्

ततःसराजामतिमान्मत्वाऽऽत्मानंवयोधिकम् ॥ मंत्रयामाससचिवैर्धर्मज्ञैश्चपुरोहितैः ७ अभिषेकायरामस्ययौवराज्येनभारत ॥ प्राप्तकालंचतेसर्वेमेनिरेमंत्रिसत्तमाः
८ लोहिताक्षंमहाबाहुंमत्तमातंगगामिनम् ॥ दीर्घबाहुंमहोरस्कंनीलकुंचितमूर्धजम् ९ दीप्यमानंश्रियावीरंशक्रादनवरंरणे ॥ पारगंसर्वधर्माणांबृहस्पतिसमंमतौ
१० सर्वानुरक्तप्रकृतिंसर्वविद्याविशारदम् ॥ जितेंद्रियममित्राणामपिदृष्टिमनोहरम् ११ नियंतारमसाधूनांगोप्तारंधर्मचारिणाम् ॥ धृतिमंतमनाधृष्यंजेतारमपरा
जितम् १२ पुत्रंराजादशरथःकौसल्यानंदिवर्धनम् ॥ संदृश्यपरमांप्रीतिमगच्छत्कुरुनंदन १३ चिंतयंश्चमहातेजागुणान्रामस्यवीर्यवान् ॥ अभ्यभाषतभद्रंतेप्रीयमाणः
पुरोहितम् १४ अद्यपुष्योनिशिब्रह्मन्पुण्यंयोगमुपैष्यति ॥ संभाराःसंभ्रियंतांमेरामश्चोपनिमंत्र्यताम् १५ इतितद्राजवचनंप्रतिश्रुत्याथमंथरा ॥ कैकेयीमभिगम्येदं
कालेवचनमब्रवीत् १६ अद्यकैकेयिदौर्भाग्यंराज्ञातेख्यापितंमहत् ॥ आशीविषस्त्वांसंक्रुद्धश्चंडोदशतुदुर्भगे १७ सुभगाखलुकौसल्यायस्याःपुत्रोऽभिषेक्ष्यते ॥ कुतो
हितवसौभाग्यंयस्याःपुत्रोनराज्यभाक् १८ सातद्वचनमाज्ञायसर्वाभरणभूषिता ॥ वेदीविलग्नमध्येवबिभ्रतीरूपमुत्तमम् १९ विविक्तेपतिमासाद्यहसंतीवशुचिस्मिता ॥
प्रणयंव्यंजयंतीवमधुरंवाक्यमब्रवीत् २० सत्यप्रतिज्ञयन्मेत्वंकाममेकंनिसृष्टवान् ॥ उपाकुरुष्वतद्राजंस्तस्मान्मुच्यस्वसंकटात् २१ ॥ राजोवाच ॥ वरंददानितेहंत
तद्गृहाणयदिच्छसि ॥ अवध्योवध्यतांकोऽद्यवध्यःकोऽद्यविमुच्यताम् २२ धनंददानिकस्याद्यह्रियतांकस्यवापुनः ॥ ब्राह्मणस्वादिहान्यत्रयत्किंचिद्वित्तमस्तिमे
२३ पृथिव्यांराजराजोऽस्मिचातुर्वर्ण्यस्यरक्षिता ॥ यस्तेऽभिलषितःकामोब्रूहिकल्याणिमाचिरम् २४ सातद्वचनमाज्ञायपरिगृह्यनराधिपम् ॥ आत्मनोबलमाज्ञायत
तएनमुवाचह २५ आभिषेचनिकंयत्तेरामार्थमुपकल्पितम् ॥ भरतस्तदवाप्नोतुवनंगच्छतुराघवः २६ सतद्राजावचःश्रुत्वाविप्रियंदारुणोदयम् ॥ दुःखार्तोभरतश्रेष्ठन
किंचिद्व्याजहारह २७ ततस्तथोक्तंपितरंरामोविज्ञायवीर्यवान् ॥ वनंप्रतस्थेधर्मात्माराजासत्योभवत्विति २८ तमन्वगच्छल्लक्ष्मीवान्धनुष्माँल्लक्ष्मणस्तदा ॥ सीता
चभार्याभद्रंतेवैदेहीजनकात्मजा २९ ततोवनंगतेरामेराजादशरथस्तदा ॥ समयुज्यतदेहस्यकालपर्यायधर्मणा ३० रामंतुगतमाज्ञायराजानंचतथागतम् ॥ आना
य्यभरतंदेवीकैकेयीवाक्यमब्रवीत् ३१ गतोदशरथःस्वर्गंवनस्थौरामलक्ष्मणौ ॥ गृहाणराज्यंविपुलंक्षेमंनिहतकंटकम् ३२ तामुवाचसधर्मात्मानृशंसंबततेकृतम् ॥
पतिंहत्वाकुलंचेदमुत्साद्यधनलुब्धया ३३ अयशःपातयित्वामेमूर्ध्निन्त्वंकुलपांसने ॥ सकामाभवमेमातरित्युक्त्वाप्ररुरोदह ३४

१४ । १५ । १६ । १७ । १८ वेदीवद्विलग्नःकृशोमध्योयस्याः १९ । २० कामंवरंउपाकुरुष्वदेहि संकटात्कष्टात् २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ सीतालांगलपद्धतिस्ततोजातत्वा
द्वियमपिमिता विदेहापत्यत्वाद्वैदेही २९ कालपर्यायधर्मणामृत्युना ३० । ३१ । ३२ । ३३ । ३४

चारित्र्यंविशोध्येदंकैकेय्यैवकृतंनतुमयेतिप्रदर्श्य ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ सिंहंहिंस्रं केसरिणंमटावंतंमृगराजं ५० स्रोतोभ्य



सचारित्रंविशोध्याथसर्वप्रकृतिसन्निधौ ॥ अन्वयाद्भ्रातरंरामंविनिवर्तनलालसः ३५ कौसल्यांचसुमित्रांचकैकेयींचसुदुःखितः ॥ अग्रेप्रस्थाप्ययानैःसशत्रुघ्नसहितोययौ ३६ वसिष्ठवामदेवाभ्यांविप्रैश्चान्यैःसहस्रशः ॥ पौरजानपदैःसार्धंरामानयनकांक्षया ३७ ददर्शचित्रकूटस्थंसरामंसहलक्ष्मणम् ॥ तापसानामलंकारंधारयंतंधनुर्धरम् ३८ विसर्जितःसरामेणपितुर्वचनकारिणा ॥ नंदिग्रामेऽकरोद्राज्यंपुरस्कृत्यास्यपादुके ३९ रामस्तुपुनराशंक्यपौरजानपदागमम् ॥ प्रविवेशमहारण्यंशरभंगाश्रमंप्रति ४० सत्कृत्यशरभंगंसदंडकारण्यमाश्रितः ॥ नदींगोदावरींरम्यामाश्रित्यन्यवसत्तदा ४१ वसतस्तस्यरामस्यततःशूर्पणखाकृतम् ॥ खरेणासीन्महद्वैरंजनस्थाननिवासिना ४२ रक्षार्थंतापसानांतुराघवोधर्मवत्सलः ॥ चतुर्दशसहस्राणिजघानभुविराक्षसान् ४३ दूषणंचखरंचैवनिहत्यसुमहाबलौ ॥ चक्रेक्षेमंपुनर्धीमान्धर्मारण्यंसराघवः ४४ हतेषुतेषुरक्षःसुततःशूर्पणखापुनः ॥ ययौनिकृत्तनासोष्ठीलंकांभ्रातुर्निवेशनम् ४५ ततोरावणमभ्येत्यराक्षसीदुःखमूर्छिता ॥ पपातपादयोर्भ्रातुःसंशुष्करुधिरानना ४६ तांतथाविकृतांदृष्ट्वारावणःक्रोधमूर्छितः ॥ उत्पपातासनात्क्रुद्धोदंतैर्दंतानुपस्पृशन् ४७ स्वानमात्यान्विसृज्याथविविक्तेतामुवाचसः ॥ केनास्येवंकृताभद्रेमामचिंत्यावमन्यच ४८ कःशूलंतीक्ष्णमासाद्यसर्वगात्रैर्निषेवते ॥ कःशिरस्यग्निमाधायविश्वस्तःस्वपतेसुखम् ४९ आशीविषंघोरतरंपादेनस्पृशतीहकः ॥ सिंहंकेसरिणंकश्चदंष्ट्रायांस्पृश्यतिष्ठति ५० इत्येवंब्रुवतस्तस्यस्रोतोभ्यस्तेजसोऽर्चिषः ॥ निश्चेरुर्दह्यतोरात्रौवृक्षस्येवस्वरंध्रतः ५१ तस्यतत्सर्वमाचख्यौभगिनीरामविक्रमम् ॥ खरदूषणसंयुक्तंराक्षसानांपराभवम् ५२ सनिश्चित्यततःकृत्यंस्वसारमुपसांत्व्यच ॥ ऊर्ध्वमाचक्रमेराजाविधायनगरेविधिम् ५३ त्रिकूटंसमतिक्रम्यकालपर्वतमेवच ॥ ददर्शमकरावासंगंभीरोदंमहोदधिम् ५४ तमतीत्याथगोकर्णमभ्यगच्छद्दशाननः ॥ दयितंस्थानमव्यग्रंशूलपाणेर्महात्मनः ५५ तत्राभ्यगच्छन्मारीचंपूर्वामात्यंदशाननः ॥ पुरारामभयादेवतापस्यंसमुपाश्रितम् ५६ ॥ इतिश्रीमहाभारतेआरण्यकेपर्वणिरामोपा० पर्वणिरामवनाभिगमनेसप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥ ॥ मार्कंडेयउवाच ॥ मारीचस्त्वथसंभ्रांतोदृष्ट्वारावणमागतम् ॥ पूजयामाससत्कारैःफलमूलादिभिस्ततः १ विश्रांतंचैनमासीनमन्वासीनःसराक्षसः ॥ उवाचप्रश्रितंवाक्यंवाक्यज्ञोवाक्यकोविदम् २ नतेप्रकृतिमान्वर्णःकच्चित्क्षेमंपुरेतव ॥ कच्चित्प्रकृतयःसर्वाभजंतेत्वांयथापुरा ३ किमिहागमनेचापिकार्यंतेराक्षसेश्वर ॥ कृतमित्येवतद्विद्धियद्यपिस्यात्सुदुष्करम् ४ शशंसरावणस्तस्मैतत्सर्वंरामचेष्टितम् ॥ ममामेनैवकार्याणिक्रोधामर्षसमन्वितः ५

श्चक्षुरादिरंध्रेभ्यःतेजसोऽर्चिषोऽग्नेर्ज्वालाः ५१ खरदूषणसंयुक्तंतत्पराभवसहितं ५२ विधिंरक्षां ५३ पुरारामभयाद्विश्वामित्रयज्ञप्रसंगेनजातात् ५४ । ५५ । ५६ ॥ इत्यारण्यकेपर्वणिनीलकंठीये भारतभावदीपेसप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥ ॥ मारीचइति १ प्रश्रितंपुष्कलार्थवत् २ । ३ । ४ । ५

अभ्यभवन्अभिभूताः ३१ । ३२ । ३३ । ३४ । ३५ । ३६ आत्मानमेवच प्रादादितिपूर्वेणान्वयः ३६ । ३८ । ३९ । ४० ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोर्नीलकंठस्यकृतौ भारतभावदीपे विराटपर्वार्थप्रकाशे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वर्णोपपन्नास्तानार्योरूपवत्यःस्वलंकृताः ॥ सर्वाश्चाभ्यभवन्कृष्णारूपेणयशसाश्रिया ३१ परिवार्योत्तरांतास्तुराजपुत्रीमलंकृताम् ॥ सुतामिवमहेंद्रस्यपुरस्कृत्योपतस्थिरे ३२ तांप्रत्यगृह्णात्कौंतेयःसुतस्यार्थेधनंजयः ॥ सौभद्रस्यानवद्यांगींविराटतनयांतदा ३३ तत्रातिष्ठन्महाराजोरूपमिंद्रस्यधारयन् ॥ स्नुषांतांप्रतिजग्राहकुंतीपुत्रोयुधिष्ठिरः ३४ प्रतिगृह्यचतांपार्थःपुरस्कृत्यजनार्दनम् ॥ विवाहंकारयामाससौभद्रस्यमहात्मनः ३५ तस्मैसप्तसहस्राणिहयानांवातरंहसाम् ॥ द्वेचनागशतेमुख्येप्रादाद्बहुधनंतदा ३६ हुत्वासम्यक्समिद्धाग्निमर्चयित्वाद्विजन्मनः ॥ राज्यंबलंचकोशंचसर्वमात्मानमेवच ३७ कृतेविवाहेतुतदाधर्मपुत्रोयुधिष्ठिरः ॥ ब्राह्मणेभ्योददौवित्तंयदुपाहरदच्युतः ३८ गोसहस्राणिरत्नानिवस्त्राणिविविधानिच ॥ भूषणानिचमुख्यानियानानिशयनानिच ३९ भोजनानिचहृद्यानिपानानिविविधानिच ॥ तन्महोत्सवसंकाशंहृष्टपुष्टजनायुतम् ॥ नगरंमत्स्यराजस्यशुशुभेभरतर्षभ ४० ॥ इतिश्रीमन्महाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांविराटपर्वणिवैवाहिकपर्वणिउत्तराविवाहे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ॥ ॥ समाप्तंचेदंविराटपर्व ॥ अतःपरमुद्योगपर्व ॥ तस्यायमाद्यःश्लोकः ॥ वैशंपायनउवाच ॥ कृत्वाविवाहंतुकुरुप्रवीरास्तदाभिमन्योर्मुदिताःस्वपक्षाः ॥ विश्रम्यरात्रावुषसिप्रतीताःसभांविराटस्यततोऽभिजग्मुः ॥ १ ॥ श्रुत्वावैराटकंपर्ववासांसिविविधानिच ॥ हिरण्यंधान्यंगावश्चदद्याद्वित्तानुसारतः ॥ १ ॥ प्रीतयेदेवतानांवैदद्याद्वैद्विजमुख्यके ॥ वाचकेतुसुसंतुष्टेतुष्टाःस्युःसर्वदेवताः ॥ २ ॥ ब्राह्मणान्भोजयेच्छक्त्यापायसैःसर्पिषासितैः ॥ एवंश्रुतेचवैराटेसम्यक्फलमवाप्नुयात् ॥ ३ ॥ ॥ ॥ अस्मिपर्वणिवृत्तांताः ॥ अज्ञातवासमंत्रः । धौम्यवाक्यं । आयुधन्यासः । विराटनगरेप्रवेशः । जीमूतवधः । कीचकवधः । दक्षिणगोग्रहः । उत्तरगोग्रहः । अभिमन्युविवाहश्च ॥

॥ अत्र विराटपर्वण्यध्यायानां श्लोकानां च व्यासोक्तसंख्याधिकसंख्यादृश्यते लिपिकरप्रमादावकुत्रकुत्राधिक्यंजातं तन्निश्चयो न भवतीति ॥

